लोकप्रियसाहित्यग्रन्थमाला-१८

**मञ्जुनाथग्रन्थावलिः**

( मञ्जुनाथोपाह्वभट्टश्रीमथुरानाथशास्त्रिणां काव्यरचनानां सङ्ग्रहः )

**प्रथमभागे**

**तृतीयः खण्डः**

# संस्कृतगाथासप्तशती

**स्वोपज्ञव्यङ्ग्यसर्वङ्कषाख्यया व्याख्यया विभूषिता**

प्रधानसम्पादकः

**प्रो. राधावल्लभत्रिपाठी**

कुलपतिः

सम्पादकौ

**देवर्षि-कलानाथशास्त्री**

**डॉ. रमाकान्तपाण्डेयः**




**राष्ट्रियसंस्कृतसंस्थानम्**

मानितविश्वविद्यालयः

नवदेहली

# पुरोवाक्

संस्कृतभाषा यथा चिरपुरातनी सनातनी तथैव प्रतियुगं पुन:पुनर्जायमाना उषा इव नवविच्छित्तिं नूतनां च छविमाविर्भावयन्ती वरीवर्तते, अभिनवप्रभाभास्वरं प्रभातं विभावयितुं क्षमा इदानीमपि स्वे महिम्नि प्रतिष्ठिता चास्त इति जानन्त्येव सर्वे सुरभारतीसमुपासका:। वस्तुत: आधुनिके काले अपूर्वैव समृद्धिर्दरीदृश्यते संस्कृतरचनाया:। अतश्च विंशशताब्दी संस्कृतसाहित्यस्य कश्चन स्वर्णयुग इति युक्तमुक्तवान् कविवरोऽभिराजराजेन्द्रमिश्र:। साम्प्रतिकेऽस्मिन् समये अस्या भाषाया नवोन्मेष: कामपि अभिख्यां तनोति। नैके प्रौढा विदग्धाश्च उदीयमानास्तरुणास्तेजस्विन: पण्डिता: प्रकटयन्ति शास्त्रवैभवमस्या:, तथा च कवयन्ति पर:शतं सुकवय: निबध्नन्ति च विविधान् ग्रन्थान् अगणिता: साहित्यरचनानदीष्णा: सरस्वत्या: सुपुत्रा अस्यामेव भाषायाम्। परन्तु तेषु परै: क्षुण्णं मार्गं परिहृत्य अक्षुण्णमध्वानं श्रयन्त: स्वयमेव स्वीयं पन्थानं रचयन्तो भवन्ति भव्या अभिनवभावजगन्निर्माणनदीष्णा विरला एव, येषां कृतित्वेन–

**अन्धास्ते कवयो येषां पन्थाः क्षुण्णः परैर्भवेत्।**
**परेषां तु यदाक्रान्तः पन्थास्ते कविकुञ्जराः।।**

(गङ्गावतरणमहाकाव्ये १.७७)

इति सुकवेर्नीलकण्ठदीक्षितस्य वचनं चरितार्थतां याति।

एतादृशेष्वपि विरलसाहित्यकारेषु सम्पूर्णे युगे कश्चन एक एव स्यात् युगप्रवर्तको भविष्यद्द्रष्टा, स्रष्टा नूतनविधानाम् आविष्कर्ता चाकृष्टक्षेत्राणां, कर्ता च नवोन्मेष-संवलितरचनावचनावलीनाम्। एतादृशा एव साहित्यकारा आसन् भट्टश्रीमथुरानाथशास्त्रिण: मञ्जुनाथापरनामान:। नवीना: परिकल्पना: नवीनविषयवस्तूनामवतारो नवनवविधानां चैदम्प्राथम्येन संस्कृतसाहित्ये प्रचार: इति एतेषामेव स्पृहणीयं कार्मण्यमभवत्। एते तर्केषु कर्कशधियो वयमेव नान्ये काव्येषु कोमलधियो वयमेव नान्य इति प्राचीनानां वच: क्वचित् प्रमाणीकुर्वन्ति, क्वचिच्च–

**कश्चिद् वाचो रचयितुमलं श्रोतुमेवापरस्तां**
**कल्याणी ते मतिरुभयथा विस्मयं नस्तनोति।**
**नह्येकस्मिन् भवति सुभगः सन्निपातो गुणानां**
**एकः सूते कनकमुपलं तत्परीक्षाक्षमोऽन्यः।।**

इति वा कालिदासोक्तिं स्मारयन्ति।

एते भट्टमथुरानाथशास्त्रिणः घनाक्षरी-कवित्त-सवैया-दोहा-सोरठादि-व्रजभाषाच्छन्दांसि संस्कृतकाव्यधारासु साधु स्नपयामासुः। उपन्यास-नभोवाणीरूपक-ललितनिबन्ध-यात्रावृत्त-प्रभृतिनूत्नविधासु ऐदम्प्राथम्येनासाधारणनैपुण्यप्रभवा एतेषां लेखनी निबबन्ध नैकान् निबन्धान्। संस्कृतगजलगीतेः परिष्कृतं स्वरूपमेते स्थिरीचक्रुः। अस्मिन्नतिविचित्रकविपरम्परावाहिनि संसारे द्वित्रान् विहाय केनचिदेकेन साहित्यकारेण एतावतीषु विधासु समं दक्षतया रचनापाटवं प्रतिभाप्रागल्भ्यं च न प्रकटीकृतं स्यात्। वाल्मीकि-व्यास-कालिदासादीनामिव अतितरां विस्तृतं तेषां कृतित्वम्।

अथैतेषां युगप्रवर्तकमहाकवीनां साहित्यं सम्प्रति सुदुर्लभं जातमिति राष्ट्रियसंस्कृतसंस्थानेन तस्य पुनः प्रकाशनमुपक्रान्तम्। अस्मिन् क्रमे मञ्जुनाथग्रन्थावल्याः प्रथमो भागः पूर्वं प्रकाशितोऽभवत्। यत्र द्वयोः खण्डयोः भट्टकवीनां जयपुरवैभवम्, गोविन्दवैभवम् साहित्यवैभवं चेति त्रीणि काव्यसङ्कलनानि प्राकाश्यतां नीतान्यभवन्। तत्रापि प्रथमभागस्य प्रथमे खण्डे जयपुरवैभवम्, गोविन्दवैभवं च विलसतः। जयपुरवैभवं नाम काव्यं भट्टश्रीमथुनाराथशास्त्रिणां १९४७ तमे क्रिस्त्वब्दे जयपुरादेव प्रकाशितम्। विविधछन्दोभङ्गीभिर्जयपुरनगरस्यानुपमा छटात्र कविना विशदं निरूपिता। अत्र परिस्फुरति जयपुरनगरस्यैतिह्यम्, देदीप्यते नगरसंस्कृतिः, पुरपरिसरस्य नयनाभिरामा शोभा चात्र भाविकालङ्कारविन्यासविशेषमनोहारिणी जायते। भाविकालङ्कारस्वरूपं च भामहदण्डिनिरूपितमित्थम्-

**तद् भाविकमिति प्राहुः प्रबन्धविषयं गुणम्।**
**प्रत्यक्षा इव दृश्यन्ते यत्रार्था भूतभाविनः।।**
**चित्रोदात्ताद्भुतार्थत्वं कथायाः स्वभिनीतता।**
**शब्दानाकुलता चेति तस्य हेतुं प्रचक्षते।।**

(काव्यालङ्कारे ३/५३, ५४)

**भावः कवेरभिप्रायः काव्येष्वासिद्धिसंस्थितः।**
**परस्परोपकारित्वं सर्वेषां वस्तुपर्वणाम्।**
**विशेषणानां व्यर्थानामक्रिया स्थानवर्णना।**
**व्यक्तिरुक्तिक्रमबलाद् गम्भीरस्यापि वस्तुनः।**
**भावायत्तमिदं सर्वमिति तद् भाविकं विदुः।**

(काव्यादर्शे, २।३६४-६५)

रुय्यकस्तु– न केवलं कवेरपितु सहृदयस्यापि अतीतानागतानां प्रसङ्गानां हस्तामल-कवत् साक्षात्कारं भाविकेऽपेक्षितं मनुते। युक्तमुक्तवान् कुवलयानन्दव्याख्यायाम् आशाधरभट्टः– भावाय साक्षात्काराय प्रभवतीति भाविकम्। भाविकालङ्काररचनायां कविरीश्वरभावेऽवस्थितो रचयतीति युक्तमुक्तवान् विमर्शिन्यां जयरथः। एतादृशेन 'चिरनिवृत्तमप्येतत् प्रत्यक्षमिव दर्शितमि'त्यादिकविवचःस्मारकेन भाविकालङ्कारस्य सटीकं प्रयोगेण महीयते जयपुरवैभवम्। काव्यास्यास्य भट्टश्रीमथुरानाथशास्त्रिभिर्ब्रजभाषाच्छन्दोनिबद्धं शीर्षकमपि निरदेशीत्यपरोऽपि विशेषस्तेषां काव्यसंसारस्य, यथा–

**छन्दोमयगुञ्जे 'मञ्जुकवितानिकुञ्जे' चारु–**
**चित्रयुतं 'जयपुरवैभवम्' इदं बुधेन,**
**जयपुरभूमिपतिपरम्परापूज्यमान–**
**श्रीकृष्णाभिधानकविकलानिधिवंशजेन**
**देवर्ष्यवटङ्कधरतैलङ्गान्वयाभिजात–**
**काव्यकलाख्यात-मञ्जुनाथपरनामकेन**
**साहित्याचार्यभट्टश्रीमन्मथुरानाथकवि–**
**शास्त्रिणा कृतं प्रकाशितं च जयपुरात्तेन।। १ ।।**

गोविन्दवैभवं च भट्टवर्याणां भक्तिभावमयी रचना। वैभवकाव्यमालायामिदं तेषामन्तिमः पुष्पहारो यत्र तेषां प्रज्ञा भक्तिभावे परिणमति।

मञ्जुनाथग्रन्थावल्याः प्रथमभागस्य तृतीयेऽस्मिन् खण्डे तत्प्रणीतया 'व्यङ्ग्यसर्व-ङ्कषाख्यटीकया सनाथिता संस्कृतगाथासप्तशती' प्रकाश्यते। इयं हि संस्कृतगाथासप्तशती महाकविहालसङ्कलिताया गाथासप्तशत्याः समच्छन्दोऽनुवादरूपा। पूर्वं म.म.गोपीनाथ-कविराजपण्डितानां पुरोवाचाऽलङ्कृतेयं निर्णयसागरात् प्रकाशिताऽभूत्।

गाथानां व्यङ्ग्यार्थावगमसोपानभूता 'व्यङ्ग्यसर्वङ्कषा' सप्तशतीटीकापरम्परायां भजते वैशिष्ट्यमिति खण्डेऽस्मिन् तत्प्रकाशनमध्येतर्णामुपकाराय स्यादेवेति।

इयं ग्रन्थावलिः विद्वद्धौरेयाणां कवितल्लजानां विविधभाषानिपुणानां कलामर्मज्ञानां कलानाथशास्त्रिणां सुचिन्तितैः भूमिकावचोभिर्विभूषितेति सविशेषं परितोषमनुभवामः। देवर्षिकलानाथशास्त्रिणश्च स्वनामधन्यानां प्रातःस्मरणीयानां भट्टमथुरानाथशास्त्रिणां सुयोग्यास्तनयाः, यान् दर्शं दर्शम्–

**'न कारणात् स्वाद् बिभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात्'**

इति महाकविकालिदासवचसोऽसकृत् स्मरामः। अथ च सुयोग्यः युवाऽपि प्रौढपाण्डित्यवैभवमण्डितः पण्डितः श्रीरमाकान्तपाण्डेयो ग्रन्थावल्या अस्या सम्पादने एतेषां सुकविवर्याणां कलानाथशास्त्रिणां साहाय्यमाचरत्। वस्तुतः अपारं मञ्जुनाथसाहित्यमधिकृत्य सत्यमेव रमाकान्तपाण्डेयोऽप्रतिमां विशेषज्ञतां गाहते, यतो बहोः कालात् पूर्वमयं मञ्जुनाथवाग्वैभवे स्वकीयं दीक्षाचणत्वं प्रकटीचकार भट्टमथुरानाथशास्त्रिवर्यमधिकृत्य अखिलभारतीयसङ्गोष्ठ्या आयोजनेन, तत्सामग्र्याः सम्पादनप्रकाशनेन तथा च मञ्जुनाथगद्यगौरवमिति स्वसम्पादिते ग्रन्थे तेषामेव श्रीमद्भट्टमथुरानाथशास्त्रिणामप्राप्त-दुर्लभगद्यरचनानामाविष्कारपुरस्सरं सम्पादनेन च।

एतस्या मञ्जुनाथग्रन्थावल्याः प्रकाशनम् अमुष्मिन् नवीने सहस्राब्दे संस्कृतसाहित्यजगतः काचन अनितरसाधारणी घटना वरीवर्तीति न संशीतिः। भट्टमथुरानाथशास्त्रिवर्यैः संस्कृतस्य नवोऽभ्युदयकाल आयानवलोकितोऽलौकिकेन चक्षुषा। प्रकाशनमिदं संस्कृतसाहित्यरचनाक्षेत्रे सम्भावनानां नवद्वारमपावृणुयादित्याशास्महे।

**राधावल्लभः त्रिपाठी**

**कुलपतिः**

राष्ट्रियसंस्कृतसंस्थानम्

------

## मञ्जुनाथप्रशस्तयः

अन्तःसद्रससम्भृतातिमधुरद्राक्षासदृक्षाक्षरः
स्फूर्जत्प्रौढतमार्थगौरवधरः शृङ्गारितः स्वैर्गुणैः।
श्रीमान्काव्यनिकुञ्ज एष स मनोहारी निगुम्फोऽद्भुत-
स्तुल्यो यस्य नवीनरीतिललितो नाद्यावधि प्रेक्षितः।।

( भट्टश्रीनन्दकिशोरशास्त्रिणः )

नृत्यत्प्रायपदध्वानेऽवधानं यच्छतो मम।
विनैवार्थानुसन्धानमुदिता कापि निर्वृतिः।।
मञ्जुनाथः कविर्नूनं प्रशस्योऽमृतमञ्जुवाक्।
चिरं जयतु चेतांसि रञ्जयन् सरसात्मनाम्।।

( सरस्वतीभवनाध्यक्षस्य खिस्तेनारायणशास्त्रिणः )

रम्यः कश्चित् सुगन्धो विलसति नगरे पाटलाभेऽविरामो
नाऽयं पुष्पाटवीतः प्रभवति विपणेर्नाऽप्ययं गान्धिकानाम्।
वाग्देवी-सौधदीपोज्ज्वलन-नव-नव-प्रातिभद्रव्ययुक्तेः
कीर्तेरेषोऽनुभावोऽप्रतिमकविपतेर्मञ्जुनाथस्य नूनम्।।

( आचार्यगोविन्दचन्द्रपाण्डेयस्य )

# सम्पादकीयं निवेदनम्

अस्माकमुपास्या सेयं गीर्वाणगिरा यावती पुरातनी भाषाऽस्ति, तावत्येव नवीना। सहस्राब्दी-नामनेकासां कालो व्यतियातो यदवधि साहित्यसर्जनमस्यां विधीयमानमस्तीति यावान् पुरातनोऽस्या इतिहासो विख्यायते, तावत्येव नूतनताऽप्यस्यामस्ति, चिरयौवनवती सेयं भाषेति विद्म एव वयम्। अत एव वेदकालीनाया ऋषिकाया लोपामुद्राया उष:सूक्तानुसारं यथा सेयमुषा: ''पुराणी युवति'' रित्याख्यायते स्म (पुराणी देवि युवति: पुरन्धि्र:), तथैव संस्कृतभाषाऽपि पुराणी युवतिरस्तीति सर्वदा सहर्षमुल्लिखामो वयम्। अत एव प्रतियुगं नूतनं साहित्यमस्यां सृज्यमानमवलोकयितुं शक्यते। भास-कालिदासादीनारभ्य वर्तमानयुगीन-कविकथाकारादिपर्यन्तं काव्य-नाटक-कथोपन्यासादिसाहित्यं यदद्यत्वे ''सर्जनात्मकसाहित्या''भिधानेनोल्लिख्यते, निरन्तरमस्यामवतार्यमाणमस्त्येव। एतस्य परिधौ, विधाविशेषेषु च विस्तार एव संजायते, न नैयून्यम्।

एकोनविंश्या: शताब्द्या अवसानस्य, विंश्या: शताब्द्या: प्रारम्भस्य च कश्चन कालखण्डो निर्विवादं पुनर्जागरणयुगत्वेन भारतीय-साहित्येतिहासेऽपि समभिधीयते, भारतीय-समाजेऽपि। मुद्राणालयानां प्रसारेण, पुस्तकानां, पत्र-पत्रिकाणां च विस्तारेण संस्कृतभाषाया इतिहासेऽपि नवजागरणयुगमिदमासीदिति सर्वे वयं मन्यामहे। तदैव भारते विश्वविद्यालयशिक्षा प्रसारमाप, तत्र च संस्कृतभाषाया महत्त्वं सविशेषमाख्यापितमाङ्गल-शासकैरपि, संस्कृत-साहित्यस्याभिज्ञानशाकुन्तलप्रभृति नवनीतं पाश्चात्यभाषास्वनूद्य यदवधि प्रासारि विलियम-जोन्सप्रभृतिभिराङ्ग्लै:, शार्मण्यदेशीयैश्चाऽपि, तदवधि संस्कृतं विश्वजनीनत्वेन महत्त्वम-धादित्यपि मन्यामहे वयम्। तदानीं खलु विश्वविद्यालयेषु संस्कृतस्याध्ययनाध्यापनादि सविशेषं प्रासरत्। तादृशस्याध्यापनस्य, परीक्षाणां च माध्यमं त्वभूदाङ्ग्लभाषैव। तदानीं खलु भारतीये संस्कृताध्येतृसमाजे धाराद्वयं प्राचलत्।

एका धाराऽभूत्तादृशानां विश्वविद्यालयादिवरिष्ठशिक्षासंस्थानेषु समधितस्थुषां विदुषां येष्वाङ्ग्ला वैदेशिकाश्चाऽप्यभूवन्, भारतीया अपि, ये संस्कृतभाषां तत्साहित्यं च क्लासिकल (श्रेण्य) वाङ्मयत्वेन गभीरस्य शोधस्यानुसन्धानस्य च विषयं मन्यन्ते स्म, वेदोपनिषत्पुराणा-दीनां, श्रेण्यसाहित्यस्य चानुशीलनं, तदनुवादनं, तदुपरि शोधानुसन्धानादि चाङ्गलभाषायां, कदाचिच्च वङ्ग-हिन्द्यादिभाषास्वपि क्रियेत, इत्येतदेवाऽऽसीद् भारतीयानां विश्वविद्यालयाना-मुद्देश्यम्। प्राचीन-ग्रीक-लैटिनादिवदियमपि पुरातनी भाषाऽस्ति यस्यां मन्त्रपाठादिकं, कर्मकाण्डादिकं चानुष्ठीयते, यस्या: प्राचीनं साहित्यं शोधार्थिभिरनुशील्यते, अनुसन्धीयते च। न कश्चिदद्य प्राचीनग्रीकभाषायां लैटिनभाषायां वा काव्यरचनामुपन्यासलेखनं वा कर्तुं कल्पयेदपि। अत: संस्कृतभाषाऽपि क्लासिकलभाषात्वेन ग्रीक-लैटिनादिवदनुसन्धानपात्र-मेवाऽस्तीति मन्वानानां विदुषामभूत्सा धारा।

अन्याऽभूदेका तादृशी धारा यस्या विद्वांसो ''जीविताना'' माधुनिकभाषाणां पङ्क्तौ संस्कृतं परिगणयन्ति स्म, संस्कृते सम्भाषन्ते स्म, कवयन्ति स्म, पत्रलेखनादि कुर्वन्ति स्म, कविसम्मलेनादीनामायोजनं कुर्वन्ति स्म, कथालेखनं, विनोदालापांश्चापि कुर्वन्ति स्म। एतस्यैवाऽभूदयं परिणामो यद् यदा मुद्रणालयानां प्रसारवशात् ''पत्रकारता'' प्रारभ्यत भारतीय-भाषासु, तदा संस्कृतपत्रपत्रिका अपि ''विद्योदय'' सदृश्यः प्राकाश्यन्त (न केवलं पण्डितप-त्रिकासदृश्यः) या अवलोक्य चित्रीयन्ते स्म वैदेशिकाः। एवंविधासु पत्रिकासु सर्जनात्मक-साहित्यं विपुलमात्रायां प्रकाशयितुमारेभिरे सम्पादकाः। सहस्रशः संस्कृतसर्जकास्तु विद्यन्ते स्मैव तदानीं देशे।

एतस्यायमभूत् स्वाभाविकः परिणामो यदूनविंश्याः शताब्द्या अन्तिमे चरणे विंश्याः शताब्द्या पूर्वार्धे च सुमहति परिमाणे संस्कृतभाषायां काव्य-नाटक-कथोपन्यास-निबन्धादिकस्य ''सर्जनात्मक''-साहित्यस्य सर्जनमभूद् देशे यस्य प्रकाशनं कदाचित् पूर्वं पत्रिकास्वभूत्, तदनु ग्रन्थाकारेषु, कदाचिच्च ग्रन्थरूप एव तदवततार। पं. अम्बिकादत्तव्यासस्य सुविदित उपन्यासः ''शिवराजविजया''ख्यः पूर्वं क्रमिकरूपेण संस्कृतचन्द्रिकापत्रिकायां प्राकाश्यत, तदनु ग्रन्थरूपेण।

इत्थमस्या नूतनधारायाः प्रयासानां परिणामवशात् संस्कृते जीवन्तीष्वाधुनिकभाषास्विव तादृशं सर्जनात्मकसाहित्यमनवरतमवततार। तत्र च पत्रकारतायाः सर्वाधिकमुल्लेखनीयमवदान-मभूत्। अत एव बहवस्तादृशाः संस्कृतपत्रकाराः प्रादुरभूवन्, ये सुललित-सर्जनात्मक-साहित्यस्य प्रणेतारोऽप्यभवन्, पत्रकारा अपि। तादृशेषु सर्जकेषु सर्वप्रथमुल्लेखनीयोऽस्ति वाङ्गो विद्वत्तल्लजः पं. हृषीकेशभट्टाचार्यो यो हि वङ्गदेशात् सूदूरं पश्चिमोत्तरप्रदेशे लाहौरनगरे विश्वविद्यालयीयशिक्षातंत्रेणाऽऽकारितस्तत्र प्रापत्; ''विद्योदय'' नामकस्य संस्कृतपत्रस्य चाऽऽरम्भमकरोत् यत्र सर्जनात्मकं साहित्यं सुभृशं प्राकाश्यत। सपद्येव तदनु पत्रमिदं वङ्गदेश-मागमत्। अत्र हि भट्टाचार्यैर्ललितकथाललित-निबन्ध-विनोदव्यंग्यादि हृदयावर्जकं साहित्यं प्रकाशयितुमारब्धम्। सेयं धारा संस्कृतचन्द्रिका-संस्कृतरत्नाकरादिविविधपत्ररूपेण सततं प्रावहत्, भूयांसं च साहित्यभाण्डागारमवतारयामास संस्कृते। संस्कृतचन्द्रिकासम्पादकः पं. अप्पाशास्त्री राशिवडेकरोऽपि सर्जनात्मकसाहित्यस्य सुविदितः प्रणेताऽभूत् (महाराष्ट्रीयः), संस्कृतरत्नाकरसम्पादको देवर्षिभट्टमथुरानाथशास्त्री अपि कविशिरोमणिः, कथाकारो, ललितनिबन्धकारश्चाऽभूत् (राजस्थानीयः)। तदनु ''संस्कृतप्रतिभा'' (भारतीय साहित्य-अकादम्याः संस्कृतमुखपत्र) सम्पादको डॉ. वेङ्कटराघवन् (दक्षिण भारतीयः) अपि स्वयं नाटककारः कविश्चाऽभूत्, तमेव पन्थानं चानुससार।

सर्जनात्मकसाहित्ये नवजागरणस्य येयं धारा संस्कृते प्रावहत् तत्परिणामस्वरूपमेवा-द्यत्वे सुविपुले परिमाणेऽभिनवं संस्कृतसाहित्यमुपलभ्यते यस्येतिहासोऽपि प्रारभ्यताऽभिलेखितुं विद्वद्भिः। स्व. डॉ. बलदेव उपाध्यायानां प्रधानसम्पादकत्वे प्रकाशितस्य ''संस्कृत वाङ्मय का बृहत् इतिहास'' नामक-ग्रन्थराशेः सप्तमखण्डरूपेण, अन्येषु च ग्रन्थेषु, तादृशं विवरणं

प्राप्यते। अतएव तत्राऽऽधुनिक-कालीनस्य संस्कृतसाहित्यस्य यद् युगविभाजनं व्यधीयत, तस्य नामकरणमपि सर्जक-पत्रकार-युगप्रवर्तकत्वेन महतीं भूमिकां निरूढवतां विदुषां नामभिरक्रियत-अप्पाशास्त्री राशिवडेकरयुगम् (१८९०-१९३० ई.) भट्टमथुरानाथशास्त्रियुगम् (१९३०-१९६० ई.), डॉ. राघवन् युगं (१९६०-१९८० ई.) चेत्यादि।

अस्मिन् विपुले नूतन-साहित्यभाण्डागारे नूतनविधानां, नूतन-विषय-शिल्प-शैल्यादीनां चाऽवतारणां विधाय विलिखितं काव्य-कथा-नाटक-निबन्धादिसाहित्यं विस्मयावहां लोकप्रियतामभजत्। तदैव तु विंटरनिट्जादयः शार्मण्यदेशीयाः साहित्येतिहासकारास्तदिदं कथयितुं विवशा अभूवन् यत् संस्कृतसदृशी प्राचीना, क्लासिकलभाषा एतादृशीं जीवन-शक्तिं धारयतीति कः खलु विश्वसेद् यदस्यां पत्रपत्रिकाः प्रकाश्यन्ते, कवि-सम्मलेनानि भवन्ति, सजीवं नूतन-साहित्यं च निर्मीयते।

अनेनैव नूतनसाहित्येन संस्कृतगिरं केवलं पुस्तकस्थां, क्लासिकलभाषां, शोधपात्रीभूतां भाषां, मृतभाषां वा व्यपदिशतां पाश्चात्यमतानुवर्तिनां मुखमुद्रणं कृतमभूत्। अत एव तदानीं पं. हृषीकेशभट्टाचार्यस्य "उद्भिज्जपरिषद्" इत्यादीन् निबन्धान् "आत्मवायोरुद्गार" इत्यादि-विनोदगर्भा आत्मवृत्तादिविधाश्च लोकप्रिया अनुभूय प्रसेधितान्यभूवन्नेतादृशानि पद्यानि-

**मुद्रयति वदनविवरं मृतभाषावादिनां मुहेराणाम्।**
**स्मरयति च भट्टबाणं भट्टाचार्यस्य सा वाणी।।** (मुहेरो मूर्खः)

तादृशं सर्जनात्मकं साहित्यमद्यावधि विपुले परिमाणे सृज्यते, प्रकाश्यते, समीक्ष्यते, समाद्रियते, पुरस्क्रियते च साहित्य अकादमी-संस्कृत अकादमी प्रभृतिभिः संस्थाभिरिति सुमहत् सौभाग्यमस्माकममरभाषासेवकानाम्। अद्यापि भारतीयेषु बहुसंकायीयेषु विश्वविद्यालयेषु मानविकीसंकायान्तर्गतः संस्कृतविभागोऽपि विद्यते यत्र संस्कृतस्य वाङ्मयम्, अर्थात् प्राचीनं वरेण्यसाहित्यं वेदोपनिषन्महाकाव्यनाटकादिरूपं पाठ्यते, तदुपर्यनुसन्धानकार्यं क्रियते, पीएच. डी. इत्यादय उपाधयः प्रदीयन्ते। एवंविधस्य शिक्षणस्य, परीक्षणस्य, लेखनस्य च माध्यमरूपेण हिन्दीभाषा, आङ्गलभाषा, अन्याश्च भारतीया भाषा उपयुज्यन्ते प्रायशः। संस्कृतमाध्यमेन तत्राल्पीय एव कार्यं भवति, न वा भवति। अपरतस्तु गताया विंश्याः शताब्द्या उत्तरार्धे प्रवृत्तायाः संस्कृतविश्वविद्यालयस्थापनपरम्परायाः कारणात् संस्कृतस्यैव विविधविषयाणामनुशीलनाय संस्थापितानां विश्वविद्यालयानां शिक्षणपरीक्षणलेखनादिकार्येषु संस्कृतभाषैव माध्यमत्वं बिभर्ति।

द्वयोरपि विश्वविद्यालयप्रकारयोरनयोः पाठ्यक्रमेषु यत् "साहित्यं" साहित्यविषय-मङ्गीकृतवत्सु छात्रेषु पाठ्यते, तत्र कालिदासादयः प्राचीना महाकवयः, जगन्नाथपण्डितराजादयो मध्यकालीना विद्वांसो वा पाठ्यक्रमेषु निर्धार्यन्ते, नवयुगीना अर्वाचीनाः साहित्यसर्जकाः प्रायशः पाठ्यक्रमेषु नावतरन्ति स्म कतिपयदशकेभ्यः पूर्वम्। वाराणस्यादिनगरीयैः पाठ्यक्रमनिर्धारकैः कृपापूर्वकमर्वाचीनेषु साहित्यकारेषु दयमानैः केवलमम्बिकादत्तव्यासोपरि कृपा कृताऽभूद् यत्तस्य "शिवराजविजया"ख्य उपन्यासः पाठ्यक्रमे निरधार्यत। नापरः साहित्यकारः प्रवेशमलभत बहोः कालात्। इत्थं केवलं क्लासिकल-साहित्यपाठनस्य परिणतिरियमभूद् यत्तादृशः स्नातकः

शास्त्रीयान् विषयान् संस्कृते वक्तुं, लेखितुं चावश्यं प्रभवति किन्त्वाधुनिके युगे यादृशं जीवनं प्रवर्तते, या घटना घटन्ते, तासां वर्णनं कर्तुं संस्कृते न प्रभवति। कथं क्षमेत स तथा कर्तुम्?

''बाष्पयान (रेल) विश्रमस्थले (स्टेशन) यदा चिटिका (टिकिट) क्रयणायाहं गतोऽभूवं तदा मम पटपुटकं छिन्नम् (जेब कट गई)'' इत्यादिवास्तविकवृत्तस्य लेखनं यदि संस्कृते करणीयं स्यात् तदा वराकः साहित्याचार्यपरीक्षोत्तीर्णोऽपि कथं प्रभवेत्? रेल-स्टेशन-टिकिट इत्यादीनि प्रमेयानि शिवराजविजये तु न सन्ति, न कालिदासे, न बाणभट्टे। कुत्र लभेत स तत्कृते शब्दराशिम्? अतस्तादृशीष्वभिव्यक्तिष्वपि छात्राणां बुद्धिः प्रसरेदित्येतदर्थं बहुभिर्विवेकिभिर्विश्वविद्यालयैराधुनिकसाहित्यान्तर्गतानि पुस्तकान्यपि पाठ्यक्रमेषु विनिर्धारितानि यत्राधुनिकाः शब्दाः प्राप्येरन्। एवंविधेषु विश्वविद्यालयेषु दयालबाग आगरा-प्रभृतयोऽप्यभूवन्, राजस्थानीया विश्वविद्यालया अप्यभूवन्। बहुभिस्तु पुराणपथपथिकैः पाठ्यक्रमनिर्धारकैरेवं-विधस्य नूतनयुगीनविकासस्यावश्यकतैव नानुभूता स्यादिति तु कथान्तरम्।

किन्तु तदिदं तु स्पष्टतया सर्वैरनुभूयेतैव यदद्य यदि द्वितीयधारानुरूपं संस्कृतभाषा ''जीविता'', आधुनिकी, प्रयुज्यमाना च भाषा साधयितुमिष्यतेऽस्माभिस्तर्हि वर्तमानयुगीनानां सर्वविधानामभिव्यक्तीनामवतारणा संस्कृते करणीया स्यात्। संस्कृते जीवनानुभवान् अभिव्य-ञ्जयितुमस्माकं छात्रा अपि समर्थीकरणीयाः स्युः। तदर्थमाधुनिकं संस्कृतसाहित्यमेवैकमात्रं साधनं भवितुमर्हति, नान्यः पन्था विद्यतेऽयनाय। अत एव नूतनं साहित्यं संस्कृते सृज्येत इत्यप्यावश्यकं, तत् प्रकाश्येत इत्यप्यावश्यकं, तस्य निर्धारणं पाठ्यक्रमेषु क्रियेत, इत्यप्यावश्यकम्।

सुमहत् सौभाग्यमस्माकं यदेवंविधा अपेक्षाः प्रति किञ्चिदवधानं वरिष्ठैः प्रशासकैः, शिक्षाशास्त्रिभिश्च प्रदातुमारब्धमस्ति। नूतनसाहित्यसर्जनं प्रोत्साह्यत इति तु सूचितचरमेवोपरि-तनासु पंक्तिषु, बहुत्र पाठ्यक्रमेष्वपि नूतनसाहित्यं निर्धार्यते। नूतनसाहित्यसमीक्षणाय ''दृक्'' सदृश्यः पत्रिका अपि प्रकाश्यन्ते, ग्रन्थप्रकाशनमपि प्रोत्साह्यते। तादृशेषूपक्रमेषु भारतसर्वकारीयं राष्ट्रियसंस्कृतसंस्थानं यद्धि शासनस्य सर्वतः प्रमुखं संस्थानमस्ति, विपुलं समर्थनं वित्तीय-साहाय्यादिकं च प्रददातीति सुतरां हर्षावहम्। अनेन संस्थानेन नूतनसाहित्यप्रकाशनस्य तदर्थं वित्तीयानुदानस्य, तत्समीक्षणस्य, विविधभाषासु सृष्टस्योत्कृष्टस्य साहित्यस्यानुवादानां प्रवर्तनस्यापि च कार्यक्रमाः परिचाल्यन्त इत्यपि प्रमोदावहम्।

संस्थानस्यास्य कुलपतिभिः, डॉ. राधावल्लभत्रिपाठिभिः स्वयं नूतनसाहित्यसर्जनल-ब्धयशस्कैर्यदवधि कार्यभारोऽस्य गृहीतस्तदवधि तैः कतिपये तादृशा उपक्रमा अपि प्रारभ्यन्त यैः संस्कृते नवयुगीनविकासस्योपबृंहणं प्रतिफलितं दृश्येत। तादृशेष्वेवोपक्रमेष्वेकतमोऽस्ति संस्कृतस्यार्वाचीनानां साहित्यकाराणां समग्र-ग्रन्थमालायाः प्रकाशनम्। लोकप्रियग्रन्थमालानाम्ना तादृशानां साहित्यसर्जकाणां समस्तानां कृतीनां ग्रन्थरूपेणावतारणं महदुपयोगि स्याद् यैः प्रभूते परिमाणे विविधासु विधासु संस्कृते सर्जनात्मकं साहित्यमवतार्य संस्कृतं जीविता भाषा ख्यापिता-ऽभूत्, नवजागरणस्य स शङ्खनादः कृतोऽभूद् यस्य विवरणं मया गतेषु प्रघट्टकेषु प्रस्तुतमस्ति।

एवंविधा एव साहित्यसर्जका अभूवन् मम पितृचरणाः कविशिरोमणि–देवर्षि–भट्टश्रीमथुरानाथशास्त्रिपादाः यैः संस्कृतकाव्यसर्जनायां नूतनच्छन्दसां, नूतनशैलीनां, नूतनकथ्यानां चाऽवतारणा कृताऽभूत्, गजलगीतिरचनायाः प्रवर्तनं कृतमभूत्, ललितनिबन्धा जनिता अभूवन्, कथासर्जनस्य नैका विधाः प्रावर्त्यन्त, विनोदोक्तीनां प्रकाशनं प्रारब्धमभूत्, ग्रन्थसमीक्षणं प्रवर्तितमभूत्, संस्कृतपत्रकारतायां नूतनं युगमानायितमभूत् ''संस्कृतरत्नाकर''–''भारती'' प्रभृतिपत्राणां सम्पादनद्वारा। तेषां संस्कृते साहित्यसृष्टिर्लक्षाधिकेषु पृष्ठेषु प्रसृताऽस्ति। तेषां बहवो ग्रन्थाः प्राक् प्रकाशिता अद्य सुदुर्लभाः। तत्सम्पादितपत्रिकादीनां प्राप्तिरप्यद्य कठिना। तेषां लोकप्रियाणां सर्जनात्मकसाहित्यकृतीनामवतारणा ग्रन्थमालारूपेण क्रियेतेति संस्थानस्य शुभसङ्कल्पो यदा मह्यमसूच्यत, सुमहान् सन्तोषः ''सार्थकता''–बोधश्च कश्चिदुदियाय मन्मनसि। पद्ये, गद्ये (कथोपन्यासादिषु) च तेषां सर्जनस्यास्ति विपुलं परिमाणम्। तत्सूचना भूमिकाभागे प्राप्येत पाठकैः। अतः क्रमिकरूपेण विभिन्नेषु भागेषु प्रकाश्यते सेयं ग्रन्थमाला।

प्रथमे पद्यखण्डे तेषां मञ्जुकवितानिकुञ्जाख्यः काव्यसन्दोहः प्रकाश्यते यत्र प्रामुख्येण नूतनेषु शिल्पप्रकारेषु, छन्दःसु, गीतिषु च निबद्धा काव्यरचना परिदृश्येत पाठकैः। विंश्याः शताब्द्या आरम्भेऽपि समस्ते देशे व्रजभाषाच्छन्दःसु प्रणीयमाना सा काव्यरचना लोककण्ठ–हारत्वमाप्ताऽभूद् यादृशी काव्यपरम्परा तुलसीदासस्य कवितायां, विहारिणो दोहाच्छन्दःसु देव–भूषण–ठाकुर–रत्नाकरादीनां कवित्तच्छन्दःसु च निभाल्यते स्म। व्रजभाषा खलु तदानीमखिलेऽपि देशे काव्यभाषात्वेन प्रतिष्ठिताऽभूत्। केरलीया अपि व्रजभाषायां कवयन्ते स्म। तत्रापि घनाक्षरीत्याख्यायमानं दण्डकं लोकप्रियमभूत्। अत एव कवित्त नाम्ना (कवित्वप्रतीकत्वेन) तस्य ख्यातिर्व्यजृम्भतेति लेखकीयायां भूमिकायां सविस्तरं स्पष्टीकृतमस्ति। तदानीमेव देशे उर्दूभाषाऽपि सुप्रतिष्ठिताऽभूत्, तस्याश्च गजलनामा गीतिप्रकारः सुतरां लोकप्रियोऽभूत्। सर्वेष्वेतेषुछन्दःसु विविधा काव्यरचना भट्टश्रीमथुरानाथशास्त्रिभिर्व्यधीयत।

अस्यां हि शिल्प–विधास्वमूषु तैः सर्वविधाः काव्यविषया न्यबध्यन्त। ऋतुवर्णन–नायिका–भेद–नवरसनिबन्धनादिपरम्पराऽपि तैरनुसृता, नवसभ्यतायाः, नूतनयन्त्राणां चापि वर्णनेन नूतनतां प्रति स्वाभिप्रायः प्रकटीकृतः। तदानीं हि कवितायां कुत्रचन कविनामसङ्केतोऽपि सूच्येतेति परम्परा सुप्रचलिताऽभूत्। व्रजभाषायामेवंविधा नामसूचना भनत इति व्यपदिश्यते स्म, यथा सूरदास तुलसी इत्यादि सङ्केतस्तेषां पद्येषु द्रष्टुं शक्योऽद्यापि तथैव कविनाम प्रतिपद्यं सूच्येत इत्येतदर्थं भट्टपादैः स्वकीयं काव्यनाम मञ्जुनाथ इति स्वीकृतमासीत्। ततो मञ्जुकविता–निकुञ्ज इति काव्यमालाया नामापि तैर्निर्धारितम्। प्रतिपद्यं कवित्तच्छन्दसस्तृतीयचरणे मञ्जुनाथ इति नामसूचनाऽपि प्राचां पद्धतिमनुसृत्य गुम्फिता। सा विलोक्येत पाठकैर्ग्रन्थामलायामस्याम्। कवित्तच्छन्दसि चरणचतुष्टयमवश्यं भवति, प्रतिचरणमन्त्यानुप्रासोऽपि भवति किन्तु वाक्यपूर्ति–र्द्वितीयेन चतुर्थेन च चरणेन मन्यते। अतः प्रथमचरणानन्तरं तृतीयचरणानन्तरं च न किञ्चित् विरामचिह्नं दृश्येत, वाक्यपूर्तेरभावात्। तदनुसार्येव मुद्रणमत्र दृश्येत पाठकैः।

प्रथमतः साहित्यवैभवाख्यं काव्यसङ्कलनं 1930 ई. वत्सरे मुम्बईस्थ- निर्णयसागर-प्रेसतो मुद्रापयित्वा तैः प्राकाश्यत यत्र आगराविश्वविद्यालयकुलसचिवस्य पं. श्यामसुन्दरशर्मणः प्रयाग- विश्वविद्यालयकुलपतेः डॉ. गङ्गानाथझामहाभागस्य, काशीहिन्दूविश्वविद्यालयकुलपतेः प्रो. ए. बी. ध्रुवमहाभागस्य, वाराणसेय संस्कृतमहाविद्यालयाध्यक्षस्य डॉ. गोपीनाथकविराजस्य च भूमिका आङ्गलभाषायां, नाथद्वारविद्याविभागाध्यक्षस्य शीघ्रकविनन्दकिशोरशास्त्रिणः काशीस्थसरस्वतीभवनाध्यक्षस्य पं. नारायणशास्त्रिखिस्ते महोदयस्य च संस्कृते काव्यमयं प्ररोचनाद्वयं स्वकीयया संस्कृतनिबद्धया भूमिकया सह प्राकाश्यन्त। तदानीं हि भारते विद्यानां कलानां च पुनर्जागर्तिः काचन परिदृश्यते स्म, मुम्बईमहानगरी चापि तस्याः केन्द्रभूताऽसीत्, अतस्तत्र एम. धुरन्धरम्हात्रेप्रभृतयश्चित्रकाराः स्वकीयतूलिकानिर्मितैश्चित्रैर्जनमनांसि मोहयन्ति स्म, लक्ष्मीआर्टप्रभृतिभ्यो मुद्रणालयेभ्यश्चित्रगुम्फाः (आल्बम) काव्यबन्धालङ्कृता अपि प्रकाश्यन्ते स्म। भट्टमहाभागास्तादृशीनां कलाकृतीनां गुणग्राहका अप्यभूवन्, ग्राहका अपि। शतशस्तादृशानि सचित्रपुस्तकान्यद्यापि तेषां सङ्ग्रहे शक्यन्ते द्रष्टुम्।

अतस्तैः स्वकीय-संस्कृतकाव्यगुम्फनेन सह बहूनि तादृशानि चित्राण्यपि (प्रायशः एम. धुरन्धरचित्रितानि, तूलिकया, न तु कैमराख्ययन्त्रेण) ऋतुवर्णन-नायिकावर्णनादिभिः सह मुद्रापितानि साहित्यवैभवे। अनेकासां काव्यरचनानां तु प्रेरणैव तादृशैश्चित्रैः प्रत्ताऽभूत्। अतः पद्यैः सह स्वटीकायां चित्रविशेषस्याप्युल्लेखस्तैस्तत्र तत्र कृतः परिदृश्येत पाठकैः। प्रतिपद्यं सेयं टीका स्पष्टावबोधार्थं प्रकाश्यते किन्तु सर्वाणि तानि चित्राणि न शक्यन्ते मुद्रापयितुमिति तानि नाऽत्र विलोक्येरन्।

मञ्जुकवितानिकुञ्जाख्यस्यास्य काव्यसन्दोहस्य प्रथमो भागो ''जयपुरवैभवम्'' शीर्षकं बिभ्राणः 1947 ई. वर्षे प्राकाश्यत। अत्र हि ''अपरा काशीति'' ख्यातस्य जयपुराख्यनगरस्य काव्यमयं वर्णनं गुम्फितमस्ति। महाकवेरस्य पूर्वजाः श्रीकृष्णभट्टकविकलानिधिप्रभृतयो जयपुरनरेशैः प्रभूतभूसम्पत्समर्पणपुरस्सरमत्रानाय्य ससम्मानं वासिताः। अस्मिन् कुले जयपुर-राजवंशेतिहासस्य काव्ये निबन्धनं शताब्दीभ्यः कविकर्मत्वेनानुवर्तते यतः श्रीकृष्ण-भट्टकविकलानिधिना ''ईश्वरविलासा''ख्ये महाकाव्ये इदम्प्रथमतया जयपुरनगरस्थापनायाः प्रत्यक्षदृष्टं विवरणं समावेशयता जयपुर-राजवंशेतिहासो व्यलेख्यत, स हि अष्टाविंशीं शताब्दीं यावदितिवृत्तं प्रस्तौति। तदनन्तरं व्रजभाषायां तद्वंशजैरितिहासकाव्यान्यलेख्यन्त। अस्यामेव परम्परायां साम्प्रतिकं जयपुरं काव्यशैल्यां वर्णयत् काव्यं प्रणीयेत यत्र जयपुरस्योद्यानानि, दर्शनीयस्थलानि, प्रमुखा महापुरुषा इत्यादयो विषया अपि वर्ण्येरन्निति जयपुरमहाराजस्य मानसिंह (द्वितीय) स्यानुरोधमनुसृत्य संस्कृते विविधेषुच्छन्दस्सु भट्टश्रीमथुरानाथशास्त्रिभिर्जयपुर-वैभवाख्यः काव्यतल्लजः प्राणीयत। अस्य हि विशेषोऽयमेवास्ति यदत्र ऊनविंश्याः शताब्द्या उत्तरार्धे विंश्याश्च पूर्वार्धे जयपुरनगर्यां कथं विकासकार्याणि समजनिषत, के के सामन्ता विद्वांसश्च नगरीमिमां गौरवान्वितां चक्रुरित्यादि ''यथार्थ'' विवरणं समुपलभ्येत पाठकैः शोधार्थिभिश्च।

स्वकीयाया जन्मभूमेर्वृत्तमुपनिबध्य सारस्वतमृणं परिशिशोधयिषता कविशिरोमणिना सोऽयं काव्यसन्दर्भः प्रथम-भागत्वेन मनोनीतोऽभूदतः समग्रस्य मञ्जुकवितानिकुञ्जस्य भूमिकाऽस्मिन्नेव भागे प्राकाश्यत। अत्रैव भारतविश्रुतानां विद्वन्मूर्धन्यानां म. म. पं. गिरिधिर-शर्मचतुर्वेदानां प्रारम्भिकं वक्तव्यमपि प्राकाश्यत। भारतेन विंश्याः शताब्द्याः पूर्वार्धे स्वातन्त्र्यमधिगतम्। राजतन्त्रस्य स्थाने प्रजातन्त्रमस्थाप्यत। तस्य वर्णनमप्यत्र जयपुरवैभवे प्राप्यते। जयपुरवैभवमिदं मञ्जुकवितानिकुञ्जस्य प्रथमः खण्डः, 'साहित्यवैभवं' च द्वितीय इति तेषां हार्दमभूत्। अतो भूमिकाभागो जयपुर- वैभवेन सह प्राकाश्यत।

भट्टपादानामन्तिमं काव्यमासीद् भक्तिकाव्यं ''गोविन्दवैभव'' नामकम्। आजीवनं नरकथामुद्दिश्य सांसारिकान् विषयान् वर्णयन्ति काव्यानि मया व्यरच्यन्त। इत्थं हि नरकथयाऽऽ-विलीकृतां वाणीं नारायणस्मरणेन पावयितुं भगवद्गुणानुवादपरां काव्यरचनां गोविन्दचरणयोः समर्प्य काव्यप्रणयनपरम्परां समापयिष्यामीत्यभिलाषस्तेषां 1957 ई. वर्षे गीताप्रेस (गोरखपुर) तः प्रकाशितेन गोविन्दवैभवकाव्येन सम्पूरितः। अत्र विविधेषु च्छन्दःसु भक्तिकाव्यं गुम्फितमस्ति। एतदनन्तरं तैर्न काऽपि काव्यरचनाऽक्रियत, गद्यप्रणयनमेव स्वःप्रयाणावधि कृतम्।

सर्वेभ्य एतेभ्यः काव्येभ्यः पूर्वं तैः काव्यप्रणयनविनोदविधया हालसङ्कलिताया गाथासप्तशत्याः संस्कृते समच्छन्दोऽनुवादः कृतोऽभूत्। प्राकृतगाथा इमाः सर्वात्मना हृदयावर्जिकाः किन्तु मूलप्राकृतभाषा नैषु दिनेषु सर्वेषां बोधगम्या, पाठकाः खलु गाथानां संस्कृतच्छायामधीत्य तासां रसास्वादनं कुर्वन्ति, छाया सेयं न च्छन्दोबद्धा अतो रसनीया न भवति। सर्वमिदं विचिन्त्य तैर्गाथानामासामार्यासु संस्कृतानुवादो व्यधीयत, सर्वविधं व्यङ्ग्यजातं विशदयन्ती व्यंग्यसर्वङ्कषाख्या टीकाऽप्यलिख्यत। संस्कृतगाथा-सप्तशती-नाम्ना ग्रन्थोऽयं मूल-प्राकृतगाथा-संस्कृत-छाया-टीकादि-सहितः प्राकाश्यत निर्णयसागर प्रेस (मुम्बई) तः 1933 ई. वर्षे।

ग्रन्थावल्यामस्यां विभिन्नेषु खण्डेषु ये ग्रन्थाः प्रकाश्यन्ते तेषु भट्टमहोदयैर्विलिखिताः संस्कृतटीकाष्टिप्पण्यो वा, ये ग्रन्थावगमे साहाय्यमाचरेयुः, पद्यैः सह प्रकाश्यन्ते। हिन्द्यनुवादोऽपि बहुषु ग्रन्थेषु प्रथमतः सहैव प्राकाश्यत। स नाऽत्र परिगृह्यते। ग्रन्थभूमिकादीनां ते ते भागा ये तदानीन्तनपरिदृश्यं स्पष्टीकुर्युः, त इह प्रकाश्यन्ते। इत्थं प्रायः शताब्दीमे-कामनुव्याप्य, १९०४ ई. तोऽद्यावधि भट्टमहाभागानां या साहित्यरचना ग्रन्थेषु, पत्रपत्रिकासु, रचनासंग्रहेषु वा प्रकाशमभजत् तस्याः संग्रहोऽत्र यथाशक्यं तस्मिन्नेव स्वरूपे समर्प्यते विदुषां प्रसादाय क्रमशः।

एवंविधे संग्रहे 'सम्पूर्णता', सर्वगुणसम्पन्नता च न कथमपि विनिश्चाययितुं शक्या, इति जानन्त्येव सुधियस्तथापि परिशुद्धतायै प्रयतितमस्माभिः। इदमपि स्पष्टं यच्छास्त्रीयमर्यादा-मनुसरद्भिरपि साम्प्रतिकैर्मुद्रकैर्बहुधा परसवर्णस्य स्थानेऽनुस्वारो विवशतयाऽनवधानतया वा मुद्र्यते, मर्षयिष्यन्ति विद्वांसस्तादृशानि स्थलानि। मुद्रणसौविध्यानुरोधादन्यविधमपि 'शैथिल्यं' समयानुरोधाद् विद्वद्भिः पाठकैः क्षंस्यते इत्याशासानैरस्माभिः प्रस्तूयते सङ्ग्रहोऽयम्।

ग्रन्थावल्यामस्यां पद्यमया ग्रन्थाः, कथोपन्यासगद्यादिमयाश्च पृथक् पृथग् भागेषु प्रकाश्यन्ते। मञ्जुकवितानिकुञ्जाख्या काव्यशृङ्खला प्रथमं प्रकाश्यते यस्यां जयपुरवैभवम्,

गोविन्दवैभवं चेत्याख्यं काव्यद्वयं कानिचित् मुक्तकानि च प्रथमे खण्डे, साहित्यवैभवाख्यं काव्यसङ्कलनं च द्वितीये खण्डे प्रस्तूयते। तृतीये खण्डे संस्कृतगाथासप्तशती प्रकाश्यते यस्या उल्लेखोऽस्माभिरत्र कृतपूर्वः। अत्र हि हालसंकलितानां प्राकृतगाथानां संस्कृते आर्याछन्दोबद्धं रूपान्तरणं भट्टश्रीमथुरानाथशास्त्रिणा प्रस्तुतं यत् 'समच्छन्दोऽनुवाद' पदेनाऽपि व्यपदिश्यतेऽन्यान्यभाषासु। सहैव व्यङ्ग्यसर्वङ्कषाख्या व्याख्यापि प्रकाश्यते, तल्लिखिता विस्तृता भूमिकापि यस्यां प्राकृतगाथानां काव्यसौन्दर्यं तु विवृतमेव,अमरुशतकेन, गोवर्धनकृतयाऽऽर्यासप्तशत्या च सह प्राकृतगाथानां वर्ण्यवस्तुनः कृतिशिल्पस्य च तौलनिकमध्ययनं विशिष्य विहितमस्ति, तदनु व्रजभाषायाः सुप्रथितायां कविवर्यविहारिविरचितायां दोहाच्छन्दोबद्धायां विहारिसप्तशत्यां कथं प्राकृतगाथासप्तशत्याः स्पष्टः प्रभावः परिलक्ष्यते इत्यपि विस्तृत्य विवेचनमस्ति। तौलनिकस्याध्ययनस्य निवेशं कृत्वा सम्पाद्य-ग्रन्थस्य सर्वाङ्गीणं विवेचनं प्रस्तुवन्तीनां भूमिकानां परम्परा पाश्चात्यविवेचनप्रथानामांशिकं प्रभावं गृह्णन्ती ऊनविंश्याः शताब्द्या उत्तरार्धे साहित्यपुनर्जागरणयुगे भारते प्रससारेति विदुषां मतम्। तादृशी परम्परा मुम्बईस्थनिर्णयसागर-मुद्रणालयात् प्रकाशितेषु ग्रन्थेष्वपि तदानीं दृष्टिगोचराभूत्। काव्यमालाख्यग्रन्थमालायाः प्रकाशनेषु तदिदं द्रष्टुं शक्यते (यथा म.म.पं. दुर्गाप्रसादद्विवेदसम्पादिते साहित्यदर्पणाख्यग्रन्थे तादृशी भूमिकाऽस्ति)। भाषेतरकृतीनां तौलनिकमध्ययनं क्रोडीकुर्वती विमर्शवहा सेयं संस्कृत-गाथासप्तशतीभूमिका तुलनात्मकाध्ययनगर्भभूमिकानां संस्कृते प्रथममवतरणं मन्यते(1933वर्षे)।

1933 वर्षे प्रकाशितेऽस्मिन् ग्रन्थे म.म. गोपीनाथकविराजमहाभागानामाङ्ग्लभाषाबद्धा संक्षिप्ता पुरोवागप्यमुद्रयत, सा नात्रोद्ध्रियते। अत्र हि प्रथमतो मञ्जुनाथकृतसमच्छन्दोऽनुवादरूपं संस्कृतार्यापद्यं,तदनु व्यङ्ग्यसर्वङ्कषा टीका च मुद्रिता, ततः प्राकृतगाथा, तस्याः संस्कृतच्छाया च तदनु समुद्धृता पृष्ठान्ते इत्ययं क्रमोऽनुसृतः।

ग्रन्थावलीप्रकाशनस्य समग्राऽपि परिकल्पना राष्ट्रियसंस्कृतसंस्थानकुलपतीनां स्वयमुत्कृष्टसर्जकानां, दूरदृष्टिं व्यापकं च समीक्षणसामर्थ्यं बिभ्रतां प्रो. राधावल्लभत्रिपाठि-नामेव प्रसादः, अतस्ते सर्वात्मना सर्वेषामस्माकं कार्तज्ञ्यं, धन्यवादांश्चार्हन्ति। जयपुरपरिसरे साहित्यविभागोपाचार्येण कर्मठेन विदुषा डॉ. रमाकान्तपाण्डेयेन स्वप्रतिभया श्रमेण च सम्पादन-कार्ये सामग्रीसङ्कलने च यत्प्रशस्यं साहाय्यमनुष्ठितं, तत्कृते सस्नेहं शतशो धन्यवादैराशीरा-शिभिश्चाऽभिनन्द्यतेऽयम्। तृतीयस्य खण्डस्य पृष्ठादिसंयोजने सुषमाशर्मचिरञ्जीविन्या यत्साहाय्यमनुष्ठितं तत्कृते सा साधुवादमर्हति।

अजरामराणां प्राकृतगाथानां संस्कृतभारत्यामियमवतारणा नूनमेव कञ्चिदध्यायं प्रणीतवतीति जानाना विद्वद्वर्या अभिरोचयिष्यन्ति मञ्जुनाथग्रन्थावल्यास्तृतीयमिमं खण्डमित्याशास्यते।

**देवर्षि-कलानाथशास्त्री**

-----

# भट्टश्रीमथुरानाथशास्त्रिप्रणीतटीकादिग्रन्थानां परिचयः

साहित्यवैभव-जयपुरवैभव-गोविन्दवैभवादिप्रबन्धप्रणयनप्राप्तप्रथिम्ना भट्टश्रीमथुरा-नाथशास्त्रिणा यथा साम्प्रतिकसंस्कृतसाहित्यस्य समुल्लासाय विरचिता विविधविधासंवलिताः काव्य-कथा-गीति-गजल-नाट्यादयो ग्रन्थास्तथैव शास्त्रसन्ततेः सातत्यं सारल्येनाविष्कर्तुं प्राचीनकाव्यानां सम्यगर्थावबोधाय च तैः केचन टीकाग्रन्थाः समीक्षाग्रन्थाश्चापि प्रणीता अभवन्। अथेह तेषां ग्रन्थानां वैशिष्ट्यं विज्ञापयितुं क्रमशः संक्षेपेण परिचयः पुरस्क्रियते।

**१. रसगङ्गाधरसरला-**

भारतीयकाव्यशास्त्रे पण्डितराजजगन्नाथेन नव्यन्यायशास्त्रीयपारिभाषिकपद-परिपूर्णपरिष्कारपद्धतिमवलम्ब्य प्रणीतो रसगङ्गाधराख्यः सन्दर्भः सम्प्रत्यपि सुधीसमवाये पाण्डित्यनिकषत्वेन समादृतो वर्तते। अवच्छेदकावच्छिन्न-प्रतियोगिता-अनुयोगिता-विषयता-विषयिताप्रभृतिनव्यन्यायप्रसिद्धपदप्रयोगं समवाप्य साहित्यिका ग्रन्थस्याऽस्याऽध्ययने न तथा समुत्सहन्ते। ग्रन्थेऽस्मिन् भट्टश्रीनागेशप्रणीता मर्मप्रकाशाख्यैव काचन व्याख्या लभ्यते स्म। भट्टमहाभागैः सममर्मप्रकाशव्याख्यस्य रसगङ्गाधरस्य स्वीयया सरलाख्यटीकया संवलितं संस्करणं निर्णयसागरमुद्रणालयात् प्रकाशमनायि। सेयं सरला ग्रन्थग्रन्थिभेदने तन्निगूढरहस्योद्बोधने च अध्येतर्णिामुपकारिका। नागेशेनाऽस्या मतभेदोऽपि दृश्यते पदे पदे। निर्णयसागरमुद्रणालयात् गुरुमर्मप्रकाशसनाथितरसगङ्गाधरेण सह सरलायाः प्रकाशनं १९३९ तमे वर्षेऽभूत्। १९४५ वर्षं यावद् ग्रन्थस्याऽस्य षट्संस्करणानि प्रकाशितान्यभवन्निति महत्त्वमस्य स्वयमेव सिद्धम्।

रसगङ्गाधरपरिशीलने सरलाया वैशिष्ट्यं बहुभिः खलु मनीषिभिः पुरस्कृतम्। अथात्र राष्ट्रपतिसम्मानितानां विश्रुतवैदुषीकाणां पण्डितविश्वनाथमिश्रमहोदयानां तद्विषयकं मतमुपस्थाप्यते-

रसगङ्गाधरोपरि वर्तमानासु अनेक व्याख्यासु महाविदुषो नागेशभट्टस्य व्याख्या तथा विद्वद्वरस्य भट्टमथुरानाथशास्त्रिणश्च सरला व्याख्या चेति द्वे व्याख्ये स्तः महत्त्वपूर्णे। अद्यत्वे वर्तमानानां समासां व्याख्यानामाधारभूमिः सरलाव्याख्यैवेति शक्यते वक्तुम्। प्रथमाननेऽल्प-कलेवरापीयं द्वितीयानने वैशद्यमादधाना स्फोरयति रसगङ्गाधरीयं रहस्यं निपुणम्। क्वचिच्च निराकृतं नागेशाभिमतमप्यनया। ग्रन्थोऽयं गभीरतरो विवेच्यविषयाश्चाऽनेके तथापि कतिपयान्येव स्थलानि आनीयन्तेऽत्र विचारपदवीम्।

इदम्प्रथमतया तावद् विचार्यते काव्यलक्षणमेव। पण्डितराजोऽस्ति शब्दपर्याप्तकाव्य-तावादी। अतएव रमणीयार्थप्रतिपादकः शब्दः काव्यमिति लक्षणयाञ्चकाराऽसौ। अर्थनिष्ठा

रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरतारूपा। लोकोत्तरत्वं चाह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेषः। लोकोत्तराह्लादस्य कारणञ्च काव्यार्थस्य पुनः पुनरनुसन्धानात्मको भावनाविशेष एव। इत्थञ्च–चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वं काव्यत्वमिति।

लक्षणस्यास्य पदकृत्यं स्पष्टयन् नागेशो लिखति यत् अस्मिन् लक्षणे शब्दपदमपहाय रमणीयार्थप्रतिपादक एव काव्यमित्येव यदि कथितं स्यात् तदा अनुरागस्य व्यञ्जको रमणीकटाक्षोऽपि काव्यत्वं यायात्। लक्षणेऽत्र प्रतिपादकशब्दं त्यक्त्वा यदि वाचकशब्दो लिखितः स्यात् तदाभिधेयार्थस्योपस्थापकस्य वाचकशब्दस्यैव काव्यत्वं स्यात्, अपगतञ्च स्यात् व्यङ्ग्यार्थप्रतिपादकस्य काव्यत्वम्। रमणीयता चार्थगतैवाऽभिप्रेताऽत्र। तेन तत्प्रतिपादकस्यैव शब्दस्य काव्यत्वं न तु रमणीयशब्दनिष्पादकस्य व्याकरणशास्त्रस्यापि काव्यत्वं कथञ्चन। लक्षणमिदं संघटयन्ती सरला वदति–चमत्कारजनिका या भावना तादृशभावनाया विषयीभूतो योऽर्थस्तत्प्रतिपादकः शब्दः काव्यम्। अस्मिन् काव्यलक्षणे ज्ञानपदमपहाय भावनापदनिवेशनमत एव कृतं यत् यस्मिन् कस्मिंश्चित् सरसपद्ये श्रुतिपथमागते सति उद्बोधकान्तरवशात् घटादयोऽप्यर्थाः तत्र परापतन्तश्चेत् तद्वाचका घटादयः शब्दा अपि कथं न भजेरन् काव्यत्वम्? अतो लक्षणे भावनापदनिवेशः। ज्ञाने भासन्तां बाह्यार्थाः किन्तु ज्ञानधारायां भावनायां तेषां भासनं तु नैव संभवति। भावनायामपि बाह्यार्था भासिष्यन्त एवेति चेदाग्रहस्तदा अपहाय प्रथमलक्षणं कृतं द्वितीयं काव्यलक्षणमित्थम् यत्प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वम्। लक्षणमिदं सरलायामेवं स्पष्टीकृतम्– येन यैर्वा शब्दैरुपस्थापितस्य (अर्थात् यादृशानुपूर्वीप्रतिपादितस्य) अर्थस्य भावनया (पुनः पुनरनुसन्धानेन) चेतसि चमत्कारजननं भवति तादृशचमत्कारजनकताया अवच्छेदके तादृशानुपूर्वीमत्वमेव काव्यत्वं भवतीत्याशयः। एवं सति सकलयाऽनुपूर्व्या यत्र चमत्कारो नोत्पद्यते किन्तु धारावाहिकरूपेणान्यदपि (अचमत्कारोऽपि) प्रतीयते तत्स्थलस्य निरासः।

अत्र पण्डितराजः चमत्कारनिष्ठजन्यतानिरूपितजनकतावच्छेदकं भावनात्वं स्वीकुरुते यतो हि काव्यार्थविषयक–पुनःपुनरनुसन्धानात्मिकया भावनयैव चमत्कारो जन्यत इति भावनात्वमेव चमत्कारजनकतावच्छेदकं वाच्यम्, किन्तु सरला तु भवनया चमत्कारजननं स्वीकुर्वत्यपि चमत्कारजनकतावच्छेदकं शब्दानुपूर्वीमत्वमेव स्वीकरोतीति स्पष्टमेवाऽत्र विप्रतिषेधः पण्डितराजेन सह।

वस्तुतः पण्डितराजस्य काव्यलक्षणपरिष्कारे व्याख्यातॄणां द्विधा प्रवृत्तिः दृश्यते। सन्त्येके शब्दपर्याप्तकाव्यतावादिनः, इतरे च मम्मटानुयायिनो रसचन्द्रिकाकृदादयश्चेति। सरला तु प्रथमपङ्क्तौ तिष्ठति व्याख्याति च पण्डितराजोक्ततत्त्वानि सारल्येन।

एवं रसगङ्गाधरोक्ततत्त्वपरिष्कारे सरलायाः समुपकारस्तु विद्यत एव। इयं क्वचित् पाठभेदादिसंशोधनेऽपि प्रवर्तत इत्यपरोऽपि विशेषः।

## २. कादम्बरीचषकम्-

भट्टमहाभागैः कादम्बर्यां निबद्धा चषकेत्याख्या टीका भानुचन्द्रगणि-सिद्धिचन्द्रगणिभ्यां प्रणीतायाः कादम्बरीटीकायाष्टिप्पणीरूपा वर्तते। इयं खलु ग्रन्थ- ग्रन्थिभेदनपुरस्सरं पाठादिसंशोधने तन्निर्धारणे चापि प्रवर्तते। प्राचीनटीकाकाराणां भ्रान्तयोऽप्यत्र महाभागैरेभिः बहुत्र पुरस्कृता दृश्यन्ते।

सर्वप्रथमं टिप्पणीयं भानुचन्द्रगणिसिद्धिचन्द्रगणिभ्यां प्रणीतया टीकया सह मुम्बईनगर-स्थनिर्णयसागरमुद्रणालयात् प्रकाशितोऽभवत्। भट्टमहाभागैः कादम्बर्याः पाठसंशोधने निर्धारणे च संस्करणेऽस्मिन् सुमहान् प्रयासो विहित इति ग्रन्थदर्शनेन ज्ञातुं शक्नुवन्ति सुधियः। ततोऽप्य-धिकं टीकाकर्त्रोः प्रमादसंशोधने प्रयतितं महाभागैरेभिरिति पदे पदे तद्व्याख्यानं दृष्ट्वा ज्ञायते। अथ ग्रन्थस्याऽस्य सम्पादने भट्टमहाभागैः भूमिकायां निर्दिष्टाः केचन अनुभवाः प्रकाश्यन्ते-

श्रीभानुचन्द्रगणि-तच्छिष्यसिद्धचन्द्रगणिमहोदयाभ्यां विरचिता सेयं व्याख्या मोगलसम्राजोऽकबरस्य समये निरमीयत। यतो हीमौ अकबरसम्राजा सभाजिताविति ताभ्यामेव पुष्पिकायां स्वहस्तेन लिखितम्। गुरवे भानुचन्द्रगणिने सम्राजा महोपाध्यायपदमर्पितम्। महाभागेन चानेन 'शत्रुंजय' करो मोचितः। शिष्योऽपि सम्राजा 'षुस्युदमा' इत्युपपदेनालङ्कृतः। सेयं व्याख्या प्रत्येकपदस्य पर्यायप्रकटन एव व्यग्रा, कामं स पर्यायशब्दः 'इन्द्रस्य टीका बिडौजाः' एव किं न भवेत्। एको यः शब्दः पर्यायत्वेनादौ परिगृहीतः, अन्तपर्यन्तमपि स एव पदे पदे व्यवह्रियते। यथा-ग्रन्थे यत्र यत्रापि सुखपदमायातं तत्र तत्र 'सातम्' इत्यनेनैव व्याख्यातं महाभागेन। 'भ्रान्तिः आरेका, जरा विस्रसा, कुवलयं कुवेलम्' इत्यादिरूपेणैव सर्वत्र व्याख्यातवानयम्। पर्यायशब्दनिवेशो हि जिज्ञासूनां सारल्येन बोधनायैव भवति। सरलस्यापि पर्यायपदनिवेशः करणीय एवेति न ब्रह्मवाक्यम्, किन्त्वेतस्योपरि न मनागपि दृष्टिनिक्षेपष्टीकाकर्तुः। स्नानप्रकरणे आगतं 'स्नान' पदं कादम्बरीमारभमाणस्य कृते न वज्रसारं स्यात्, किन्तु स्नानपीठस्य पर्यायपदम् 'आप्लवनचतुष्किकाम्' इत्येव कृत्वाऽयं कृती भवति। कुत्रचित्तु मूलपदं सर्वैर्बोध्यं भवति, टीकाकर्तुर्व्याख्या तु ज्ञातमप्यर्थं भ्रमिचक्रे निपातयति। यथा 'इन्द्रगोपैः (वर्षाकीटैः)' इत्यस्य व्याख्या 'अग्निरजोभिः' इति। कोऽस्यार्थ इति हि विदन्तु विद्वांस एव। 'विन्ध्यः जलबालकः, निगडः अन्दुकः, मदनः जराभीरुः, धूमो दहनकेतनः, जानु नलकीलकः' इत्यादिरूपेण कृता व्याख्या क्रियते उपकारायेति विमृशन्तु मनीषिण एव।

कुत्रचित्तु व्याख्यापाटवं तथा प्रकाशयति यथा कृतबुद्धिरपि वराको ग्रन्थस्वारस्यं विहाय व्याख्यापदानामर्थबोधायैव व्यग्रो भवति। नगरं 'द्रङ्गम्' इति कृत्वा व्याख्याति। 'लता' पदस्य हि सुप्रसिद्धोऽर्थः। किन्तु टीकाकारस्तदर्थमाह- 'सरलवृक्षः'। अत्र हि तन्नामको वृक्षविशेषः सर्वस्यैव बुद्धिनिष्ठो भवेत्। भूयस्सु स्थलेषु तु टीकाकारस्य व्याख्यामालोक्य क्षमाशीलस्यापि मानसमुद्वेलं भवति। 'निर्लक्षणा पाण्डुरपृष्ठा', 'दावानलशङ्का वनवह्निद्वापरः', 'वसन्त इव इष्य इव', इत्यादिव्याख्या कस्य क्षोभाय न भवेत्?

काव्ये च साहित्ये च टीकाकारमहोदयस्य कियत्पाण्डित्यमिति त्वग्रे निवेदयिष्यामि, किन्तु पर्यायशब्दान्वेषणे सर्वमपि वैदुष्यमेव निःशेषयतीति तु प्रत्येकमार्मिकस्यैवाऽवगतं भवेत्। 'निष्पतन्तीम्' इत्यस्य टीकां करोति 'अधःसंयोगफलिकां क्रियां कुर्वन्तीम्'। 'श्वसन्ती' इत्यस्यार्थमाह 'एतनं गृह्णन्ती'। 'एतनं गृह्णन्ती' इत्यस्यार्थ एतस्मिन्काले किमु सहसैवोदयेत्? परं सर्वस्यापि पदस्य यत्किञ्चित्पर्यायपदमवश्यं निवेश्यम्। पर्यायस्थापनेनैव टीका सुटीका भवतीति महोदयस्यास्य विचारः। किन्तु पर्यायनिरपेक्षस्य पदस्य बलात्पर्यायसंनिवेशे कुत्रचित्कुत्र-चित्कीदृशोऽनर्थः संभवतीति तु नास्य महाभागस्य विचारशक्तिरपि।

सूक्ष्ममीक्ष्यतां तावत्-गद्यकाव्यं हि कवीनां कृतित्वपरीक्षायै निकषो नाम। गद्य-काव्येष्वपि 'कथा'-काव्यमतिमनोहरम्, यद्धि वर्तमानकालिक 'उपन्यास (Novel)' स्थापनीयम्। तत्रापि- वाचयतामाहाररुचिमपि तिरोदधत्तदिदं काव्यमस्ति यस्य लेखको मार्मिकाणां शिरोमणिः श्रीमान्बाणः। तस्यैव काव्यस्य नायिकायाः सौन्दर्यसारसंघटिताया देवाङ्गनायाः (कादम्बर्याः) सौन्दर्यवर्णने महोदयोऽयं 'नाभिम्' व्यपदिशति 'तुन्दकूपीम्' इति! तुन्दपदं हि प्रचण्डोदरायाः कस्याश्चित्पम्फुल्यमानमुदरं सूचयत् (यतः प्रफुल्लोदस्तुन्दिल इत्युच्यते) गहनान्धकारितं महान्तं नाभीगर्तं चेतसि चित्रयतीति मन्ये न वक्तव्यं भवेन्मार्मिकाणां कृते। किन्तु सर्वतो निमीलितनयनोऽयं न किञ्चित्पश्यति। येन केनापि रूपेण पर्यायपदस्थापनायैव सहस्रनयनः सन् सोऽयं जागरूकः। अन्यदपि व्याख्यानं दृश्यताम्- 'तडिद्भिः ऐरावतीभिः', 'शुष्काणि वानानि', 'पिपासा उदन्या', 'वल्कलोपान्तेन चोचाञ्चलेन'। वल्कलोपान्तमित्यस्य योऽर्थं न ज्ञातवान् तदर्थं ह्येषां व्याख्याऽ-पेक्षिता, तस्य कृते चोचाञ्चलमिति किं सुखबोध्यं भवेत्? प्रसिद्धाऽप्रसिद्धयोरन्तरं न विदन्नेव किं 'निरन्तरव्याख्या'कारो भवति?

टीकाकारमहाभागस्य व्याकरणज्ञानमप्यलौकिकम्। कर्म-कर्तृवाच्ययोः सर्वत्रापि निरर्गलं प्रयोगः। 'कृतान्तमुखकुहरादिव विनिर्गतमात्मानं मन्यमानः (अहम्)' इत्यत्र 'मन्यमानः' इति कर्तृवाच्यक्रियायाः 'ज्ञायमानः' (पृ ७४) इति व्याख्या। एवं प्रायः सर्वत्रैव। आत्मनेपद-परस्मैपदव्यत्ययाः पदे पदे। 'व्रजमानानीव' संचरमाणानीव' (तृतीयान्तयोगं विनापि)। 'निमज्जप्रानम्' 'कम्पति सति' 'उत्पश्यमानः' (पृ. ७५) 'अजनिषम्' इत्यादीनि स्थाने स्थाने। लिङ्गव्यत्ययाः प्रतिपदम्- 'बाहुवल्ल्यालिङ्गनान्' 'दन्तक्षतान्' 'कर्णावतंसानि' 'त्यज्यमानासु सत्सु', 'श्वेतायमानासु सत्सु' (पृ. ५४७)। ध्वनिशब्दस्य, 'रक्तिमा' इत्यादि इमनिच्प्रत्ययान्तानां च प्रायः स्त्रीत्वमेव प्रयुक्तम्। 'पुस्तकान् शास्त्रान्' (२०५)। 'अप्रापम्, अप्रार्थयत,' इत्याद्यपि बहुत्र। शिष्या इत्यस्य लोकोत्तरा व्याख्या 'शिष्यिणी' इति (पृ. २२०)। 'पराभवितस्य' 'रुदनम्' (पृ. ६८२) 'कार्यताम्' इत्येतस्य व्याख्या 'काराय्यताम् इत्यादि ('कराइये' इति 'हिन्दीं दृष्ट्वा') (पृ. ६६३)।

एवं कादम्बरीग्रन्थस्य टीकासम्पादने भट्टमहाभागैर्यो हि प्रयासो विहितः स तेषां कथनेनाऽनेन ज्ञातुं शक्यते। वस्तुतः भट्टमहोदयानां टिप्पणीं विना टीकाया अस्या एकमपि पदं

ज्ञातुं न शक्यते। महाभागैरेभिः पदे पदे टीकाकारस्य व्याख्याने संशोधनपूर्वकं ग्रन्थस्य शुद्धपाठा अपि निर्दिष्टाः सन्ति। बहुत्र 'इति नोचितम्' 'इति उचितः पाठः' इत्येवं निर्दिशद्भिः ग्रन्थस्य टीकायाश्च संशोधनमकारि भट्टमहोदयैरत्र। तत्सर्वं ग्रन्थं दृष्ट्वा ज्ञातुं शक्नुवन्ति सुधियः।

### ३. संस्कृतगाथासप्तशती–

हालकृताया गाथासप्तशत्याः संस्कृतानुवादरूपोऽयं ग्रन्थः। गाथानामर्थबोधार्थं भट्टमहाभागैरत्र सर्वङ्कषानाम्नी टीकाऽपि लिखिताऽभूत्। अयं ग्रन्थः १९३३ वर्षे निर्णयसागर-मुद्रणालात् प्रकाशितः।

### ४. शिलालेखललन्तिका–

भट्टमहाभागैः नैकेषां शिलालेखानां सङ्कलनं सम्पादनं च कृत्वा ग्रन्थेऽस्मिन् प्रकाशनं कृतमभूत्। अयमपि ग्रन्थः १९४१ ई. वर्षे मुम्बईनगरस्य निर्णयसागरमुद्रणालयात् प्रकाशितोऽभवत्।

महाभागैरेभिः कानिचित् पाठ्यपुस्तकान्यपि लिखितान्यभवन्। तेषु सुलभसंस्कृतम् संस्कृतसुबोधिनी चेति द्वौ पाठ्यग्रन्थावस्माभिर्दृष्टौ। कविकलानिधि-श्रीकृष्णभट्टस्य ईश्वरविलासमहाकाव्ये विलासिनीटीका श्रीमद्भिः प्रणीताऽभवत्। टीकयाऽनया सनाथितस्य ईश्वरविलासमहाकाव्यस्य प्रकाशनं १९५८ ई. वर्षे राजस्थान-प्राच्यविद्याप्रतिष्ठानतः समभूत्। ग्रन्थस्याऽस्य पुनः प्रकाशनं २००६ तमे वर्षे जयपुरस्थजगदीशसंस्कृतपुस्तकालयात् हिन्दी-व्याख्यया सह सञ्जातमस्ति। कविकलानिधेः पद्यमुक्तावल्यां वृत्तमुक्तावल्यां चापि भट्टमहाभागैः टीका लिखिता। एतेषां टीकया सह ग्रन्थयोरनयोः क्रमशः १९५९ तमे तथा च १९६२ ई वर्षे राजस्थानप्राच्य-विद्याप्रतिष्ठानात् प्रकाशनं समभवत्।

भट्टमहाभागानां जीवनं साहित्यं चोपजीव्य बहुभिः खलु विद्वद्भिः ग्रन्थाः प्रणीता अभवन्। नैकेऽनुसन्धित्सवश्छात्रा महाभागानामेतेषां साहित्ये शोधोपाधिमपि लब्धवन्तः। जिज्ञासूनां शोधार्थिनां समुपकाराय केचन प्रमुखा ग्रन्था अत्र निर्दिश्यन्ते।

### १. मञ्जुनाथगौरवम्–

गङ्गाधरभट्टमहोदयानां सम्पादकत्वे भट्टमहोदयानां जीवनं साहित्यं चाश्रित्य लिखितानां निबन्धानां सङ्कलनरूपोऽयं ग्रन्थः १९९० तम ई. वर्षे राजस्थानसंस्कृतअकादमीतः प्रकाशनमवाप।

### २. श्रीमथुरानाथशास्त्रिणः कृतित्वसमीक्षणम्–

डॉ. प्रभाकरशास्त्रिणां सम्पादकत्वेऽस्य प्रकाशनं १९९५ ई. वर्षे राजस्थान-संस्कृतअकदमीतोऽभवत्।

### ३. मञ्जुनाथगद्यगौरवम्-

आचार्यराधावल्लभत्रिपाठिप्रवर्तितायाः प्रख्याग्रन्थमालायाः षष्ठः स्पन्दः मञ्जुनाथग्रन्थ-गौरवमिति नाम्ना डॉ. रमाकान्तपाण्डेयस्य सम्पादकत्वे २००४ ई. वर्षे नवदेहलीस्थप्रतिभा-प्रकाशनेन प्रकशतामानीतः। अत्र भट्टमहोदयानां प्रमुखा गद्यरचनाः सङ्कलिताः सन्ति।

### ४. मञ्जुनाथवाग्वैजयन्ती-

शिमलानगरस्थभारतीय-उच्च-अध्ययन-संस्थानम् इत्याख्यायाः संस्थायाः सहकारेण मञ्जुनाथस्मृतिसंस्थानम् २००४ ई. वर्षस्य अप्रैलमासे (३-४-दिनाङ्कयोः) ''संस्कृत वाङ्मय में भट्टश्रीमथुरानाथशास्त्री' इत्यस्मिन् विषये राष्ट्रियसंगोष्ठीं समायोजयत्। अत्र देशस्य विभिन्नेभ्यः प्रान्तेभ्यः समागतानां विदुषां व्याख्यानानि समभवन्। देवर्षि-कलानाथशास्त्रिणां सम्पादकत्वे प्रकाशितेऽस्मिन् ग्रन्थे तान्येव व्याख्यानानि भट्टमहोदयानां साहित्यसमीक्षणपराणि प्रकाशितानि सन्ति।

जयपुरात् प्रकाश्यमानाया भारतीपत्रिकाया भट्टमथुरानाथशास्त्रिस्मृतिविशेषाङ्केऽथ च स्वरमङ्गलाया भट्टजन्मशताब्दीविशेषाङ्के भट्टमहोदयानां साहित्यादिसमीक्षणे काचिदभिनवा दिगुन्मीलिता सहृदयमनीषिभिः। विविधेषु विश्वविद्यालयेषु भट्टमहोदयानां साहित्यमाश्रित्य शोधकार्याण्यभवन् भवन्ति चाद्यापीति तत्सर्वं विद्वद्भिर्गवेषणीयमिति शम्।

-रमाकान्तपाण्डेयः

----

# भट्टश्रीमथुरानाथशास्त्रिणां जीवनं साहित्यसेवा च

### वंशः पूर्वजाश्च -

भट्टश्रीमथुरानाथशास्त्रिणो जन्म राजस्थान-वासिनाम् उत्तरभारते निवसतामान्ध्राभिजनानां विद्वद्ब्राह्मणानां कुले जयपुरेऽभूत्। प्रायश्चतुष्पञ्चशताब्दीतः पूर्वं विभिन्नैर्हेतुभिर्दक्षिणदिग्देशाद् बहूनि विद्वत्कुलानि सामूहिक-रूपेणोत्तर-भारतं प्रति प्रव्रजनमत्र विभिन्नेषु प्रान्तेषु प्रवासं च प्रारेभिरे। वल्लभाचार्यप्रभृतीनां वैष्णवाचार्याणां भक्तिधारा-प्रवाह-प्रचारोद्देश्यकेषु प्रवासेषु, वाराणस्यादिविद्याकेन्द्रेषु शास्त्रार्थाद्युद्देश्यकेषु पर्यटनेषु च सहचारित्वमापन्नानि बहूनि ब्राह्मणकुलानि समागच्छन्नुत्तर-भारते, अत्र च राजसम्मानादिना प्रश्रयं प्राप्य स्थायिरूपेण निवासं चक्रिरे। स्वयं वल्लभाचार्य आन्ध्राभिजनोऽ-भूदुत्तर-भारते च न्यवसत्। एवंविध एव तैलङ्गब्राह्मणानां कृष्णयजुर्वेदान्तर्गत-तैत्तिरीयशाखाध्यायिनां वंश एको मोगलकाले आन्ध्रप्रदेशादुत्तर-भारते समाययौ यस्य मूलपुरुषो बावीजी दीक्षितोऽभूत्। आङ्गिरस-आयास्य-गौतमेति त्रिप्रवरान्विते गौतमसगोत्रे वंशेऽस्मिन् बहवः परिनिष्ठिता विद्वांसोऽभूवन्। 'देवर्षि' इति अवटङ्कधरोऽयं वंशो 'देवलपल्ली' 'देवरकोंड' इत्याख्याद् वा प्रदेशान्निर्गत इति बहूनां धारणा, अत एव संस्कृत्य 'देवर्षि' इत्यभिजनाभिधानं समभूत इति तेषामाशयः। अन्ये तु दक्षिणभारतात् काशीं, काशीतः प्रयागं, प्रयागाद् रीवाँ नगरं च गत्वा तत्र राजसम्मानस्वरूपं 'दिवरिखिया' इत्याख्यं ग्रामं बान्धवनरेशाद् गोपालसिंहात् प्राप्तवान्। पूर्वपुरुषो मण्डलदीक्षित इति तमिमं 'देवरिख' ग्रामं व्यपदिश्य संस्कृतं नाम 'देवर्षि' इत्यवटङ्कस्य समभूदिति कथयन्ति।

भवतु तावत्किमपि कारणं, किन्तु देवर्षि इत्यवटङ्कधरोऽयं परिवारः काश्यां, प्रयागे, रीवांनगरे, अनूपशहरे च निवासं विधाय कवित्वख्यातिवशाद् विभिन्नैः राजवंशैः कुलपरम्परया सम्मानितो राजस्थानप्रान्ते बुन्दीनगरं प्राप यत्र ग्रामादिसम्पत्ति- प्रदानसम्मानेन वासितः। बून्दीपतेर्बुधसिंहस्य राजभाषाया रत्नं देवर्षिश्रीकृष्णभट्टः कविकलानिधिः संस्कृत-प्राकृताऽपभ्रंशव्रजभाषादीनां तलस्पर्शी विद्वान् विश्रुतः कविरलङ्कारशास्त्री चाऽभूद् यस्यैतिहासिकानि 'ईश्वरविलास' प्रभृतिकाव्यानि, 'पद्य-मुक्तावली' प्रभृतिमुक्तकसङ्ग्रहाः, 'वृत्तमुक्तावली' प्रभृति छन्दःशास्त्रग्रन्थाः संस्कृते, 'अलंकारक-लानिधि' 'शृंगार रसमाधुरी' प्रभृतयो रीतिग्रन्थाश्च व्रजभाषायां प्रकाशिताः। प्रायो विंशतितोऽप्यधिका रचना अप्रकाशिता विविधेषु ग्रन्थागारेषूपलभ्यन्ते।

सोऽयं श्रीकृष्णभट्टो बून्दीपतेर्बुधसिंहस्य राजसभातो (बून्दीनरेशाद् याचनापुरः-सरं) जयपुरनरेशेन तत्संस्थापकेन सवाईजयसिंहेनाऽऽनीतस्तेनानुष्ठितेऽश्वमेधमखे सक्रियां भूमिकां निरवहत्, राजाज्ञया बहून् ग्रन्थांश्च प्रणिनाय। सवाईजयसिंहेन 'कविकलानिधि' रित्युपाधिना सम्मानितः सोऽयं मनीषी जयपुरनगरे एवं सप्तदश्यां शताब्द्यां (१६७५-१७६१ ई.) स्थायिरूपेण प्रत्यष्ठिपत् स्वकीयं परिवारम्। तदनु वंशेऽस्मिन् बहवो विद्वत्कवयः समभूवन् येषु श्रीकृष्णभट्टतनयो वाणी-भारतीत्याद्युपनामधारी श्रीद्वारकानाथभट्टः संस्कृत-व्रजभाषादीनां विख्यातः कविरासीत्। जगदीशभट्ट-वासुदेवभट्ट-मण्डनभट्टादयो बहवो वंशजा अस्य राजकवयो मनीषिणो लेखकाश्चाभूवन्।

## शिक्षा-

मण्डनभट्टो जयपुरराजवंशेन प्रभूतं सम्मानितः कविरासीत्। अस्यैव कुले श्रीलक्ष्मीनाथ-भट्ट-सुतस्य श्री द्वारकानाथभट्टस्य पत्नी श्रीजानकीदेवी मथुरानाथं संवत् १९४६ वैक्रमे वर्षे आषाढ-कृष्ण-सप्तम्यां (१८८९ई०) प्रासौत्। एतत्पिता द्वारकानाथभट्टः सांसारिकव्यवहारविमुखः आध्यात्मिकप्रवृत्तिपरः श्रीमद्भागवतादिवाचने जप-पूजादिषु चाधिकां रुचिमन्वभूत्। पितामहः श्रीलक्ष्मीनाथ एव परिवारे प्रबन्धादिषु प्रमुखोऽभूत्। संस्कृतवैदुष्यपरम्परापरिपूतेऽप्यस्मिन् कुले ''राजवृत्तिसम्मानादि (तदानीन्तन) राजभाषायामुर्दूभाषायामधिकं लभ्यते'' इति धारणाऽऽसीत्। अतः शिशोर्मथुरानाथस्य शिक्षा उर्दूभाषायां भवतु येन सोऽयं न्यायालयादिषु सम्मानितं किञ्चित्पदमधि-गच्छेदित्यासीदेतत्पितामहस्य वाञ्छा। किन्तु स्वभाविकी रुचिरस्य शिशोः संस्कृतेऽभूत्। एवं च यत्किञ्चिदुर्दूभाषां पठित्वा कुलपरम्परापरिगतानि संस्कृत-पुस्तकान्यनेन रुचिवशात् पठितुमारब्धानि। तदनु प्राथमिककक्षासु शिक्षायै सोऽयं जयपुरीये महाराज-संस्कृत-कॉलेजे प्रवेशितः।

तत्र प्रवेशिकाध्यापकैः पं. काशीनाथशास्त्रिप्रभृतिभिः संस्कृतव्याकरणे लघुकौमुद्यादिषु भृशं सपरिश्रममध्यापितोऽसौ स्वल्पीयस्येव वध्यसि प्रवेशिका-परीक्षामुदतरत्। प्रवेशिकापरीक्षायामार्हन्तीं प्राप्तवन्तमेनं साहित्य-न्याय-व्याकरणेति शास्त्रत्रयस्य विद्वांसोऽध्यापकाः स्वस्वविषयं पठितुं प्रैररिन्। बहुविध-विचारानन्तरं निर्धारितं यदयं साहित्यव्याकरणेति शास्त्रद्वयं समकालमेव पठतु। तदानीं विषयविभाजनं, परीक्षाप्रणाली च नूत्नतया प्रवर्तिताऽभूत् कतिपयवर्षपूर्वमेवाति-कठोरा अभूवन् नियमास्तथापि तत्कालीनेन शिक्षासञ्चालकेन श्रीसञ्जीवनगङ्गोपाध्यायेन विषयद्वयं पठितुं विशेषानुमतिरस्मै प्रदत्ता। साहित्याध्यापकाः नांगल्याभिजनाः श्री गोपीनाथदाधीचाः व्याकरणाध्यापकाः राजगुरुहरिदत्तझाममहाभागाश्चाभूवन्नस्याऽध्यापकाः। सोऽयं साहित्योपाध्याय-परीक्षां १९०१ ई. वर्षे व्याकरणोपाध्यायपरीक्षां च १९०३ ई० वर्षे समुदतरत्। साहित्यव्याकरणयोः प्रत्येकं वर्षत्रयव्यापी सोऽयं पाठ्यक्रमो वर्षषट्कमग्रहीष्यत्, विशेषानुमतिर्यदि नाऽलप्स्यत।

तदनु व्याकरणशास्त्रिपरीक्षाऽनेन सर्वप्राथम्यं लब्ध्वा प्रथमश्रेण्या १९०७ ई० वत्सरे समुत्तीर्णा। महाभाष्य-शेखर-मनोरमादि-विमर्शग्रन्थेषु सुबहु परिश्रम्य कॉलेजाध्यक्षाणां पं. लक्ष्मीनाथशास्त्रिणां शिष्यत्वे, न केवलं कॉलेजे एव, अपितु तेषां गृहेऽपि निरन्तरमध्ययनेनाऽनेका रात्रीरतिवाह्य, कष्टशतं सोढ्वा, गृहवाससुखानि परित्यज्य च 'गुरुकुलक्लिष्टेन' छात्रेणाऽनेन सपरिश्रममस्यां साफल्यं लब्धमभूत्। काशीस्था म.म.पं. शिवकुमारमिश्रप्रभृतयो भारतविश्रुता विद्वांसस्तदा परीक्षका अभूवन्। आसीत्तदा सेयं परिपाटी यत्प्रौढिम्नः पूर्णतः परीक्षिकास्वमूषु परीक्षासु ससम्मानमुत्तरतां परीक्षार्थिनां प्रमाणपत्रेषु परीक्षकाः स्वहस्ताक्षराण्यकुर्वन्, बहुधा च स्वकीन्याभिमतान्यपि व्यलिखन्। एतस्य प्रमाणपत्रे परीक्षकेण ''लेखपटुरयं बटुः'' इति टिप्पणी प्रत्ताऽभूत्।

एतस्मात् पूर्वं १९०६ ई० वत्सरे पंजाब-विश्विविद्यालयीयायां सर्वोच्चायां शास्त्रिपरीक्षायामयं प्रथमश्रेण्यां सर्वस्मिन्नपि विश्वविद्यालये प्राथम्यमलभत्। १९०९ ई. वर्षे पं. श्रीकृष्णशास्त्रिद्राविडस्य शिष्यरूपेणाऽयं महाराजसंस्कृतकॉलेजीयच्छात्रत्वेन साहित्याचार्य-परीक्षायां साफल्यमभजत्। समीक्षा-चक्रवर्ति-श्रीमधुसूदन-ओझामहाभागादप्ययं वेद-ब्राह्मणोपनिषद्-दर्शनग्रन्थानध्यगीष्ट।

अध्ययन-समकालमेव सम्पादनस्य साहित्यरचनायाश्च या प्रवृत्तिरस्मिन् परिलक्षिताऽभूत्तां विशदीकृत्य साहित्यसर्जनाया या भागीरथी भट्टमहोदयेन अजस्रं प्रवाहिता तस्याः परिचयोऽनुपदमेव

प्रदीयते। अत्र तज्जीवनयात्रायाः संक्षिप्तमितिवृत्तमुल्लिख्यते पूर्वम्। सुन्दरलालभट्टस्य राजसम्मानिते ग्राम-सम्पत्तिस्वामिनि चाधिष्ठाने उत्तराधिकारित्वेन सुन्दरलालभट्टेन दत्तकपुत्रत्वेन गृहीतः सोऽयं भूसम्पत्तेः प्रबन्धं, प्रतिष्ठानोपरि यद् ऋणमुपचितमभूत्तस्य परिशोधनं च कृत्वा वित्तीयां स्थितिं दार्ढ्यं नीतवान्। ओरछा- (मध्यप्रदेश) राजगुरोः श्रीरघुनाथदेवदाऊजू महाभागस्य सुतया सावित्रीदेव्या सहाऽस्य विवाहः १९०९ई० वत्सरे समजायत। तिस्रः सन्ततयोऽपि समभूवन् किन्तु शैशव एव निधनं प्रयाताः। ततोऽजयगढ़ (मध्यप्रदेश) स्थस्य पं. नारायणरावस्य पुत्र्या मथुरादेव्याः पाणिग्रहणमनेन कृतं किन्तु कालगत्या मथुरादेवी वर्षावधावेव स्वर्गमारूढा। तदनु १९२२ ई० वत्सरे जयपुरसन्निकटस्थस्य महापुराग्रामस्य निवासिनः पं. शिवानन्द-गोस्वामिवंशजस्य पं. श्री गोपीकृष्णगोस्वामिनः सुतया रामादेव्या सहाऽस्य विवाहः समजायत। विवाहबन्धनमिदं चिरस्थायि प्रतिपन्नम्। १९३४ ई० वर्षे कलानाथनामानं सुतं, १९३७ वर्षे जयानाम्नीं कन्यां, १९४० वर्षे विजयानाम्नीं कन्यां, १९४५ वर्षे च कमलानाथनामानं सुतमियं रामादेवी प्रासौत्।

## अध्यापनं राज्यसेवा च-

साहित्याचार्य-परीक्षामुत्तीर्य महाराजसंस्कृतकॉलेजे प्राध्यापकपदे सेवामारब्धुमयं प्रोत्साहितो वयस्यैः। संस्कृतरत्नाकरादिमासिकपत्रेषु लेखकत्वेन सम्पादकत्वेन चास्य साहित्यसेवा तदानीं प्रसिद्धिं प्रारभमाणाऽभूत्। प्रतिभाऽप्यस्य सुविदिताऽऽसीत् किन्तु तदानीन्तनेन महाराज-संस्कृतकॉलेजाध्यक्षेण महामहोपाध्याय- पं. दुर्गाप्रसादद्विवेदेन पं. गोपीनाथधर्माधिकारिनामा विद्वानेकः प्राध्यापक-पदे नियुयुजे। एवं हि कालेजस्यास्य सेवापराङ्मुखोऽयं संस्कृत-हिन्द्यादिभाषासु काव्यादिरचनां कृत्वा हिन्दी-संस्कृताध्येतॄन् स्वगृहेऽध्याप्य च साहित्यजगतः शिक्षाजगतश्च सेवां कर्तुमारेभे।

भूसम्पत्तेः स्वामी राजसम्मानित-प्रतिष्ठानस्य चोत्तराधिकारी सोऽयमभूदिति कृत्वा नैवंविधानां तदानीन्तनानां विदुषां सम्मुखे आजीविकायास्तादृशी समस्याऽभूत्।

तदैव १९२४ ई. वर्षे जयपुरमहाराजस्य श्रीमानसिंहस्य प्रथमो विवाहमहोत्सवो जोधपुर-नगरे समायोजितोऽभूत्। समारोहेऽस्मिन् सोऽयं तत्र सङ्गतेन तत्कालीन-शिक्षा-सञ्चालकेन श्रीश्यामसुन्दरशर्मणा (यो ह्यस्याभिन्नं मित्रं परस्तात् समजायत, यश्चैतस्य मृत्योर्दिनद्वयात् पूर्वमेव दिवमारूढः) समनुरुद्धो यत्संस्कृतकॉलेजे साहित्याध्यापकपदमयं स्वीकुर्यादिति। एतत्फलस्वरूपं २६/१/२४ दिवसेऽयं म.म. दुर्गाप्रसादद्विवेदानामध्यक्षत्वकाले एव तत्राऽध्यापकपदं जग्राह। तदानीं जयपुरे आङ्गलशिक्षापद्धत्यनुसारं सामान्यशिक्षाप्रकारस्य विश्रुतो महाविद्यालयो महाराजासंस्कृतकॉलेज इति नाम्ना प्रचलति स्म, यत्र संस्कृत-विषयोऽपि शिक्ष्यते स्म। अत्र संस्कृतप्राध्यापकपदे पं. मधुसूदन ओझा, पं. वीरेश्वरशास्त्री, पं. बदरीनाथशास्त्री, पं. सूर्यनारायणाचार्य इत्यादयो विद्वांसोऽधितस्थिवांसः आसन्। १९२५ई० वर्षे एव कालेजेऽस्मिन् प्राध्यापकस्यावश्यकतामनुभूय पं. श्यामसुन्दरशर्मणाऽयं तत्र नियुक्तः। अस्मिन् कॉलेजे १९३१ वर्ष-पर्यन्तमयं छात्रान् सरलया पद्धत्या संस्कृतं पाठयामास। प्राथमिक-संस्कृत-शिक्षण-पुस्तकानां लेखनायाऽस्मै सोऽयं प्रसङ्ग एव प्रेरणामदात्।

एतदनन्तरं जयपुर-राज्याश्रितानां संस्कृतपाठशालानां निरीक्षकपदे सोऽयं राज्यशासनेन समाकारितो यत्र १९३१ वर्षात् १९३४ वर्षपर्यन्तमयं कार्यमकरोत्। तदानीं संस्कृत-कॉलेजे महामहो-पाध्यायगिरिधरशर्मचतुर्वेदाः कालेजाध्यक्षपदे, साहित्यविभागाध्यक्षपदे च पं. श्री बिहारीलालशर्मणः (डबलाचार्य इति प्रथिताः) कार्यं कुर्वाणा आसन्। बिहारीलालशर्मणां निधनोत्तरं भट्टमहोदयः

साहित्यविभागाध्यक्षपदे २५/०२/१९३४ दिनाङ्कात् न्ययोज्यत यत्राऽयं ई. १९४२ वर्षावधि कार्यं कृत्वा सेवानिवृत्तोऽभूत्। नाऽऽसीदेतस्मात् पूर्वं देशीय–राज्यशासनेषु तादृशं कठोरमेकरूपं सेवानिवृत्ते–र्बन्धनम्। न वा राजकीयेष्वभिलेखेषु जन्मतिथेः प्रमाणनस्य सुदृढाऽभूत् परम्परा।

१९४२ ई० वर्षे सोऽयं भट्टमहोदयः केवलं ५३ वर्षदेशीय एवाऽभूत् किन्तु संयोगवशाद् राज्यसेवाऽभिलेखे कदाचन प्रारम्भे जन्मवर्षं संवत् १९४४ इति समभूल्लेखितम् (संवत १९४६ इति स्थाने) अतो यदा ५५ वर्ष–वयस्कानां राज्यसेवकानां सेवानिवृत्तिदृशा निर्धारणं क्रियमाणमभूत्तदाऽन्यैः सह भट्टमहोदयस्यापि सेवानिवृत्तिः क्रियतामिति विचारः समसूच्यत। भट्टमहोदयेन जन्मतिथि–संशोधनाय, सेवाया अवधिवृद्धये (एक्सटेंशन) वा न जात्वपि प्रयतितम्। सोऽयं बहुधा कथयति स्म ''मया सेवायै न कदापि प्रार्थनापत्रं प्रदत्तम्, स्वयं राज्याधिकारिभिरेव मम साहित्यसेवागुणानां बहुमानरूपेणाऽहं सेवायां गृहीतः। एवं हि यदा ते सेवानिवृत्तेरादेशान् दित्सवस्तर्हि किमित्यहं तद्विरोधे प्रयत्नान् कुर्याम्?'' इति।

एवं त्रिपञ्चाशद्वर्षीये वयसि भट्टमहाभागो राजकीयसेवातो निवृत्तोऽभूत्, न तु साहित्य–सेवातः। प्रत्युत सेवानिवृत्तेरनन्तरं सर्जनात्मककार्येषु समधिकं व्यापृतिः सञ्जाता। सेवासमकालमपि सम्पादनकार्येषु, काव्यरचनायां, हिन्दी–व्रजभाषादिसाहित्यसेवायां, ग्रन्थानां सम्पादन–टीकालेखनादिकार्येषु चाऽयं सर्वदैव व्यापृत एवाऽस्थात्।

महाराजाकॉलेजे पाश्चात्यशिक्षाक्रमे प्रवृत्तांश्छात्रान् सरलया पद्धत्या संस्कृतं पाठयितुमनेन 'संस्कृत–सुबोधिनी' नामकं पाठ्यपुस्तकमलेखि, पुस्तकमिदं स्वयं तेन प्राकाशि। संस्कृतकॉलेजे शास्त्रिपरीक्षां दित्सूंश्छात्रान् कादम्बरीं पाठयताऽनेन तस्याः सम्पादनं विधाय 'चषक' नाम्नी टीका व्यलेखि, साहित्याचार्यश्रेण्याश्छात्रान् ''रसगङ्गाधरं'' पाठयन्नयं तस्य मुद्रितपाठं भृशमशुद्धं प्राप्य तस्य संस्करणं सम्पादनं च विधाय 'सरला' नाम्नीं टीकामलिखत्। शिलालेखानां सङ्कलनं कृत्वा ''शिलालेख–ललन्तिका'' नामकं पुस्तकं सम्पादयामास। पुस्तकत्रयमिदं निर्णयसागरमुद्रणालयेन मुम्बईस्थेन प्राकाशि। एवं पाठनसहयोगीनि पुस्तकानि प्रणेतुं प्रेरणाऽस्मै राज्यसेवाप्रसङ्गेनैव प्राप्ता। किन्तु सेवानिवृत्तेरनन्तरं विविधासु समितिषु, संस्थासु च सक्रियां भूमिकां निर्वहताऽनेन भूयसी साहित्यसेवा विहिता, स्वयमनेके ग्रन्थाः प्रणीताः प्रकाशिता अपि। सर्वेषामेषां विवरणमग्रे प्रदास्यते।

## जीवनयात्रा –

सोऽयं प्रारम्भादेव राजकीयभूसम्पत्तिभोगी आसीदिति वेतनादिरायः केवलं गौणरूपेण, द्वैतीयकं सहायकं वाऽऽयस्रोतोऽस्याभूत्। इदमेव कारणं यत्सेवानिवृत्तिस्तदानीमार्थिक–सन्तुलनमस्य न जात्वपि विषमीकर्तुमक्षमत। निवृत्तिवेतन (पेंशन) मस्मै द्वाचत्वारिंशद् – रूप्यकात्मकं जयपुरराज्येन निर्धारितम्। ''मदीयस्यैकस्य भृत्यस्य मासिकवेतनाय पर्याप्तं भवतीति सुमहद् योगदानमस्य सोऽयं परिहासे कथयति स्म।'' भूसम्पत्तेरायेन सोऽयं नगरसीमायामेकं भवनमक्रीणात्, नवीनायां वसतौ भवनं निर्मापयामास, पुत्र्योः पुत्रस्य च विवाहसमारोहानायोजयामास।

अखिलभारतीय–हिन्दी–साहित्य–सम्मेलनस्य द्वात्रिंशत्तमेऽधिवेशने स्वागतमन्त्रित्वेन जयपुरे सुमहान्तं हिन्द्याः साहित्यकं समारोहं १९४४ ई. वर्षे, अ.भा. संस्कृत–साहित्य–सम्मेलनस्याष्टादशेऽ–धिवेशनेऽखिलभारतीय–कविसंम्मेलनसभापतित्वेन संस्कृतविदुषां सुमहानां सम्मलेन १९४५ वत्सरे च सोऽयं सफलयास। १९४३ ई.वत्सरे महात्मागान्धिने समर्पितेऽभिनन्दनग्रन्थेऽस्य संस्कृत–काव्यबद्धः

सम्मानाञ्जलिरस्य स्वातन्त्र्य-सङ्ग्रामेण सहानुभूतिं प्रमाणयति। भारतस्य स्वातन्त्र्यानन्तरं जयपुरादि-राज्यानि भारतीय-सङ्घे सममिलन्, अनुपदमेव भूसम्पत्ति- (जागीर) धारकाणां ''जागीरा''ख्या सम्पत्तिरपि राजसात्कृता सर्वकारेण, किन्तु नेदमपि दृढ-सेवाव्रतिनोऽस्य जीवने विचलनमापादयामास यतो ह्यस्य जीवनं तपोनिष्ठानां, संयमिनां, निःस्पृहाणां मुनीनामिव सरलमाडम्बरहीनं चाऽभूत् प्रारम्भादेव। सोऽयं स्ववस्त्राणि स्वयं प्रक्षालयति स्म, प्रतिदिनं भ्रमणाय प्रयाति स्म, प्रतिदिनं संस्कृते किंचन लेख्यमेवेति व्रतमपि निसर्गतो धारयति स्म।

एतस्यैवेयं परिणतिर्यदनेन संस्कृते लिखितानां पृष्ठानां गणनाऽपि कर्तुमद्य न पार्यते। प्रभूतानामेतल्लिखितानां ग्रन्थानां, सम्पादितानां पत्रिकाणां, लेखानां, कथानामन्यासां च रचनानां पृष्ठसंख्या लक्षादप्यधिका सम्भवेदिति स्फुटं प्रतीयते। विविधभाषाऽभिज्ञोऽयं भारतीये शास्त्रीयसङ्गीते सुभृशं रुचिशीलोऽभूत्। आकाशवाण्याः प्रमुखसङ्गीताधिकारिणा ठाकुरजयदेवसिंहेनाऽनुरुद्धोऽयं 'ध्रुपद' शैल्यां गीतान्यप्यलिखत्, गजल, ठुमरी-प्रभृतिशैलीषु गेयपदानि त्वयमाबाल्यं प्रणयति स्मैव। सुदृढ-घटितगात्रस्यास्य व्यायामे रुचिः शैशवकालादेवाऽभूत्। जलसन्तरणं विशेषत उच्चस्थलेभ्यो जले कूर्दन-निमज्जनोन्मज्जनादिक्रीडासु (डाइव) चाप्यस्य कौशलं वार्धक्येऽपि जनान् विस्मापयति स्म। इदमेवाऽभूत् कारणं यन्मधुमेहादयो रोगा नैनमस्पृशन्। सप्ततिवर्षायुष ऊर्ध्वं हृदयरोगस्य लक्षणानि समुदभवन्। तथापि विविधकार्येषु लेखने च व्यापृतोऽयं न विश्रमं स्पृहयति स्म। यद्यपि नायं ग्रामान्तरस्य नगरान्तरस्य वा यात्राभिरोचयति स्म, तथापि सम्मेलनेषु, इतरेषु च समारोहेषु, व्याख्यानादेः कवितापाठस्य वा कृतेऽयं प्रमुख-साहित्यिकसंस्थाभिः सर्वकारैर्विश्वविद्यालयैश्चाऽऽमन्त्र्यते स्म, प्रयाति स्म च कतिधा तद्विधेषु प्रसङ्गेषु। कविसम्मेलनेषु तु प्रायश एवायं सभापतिपदमारोढुमामन्त्र्यते स्म।

एवं निरन्तरं साहित्य-सेवाव्यापृतस्याऽस्य निधनं ७५ वर्षावस्थायां जयपुरे हृदयाभिघात-वशात् ४ जून १९६४ दिनाङ्के समभूत्। सर्वकारेण, राज्यपालादिभिः, पत्रपत्रिकाभिः समग्रस्यापि देशस्य विद्वद्भिश्चाऽस्य निधनं साहित्यजगतोऽपूरणीया क्षतिरुदघोष्यत, शोकप्रस्तावाः पारिताः श्रद्धाञ्जलिविशेषाङ्कोऽपि 'भारती' संस्कृतमासिकेन प्राकाश्यत।

## साहित्य-सर्जना-

प्रायः पञ्चसप्ततिवर्षात्मके समग्रेऽप्यायुषि भट्टमथुरानाथशास्त्रिणाऽविरतं संस्कृत-साहित्यसेवाव्रतं निरूढम्। कैशोरे वयसि हिन्दी-उर्दू-वङ्गभाषा-गुर्जरभाषादीनां ज्ञानमासाद्य तासां साहित्यमप्यनेनाऽधीतं, तत्र च यद् वैशिष्ट्यमनुभूतं तस्याऽवतारणा संस्कृतेऽपि कथं भवेदित्यस्य विशेषतः प्रयत्नोऽनेनाऽक्रियत।

तस्मिन् हि काले काव्य-जगति व्रजभाषाया महत्त्वमक्षुण्णमासीत्। अभूत् सेयं भाषा प्रायः समग्रस्यापि भारतस्य काव्यभाषात्वेन प्रतिष्ठिता पञ्चशताब्दीर्यावन्मध्यकालीनेतिहासे। कबीरदासस्य तुलसीदासस्य च समयादारभ्य रीतिकालं यावत् (प्रायः पञ्चदशीं शताब्दीमारभ्यैकोनविंशीं यावत्!) प्रमुखैः कविभिरस्यां सुललिता काव्यरचना व्यधायि। एतस्याः प्रमुखं छन्दोऽभूद् 'घनाक्षरी' त्याख्यं यत् 'मनहरण', कवित्त इत्यादि संज्ञाभिरप्यभिधीयते। अस्मिन् छन्दसि अन्त्यानुप्रासस्य, लयबद्धाया-श्छन्दोगतेः, दण्डक-सहजस्य विस्तारस्य च यश्चमत्कारः स काव्यमञ्चेषु कविसम्मेलनेषु च श्रोतृणां हृदयान्यावर्जयति स्म, अत एव छन्द इदं कवित्वस्य निकषायमाणममन्यत, तत एव 'कवित्त' इत्याख्याऽस्य प्रथिता।

भट्टमहोदयस्य पूर्वजाः संस्कृत-प्राकृतादिवद् व्रजभाषाया अपि सुकवयोऽभूवन्। तेषां परम्परामनुसरताऽनेनाऽपि व्रजभाषायां काव्यरचना प्रारब्धा किन्तु तस्या लालित्यं संस्कृतेऽवतारयितुं व्रजभाषाछन्दःसु संस्कृतकवितामप्ययमारेभे। उर्दू – प्रचलितासु 'गजल' गीतिषु प्रयुज्यमानानां वृत्तानां बन्धेऽपि संस्कृत-गीतिरनेनाऽवतारिता। तस्मिन् समये प्रथितासु ठुमरी-दादरा-प्रभृति-शैलीषु सरल-गेय-लयेषु चापि गीतयोऽनेन निबद्धाः। सर्वेणानेन सर्जना-व्यापारेणाऽस्य प्रतिपिपादयिषितमभूद् यत् संस्कृतमद्यापि जीविता भाषा, न मृता। जानन्ति काव्य-मर्मज्ञा यत् कविसम्मेलनेषु मुशायराख्यसभासु च गीतयो गजल-गीतयश्च श्रोतर्नॄन् कथमाप्याययन्ति। शैल्यामस्यां निबद्धा गीतयो विशेषतश्च घनाक्षरीच्छन्दोबद्धा सानुप्रासा सुरम्या च कविता यदाऽनेन जयपुरीयविद्वत्सभासु श्राविता श्रोतृमण्डल्यामलौकिकमिव किञ्चित् कार्मणं प्रसारितवती तदा तत्कालीनैरधिकारिभिः, म.म.पं. गिरधरशर्मप्रभृतिभिर्विद्वद्भिश्चायं घनाक्षरीच्छन्दःसु काव्यरचनायै प्रोत्साहितः।

एतस्यैव परिणामोऽभूत् ''मञ्जुकवितानिकुञ्ज'' इत्याख्यायाः काव्यशृङ्खलायाः प्रणयनं यस्यां ''मञ्जुनाथ''इति नाम्नाऽयं काव्यसङ्कलनत्रयम् प्रकाशयामास। ''साहित्यवैभवम्'' इत्याख्ये संग्रहे रसालङ्कारदिघटिता ऋतुवर्णन-नवरसवर्णन-प्रेम-गीति-नीति-अन्योक्ति-प्रभृतिविषयिणी कविता १९३० ई. वत्सरे निर्णय-सागरमुद्रणालये मुद्रापयित्वाऽनेन प्रकाशिता। जयपुरनगरस्य तद्राजवंशस्य नागरिकाणामुद्यानानामन्येषां च स्थलानां वर्णनपरा काव्यरचना १९४७ ई. वर्षे 'जयपुरवैभवा' ख्यग्रन्थे प्राकाशि। भक्तिरचनानां संग्रहः १९५७ ई. वर्षे 'गोविन्दवैभव' नाम्ना गोरखपुरस्थेन गीता प्रेसेन प्रकाशितः। एषु काव्येषु व्रजभाषाच्छन्दसां प्रयोगस्त्वभूदेव, उर्दूच्छन्दसां संस्कृतच्छन्दसामपि सर्वेषां नर्कुटकाश्वघाटी-मन्दाक्रान्ता-शिखरिण्यादीनां प्रचुरः प्रयोगोऽस्ति। १९५७ ई. वर्षे गोविन्दवैभवं यदा प्रकाश्यमानमासीत्, अनेनाऽयं स्वकीयश्चरमः कविताग्रन्थ इति घोषितमुक्तं च यदाजीवनमहं नरवर्णनादिषु, शृङ्गारवीरादिरसनिबन्धने च स्ववाणीं व्यापारयन्नभूवम्। सम्प्रति गोविन्दगुणवर्णनेन पावितां वाणीं नाहं नरकथयाऽऽविलीकरिष्यामि। तत आरभ्याऽनेन गद्य एव लेखनी व्यापारिता, नैकमपि पद्यं लिखितम्। एवं विविध-विषयक-काव्यरचनया, नवीनच्छन्दसां संस्कृतेऽवतारणया चाऽस्य कवित्वयशः सर्वत्र प्रथितं, कविशिरोमण्यादय उपाधयश्च संस्कृत-संस्थाभिरदीयन्त। काव्यरचनाऽतिरिक्तेऽपि विविधे क्षेत्रेऽस्य साहित्यसर्जना सुभृशमुल्लेखनीया।

सूचितचरमिदं यत् संस्कृताध्ययनेन समकालमेव व्रजभाषासाहित्यस्य हिन्दीभाषायाः, बङ्गभाषायाः, आङ्ग्लभाषायाश्चाप्यध्ययनमनेन स्वकीयरुचिवशाद् विहितम्। आसीत्तदा जयपुरनगरे व्रजभाषाकवीनां राजसम्मानितानां कवीश्वराणां च भूयान् समुदायः। तत्प्रेरणया 'कविमण्डल' इत्याख्या हिन्दी-कवि-संस्था तदानीं प्रचलति स्म यस्याः सक्रियः कार्यकर्ताऽभूदयम्। हिन्दीसाहित्य रात्रिपाठशाला-नाम्नीं सायङ्कालीनां पाठशालामप्यसौ स्थापयामास यस्यां छात्राः हिन्दी-साहित्यमपठन्, हिन्दीसाहित्य-सम्मेलन (प्रयाग)स्य प्रथमा-विशारद-साहित्य-रत्नादि-परीक्षासु च प्राविशन्।

## पत्रकारता-

संस्कृत-साहित्यसेवा त्वनेन छात्रावस्थात एव प्रारब्धाऽभूत्। जयपुरीयो महाराजसंस्कृत-कालेजस्तदानीं भारतविश्रुतं वैदुष्यकेन्द्रमभूद्यत्र विविधशास्त्र-निष्णाता विद्वांसोऽध्यापकपदमलमकुर्वन्। छात्रा अपि तदानीं भूरि- प्रतिभाशालिनोऽभूवन्। एवंविधे प्रतिभोद्दीपके वातावरणे कालेजीयैः

कतिपयै:प्रतिभाशालिभिश्छात्रै: ''संस्कृत-चन्द्रिका'' ऽऽख्याया: संस्कृतसाहित्यपत्रिकाया: साहित्यरचनारुचिप्रेरितै: १९०४ ई. वत्सरे निश्चितं यज्जयपुरादपि संस्कृतस्य मासिकपत्रं किञ्चित्प्रकाशमेतु। एतस्याऽभूत्परिणामो यत् ''संस्कृतरत्नाकर'' नामकं मासिकपत्रं जयपुरात्प्राकाश्यत येन संस्कृत-पत्रकारताया इतिहासे नवीनस्य युगस्यावतारणा कृता।

व्यतियाति काले पत्रमिदमखिलभारतवर्षीय - संस्कृतसाहित्यसम्मेलनस्य मुखपत्रत्वेन स्वीकृतिमलभत। तदिदं प्रायोऽर्धशताब्दीं यावज्जयपुरात् प्राकाश्यत, तत: काशीत: कानपुरतश्च प्रकाशं लब्ध्वा दिल्लीनगरीं मुख्यालयत्वेन प्रापत्। एतस्य संस्थापकेषु युवकेषु म.म. गिरधरशर्मा चतुर्वेदी, राजगुरु पं. चन्द्रदत ओझा, व्याकरणाचार्य: सूर्यनारायणशर्मा भट्टश्रीमथुरानाथ: शास्त्री च प्रमुखा अभूवन्। सर्वेऽप्येते विद्वांसस्तदानीं कालेजीयच्छात्रा: स्नातका वा अभूवन्। सर्वप्रथमोऽस्याङ्को ''जयपुर-विद्वन्मण्डल- द्वारा सम्पादित'' इति मुद्रिताक्षरोऽभूत् किन्त्वस्य सम्पादने 'सम्पादकीय' लेखने च प्रमुखतया सोऽयं किशोरो भट्टमथुरानाथ एव प्रामुख्येन प्रवृत्तोऽभूत्। प्रथमं सम्पादकीयमप्ययमलिखित्। परस्तात् सहकारि-सम्पादकत्वेन लेखांष्टिप्पणीश्चालिखत्। तदनु प्रभूतं कालं प्रधान-सम्पादकोऽस्थात्। प्राय: पञ्चाशद्वर्षावधावस्मिन् द्वि: पर्यायद्वये, पत्रमिदं प्राकाशि। प्राय: सर्वस्मिन्नप्यस्मिन्नवधौ मथुरानाथशास्त्री सम्पादकरूपेणाऽनेन सह सम्बद्धोऽस्थात्। अनेन प्रसङ्गेनाऽयं संस्कृतपत्रकारतायां युगप्रवर्तनमिवाऽकरोत्। वङ्गभाषायां निपुणेन, तत्साहित्याध्येत्राऽनेन तदानीं वङ्गभाषाया: ''प्रवासि'' - प्रभृतीनां विश्वप्रथितानां मासिकपत्राणां, डॉ. रामानन्दचट्टोपाध्यायप्रभृतीनां सम्पादकाचार्याणां च शैलीं संस्कृतेऽवतार्यानेके नूतना: स्तम्भा, विधा:, सरण्यश्च संस्कृते समारब्धा:। 'विनोद-वाटिका' इति शीर्षकेण व्यङ्ग्यविनोदानां (चुटकुले), ''संवादा: सम्पादकाभिप्रायाश्च'' इति शीर्षकेण सामयिकघटनानां तत्सम्बन्धे सम्पादकीयटिप्पणीनां वङ्गमासिकपत्र- 'प्रवासि' सम्पादकादिभि: प्रचालितस्य 'कष्टिपाथर' (निकष) स्तम्भस्याऽनुरूपमेव 'साहित्यकुसुमवाटिका' शीर्षकेण नूतनसाहित्य-समालोचनस्य च स्तम्भानयं नियतीकृतवान्, लघुकथा:, यात्रावृत्तानि (रिपोर्ताज), काल्पनिककथा: (फंतासी), एकाङ्कनाटकानि, ललितनिबन्धान्, शोधलेखान्, लघूपन्यासान् (धारावाहिकरूपेण), अन्याश्च विविधा नूतनविधा: समावेश्य पत्रस्याऽस्य माध्यमेन सोऽयं संस्कृतपत्रकारतायां नवीनानि कीर्तिमानान्यरयचत्।

आदर्शरमणी, अनादृता, असमसाहसम् इत्यादयो बहव: संस्कृतोपन्यासा वङ्गभाषीयोपन्यास-शैली-प्रेरितेनाऽनेन लिखिता: पत्रेऽस्मिन् धारावाहिक-शृङ्खलासु प्राकाश्यन्त। बहवो लेखका: प्रेरिता: स्थापिताश्चानेन, पत्रस्याऽस्य बहवो विशेषाङ्का: विषय-विशेषमवलम्ब्य प्रभूतं साहित्यं प्रस्तुवन्त: प्रकाशमभजन्। वेदाङ्क: (विद्यावाचस्पति-श्रीमधुसूदनओझा-महाभागाय समर्पितो वेदविद्याविवेचनपर:) आयुर्वेदाङ्क: (स्वामिलक्ष्मीराम-भिषगाचार्याय समर्पित:), शिक्षाङ्क: (शिक्षापरिष्काराय प्रकाशित:), दर्शनाङ्क: (म.म.पं. गिरिधरशर्मणे समर्पित:) इत्यादयो विशेषाङ्का ऐतिहासिकं महत्त्वं दधति। इत्थं हि सन् १९०४ वर्षादारभ्य ई. १९४९ वर्षपर्यन्तं, यदवधीदं पत्रं जयपुरात्प्राकाश्यत, सोऽयं सम्पादकत्वमस्य निरवहत्। (कतिपयं कालं व्याकरणाचार्या: पं. सूर्यनारायणशर्माणोऽपि सम्पादकत्व-मन्वतिष्ठन्)।१९५० ई. वर्षात्काशीं प्रति प्रस्थितवत्यस्मिन् पत्रे १९५२ ई. वत्सरे जयपुरात् प्रकाश्यमानाया 'भारती' संस्कृतमासिक-पत्रिकाया: सम्पादनमनेनाऽऽरब्धं यन्मृत्युपर्यन्तं निर्व्यूढम्।

## अनुवादाः -

विविधभाषागतस्य साहित्यस्य संस्कृतेऽनुवादमाध्यमेनावतारणाऽप्यस्य प्रमुखमवदानम्। प्राकृतभाषायाः प्रसिद्धस्य मुक्तकसंग्रहस्य 'गाथासप्तशतीति' ख्यातस्य हालकविविरचितस्य वाचनं कुर्वाणेनाऽनेनाऽनुभूतं यत्प्राकृतमिदानीं न तावत् परिचितमिति प्राकृतगाथास्त्वरितमेव न हृदयङ्गमा जायन्ते। यदि तासां संस्कृते समच्छन्दोऽनुवादः स्यात्तर्हि सजीवता सुभृशमनुभूयेत। एतस्याऽभूत् फलं यत्सर्वासामपि गाथानां संस्कृते निबन्धनं कृत्वा, आलोचनात्मक-तुलनात्मक-विवेचनपरकया-भूमिकया सह "संस्कृत-गाथा-सप्तशती"ति शीर्षकेण तामिमां कृतिमसौ निर्णयसागरमुद्रणालयात् प्रकाशयामास। अस्या व्यङ्ग्य-सर्वङ्कषानाम्नीं टीकामप्ययमलिखत् या सहैव प्राकाशि १९३३ ई. वर्षे।

व्रजभाषाकवेः विहारिणः सप्तशतीमप्ययमनूदितवान् संस्कृते दोहाच्छन्दःस्वेव। एवंविधानि संस्कृतदोहाच्छदांसि बहूनि 'विहारिविलास' इति शीर्षकान्तः 'साहित्यवैभव' काव्ये प्रकाशितानि सुबहु चर्चितान्यभूवन्। वङ्ग-भाषाया बहूनामुपन्यासानां हिन्दीकथाकाराणां प्रेमचन्द-प्रभृतीनां बह्वीनां लघुकथानां, वङ्गीयानां गल्पानां (लघुकथानाम्) निबन्धानामन्यासु च विधासु विलिखितस्य प्रभूतस्य साहित्यस्यानुवादा अनेन विहिताः। एवंविधसाहित्यस्यच्छायां गृहीत्वा तदनुहारिण्यां शैल्यां संस्कृते तद्विधा रचना विधायानेन संस्कृतेऽभिव्यक्तिविधानां विस्तारं चाऽऽनायितुं प्रयतितम्।

## संस्कृत-भाषाया जीवितत्वख्यापनम्-

एवं हि सर्जनात्मकलेखनेन पत्रकारतया च संस्कृते नूतनं जीवनं सञ्चारियितुमस्य प्रयासाः सोद्देश्या अभूवन्। तदानीं हि संस्कृते विदुषां वर्गद्वयमभूत्। एको वर्गोऽभूत् पाश्चात्यशोधपरम्पराप्रभावितानां विदुषां ये संस्कृतमन्यान्यप्राच्यभाषावत् क्लासिकलभाषां मत्वा तस्यामनुसन्धानस्य प्राच्यविद्याशोधस्य च क्षेत्रमेवाऽपश्यन्, आङ्ग्लभाषामाध्यमेन, इतर-भाषासु वा तस्या दर्शनानां शास्त्राणां प्राचीन-साहित्यस्य गवेषणामनुवादान् विवेचनां चैव फलप्रदाममन्यन्त। इतरो वर्गोऽभूत्तेषां विदुषां ये संस्कृतं मातृभाषावद् भाषन्ते स्म, जीवितां जाग्रतीं च भाषाममन्यन्त, तस्यां मौलिकं सर्जनात्मकं च लेखनमनवरतं प्रचाल्यान्यान्याऽऽधुनिक-भारतीयभाषावत्तामप्याधुनिकीं भाषां मत्वा तस्यां पत्रपत्रिकाणां प्रसारं, कविसम्मेलनाऽऽदीनामायोजनं च सार्थकमनुभवन्ति स्म, जीवितभाषावत् प्रतिष्ठापयितुं च तामाजीवनं प्रायतन्त। भट्टमहोदया अस्यैव वर्गस्य विद्वांसोऽभूवन्।

अत एवाऽसकृत्ते एवंविधाः स्थितीरन्वभवन् यदा पूर्वमुल्लिखितस्य वर्गस्य शोधविद्वद्भिः संस्कृतभाषा केवलं प्राचीना भाषा व्यपदिष्टा, तस्यां नूतन-साहित्य-निर्माणमकिञ्चित्करमिव च प्रतिपिपादयिषितम्। एंवविधासु स्थितिषु साऽऽटोपं, विविधैः प्रमाणैः प्रत्यक्षमनुभावितैश्च चमत्कारैरेते संस्कृतामाधुनिकभाषावत् जीवितां साधयन्ति स्म, एवंविधानि बहून्यान्दोलनानि च परिचालयन्ति स्म यैः संस्कृतभाषा पूर्णतो जीविता सिध्येत्।

एवंविधेषु प्रयत्नेष्वेकोऽभून्नूतनविधासु, नूतनच्छन्दस्सु नूतनविषयेषु च साहित्यसर्जना, अपरोऽभूद्विविधनवयुगीन-साहित्यस्य विभिन्न-भाषाभ्यः संस्कृतेऽनुवादः, इतरश्च संस्कृतेऽभिव्यक्ति-पद्धतीनां विस्तारः।

सन् १९३० वत्सरे वाराणस्यां सञ्जातेऽखिल-भारतीय-संस्कृत-साहित्य-सम्मेलनस्याऽ-धिवेशनेऽनेन प्रदर्शितं यदेकं वाक्यं संस्कृते कथं परःशतं प्रकारैर्वक्तुं शक्यते। एतेषु कतिपयानि

वाक्यानि नवम्बर १९३९ मासस्य ''सुप्रभातम्'' (वाराणसी) इत्याख्ये मासिकपत्रे 'संस्कृतभाषाया महत्त्वम्' 'इति शीर्षकान्तर्गतं प्रकाशितान्यपि। एतदतिरिक्तं तैः पत्र-पत्रिकासु लेखमालामाध्यमेन, विदुषामभिमतानि सङ्कलय्य तानि च प्रकाश्य प्रत्यक्षमेकमान्दोलनमपि प्राचाल्यत यत्र 'किं संस्कृतभाषा मृतभाषा ?' इति प्रश्नमुद्भाव्य तस्या जीवितत्वमख्याप्यत। संस्कृतरत्नाकर (जयपुर) मासिकपत्रे (वर्षम् १२ अंकः ४, वर्षम् १४ अंकः९) ''गन्धर्वसेनस्य स्वर्गयात्रा'' इति शीर्षकेणैतद्विषयकं लेखमेकं लिखित्वा संस्कृतस्य मृतभाषात्वप्रवादस्य निःसारतामेते स्फुटीचक्रुः।

वाराणस्याः शोधमासिके ''सारस्वती सुषमा'' इत्याख्ये (सप्तम-वर्षस्य) द्वितीयेऽङ्के ''अपि नाम सेयमव्यावहारिकी'' इति शीर्षकेण संस्कृतभाषाया जीवितभाषात्वमेते साधयामासुः।

एवं हि संस्कृते सर्जनात्मकस्य लेखनस्य, पत्रकारताया नूतनविधानामन्येषामभिव्यक्ति-प्रकाराणां च संस्कृतेऽवतारणस्यैकमुद्देश्य-मिदमप्यभूदेषां दृष्टौ, यदनेन संस्कृतभाषा विश्वस्य भारतस्य चाऽन्यान्या-ऽधुनिकभाषाणां समष्टौ जीविताया आधुनिक्याश्च भाषाया रूपे प्रतिष्ठितं स्थानं लभेतेति।

## सम्पादनं टीकालेखनं च-

पत्रसम्पादनेन साहित्यिक-पत्रकारताक्षेत्रे भट्टमहोदयैर्नवीन-युगावतारणा यथा विहिता, तथैव प्राचीनग्रन्थपरिष्कारे, सम्पादने, भूमिकालेखने, टिप्पणादिलेखने चापि सुमहत्परिश्रान्तम्। पूर्वमुल्लिखितं कादम्बर्याः सम्पादनं 'चषक' -टिप्पणीलेखनं रसगंगाधरस्य पाठपरिष्कारः, ''सरला'' टीकालेखनं, तदतिरिक्तं गीतगोविन्दस्य सम्पादनं पादटिप्पणीलेखनं चानेन निर्णयसागर-मुद्रणालयानुरोधेन विहितम। ग्रन्थत्रयमिदं तस्मादेव मुद्रणालयात् प्रकाशितं, संस्कृतविद्वत्सु बहूनि वर्षाणि लोकप्रियं सुप्रसृतं चाभूत्। सेवानिवृत्त्यनन्तरमनेन, स्वपूर्वजेन श्रीकृष्णभट्टेन लिखितस्यैतिहासिक-महाकाव्यस्य ''ईश्वरविलास'' नामकस्य दुर्लभा पाण्डुलिपिः पुणेस्थभाण्डारकरशोधप्रतिष्ठानादधिगत्य सम्पादिता, विस्तृतभूमिकया, ऐतिहासिक-टिप्पणीभिः, स्वनिर्मितया ''विलासिनी'' टीकया च सह राजस्थान-प्राच्य-विद्या-प्रतिष्ठानात् (जोधपुरात्) प्रकाशिता। तदिदं महाकाव्यं राष्ट्रिय-संस्कृत-संस्थानस्य जयपुर-परिसरे साहित्यविभागीयप्राध्यापकेन डॉ० रमाकान्तपाण्डेयेन हिन्दीभाषायामनूद्य २००७ ई. जयपुरात् प्रकाशितमभवत्। यत्र भट्टमहाभागानां विलोसिनी टीकाऽपि संयोजिताऽस्ति। श्रीकृष्णभट्टलिखितायाः पद्यमुक्तावल्याः (मुक्तकसङ्ग्रहस्य) टीका ''गुणगुम्फनिका'' -ऽनेन लिखिता, ग्रन्थस्य सम्पादनं भूमिकया सह कृतं, ग्रन्थश्चायमपि राजस्थान-प्राच्य-विद्या-प्रतिष्ठानात्, प्रकाशितः। श्रीकृष्णभट्टस्य छन्दः शास्त्रग्रन्थो वृत्तमुक्तावल्याख्योऽपि पुणेस्थभाण्डार-करशोधसंस्थानादानाय्य सभूमिकोऽनेन राजस्थान-प्राच्य-विद्या-प्रतिष्ठानात् प्राकाशि। शिलालेखरूपेण च यानि दानपत्राणि प्राचीनैर्नरेशैः सुललितसंस्कृतभाषायां विलेखितानि, तेषामध्ययनं संस्कृतपाठ्यक्रमे समावेशितमभूद्विभिन्नै राज्यैः। एवंविधस्याऽध्ययनस्य कृते पाठ्यपुस्तकरूपेण कतिपयशिलालेखादीनां सङ्कलनं, सम्पादनं, टिप्पणीलेखनं च विधाय 'शिलालेखललन्तिका' नाम्नाऽयं ग्रन्थो निर्णयसागरात्प्राकाशि भट्टमहोदयैरिति पूर्वं सूचितमेव।

## नाट्यकृतयः -

काव्यलेखनेऽस्य नैपुण्यं तु विश्रुतमेव, अनेन महाराजसंस्कृतकॉलेजे साहित्य-विभागाध्यक्ष-पदमधितिष्ठता 'उत्तररामचरित' नाटकस्य मञ्चोपयोगि रूपान्तरणं विधाय तस्य नाटकस्य कालेजीयनाट्य-संघद्वारा रामप्रकाशाख्ये प्रेक्षागृहे मञ्चावतारणे सुमहद् योगदानमनुष्ठितम्, मध्ये मध्ये स्वनिर्मिताः

संस्कृतगीतयोऽन्तर्वेशिताश्च (१९३१ ई. वर्षे)। ततश्च महाभारत-कथामाधारीकृत 'पाण्डव-विजया'ख्य-नाटकस्य मञ्चोपयुक्ता पटकथा विविधप्राचीन-नाटकानामाधारेण रचिता, १९४० ई. वर्षे तस्मिन्नेव नाट्यगृहे मञ्चिता च। जयपुरे आकाशवाणीकेन्द्रस्य प्रारम्भादनन्तरं तदधिकारिभिरनुरुद्धोऽसौ ''मञ्जुला''ख्यं ध्वनिनाट्यं लिलेख। प्रसारितमिदं जयपुरीयाऽऽकाशवाणीकेन्द्रात् १६/१/५७ दिनाङ्के ८/८/५८ दिनाङ्के च तदेतदपि मञ्जुनाथगद्यगौरवम्' इत्याख्ये ग्रन्थे प्रकाशितम्।

### गद्य-रचनाः -

संस्कृत-गद्येऽप्यस्य लेखनं विपुलमस्ति। शताधिकाः संस्कृतलघुकथाः, दशाधिका उपन्यासाः, बहवो ललिता-निबन्धाः, काल्पनिककथाः (फन्तासी), व्यङ्ग्यलेखाः, यात्रावृत्तानि, रूपककथाः (एलेगरी), प्रतीक-कथा, विनोदा (चुटकुले) अन्यासु च विधासु लिखिताः सर्जनात्मकरचना गणनातीता एव। शोधलेखाः समालोचनात्मकलेखाः, साहित्यालोचनटिप्पण्यः, सामयिक-टिप्पणानि, समाचारसारादयश्चापि भूरिशो व्यलेख्यन्ताऽनेन। वाराणसी-जयपुर-दिल्ली प्रभृतिकेन्द्रेभ्यः प्रकाशितेषु सर्वेष्वपि पत्रेष्वस्यैवंविधा रचनाः प्राकाश्यन्त यासां सूची सुदुष्करा साङ्गोपाङ्गत्वेन निर्मातुम्। तथापि बहुभिः शोधार्थिभिरेवं-विधरचनासु बह्वीनां सूचीकरणस्य प्रयत्नाः सन्त्यनुष्ठिताः। तत एवैवंविधा सूची शक्येत द्रष्टुम्।

### हिन्दी रचनाः -

हिन्दीभाषायामप्यनेन बहवो ग्रन्थाः, लेखाः, लघुकथाः, कविताश्चालिख्यन्त। वाल्मीकीये रामायणे विभीषण-शरणागति-प्रसङ्गमवलम्ब्य सुरुचिरं विवेचनात्मकं नूतनमेव पन्थानमनुसरत् पुस्तकं 'शरणागतिरहस्य' नाम्नाऽऽनेन लिखितं यद् गीताप्रेसात् (गोरखपुर) प्रकाशितं लोकप्रियमभूत्। 'सरस्वती'- 'माधुरी'-'कल्याण'-जयभूमि-राष्ट्रभाषा-प्रभृति-पत्र-पत्रिकासु लिखिता अस्य लेखा लघुकथाश्च हिन्दीजगत्यप्येनं सुविदितमकार्षुः। विविधेष्वभिनन्दन-ग्रन्थेषु तत्सम्पादका एनमुपसृत्य विविधविषयकान् लेखानस्य गृहीत्वा प्रकाशितवन्तः।

### समाजे सम्मानः -

इदमभूत्स्वाभाविकं यदस्य सुदीर्घायै संस्कृतसैवायै परितुष्यद्भिर्विद्वद्भिः, संस्थाभिः, सर्वकारैश्च विविध-सम्मानोपाधिप्रदानद्वारा, सदस्यताप्रदानद्वारा चास्य सम्माननं क्रियेत। अतः सेवाकाले एवायं वाराणस्यादिविविधविद्याकेन्द्राणां परीक्षकः, प्रमुख-वक्ता, समारोहाणामध्यक्षो, मुख्यातिथिर्वा निर्धार्य समामन्त्रितः सादरम्। वाराणस्यां सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य स्थापनानन्तरं तस्य दीक्षान्तसमहारोहावसरे समायोजितस्याखिल-भारतीय-कविसम्मेलनस्या-ध्यक्षपदे, अखिलभारतीय-संस्कृत-साहित्यसम्मेलनेन समायोज्यमानानां कविसम्मेलनानामध्यक्षपदे, राजस्थान-संस्कृत-साहित्य-सम्मेलनस्य बीकानेरनगरेऽधिविष्टस्य द्वितीयाधिवेशनस्याध्यक्षपदे (१९५०ई.), विविधानामन्येषां समारोहाणां चाध्यक्षपदेऽसकृदयं सानुरोधं प्रतिष्ठापितोऽभूत्। राजस्थान-सर्वकारेण स्थापितायाः (सन् १९५७ ई.) साहित्य-अकादम्याः संस्थापकसदस्योऽयमभूत्। राजस्थान-राज्येन संस्कृत-शिक्षायाः नीतिनिर्धारणाय नियुक्ताया विशेषज्ञसमितेः संस्कृत-मण्डलस्य च सदस्योऽयमभूत् (१९५२-१९६२)। बड़ौदा-विश्वविद्यालयेन रससिद्धान्तानां काव्यसिद्धान्तानां च विषये व्याख्यानानि विधातुमयमामन्त्रितोऽभूत् (१९५६ई.)। उज्जयिन्यां कालिदाससमारोहस्य परम्परां प्रारब्धवती कालिदास-

समितिरेनं सदस्यं निर्माय समारोहावसरे समायोज्यमानानां कविसम्मेलनानामध्यक्षं च विधाय स्वगौरवमेधितवती। तस्या: प्रमुख: श्रीसूर्यनारायणव्यासस्त्वेनम् ''अभिवनकालिदास'' पदेनैव सम्बोधयति स्म।

सन् १९३६ ई. वत्सरे जयपुरेऽधिविष्टेन (पञ्चविंशाधिवेशने) अखिलभारतीय-संस्कृत-साहित्य-सम्मेलनेनास्मै कविशिरोमणि: इत्युपाधि:, वाराणसीस्थ-भारतधर्म-महामण्डलेन साहित्यवारिधित्युपाधि:, बम्बईस्थ-वेल्लनाटीय-तैलङ्गसभया ''कविसार्वभौम'' इत्युपाधिश्चास्मै स्वर्णपदक-सम्मानोत्तरीयादिभि: सह सादरमुपायनीकृत:। १९६१ वत्सरे यदा राजस्थान-सर्वकारेण संस्कृतविदुषां कृते पुरस्कारयोजना प्रारभ्यत, तदा सर्वप्रथममस्मै त्रिसहस्रमुद्रात्मकं पुरस्कारं प्रदाय योजनाया अस्या: शुभारम्भो विहित:। बह्वीभि: संस्थाभिर्मरणोत्तरमस्मै सम्माना: प्रदत्ता:।

## नि:स्पृहता -

पूर्वमुल्लिखितमेव यद् भट्टमहोदयो जयपुर-राज्येन प्रदत्ताया: प्रभूतभूसम्पत्ते: स्वामी आसीदिति नानेनार्थकष्टमनुभूतं यौवने। बाल्ये तु सुमहतीमार्थिकीं विपत्तिं सोढ्वा, स्वमतिबलेन विविधान् सङ्कटानुत्तीर्य स्वकीयं राजसम्मानितं संस्थानमनेन कथं सङ्कटादुद्धृतमित्यस्य वर्णनमनेन 'साहित्यवैभव' काव्ये कृतमस्ति। द्वारकानाथभट्टस्य सुतोऽयं यदा सुन्दरलालभट्टस्य दत्तकोऽभूत्तदानेन ज्ञातं यत् समग्राऽपि भूसम्पत्ति: पूर्वजै: बन्धकतया उत्तमर्णानामधिकारे निक्षिप्ताऽस्ति, न कोऽप्याय:, ऋणं वर्धते यतस्तस्य कुसीदमनुदिनं प्रवर्धते। नि:सन्तानं दिवङ्गतेन श्री सुन्दरलालेन, अन्यैश्च स्वेच्छाचरणानुरागिभिरनवधानिभि: पूर्वजै: स्वकीयकार्यार्थं विभिन्नेभ्यो जनेभ्य: ऋणानि गृहीतान्यभूवन्, तस्यायं परिणामोऽभूत्। प्रबन्धका भ्रष्टाचरण-परवशा मध्ये सुबहु वित्तं भुञ्जते स्म। अनेन सर्वापि व्यवस्था कैशोर्यादेव सावधानं परीक्षिता, प्रबन्धो निजसात्कृत:, भूसम्पत्तिर्बन्धकत्वान्मोचिता, ऋणं परिशोधितम्, आय: संवर्धित:। एवं प्रायस्त्रिंशद्वर्षात्मके वयस्ययं स्व-निर्भर ऋणमुक्तश्चाजायत। तदनन्तरमधिकेनोत्साहेन साहित्यसेवापर: समजायत।

एवं च साहित्यसेवात: पुस्तकलेखनादिकार्येभ्यश्च नायं कदापि किञ्चन लिप्सुरभूत्। एतस्य परिणामोऽपि तथाविध एवाभूत्। विपुलग्रन्थ-लेखकेनाऽप्यनेन नैकमपि रूप्यकं कस्मादपि प्रकाशकाद् 'रॉयल्टी' रूपेणाधिगतम्। निर्णयसागर-मुद्रणालय: सम्पादनस्य नाममात्रं किञ्चन पारिश्रमिकं प्रारम्भ एव ददाति स्म, न स्वामिस्वं (रॉयल्टीं) निर्धारयति स्म। राजकीयपाठ्यपुस्तक-मण्डलेन यत् संस्कृतपाठ्यपुस्तकमनेन लेखितम्, तस्य पारिश्रमिक-रूपेण सकृदेकश: कश्चन राशिरवश्यमस्मै प्रत्तोऽभूत्, 'संस्कृतसुधा' -ख्यपाठ्यपुस्तकस्य लाभस्तु य: कोऽप्यभूत्, मध्यस्थव्यक्तिभि: सानन्दं भुक्त:।

## परिवेश: परिसरश्च-

यस्मिन् युगे भट्टमहाभागैराजन्म संस्कृतसेवाव्रतं निरूढं तद् युगमेवंविधानां नि: स्वार्थ-सरस्वती-सेवकानामेवाऽभूत्। अनवरतसाहित्य-सर्जनासत्रमेतदेभिर्न कस्मैचिल्लाभलोभाय, न वा यशोलिप्सया, न च कस्यचन बन्धनेन प्रेरणया वा परिचालितम्, आसीत्सा काचनान्त:प्रेरणैव यया खल्वेभिर्निश्चितमासीत् यत् प्रतिदिनं संस्कृते किञ्चन लेखनं विना भोजनं नैव करणीयम्। वाराणस्यां जयपुरेऽन्येषु च संस्कृतविद्याकेन्द्रेष्वभूवंस्तदानीमेवंविधा एव नि:स्वार्थसंस्कृत-सेवका मनीषिणो येषां पुण्यान्यद्यास्माभिरुपभुज्यन्ते। भट्टमहाभागानां ज्येष्ठतनुजत्वसौभाग्येन ममाऽप्यभूदवसरस्तदानीन्त-

नानामेवंविधानां मनीषिणां दर्शनस्य, तेषां वैदुष्य-सुरभितासु चर्चागोष्ठीषु प्रवेशस्य, यासु न राजनीतिर्न व्यवसायो, न वाऽन्यविधं किञ्चन वस्तुजातमभूच्चर्चाविषयः, संस्कृतसम्बन्धिन्यश्चर्चाः, शास्त्रसन्दर्भ-संवलिता एव विनोदाः, काव्यालापसन्दानिताः परिहासाः एवंविधा एव व्यासङ्गास्तेषां समवाये, जलविहारोपवनविहारादिषु सर्वविधेषूत्सवावसरेषु चाभूवन्नित्यमधुना स्मरामि। कथं युगमेवेदानीं विपरिवृत्तम्। आस्तां तावत्।

भट्टमहोदयानां सुहृत्परिकरे जयपुरीयाः स्वामिलक्ष्मीराममहाभागा आयुर्वेदमार्तण्डाः, म.म.पं. गिरिधरशर्माणः, पं. चन्द्रधरगुलेरिणोऽनुजाः पं. सोमदेवगुलेरिणः, राजगुरु-चन्द्रदत्तमैथिलाः, पं. सूर्यनारायणशर्माणः, प्रशासकाः श्री श्यामसुन्दरपुरोहिताः, वेदविज्ञाः पं. मोतीलालशर्माणः, पं. गिरिजाप्रसादद्विवेदाः, कलिकातास्थाः (शेखावाट्यभिजनाः) श्रीझाबरमल्लशर्माणः, पुणेस्थाः डॉ. पी.के. गोडेमहोदयाः, बम्बईस्था गोस्वामिगोकुलनाथाः पं. पुरुषोत्तमचतुर्वेदाश्च, वाराणसेया नारायणशास्त्रिखिस्तेमहोदयाः, रायकृष्णदासमहोदयाश्च, वाङ्गा असितकुमारहालदाराः (प्रसिद्धाश्चित्रकारा ये जयपुरीयकला-कालेजस्याध्यक्षा अभूवन्) दाक्षिणात्याः पं. पट्टाभिरामशास्त्रिणः, झालरापाटनस्था नवरत्नगिरिधरशर्माणः अन्ये च विभिन्नेषु प्रान्तेषु स्थिता विद्वांसः परिगणयितुं शक्यन्ते। पं. चन्द्रधरगुलेरि-णाऽस्य कवित्वचर्चा मित्रत्वेन बहुत्र कृताऽभूत् (''पुरानी हिन्दी'' पृ. १६, नागरी प्रचारिणी, काशी)।

एतेषां शिष्येषु, स्व. गणेशरामशर्माणः, स्व. पं. वृद्धिचन्द्रशास्त्रिणः, स्व. वैद्यमुकुन्ददेवाः, पं. गोपालनारायणबहुरा, स्व. दीनानाथ त्रिवेदी मधुपः, उद्योगपतिः स्व. श्री कन्हैयालालतिवाडी, प्रशासकाः श्री शेरसिंह-द्वारकानाथपुरोहितप्रभृतयः शिक्षकाः स्व. श्रीराधागोविन्दशर्मप्रभृतयः, जननेतारः श्रीसिद्धराजढड्ढा-पूर्णचन्द्रजैन-जवाहरलालजैन-युगलकिशोरचतुर्वेद-हीरालालशास्त्रिप्रभृतयो बहवः सन्ति ये महाराजाकालेजाख्ये पाश्चात्य-पद्धत्यनुसारिणि महाविद्यालयेऽथवा महाराजा संस्कृतकालेजाख्ये पाश्चात्य-पद्धत्यनुसारिणि महाविद्यालयेऽथवा महाराजा संस्कृतकालेजाख्ये-प्राच्यपद्धत्यनुसारिणि महाविद्यालये, वा गृहे भट्टमहोदयात्संस्कृतं साहित्यशास्त्रं वाऽधीतवन्तः।

आसां पंक्तीनां लेखकोऽपि तत्सुतत्वेन तेभ्यो न केवलं काव्यशास्त्रकाव्यरचनान्यायवैशेषिक-सांख्य-पुराणेतिहासादिविषयान् अपि तु व्रजभाषाकाव्य-हिन्दी-कवितादि-विषयानपि तदाशीर्वचोभिः स्नेहसम्भारेण च सहाऽध्यगीष्ट, स एव चाऽऽशीःपुण्यराशिरद्य तस्य समग्रो निधिः।

**देवर्षि-कलानाथशास्त्री**

------

# विषयानुक्रमणिका



--------

## मञ्जुनाथनिबद्धा

# भूमिका

सकलभूमण्डलभाषामौलिमुकुटायमाना सेयं संस्कृतसरस्वती सर्वदेशीयैरपि तत्त्वज्ञपण्डितैः सर्वतः पुरातनीति सबहुमानमभिनन्दिता, सर्वतः प्रथमं ज्ञानालोकजननीति विनीतिपुरस्सरमभिवन्दिता, गौरवस्य सौष्ठवस्य माधुर्यस्य सौभाग्यस्य औदार्यस्य गाम्भीर्यस्य नैर्मल्यस्य मार्दवस्य चाधिष्ठानावनीति सप्रमोदमुपच्छन्दिता, हृदयपरिष्करणाय चाऽप्रतिद्वन्द्वं प्रभुरिति सत्यतममिन्दिता चेति नात्र विस्तारयितुमावश्यकम्। परमस्या एव सुरसरस्वत्याः सकाशादुद्भवमधिगतवती प्राकृतभाषापि मध्ययुगे सुबहुतरं जनसम्मानमर्जयामासेत्यभ्युप-गन्तव्यमेव भवेत्।

नवीनशिक्षादीक्षिताः साम्प्रतिकाः केचन हिन्दीकर्णधारास्तु प्राकृतभाषायाः पक्षं पुष्णन्तस्तदिदमपि साधयन्तः श्रूयन्ते यन्नैषा भाषा संस्कृतभाषातः समुत्पन्ना। इयं तु प्रकृतिनियमानुसारं सर्वतः प्रथमं स्वयमुत्पेदे। नामैवाऽस्यास्तमिमं विषयं सूचयति। प्रत्युत संस्कृतभाषैवाऽस्याः सकाशात्कृतसंस्कारत्वाज्जन्माऽधिगतवतीति संस्कृतनाम्नाऽभ्यजानीमेति। अस्तु, नास्मिन्विषये साम्प्रतमिहाभ्यधिकं प्रपञ्चयितुं कामये। स्थानान्तरे तदिदं स्पष्टं निर्णीतं निर्णेष्यते च। परं प्राकृतभाषायाः प्रकाण्डपण्डितस्य प्रसिद्धकोषकारस्य च श्रीमतो हेमचन्द्रा-चार्यस्य केवलं तदिदं सूत्रमुपन्यस्यामि यत्र सुस्पष्टमयमूरीकरोति यत्संस्कृतभाषात एव प्राकृतभाषायाः समुत्पत्तिरिति। आह सः– **'प्रकृतिः संस्कृतम्, तत आगतं प्राकृतम्'**। एवं सति प्रकृतिशब्दमात्रेण या भित्तिर्नवीनैरुथापिता सा किल सुभृशमेव निर्बलावतिष्ठते। नवीनशिक्षिताः प्रायः प्राचीनपण्डितानधिक्षिपन्ति यदिमे विनैव युक्तिप्रमाणं स्वमतमग्रेसरीकर्तु-मभिनिविशन्त इति। परमस्मिन्विषये सुस्पष्टतरमाश्चर्यमनुभवामि यन्नवीनसभ्यमहाभागैः 'संस्कृतभाषातः प्राक्तनी सेयं प्राकृतभाषे'त्यस्मिन्विषये किं वा सुदृढं प्रमाणमुपलब्धम्? अपि वेदेभ्यः प्राचीनं किञ्चित्प्राकृतपुस्तकमधिगतं श्रीमद्भिः? आहोस्विद् भगवन्तो वेदा एव न गीर्वाणभाषया साकं सम्बन्धमधिगच्छन्ति? साम्प्रतिकीं संस्कृतभाषां वेदकालिकीं प्राचीनाममरभारतीं च व्याकरणादिनियमैः कैश्चिद्भिन्नामिवापाततो ज्ञात्वा भाषाभेदभ्रमे तु न पतितव्यम्। एतद्धि अनुमानसीमतोऽप्यधिकेन कालेन सङ्घटितं केवलं व्याकरणनियमानां क्रमिकं परिवर्तनमात्रम्। एतावन्मात्रेण द्वयोरनयोर्भाषयोः परस्परं भेदो न सिध्येत्। 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' इत्यादीनि दिव्यान्यक्षराणि संस्कृतभाषातो विभिन्नैरन्यैरेव कैश्चिद्धातुभिः सङ्घटितानीति को वा पुरुषपुङ्गवः साधयितुं प्रभवेत्?

किञ्च– साधारणबुद्धिरपि पुरुषः स्थूलतमविमर्शेनाऽपि तदिदं परिज्ञातुं प्रभवेद्यत् प्राकृतभाषायां मूलभूता संस्कृतभित्तिः स्फुटं प्रतीयते न वा। 'आअण्णअड्डिअणिसिअभल्लम्म–माहआए' इत्येतेषामक्षराणामन्तस्तले 'आकर्णाकृष्टनिशितभल्लमर्माहतया' इत्यादिसंस्कृताक्षराणां मूलरूपेण प्रतिफलिता प्रतिच्छाया न प्रतिभाति? प्राकृतस्य गद्यं पद्यं वा यत्संस्कृतेऽवतार्यते तत् किल 'छाया' नाम्ना, आदिकालादारभ्याऽद्यपर्यन्तं प्रसिद्धम्। अनेन किं नानुमातुं शक्येत यत्संस्कृतस्य प्राकृतस्य च मध्ये छायामात्रकृतमन्तरमिति। प्राकृतस्य छायामाश्रित्य संस्कृतमुत्पन्नमित्ययं भ्रमस्तु पूर्वं निरस्त एव। ततश्च सुस्पष्टं सिध्यति यत्संस्कृतस्यैव छायाश्रयेण प्राकृतस्योत्पत्तिरिति।

प्राचीनमतावलम्बिनां प्रतिद्वन्द्वितायां किञ्चिन्नवीनमेव वक्तव्यमित्याग्रहिला इव केचन महामहोदयास्तदिदमपि मनस्यभिमन्यन्ते यत्संस्कृतापेक्षया प्राकृतभाषा साम्प्रतमपि मधुरतरेति। प्रत्यक्षमेव मयानुभूतामेकां घटनामवतारयामि। अनया हि पाठकमहाभागाः स्पष्टमिमं विषयं तत्त्वतः परिजानीयुः। मया ह्येकस्मै महाभागाय मदनूदिताया गाथासप्तशत्यास्तदिदमेकं पद्यं केनचित्प्रसङ्गेन श्रावितमभूत्–

**शंसन्ति कामिनीनामम्बुनिलीनप्रियाङ्गसङ्गसुखम्।**
**पुलकितकपोलसंफुल्लनिश्चलाक्षाणि वदनानि।।६/५८।।**

महाशयेनाऽनेन सभ्यतानुरोधिनं साधु साध्वित्यादिप्रासङ्गिकप्रशंसाकाण्डं परिसमाप्य पर्यन्ते पृष्टं यत्– 'अस्य मूलभूता प्राकृतगाथा तूपन्यस्यतां या ह्येतदपेक्षया कियत्कोटिकं कर्णमधुरा भवेत्'। मया सविनयमावेदितम् 'यदा ह्यस्य मूलभित्तिः प्राकृतगाथा तदा कुतो वा सेयमभिनन्दनीया न भवेत्। परं सा कर्णमधुराऽपि भवेदत्र मतभेदो भवितुमर्हति, विशेषतः प्राकृतप्रचारात्प्रकामं विप्रकृष्टेऽस्मिन्काले। तैः सोत्तेजनमुत्तरितं 'नैवम् नैवम्'। मया सा गाथा पुस्तकान्निस्सार्य तेषामग्रतः स्थापिता–

**पिसुणेन्ति कामिणीणं जललुक्कपिआवऊहणसुहेल्लिम्।**
**कण्डइअकवोलुप्फुल्लणिच्चलच्छीइँ वअणाइं।।६/५८।।**

मन्मतानुसारं तु तामिमां गाथामेते स्पष्टं पठितुमपि न प्राभवन्। आत्ममतं दुर्बलं भवतीति सुमधुरपठनाय निभृततममाभ्यन्तरप्रयत्नं कृतवन्तोऽप्युत्तरार्धं छन्दोलये निबन्धुं नापारयन्। एष हि समयोऽपभ्रंशमार्गस्य कृते स्पष्टं प्रतिकूल एव। यतो हि साम्प्रतिकाः किल राष्ट्रीयसाहित्यप्रचारका देशभाषाया अपि अपभ्रंशपथसिद्धं व्रजभाषादिरूपमाच्छिद्य तादृशं नवीनमेव रूपं सृजन्ति यत्र हि किञ्चिदप्यपरिवर्तितानि संस्कृतपदान्येव आमूलचूडं क्रीडन्ति। वर्तमानसमये देशीयसाहित्यमहारथिनः–

**'थप्पन उथप्पन सपच्छ अरिदप्पनके।**

**छप्पन करोर जादों कप्पन कलेसजू।**

**चप्पन प्रतापतेज तप्पन के जासु जस**

**जप्पन औ अप्पन समप्पन हमेस जू।**

**होत बकसीस बिसैं बीस बीस तीस सुर-**

**ईसकें सीस पै द्विजदीननिके पेसजू**

**जयसिंह दानी तुम्हें होहु सुखदानी**

**द्वारकाके राजधानी राजैं राजा द्वारकेसजू।।'**

[द्वितीयजयसिंहाश्रिताः कविकलानिधिश्रीकृष्णभट्टाः]

इत्यादिभिः संस्कृतापभ्रंशजनितैः पदैर्ग्रथितां प्राचीनहिन्दीं नाभिरोचयन्ति। एते हि–

**'नानाभावविभावहावकुशला आमोद आपूरिता**

**लीलालोलकटाक्षपातनिपुणा भ्रूभङ्गिमापण्डिता।**

**वादित्रादिसमोदवादनपरा आभूषणाभूषिता**

**राधा थीं सुमुखी विशालनयना आनन्दआन्दोलिता।।**

[अयोध्यासिंह उपाध्यायः]

एवंविधामपरिवर्तितसंस्कृतपदबन्धवाहिनीं भाषामद्यत्वे ससाधुवादमभिनन्दन्ति। कामं कुत्रचिद्द्वेदनावश्यकसंस्कृतपदनिबन्धः, स्वैरं सम्भवतु नाम दुर्बोधैः पदैर्भाषायाः काठिन्यम्, भारतवर्षस्य कोणकोणावधि सुबोधतया अधिगतराष्ट्रीयभाषासिंहासनाया अपि हिन्दीभाषाया अपहीयतां नाम सर्वबोध्यत्वम्, परमिमे संस्कृतपदसौष्ठवापहृतमानसतया अपभ्रंशपदानि पदाघातैरपसारयन्तः संस्कृतसरस्वतीमेव साहित्यसिंहासने समभिषेचयितुमिवाग्रसरीभवन्ति। इदानीं दृश्यतामेतादृशे समये प्राकृतभाषायाः कर्णरसायनत्वसाधनं कियत्सत्यमिति।

परमासीत्सोऽपि समयो यत्र प्राकृतभाषायाः सम्मुखे संस्कृतभाषा विच्छायेवाऽभवत्। मधुरमधुरेषु विषयेषु प्राकृतभाषां परिहाय संस्कृतभाषायाः परिग्रहणं लोकानां कृते सुभृशमरुचिकरमभवत्। नवसु रसेषु मधुरतरः किल शृङ्गार इति को वा न जानाति। परमयमपि रसः प्राकृतभाषायामेव माधुर्यमधिकं पुष्णातीति तत्समये कोविदानामभून्निश्चयः। शृङ्गाराधिदैवतस्य मनोभवस्य केलिभूमिरिव सेयं भाषा परिगण्यते स्म। साभिमानहुङ्कारमुद्घोष्यते स्म तस्मिन्समये–

**'अमिअं पाउअकव्वं पढिउं सोउं अ जे ण आणन्ति।**

**कामस्स तत्ततन्तिं कुणन्ति ते कहँ ण लज्जन्ति[१] ।।'**

प्राकृतभाषापक्षपातिन एव गेहे नर्दितया तदिदमुद्घोषयामासुरित्यपि न। ये किल संस्कृतभाषायाः कोविदेषु मूर्धन्याः सम्मन्यन्ते स्म तेऽपि प्राकृतप्रशंसागीतमुत्कण्ठया गायन्ति स्म। यायावरमूर्धन्यं राजशेखरकविं को वा संस्कृतज्ञो न जानीयात्। यस्य हि बालरामायण-विद्धशालभञ्जिकादिरूपककाव्यानि संस्कृतस्य रूपं सुभृशमुद्भासयन्ति। यत्कृता काव्यमीमांसा परिज्ञाननैपुण्येन मार्मिकाणां मनासि चित्रयन्ती साहित्यशास्त्रस्यासाधारणं महत्त्वमास्थापयति पण्डितसमाजे। संस्कृतसरस्वत्याः सौभाग्यसीमानः एतादृश महाकवयोऽपि प्राकृतस्याग्रे संस्कृतं गौणीकुर्वन्ति। आह सः-

**परुसा सक्कअबन्धा पाउअबन्धो वि होइ सुउमारो।**

**पुरुसमहिलाणँ जेत्तिअमिहन्तरं तेत्तियमिमाणम्।।[२]**

[कर्पूरमञ्जरी]

**ललिए महुरक्खरए जुवईजणवल्लहे ससिंगारे।**

**सन्ते पाइअकव्वे को सक्कइ सक्कअं पढिउम्।।[३]**

[वज्जालग्ग]

## प्राकृतभाषा

देशजजलवाय्वाहीनां प्रभावाद्विलक्षणेन कण्ठताल्वाद्यभिघातेन, करणापाटवेन, अन्येन वा केनचन निदानेन कामं भवेत्प्राकृतादिभाषाणामुत्पत्तिः, परं विभिन्नवर्गीयैर्जनैः परस्परस्प-र्धावशात्सेयं प्राकृतभाषा प्रकामं प्रसारमनीयतेति प्रतीतं भवति। वैदिकमतानुयायिनामार्याणां जैन-बौद्धादिभिः सह यदा हि धार्मिकः सङ्घर्षः समुपस्थितोऽभूत्तदा ह्यार्याणां धार्मिकी भाषा संस्कृतमभवत्। अत एव तत्प्रातिद्वन्द्व्येन जैनैरर्धमागधी, बौद्धैश्च पालीति परिभाषिता प्राकृतभिदा प्राधान्येन धर्मप्रचारभाषा न्ययम्यत। इत्थं ग्रन्थनबाहुल्येन शनैःशनैरुपचयमुपगता सेयं प्राकृतभाषा यस्मिन्समये प्रकामं प्रौढिमधिजगाम तद्धि प्राकृतभाषायाः कृते मध्ययुगमिति व्यपदिशामः। अनादिकालादारब्धा गीर्वाणगवी तु स्वाभाविकेन निजसौष्ठवेन शनैः शनैः संस्कारजनितेन

---

१. अमृतं प्राकृतकाव्यं पठितुं श्रोतुं च ये न जानन्ति।
कामस्य तत्त्वचिन्तां कुर्वन्ति ते कथं न लज्जन्ते।।

२. परुषाः संस्कृतबन्धाः प्राकृतबन्धोऽपि भवति सुकुमारः। पुरुषमहिलानां यावदिहान्तरं तावदेतेषाम्।

३. ललिते मधुराक्षरे युवतिजनवल्लभे सशृङ्गारे। सति प्राकृतकाव्ये कः शक्नोति संस्कृतं पठितुम्।।

केनचिदनिर्वचनीयेन सौन्दर्यमहिम्ना च सुभृशमासीदेव विवेकिनामभिनन्दनभूमिः, परं संस्कृत-पदाङ्कानुशीलनेन तत्साहित्यमार्गानुवर्तनेन तद्रसालङ्कारगुणाद्यनुगमनेन च प्राकृतभाषापि शनैः शनैः प्रकामं प्रौढिं सुबहुतरं माधुर्यं चाधिजगामेति माननीयमेव भवेत्। अयमेव प्राकृतभाषार्थं पूर्णोपचयकालः। शनैः शनैरुपचयमधिगच्छन्ती प्राकृतभाषा यदा ह्येवंविधं चरममुत्कर्षमवाप तदैव सेयमपि साहित्यभाषैव भूत्वा व्यवहारात्क्रमशो दूरभावमवाप्तवती। भाषा हि यदा सुभृशं संस्कारं परां प्रौढिं सुदृढां च व्याकरणनियममर्यादामनुवर्तते तदा हि व्यवहारमार्गात्क्रमशो दूरतां गच्छतीति भाषातत्त्वविदां मतम्। यतो हि साधारणजनतायाः प्रतिदिनव्यवहारे तादृशनिय-मनिगडिताया भाषाया निर्वाहो न भवतीति क्रमशस्तादृशे सन्धिस्थले अन्यस्याः कस्याश्चन व्यवहारोपयोगिन्या भाषाया जन्मनः सूत्रपातो भवतीति तेषां वक्तव्यम्। पूर्वं हि व्याकरणनियम-लिङ्गादिषु भूयस्तरां स्वतन्त्राया गीर्वाणगिरो व्यवहारः समभवत्। सौष्ठवबुद्ध्या शनैः शनैर्व्याकरणनियमदृढीकरणेन साहित्यमार्गस्य भूयस्तरां प्रसारेण च क्रमशोऽस्यां देववाण्यां नानाविधानां संस्काराणामाविर्भावोऽभवत्। अत एव सुतरां संस्कृता सेयं देवगवी साहित्यभाषा-गौरवपदमवाप्य क्रमशो व्यवहारपथात्ताटस्थ्यमवाललम्बे। व्यवहारार्थं च प्राकृतभाषाया जन्म समभवत्। कृततक्षणानीव असाधारणसमुज्ज्वलानि दृढसंस्काराणि चाक्षराणि स्त्रीबालादि-साधारणसमुच्चारणे न सुकराण्यभवन्निति संस्कृतरूपेषु विकृतिमुत्पाद्य संस्कृताधारेण प्राकृत-भाषाया आविर्भावोऽभवत्। यदा च पूर्वोक्तप्रकारेण प्राकृतभाषापि नानालङ्कारसङ्काशितरूपा समुज्ज्वलनेपथ्या समभवत्तदा साधारणवेषभूषाभिर्योषाभिः सम्पाद्यानि गृहव्यवहारकार्याणि यथा आनखशिखमलङ्कृताभ्यः समुज्ज्वलनेपथ्याभ्यो महिलाभ्यो विप्रकृष्टानि भवन्ति तथा शनैः शनैरियमपि भाषा व्यवहारपथात्तटस्थाभवत्। कार्यव्यवहारक्षेत्रे च अपभ्रंशभाषाया जन्म समभवत्। यदा च अपभ्रंशभाषापि शनैः शनैः सौष्ठवबुद्ध्या संस्कारैरुद्भासिता साहित्य-पुस्तकस्थभाषाभवत्तदा व्यवहारार्थं प्रादेशिकभाषाणां मूलोत्पत्तिरभूदिति जानन्त्येव तत्त्वविदो विद्वांसः। यदि हि प्राकृतं व्यवहाराद्दूरे भूत्वा पुस्तकस्था भाषा सम्पन्नाभवत् अपभ्रंशश्च व्यवहाराद्दूरे गच्छन्नासीत्तस्मिन्नेव समये [११५० तमे ख्रिस्तसंवत्सरे] हेमचन्द्राचार्येण प्राकृतव्याकरणं कोषश्च निरमीयत। अस्य परिशेषेऽपभ्रंशस्यापि नियमाः संस्काराश्च सङ्गृहीता इति तत्परिशीलकाः परिचिनुयुः।

उपरितनेन भाषाणां विपरिवर्तनेतिहासेन तदिदमेव मे वक्तव्यं यत् पूर्णसंस्कारैः परिष्कृता पूर्णां प्रौढिं चाधिगता सेयं प्राकृतभाषा यस्मिन्समये साहित्यसिंहासनमध्यारुरोह, यश्च प्राकृतभाषायाः परमोत्कर्षस्य पूर्णो मध्याह्नकालः समभवत्तस्मिन्नेव समये प्राकृतसाहित्यस्य चरमोत्कर्षसूचिकायाः श्रीमत्या गाथासप्तशत्या जन्म समभवत्। यावत्किल प्राकृतभाषा प्राकृतजनानां केवलं व्यवहारमात्रोपयोगिनी समभवत्, न च यावत्सेयं समर्थैः कविभिरात्मनः सरस्वतीनिःस्यन्दाय निर्वाचिताभवत्, तावन्नानया सह संस्कृतभाषायाः सङ्घर्षः समभूत्। यतो हि चरमोन्नतिचुम्बिन्या श्रीमत्या संस्कृतसरस्वत्या सह केवलं व्यवहारसाधिकायाः प्राकृतभाषायाः

का नाम तुलना ? परं यदा शनैः शनैरुपचितसर्वाङ्गसौन्दर्या, समुचितैः साहित्यसंस्कारैः समुज्ज्वलितलावण्या, सेयं साहित्यसौधमधिकर्तुं पूर्णाधिकारिणी समभवत्, राजशेखरसदृशैर्भूयोभिर्महाकविभिर्निजप्रतिभाप्रसाराय च यदा सेयं सगौरवमधिगृहीताभूत्तदा साहित्यसौधस्य सम्मुखवेदिकायामेव द्वयोरेव भाषयोः परस्परं सङ्घर्षः समुपस्थितोऽभूत्। साहित्यरङ्गस्थले संस्कृतभाषया सह स्पर्धासङ्कथैव प्राकृतभाषायाश्चरमोत्कर्षं पिशुनयितुमलम्। पूर्वोपन्यस्तैर्वचनैश्च द्वयोरनयोः स्पर्धा स्फुटमनुमिता भवति। ततश्च यः किल प्राकृतभाषायाः पूर्णः समुत्कर्षकालः स एव सप्तशत्याः सङ्ग्रहकाल इति विवेकिभिरधिगन्तव्यं भवेत्।

## सातवाहनः

हालापरनामा कोऽयं सातवाहन इति निर्णयाय बहूनां संस्कृताभिज्ञानां पाश्चात्यपण्डितानां बहोः कालादभूवन्नेव गवेषणाः। तैर्यत्किञ्चिन्निश्चितं तद्धि प्रयत्नगवेषणाव्यसनिभिरभिज्ञातमेव भवेत्, परं संस्कृतविदुषां कृते तस्य दिग्दर्शनं स्वर्गीयमहामहोपाध्यायपण्डितदुर्गाप्रसादमहाभागैः पूर्वं मुद्रापितस्य पुस्तकस्य भूमिकातो भूयस्तरां भवेन्नाम। अत एवैतां भूमिकामविकलमुद्धृतवानस्मि। अनया हि गाथासप्तशत्यां केषां केषाञ्चन कवीनां कृतयः सङ्गृहीतास्तद्विषये, तत्सङ्ग्रहीतुः शालिवाहनस्य तट्टीकाकाराणां च विषये प्रायोभूयानेव परिज्ञातव्यविषयोऽधिगतो भवेत्।

अयं किल सातवाहनः शकसम्वत्सरप्रवर्तकः श्रीमान् शालिवाहन एवेति पूर्वभूमिकायामुद्धृतैः हैमकोषादिप्रमाणैः सुव्यक्तमेव। ततश्चास्य कालविषये निर्भ्रमं निश्चितं भवति यदयं ख्रिस्तीयसंवत्सरप्रथमशतके सम्बभूव। दक्षिणापथान्तर्गतं प्रतिष्ठानपुरमेतस्य राजधानी समभूत्। यद्धि साम्प्रतं 'पैठण' नाम्ना प्रसिद्धम्। एतद्राज्याश्रिता गुणाढ्यशर्ववर्मप्रभृतयो भूयांसो विद्वांसः समभवन्। परमविदुषा महाकविना चानेनैव गुणाढ्येन निर्मिता बृहत्कथा, या हि भुवनविश्रुता। एतस्य कवेर्विषये गदितं गोवर्धनाचार्येण–

**'अतिदीर्घजीविदोषाद् व्यासेन यशोऽपहारितं हन्त।**
**कैर्नोच्येत गुणाढ्यः स एव जन्मान्तरापन्नः।।'**

कथासरित्सागरे यो ह्यस्य नरेन्द्रस्य वृत्तान्तः समुपलभ्यते तनेदं परिज्ञायते यदयं महीपतिः पूर्वं नासीत्संस्कृतभाषाविद्वान्। एतस्याः प्रिया पट्टराज्ञी मलयवती तु संस्कृतभाषाविदुषी समभवत्। तया राज्ञया सह कदाचिज्जलकेलिमनुभवन्नयं 'मोदकैस्ताडय' [मा उदकैस्ताडय] इति तयाऽभिहितोऽभूत्। अयं तु सन्ध्यनभिज्ञत्वात् राज्ञ्यास्ताडनाय मोदकानयनस्याज्ञां प्रददत्तया राज्ञ्या परिहस्यते स्म। अनेन परिहासेन मर्मण्यभिहतः सोऽयं सभामागत्य यावत्त्वरितं व्याकरणाध्ययनाय निजाश्रितान्पण्डितानाजुहाव। तत्र गुणाढ्यप्रातिद्वन्द्व्ये स्थितः शर्ववर्मा षड्भिर्मासैर्व्याकरणाध्यापनं प्रतिजज्ञे। पण्डितराजो गुणाढ्यस्तु एतावति समये व्याकरणपाण्डित्यमसम्भवं मन्वानः 'यदि त्वं तथा कुर्यास्तर्हि प्रचलितभाषामात्रमहं त्यजेयम्' इति

सोत्तेजनं पणबन्धं चकार। भगवन्तं कार्तिकेयं परितोष्य लब्धकलापव्याकरणः शर्ववर्मा तु दिव्यप्रभावात्प्रतिज्ञातकाले सातवाहनं व्याकरणपण्डितमकरोत्। प्रतिज्ञानुसारं त्यक्तप्रचलित-भाषात्रयो गुणाढ्यः प्रतिष्ठानपुरं परित्यज्य वनवासमाश्रितो भूतभाषया बृहत्कथामुपनिबबन्ध। प्रसन्नः सातवाहनोऽपि शर्ववर्मणे गुरुरिति गौरवं प्रदाय महार्हरत्ननिचयोपहारपुरस्सरं भरुकच्छप्रदेशस्याधिपत्यं तस्मै वितताार। अनेनैतत्परिज्ञायते यद् भरुकच्छप्रदेशोऽप्यस्य शासने समभूत्, यो हि साम्प्रतं 'भरोंच' नाम्ना लोकानां परिचितः।

उपरिप्रत्ता कथासरित्सागरकथा यदि प्रमाणकोटावुपन्यस्तुं शक्येत [डॉक्टरपीटर्सनद्वारा बुन्दीनरेशपुस्तकालयादानीते सप्तशतीपुस्तके 'इति श्रीमत्कुन्तलजनपदेश्वरप्रतिष्ठानपत्तनाधीश-मलयवतीप्राणप्रियकालापप्रवर्तकशर्ववर्मधीसखमलयवत्युपदेशपण्डितीभूतकविवत्सलहाला-द्युपनामकश्रीसातवाहननरेन्द्रनिर्मिता-' इत्यादिपुष्पिकायां प्रमाणतया तदिदमुल्लिखितमेवेति पूर्वभूमिका द्रष्टव्या] तर्हि अनेन सुगमतया तदिदं सिध्येद् यदेष नरपतिः संस्कृतवैदुष्याभावेऽपि निजाश्रितानां कविपण्डितानां सततसंसर्गात्कवितापरिचयविदग्धो रसिकश्च समभूत्। अत एव तत्कालप्रचलिताः प्राकृतकविताः सुभृशमभिनन्दन् तत्तत्कवींश्चोत्साहयन्नयं प्राकृतकवीनां कृते कल्पतरुरिव समोदमभिनन्दनभूमिरभूत्। रात्रिन्दिवं कविगोष्ठीपटिष्ठस्तन्मीमांसाभिनिविष्टतया तत्परिनिष्ठमतिः सोऽयं स्वयमपि कवयति स्म, सुमधुरं च कवयति स्म। अनन्तरं तु निजदयितया प्रवर्तितोऽयं संस्कृतभाषामप्यधिजगे।

एषा किल सप्तशती तेन महीभृता निर्मितेति यत्कैश्चिदुल्लिखितं सोऽयं स्पष्टो भ्रमः। प्रत्येकशतकस्यान्ते स्वयं सप्तशत्यामेव 'रसिकजनहृदयदयिते कविवत्सलप्रमुखसुकविनिर्मिते' इत्युपनिबद्धम्। अनेन बहूनां कवीनामत्र गाथाः सङ्गृहीता इति स्पष्टं सिध्यति। पूर्वं मया प्रदर्शितमेव, यत्कविजनानां कृते कल्पद्रुमायमानस्याऽस्य सविधे बहवः कवयः सुबहुतरं सम्मानमवाप्य आश्रयमेव जगृहुः, बहवश्च सम्मानलिप्सया दूरदूरादस्य सभामागत्य निजगुणान्प्रकट-याञ्चक्रुः। कविताकलापकोविदः सोऽयं तत्तत्कवीनां चमत्कारिणीस्तास्ताः कविताः सर्वा एव निजाश्रितैर्जनैः पत्रारूढाः कारयामास। अनन्तरं च तत्तेषां कवीनां कीर्तिस्थिरीकरणार्थं तासां कवितानां मध्ये याः किल परममेव मधुराः, केनापि च चमत्कारेणालङ्कृतास्तादृशीः सप्तशतं कवितास्ततः सङ्ग्रहादुच्चीयन्ते स्म। अयमर्थः सप्तशत्याः प्रथमशतकस्य तृतीयायां गाथायां स्फुटमभिव्यक्तः- 'सप्तशतानि कविवत्सलेन कोटेर्मध्ये। हालेन विरचितानि सालङ्काराणां गाथानाम्' इति। टीकाकारैः स्पष्टं व्याख्यातम्- 'कविगाथासङ्ग्रहेण तत्कीर्तिस्थिरीकरणा-त्कविवत्सलेन हालेन शालिवाहनेन सालङ्काराणां गाथानां कोटेर्मध्ये सप्तशतानि विरचितानि। सङ्गृहीतानीत्यर्थः।'

राजोचितसुखविलासभृता ह्येतेन महीक्षिता पूर्वसङ्गृहीतानां गाथानां सङ्कलनमात्रस्यापि परिश्रमः स्वहस्तेन नानुभूत इति स्पष्टमहमभिप्रैमि।

'अविनाशनमग्राम्यमकरोत्सातवाहनः। विशुद्धजातिभिः कोषं रत्नैरिव सुभाषितैः' इत्यादयो बाणादीनामुक्तयस्तु केवलमौपचारिक्यः। एतस्य महीपतेरभिप्रायमवगत्य राजपरितोषलालसेन केनचिदेत्तदाश्रितेन विना तद्रुचेरनुसारं गाथानां सप्तशती एतन्नाम्नाङ्कयित्वा सङ्ग्रहीता अस्मै समर्पिता च। नास्य सङ्ग्रहस्य सातवाहनभूपतिः स्वयं सङ्कलयिता। 'निजगुणश्लाघया सन्तुष्टः सातवाहननरेन्द्रो मह्यमतिशयितां द्रव्यादिसपर्यामर्पयेत्' इति सङ्ग्रहीतुर्लालसा स्पष्टमस्मिन्ग्रन्थेऽभिनिविष्टा–

**'तव रणजलदसमयभयचलविह्वलपक्षकैर्नुस्त्रियते।**

**परिशेषितपद्माशैर्हंसैरिव मानसं रिपुभिः।।५/७१'**

**'कः स्थगयितुं समर्थोऽत्र जगति विस्तीर्णनिर्मलोत्तुङ्गम्।**

**हृदयं च तव नराधिप गगनं च पयोधरान्मुक्त्वा।।४/६४'**

**'विषमस्थितपङ्क्तिकाप्रदर्शने ते तु शत्रुगेहिन्या।**

**पथिकानां कः को वा न वाऽर्थितो रुदति डिम्भे हि।।६/८५'**

राजानं सम्बोध्य समुदीरिता एतदादयो गाथाः स्पष्टं सूचयन्ति यदिमाः कञ्चिद्राजान-मुद्दिश्य तत्परितोषाय तदभिमुखं सभायां पठिताः। स राजा च प्राकृतकवीनां कल्पपादपं शालिवाहनमन्तरा कोऽन्यो भवितुमर्हति। एवंस्थितौ प्राकृतकाव्यकोषस्याऽस्य निर्माता स्वयं शालिवाहन एव कथं भवितुमर्हति ? न किल कीदृशोऽपि कीर्तिलोलुपः पृथिवीपालः स्वहस्तेन स्वप्रशंसामुपढौकयेत्। न केवलं राजनाम्नैव अपि तु प्रातिस्विकरूपेण शालिवाहनस्य नाम गृहीत्वापि स्पष्टं कीर्तिसङ्कथा ग्रथिता सप्तशत्याम्–

**'आपन्नानि कुलानि द्वावेव हि विदतुरुन्नतिं नेतुम्।**

**गौर्याश्च हृदयदयितोऽथ शालिवाहननरेन्द्रश्च।।५/६७।।'**

परममार्मिकेण निखिलजनसम्माननीयेन मनस्विना शालिवाहननरपालेन स्वप्रशंसा स्वयं स्वहस्तेन लिखितेति किं कश्चित्सावधानमतिर्मानयेत् ?

श्रीमदभिनन्दप्रणीतस्य रामचरितमहाकाव्यस्य द्वात्रिंशत्तमसर्गसमाप्तौ– 'हालेनोत्तमपूजया कविवृषः श्रीपालितो लालितः, ख्यातिं कामपि कालिदासकवयो नीताः शकारातिना। श्रीहर्षो विततार गद्यकवये बाणाय वाणीफलं, सद्यः सत्क्रिययाभिनन्दमपि च श्रीहारवर्षोऽग्रहीत्।।' इति पद्यमुपलभ्यते। ततश्च श्रीपालितकविनैव स्वप्रभोर्हालस्य नाम्ना सेयं सप्तशती द्रव्यावाप्तिका-मुकेन सङ्गृहीता स्यादिति पूर्वकारणैः सुस्पष्टमनुमीयते। पूर्वसंस्करणभूमिकायां स्वर्गीयैर्महाम-होपाध्यायैरपि तदेतदनुमानमनुमतमिति मीमांसनीयं मार्मिकैरेव।

## हालस्य यौवनकाले निर्माणम्

सैषा सप्तशती सातवाहनस्य सततविलासविभ्रमवत्यां यौवनावस्थायां समगृह्यतेत्यपि स्फुटीभवति। यदि सेयं सातवाहनस्य प्रसादार्थमुत्तमपूजालालसेन श्रीपालितेन सङ्कलिता स्यात्ततश्चास्यां राज्ञो रुचिमनुरुध्यैव सर्वा गाथाः सङ्गृहीता भवेयुः। अस्यां चामूलचूडं शृङ्गाररस एव परिखेलति। सोऽपि साधारणो न, किन्तु प्रागाढकामिनामुत्कटसङ्गलिप्सासूचकश्चरम-सीमानमुपगतः। अत्र हि पुष्पवत्यपि सङ्गार्थं सङ्गृह्यते। उत्फल्लिकया क्रीडन्त्यां बालिकायामपि विपरीतरतमुत्प्रेक्ष्यते। निभृतनिधुवनसमये उपधानार्थं किञ्चिदप्यनुपलब्धे भगवतो गणपतेर्मूतिरेव शिरस उपधानीक्रियते। सारमिदम्- यत्कुत्रचित्तु सोऽयं शृङ्गारस्तथा निरावरणो निर्मर्यादश्च भवति यथा औचित्यस्यातिक्रमसीमानमपि चुम्बति। यद्यपि तस्मिन्समये समाजस्यैव तादृशी रुचिरासीत्, नात्र कवेलं राज्ञ एव निर्देशदोष इति वक्तुं शक्येत, परमेकस्य माननीयस्य विशालराज्याधिपस्य विदुषो राज्ञः परितोषाय तदाज्ञया निर्मिते सङ्ग्रहे समाजस्य रुचिः प्रधानी-भवेदेतदपेक्षया तस्य राज्ञ एव तस्मिन्समये वयोविशेषवशात्तादृशी रुचिरासीदित्येव साधनं युक्तिसङ्गतम्। ततश्च रतिरसतरङ्गसङ्गसंवाहितः सोऽयं नरपालस्तादृशान्येव काव्यानि तस्मिन्सम-येऽभिरोचयामासेति सिध्यति। एवंविधकाव्याभिरुचिश्च यौवन एव भवतीति सोऽयं सङ्ग्रहः सातवाहनस्य नवतारुण्यविलाससंसूचक एवेति स्पष्टमेव। अयं विषयः परस्तादपि समालोच्ये-तेत्यलं विस्तरेण।

इयं रचना भारतीयसाहित्यस्य पूर्णतादशायां निरमीयतेत्यस्या गुम्फगुणगौरवेण निर्णेयं भवेत्। प्राकृतभाषाप्येवंविधरचनाप्रकाशनेन पूर्णतममुन्मेषं गतवतीति पूर्वमुक्तमेव विस्तरतः। अत एव शालिवाहनस्य शासनं प्राकृतप्रसाराय सुप्रसिद्धं साहित्यगोष्ठ्याम्। यथा हि सरस्वतीकण्ठाभरणे-

**के नासन्नाढ्यराजस्य राज्ये प्राकृतभाषिणः।**
**काले श्रीसाहसाङ्कस्य के न संस्कृतभाषिणः।।**

आढ्यराजः शालिवाहनः। साहसाङ्को विक्रमादित्य इति टीकाकारो रत्नेश्वरमिश्रः।

प्राकृतभाषापरिग्रहणेऽपि तस्मिन्समये ह्येतत्परिचितसमाजे बौद्धमर्धस्य प्रभावः सुतरामपगतोऽभवत्। अस्यां हि मूलादारभ्यान्तपर्यन्तं शिवपार्वत्योर्लक्ष्मीनारायणयोश्च मङ्गल-स्तुतिरूपः शृङ्गारो वर्ण्यते। स्थाने स्थाने गणपतिः स्तूयते। स्थले स्थले सरस्वत्याः स्तुतिसङ्कथा प्रस्तूयते। तदेतदादिभिः सनातनार्यधर्मस्याग्रहः सुस्पष्टतरो भवति। अवश्यं बौद्धधर्मस्यापि भारते तस्मिन्समये चर्चा नासीदित्यपि न वक्तुं पार्येत। अस्ति हि बौद्धभिक्षूणामपि वर्णनमस्यां सप्तशत्याम्-

**शुकमुखसच्छायैः किल पलाशकुसुमैर्विराजते वसुधा।**
**बुद्धस्य चरणवन्दनपतितैरिव भिक्षुसङ्घातैः।।४/८**

पीतश्यामवर्णशबलानि किंशुकपुष्पाणि परितस्तथा पतितानि सन्ति यथा मध्ये आसीनस्य बुद्धस्य चरणवन्दनार्थं दण्डवत्पतिता असङ्ख्या भिक्षवो भवेयुः। श्यामवर्णानां किंशुकवृन्तानां शिरःसाम्यम्, तत्पत्राणां च पीततया पीतवस्त्रसादृश्यमित्येवंरूपेण तस्मिन्समये बहुतरमावर्तमानस्य बौद्धोपदेशसमाजस्य चित्रणं तच्चर्चां स्वसहचरीं सूचयति। सहैव च बौद्धान्प्रतीर्ष्यापि समभवदित्यप्यनुमातुं शक्यते। मूलकारस्य विचारपरम्परां प्रकाशयति टीकाकार इति प्रसिद्धं वित्सु। टीकाकारश्च गङ्गाधरभट्टः स्फुटमत्राऽऽह– 'बुद्धस्येत्युत्तरार्धमपशकुन-सूचनार्थमेवोपात्तमिति।'

किं चात्र तस्मिन्समय एव भारते प्रसृतप्रभावस्य श्रीमतो विक्रमादित्यभूपालस्य श्लेषमार्गेणाभिमुखीकृता प्रसङ्गसङ्गता युद्धकालिकी काचित्प्रसिद्धा घटना सङ्गृहीतास्ति–

**ददता संवाहनसुखरससन्तुष्टेन तव करे लाक्षाम्।**
**विक्रमनरेन्द्रचरितं चरणेन हि शिक्षितं तस्याः।।५/६४।।**

सपत्नीचरणलाक्षालाञ्छितकरं दयितं खण्डिता सेर्ष्योपालम्भमाह त्वत्कृतसंवाहनात्तुष्टेन अतएव प्रसादरूपेण त्वत्करे लाक्षां ददता (सङ्क्रामयता) तस्याः (सपत्न्याः) करेण विक्रम-नरेन्द्रचरितमनुशिक्षितम्। प्राकृते 'संबाहणं' 'संवाहनं संबाधनं' च 'लक्खं' 'लाक्षां लक्षं' चेति। ततश्च विक्रमादित्यो भृत्यकर्तृकेन शत्रुसम्बाधनेन तुष्टः सन् यथा भृत्यस्य करे लक्षं ददाति तथा त्वत्करे तया लाक्षा दत्तेति भावः।

इयं घटना तस्मिन्काले सर्वतः प्रसृताभूदिति कवयितुरक्षरशय्यायामपि सा स्थानं लेभे। ततश्च विक्रमादित्योप्येतत्कोषनायकस्य शालिवाहनस्य समकालिकप्राय एवेति स्फुटीभवति। प्रबन्धकोषेऽपि 'विक्रमादित्यसमकालीन एवायं सातवाहनः' इति प्रोक्तमस्ति। दृश्यतां पूर्वसंस्करणभूमिकायां सातवाहनशीर्षकस्य द्वितीयं पृष्ठम्।

## प्राचीनता

उपलभ्यमानेषु काव्यग्रन्थेषु गाथासप्तशती प्रायो बहुभ्य एव पुरातनी। अस्या निर्माणकालः संवत्सराणां सहस्रद्वयीमासीदति। यतः शकसंवत्सरप्रवर्तकस्य शालिवाहनस्य समये सेयमुद्भवमग्रहीदिति पूर्वं निर्दिष्टमेव। यस्मिन्समये बहूनां सभ्यजातीनां समाजे सभ्यतादेव्याश्चरणन्यासोऽपि नाभवत्तस्मिन्नपि समये भारते एवंविधमपूर्वं ध्वनिकाव्यं निरमीयत, यत्प्रातिद्वन्द्व्यमस्मिन् सभ्यतायाः पूर्णविकासमयेऽपि समये सहसा न सम्भवेत्। इदं हि काव्यं साहित्यशास्त्रस्य परिभाषितैर्लक्षणैः पूर्णतया लक्षितम्। स्थाने स्थानेऽस्मिन्नलङ्कारास्तथा वैदग्ध्येनासज्जिता यथा सेयं सप्तशतीसुन्दरी सहृदयानां प्रसह्य मनोहरणायालम्। तेऽप्यलङ्कारास्तावन्त एव विलसन्ति यावद्भिर्निसर्गसुन्दरमस्या वपुर्न भारसीमानमनुचुम्बति। प्रधानतस्त्वत्र रसस्यैव साम्राज्यं यो हि काव्यस्यात्मरूपेण सर्वैः सम्मान्यते। चेतश्चमत्कारकं किञ्चिद्व्यङ्ग्यमनुपादाय कतमञ्चिदपि पद्यं नात्रावतरतीति सपणबन्धमुद्घोषयितुं शक्येत। अत्र

हि शृङ्गाररसोऽङ्गी। स हि प्राय: सर्वत्र निष्प्रतिबन्धमुत्खेलतीति स्पष्टमेव तद्विमर्शकमहाभागनाम्। रसानुसारिण: प्रसादमाधुर्यादयो गुणास्त्वेतस्या: स्तरे स्तरे भवेयुरत्र वक्तव्यमेव किम्? यत: सरसासु काव्यव्यक्तिषु तेषां साभिनिवेश: प्रवेशो नान्तरीयक एव। रसमुल्लासयन्तोऽपि रसिकान् लालसयन्तोऽलङ्कारा अपि प्राय: प्रतिपद्यमेवोद्भासन्त इति पूर्वमावेदितमेव। एवं किल साहित्य-शास्त्रस्य लक्षणीयानामङ्गानामुदाहरणभूत: सोऽयं ग्रन्थ इति स्पष्टमस्य गौरवं बुद्धेरन्त:सन्तिष्ठते। इदानीमस्माकं तस्य साहित्यस्य लक्षणशास्त्रमित: सुतमां प्राचीनं भवेत्, यद्धि अस्यां सप्तशत्यामामूलचूडमनुगम्यत इति प्रतिभावद्भिरनुमातव्यं भवेत्। यदाऽस्माकं साहित्यस्य लक्षणशास्त्राण्येवातिप्राचीनतमानि सिध्यन्ति ततस्तु लक्ष्यभूतमस्माकं काव्यवाङ्मयं तु कियत्पुरातनं सिध्येदिति स्वत एव बुद्धिमतां मतिमाकर्षेत्। यतो हि पूर्वं लक्ष्याणि काव्यान्युद्भवन्ति ततो बहुलीभूतेषु तेषु तान्युदाहरणीकृत्य तेषां गुणदोषादीन्विविच्य परतोभाविनां साहित्यसेविनां शिक्षानिमित्तं तच्छास्त्रं निर्मीयते। यथा हि पूर्वं जनसमाजे भाषा प्रादुर्भवति तदनन्तरं तस्या: संस्काराय विशृङ्खलतानिवृत्तये च व्याकरणं निर्मीयते। एष किल नवीनशिक्षा-पद्धतिमधिजग्मुषां विदुषामेव युक्तिविन्यास:। एतदनुसारमस्माकं समाजे काव्यनिर्माणयुगं कियत्पुरातनं सिध्येत्, तदपेक्षिता शनै: शनैरुपचिता सभ्यता च ततोऽपि कियत्पुरातनी भवेदिति स्वत एव सभ्यमहाभागैरनुभवनीयमापतति।

## काव्यगुणसौष्ठवम्

इयं सप्तशती बहुतरं पुरातनीत्येतदपेक्षयापि सैषा काव्यगुणैर्निर्भरमभिभूषितेत्येताव-देवास्या: समुत्कर्षस्य निदानम्। शनै: शनैरुपचयमुपगता प्राकृतभाषा परमधनाढ्यया चरमोत्कृष्टया च संस्कृतभाषया सह सङ्घर्षमनुभूय कैश्चित्कविभि: संस्कृततुलनायां सेयं मधुरापि यत् पर्यगण्यत तस्य किल निदानं सप्तशतीसदृशानां ग्रन्थानामुत्पत्तिरेव। यस्मिन्समये प्राकृतभाषा संस्कृततो मधुरा पर्यगण्यत तस्मिन्प्राकृतोत्कर्षमये समये त्वियं सचेतसां हृदयदेशमधिकुर्यादेव, परं प्राकृतभाषाया: सौष्ठवप्रभावो यस्मिन्समये जनानां हृदयाच्छनै: शनैरपगच्छति स्म, तस्मिन्नपि समये सहृदयहृदये वज्रकीलोल्लिखितेवास्या: सप्तशत्या: सौभाग्यसङ्कथा न कथञ्चिदप्युन्मृष्टाभवदिति वयं जानीम:। अत एव श्रीमतीं संस्कृतसरस्वतीमेव भूमण्डलस्य सरसाहित्यसाम्राज्यसिंहासने सुस्थिरामापादयितुं प्रयतमानैरलङ्कारशास्त्रकारै: प्राकृतभाषानिबद्धापि सेयं साभिमानमुदाह्रियत। आसीत्स किल तादृश: समयो यत्तेषामधिकारे यदि संस्कृतकाव्योदाहरणान्यभविष्यंस्तर्हि न ते कथञ्चिदपि प्राकृतभाषामयीमिमामस्प्रक्ष्यन्। परं ध्वनेर्भेदानामुदाहरणानि यानि भवेयुस्तादृशानि कानिचिदन्यानि काव्यान्येव तैर्नोपालभ्यन्त। दृश्यताम्, रुद्रटमम्मट-वाग्भट-विश्वनाथादिभि: प्राय: सर्वैरेव स्वस्वसाहित्यनिबन्धेषूदाहरणतया सेयं सप्तशती पर्यगृह्यत। गुणमुग्धतया सर्वत्रैवेमामेवानुवर्तमानेन भोजेन तु सरस्वतीकण्ठाभरणे प्राय: सर्वैव सप्तशती केन केनचित्प्रसङ्गेनोदाहृता। अपि नेदमस्या: परमोत्कर्षं सूचयितुमलम्? अस्या अनुकरणेन संस्कृतेऽपि गाथासब्रह्मचारिणीभिरार्याभि: सप्तशतीमुपनिबध्नता गोवर्धना-

चार्येणाप्यारम्भे 'वाणी प्राकृतसमुचितरसा.' इत्यादिना अस्याः स्तुतिरगायि। नासीत्तस्मिन्समये प्राकृतस्य तावान्प्रसारः, परं गाथासप्तशत्यादिभिः कतिभिश्चिद्ग्रन्थैः शृङ्गार-स्योपरि तादृशी निजमुद्राऽङ्किता यया प्रभावितः श्रीगोवर्धनाचार्योऽपि अनिच्छायामपि शृङ्गारोप-निबन्धनविषये प्राकृतं स्तोतुं प्रसह्य परवशोऽभवत्। दृश्यताम्, कैरक्षरैरेष स्तौति- 'प्राकृतभाषायां समुचितो रसो यस्याः ईदृशी वाणी अर्थात् शृङ्गारप्रमेयमयी, निम्नोचितनीरा कलिन्दकन्या गगनतलमिव बलात्कारेणैव मया संस्कृतं नीता।' 'एतादृशी वर्णना प्राकृतभाषायामेव सरसा-सम्पद्यते न संस्कृते, ततोऽपि मया बलादेव संस्कृतं प्रापितेति' तदाशयः। टीकाकारम-हाशयोऽप्याह- 'एवं च प्राकृतकाव्ये सुरसतासम्पादनं सुगमतरम्, संस्कृतकाव्ये तत्कठिनतरमिति द्योत्यते'। संस्कृते सरसतायाः सम्पादनं कठिनमेव न किन्तु कठिनतरम्। अहो प्रभावः प्राकृतस्य।

## प्राकृतभाषाया ओजोऽनुकूलाक्षरता

या किल भाषा शृङ्गारादिमधुररसवर्णनासमुचितानामक्षराणामपि कृते दरिद्रा साऽपि सुरसतासम्पादनाय परमोत्कृष्टेति गौरवगिरिशिखरमारोप्यते यः किल टवर्गः सर्वैरपि साहित्यनिबन्धकारैः पदे पदे प्रधानतया प्रतिषिद्धस्तस्यात्राऽखडितं राज्यम् अन्येषां प्रतिषेध्यानामक्षराणां पश्चान्निर्देशः, परं टवर्गस्तु सर्वैरपि सर्वप्रथममेवोपादीयते- 'मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गाः' इत्यादि काव्यप्रकाशः।'टवर्गवर्जितानां वर्गाणां प्रथमतृतीयैः शर्भिरन्तःस्थैश्च घटिता' इत्यादि रसगङ्गाधरः। 'उपर्यधो द्वयोर्वा सरेफौ टठडढैः सह' इत्यादिर्दर्पणः। एवं शृङ्गारादिषु क्रोशान् दूरे परिहरणीयष्टवर्गः साधारणतया अस्या भाषायाः शरीरप्रविष्टः। अत्र हि 'वर्तते''वर्धते' इति वक्तव्ये 'वट्रहि, वड्ढदि सम्पद्यते।'स्थितः''कर्षन्ती''निपतम्' इत्यादयः शब्दाः 'ठिञो' 'कड्ढन्ती' 'णिवडन्त' इत्यादिरूपाः सम्पद्यन्ते। संयुक्ताक्षरबाहुल्य-मपि मधुरवर्णनायां नोपादीयते। किन्तु प्राकृते असंयुक्तमपि प्रसह्य संयुक्तं क्रियते-'व्रजति''नीयते' 'एकः''लगति''जाये' इत्यादयः शब्दाः 'वज्जदि''णिज्जइ''एको''लग्गति''जाअव्व' इत्याकारकाः सम्पद्यन्ते। वर्गद्वितीय-चतुर्थाक्षरबहुला सङ्घटना तु माधुर्यगुणस्य सुतरां विप्रतीपा परिगण्यते, किन्तु प्राकृतभाषायां वर्गीयप्रथमवर्णोऽपि द्वितीयः सम्पद्यते। अत्र हि 'विस्तरः' 'अक्षरः' इत्यादिकाः शब्दाः 'वित्थरो''अक्खरो' इत्यादिरूपे परिणमन्ते। शृङ्गारविषयेऽपि- 'पथिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे इत्यादिरूपं गुम्फं प्राकृते साधारणतया प्रचलितं को वा साहित्यिको न परिचिनोति। प्राकृतवादिनां मुखमुद्रैव तादृशी यत्र 'दाहः' 'प्रथमः' 'एतावन्मात्रः' इत्यादिकाः 'डाहो' 'पढमो' 'एद्दहमत्तो' इत्यादिरूपाः परिणमन्ते। मधुरस्तवर्गान्तिमो नकारोऽपि प्राकृतभाषाप्राकारे प्रविश्य 'ण' कारः सम्पद्यते। 'घन-स्तन-धनुः' इत्यादिषु 'घण-थण-धणु' इत्यादीनि रूपाणि भवन्ति।'नयने नृत्यतस्तरुणीनाम्' इति वक्तव्ये प्राकृतपुरे 'णअणाइं णच्चन्ति तरुणीणम्' इति वक्तव्यं भवेत्।

'तां तमालतरुणकान्तिलङ्घिनी'मित्यादिर्यत्र मधुरो गुम्फः शोभामुपदध्यात्, तत्र किल शृङ्गारेऽपि-'तइआ मह गंडत्थलणिमिअं दिट्ठिं ण णेसि अण्णत्तो। एह्निं सच्चेअ अहं ते अ

अवोला ण सा दिट्ठी।।' इत्यादि बलात्प्रयोक्तव्यं भवति। केषु रसेषु कैरक्षरैरुपनिबन्धव्यमिति विषये रसगङ्गाधरे तु तावदतीव मार्मिकता प्रदर्शिता। स हि 'हरिणीप्रेक्षणा यत्र गृहिणी न विलोक्यते। सेवितं सर्वसम्पद्भिरपि तद्भवनं वनम्' इत्यादिकमप्यश्रव्यं परिगणयति। प्राचीननिबन्धेषु शृङ्गारस्योदाहरणतया सुमधुरं परिगणितम्–

'शून्यं वासगृहं विलोक्य शयानादुत्थाय किञ्चिच्छनैः' इत्यादिपद्यमपि शृङ्गारवर्णना–विरुद्धमाह। परं यत्र काव्यप्रकाशे वर्णसङ्घटनाविषये तादृशः सूक्ष्मातिसूक्ष्मो विमर्शोनाङ्गीकृतः, यश्च 'शून्यं वासगृहम्' इत्यादीनि काव्यान्यपि मधुराण्याह, सोऽपि टवर्गबाहुल्यं विशेषतश्च द्वितीयचतुर्थसंयोगाधिक्यं शृङ्गारादिरसेषु सुतरां विरुद्धमाह। इदानीं विचारणीयं विवेचकैर्यत्–यस्यां प्राकृतभाषायामुक्तप्रकारेण माधुर्यविरुद्धसंयुक्ताक्षरटवर्गादिबाहुल्यं यदा प्रतिपदमुपलभ्यते तदा सा कथं वा मधुरतासम्पादनाय सर्वभाषामौलिगता परिगण्यते? प्राकृतभाषायां माधुर्यगुणविरुद्धा ओजोऽनुकूला सङ्घटना बाहुल्येनोपलभ्यते इति हि मत्सदृशैरेव साम्प्रतमेवा–लोचितम्, तदपि नास्ति–

**'चित्ते विहट्टदि, ण टुट्टदि सा गुणेसु सेज्जासु लोट्टदि विसट्टदि दिम्मुहेसु।**
**वालेम्मि वट्टदि पवट्टदि कव्वबन्धे झाणेण टुट्टदि चिरं तरुणी तरट्टी।।'**

इति पद्ये योऽयमनुप्रास उपनिबद्धः स हि टवर्गस्य शृङ्गारप्रतिकूलत्वात्केवलं वाचकं शब्दमेवालङ्करोति न पुनः पद्यस्य व्यङ्ग्यभूतं विप्रलम्भशृङ्गारमिति प्रसङ्गे काव्यप्रदीपकारेण उद्द्योतकारेण नागेशभट्टेनापि च– 'अनुप्रासो मास्तु तावद्रसोपकारकः परमत्र सर्वे वर्णा एव रसोचितसङ्घटनाप्रतिकूलाः, ततश्च तादृशैर्वर्णै रसाभिव्यक्तिरेव न भवेत्। एवं च 'सन्तमपि रसं नोपकुर्वन्ति' इत्यस्योदाहरणत्वमस्य पद्यस्यासङ्गतं स्यात्, रसस्यैवाभावात्।' इमामरुचिं मनसि निधाय तैरुक्तम्– 'अत्र च प्रतिकूलवर्णत्वं न दोषः, प्राकृतस्यौजोगुणप्रधानत्वात्, अस्य च तदभिव्यञ्जकत्वात्' इति। एवं स्पष्टैरक्षरैरुपवर्णितं भवति यत्प्राकृतं भवेत्तावदोजोऽनुकूल–सङ्घटनोचितं परं मधुररसोचिता सङ्घटना तु नात्र यथोचितं निर्वाह्यते इति। ननु प्राकृतभाषाया ओजोऽनुकूलसङ्घटनासंदृब्धत्वात्तत्र शृङ्गाररस एव नाभिव्यज्यते इति तु न भ्रमितव्यम्। प्रतिकूलवर्णत्वेऽपि रसप्रतीतिस्तु भवत्येव, परम् अपकर्षोऽवश्यं भवतीति सिद्धान्तात्। उक्तं हि तत्रैव– 'वस्तुतस्तु सत्यपि प्रतिकूलवर्णत्वे रसस्य नानुत्पत्तिरेव अनुभवविरोधात्, किन्तु अपकर्षमात्रम्' इति।

## प्राकृतं कथं वा मधुरम्?

इदानीं विचारणीयम्–यस्यां भाषायां रसस्यापकर्षो भवति सैव भाषा संस्कृताद्यपेक्षयापि शृङ्गाररसवर्णनायां परमोत्कृष्टा कथमिव परिगण्यते? मा भूवन्नस्यां वर्णास्तादृग्रसानुकूलाः, परमस्याः स्त्रीबालादिसकलसुबोधत्वादस्यां तादृग्दर्शनादिगभीरा विषया नोपवर्ण्यन्ते किन्तु सर्वानुरञ्जनाय शृङ्गारादिसदृशा रसा बाहुल्येन परिनिबध्यन्ते। ततश्च बहुभिः कविभिरस्यां

शृङ्गारस्यैव वर्णनात् सेयं शृङ्गाररससमुचितेति प्रसिद्धिर्जाता। अत एव 'अमृतं प्राकृतकाव्य'मिति गाथायाष्टीकायां गङ्गाधरेण–'शृङ्गाररसनिर्भरत्वादमृतमिवामृतं प्राकृतकाव्यम्' इत्युक्तम्। अत्र हि प्राकृतकाव्ये शृङ्गारः पूर्णतया परिपुष्टो भवतीत्येतावदभिव्यक्तं भवति।

संस्कृतभाषा हि गभीरान्विषयानेवाऽऽदितः समाद्रियमाणा क्रमशस्तथा गौरववाहनी सञ्जाता यदस्यां शृङ्गारो यदि वर्ण्यते तदापि मर्यादानुकूल एव। व्यङ्ग्यतया वर्णनीया अंशा न कथञ्चिदपि स्फुटतया वर्णयितुं शक्येरन्। अत एव संस्कृतभाषायां शृङ्गाररसवर्णना सार्गला भवति। प्राकृते तु स्वातन्त्र्येण शृङ्गारः समुदीर्यते। अत एव तत्र संस्कृतापेक्षयाऽधिकशृङ्गारवर्ण–नोपलम्भात् शृङ्गाररसनिर्भरत्वमुपाख्यायते लौकेः। गणगौरी–श्रावणतृतीया–दीपावल्यादिषु प्रायः सर्वेष्वेव आर्याणामुत्सवेषु शृङ्गाररससंयोगः समुपलभ्यते। परं सर्वापेक्षयापि होलामहोत्सवः शृङ्गारनिर्भरः कामस्य जीवभूततया मदनोत्सव इति परमगौरवभाजनं विशेषेण शृङ्गाररससङ्गी सङ्गीर्यते। स्पष्टमेतस्य कारणं यदत्र निरर्गलः शृङ्गारोऽनुभूयतेऽनुभाव्यते च जनैः, अत एव स तादृशः शृङ्गाररसासाधारणः ख्यायते। एवमेव संस्कृतापेक्षया प्राकृते निरर्गलशृङ्गारवर्ण–नाधिक्याल्लोकानां शृङ्गारवर्णनाप्रसङ्गे प्राकृत एवाधिकं प्रीतिः। सभ्यसमाजसङ्कोचेन बहिस्तादृशी प्रबलरुचिर्निजा–नुमतिर्वा कामं जनैर्न प्रकटीक्रियते परं तादृशी वर्णनाऽवश्यमन्तः करणस्य सन्तर्पिणी भवतीति प्रायोऽनुभवसिद्धम्। प्राकृतगाथासु बहुत्र प्रायस्तादृशमेव जनमनोहारि शृङ्गारवर्णनमुपनिबद्ध–मित्यग्रतः प्रसङ्गेन स्पष्टीकरिष्यामि। अत एव आर्यासप्तशतीकारस्य समये प्राकृतस्य नासीत्तादृग्गौरवम्, न चाप्यसौ स्वयमपि प्राकृतपक्षपाती आसीत्।, ततोऽपि लोकानां प्रसिद्ध्यनुसारं शृङ्गारार्थे प्राकृतमुपरितस्तुष्टाव तदपकर्षं व्यङ्ग्यविधया च सूचितवान्।

इदं किल प्राकृतसंस्कृतयोर्महत्त्वतारतम्यं गोवर्धनाचार्येण 'वाणी प्राकृतसमुचितरसे' त्याद्यार्यायां निगूढमभिव्यक्तम्। प्राकृतपदेन–प्राकृतभाषा तथा प्राकृतः साधारणो जन इत्युभयमपि प्रतीयते। ततश्च प्राकृतलोकानां समुचितः सुखावहो रसो यस्या ईदृशी वाणी मया बलेन प्राकृतसप्तशत्याद्यवधीरणेन संस्कृतं नीता। या किल वाणी (अर्थः) प्राकृतभाषासंदृब्धत्वात्सा–धारणकोटिकानां जनानां प्रीतिपात्रं बभूव सैवाधुना संस्कृतिं प्रापिता उन्नतलोकानामास्वादनीया कृतेति तदाशयः। इमं व्यङ्ग्यार्थं टीकाकारपदनिर्वाहे स्थूलहस्तोऽपि आर्यासप्तशतीटीकाकारोऽ–नन्तपडितोऽपि व्यञ्जयाञ्चकार– 'एवं च प्राकृतसंस्कृतयोर्भूतलगगनतलतुल्यताप्रतिपादनेन प्राकृतात्संस्कृतेऽत्यन्ताधिक्यमावेद्यते' इति।

किञ्च–प्राकृतभाषायां चमत्कारकवाक्यसन्दर्भाणामनुकूलाः शैल्यः ('मुहाविरे') अप्यनायासेनैव निर्वोढुं शक्यन्ते। ततश्च तादृक्शैलीनिबद्धा सेयं लोकानामधिकाधिकं प्रीतिपात्रं बभूव। विशेषतश्च शृङ्गारादिसदृशेषु मधुरेषु रसेषु शैलीबन्धबन्धुरा पदशय्या भाषां सजीवामिवोपस्थापयतीति काव्यसूक्तिस्तथा सति भूरिमनोहारिणी सम्पद्यते। यथा हि–

**आम् कुलटा वयमपसर पतिव्रते ते न मलिनितं शीलम्।**

**न च कामयामहे किल जनस्य जायेव चन्दिलं तु पुनः।।५/१७**

अत्र हि काक्वादिभिर्यः किलार्थविषये वक्तुरभिमानसूचकः कश्चिदतिशयो द्योत्यते तं हि 'आम् वयं कुलटाः। त्वं तु पतिव्रतासि!' इत्याद्याः प्रतिदिनव्यवहारे प्रयुज्यमानाः शैल्यो भाषाचमत्कारमुखेन भूयस्तरां प्रगुणयन्तीति विमर्शनीयं मार्मिकैः। अत्रत्यश्चमत्कारो ग्रन्थान्तरेवाऽवलोक्येत।

लोकोक्तयोऽपि भाषां मधुरतरीकुर्वन्ति। तादृशी च भाषा शृङ्गाररसवर्णनायां साधारण-जननामाह्लादिनी सम्पद्यते। ता अपि सप्तशत्यां बहुत्र-

**'सूचीवेधे मुसलं निक्षिपता दग्धलोकेन।**

**प्रिय एकग्रामेऽपि हि पूरितनयनं न दृष्टोऽपि।।६/१'**

**'अन्धकरबदरभाजनमिव मम लुण्ठन्ति मातरो दयितम्।**

**ईर्ष्यन्ति मह्यमेव च लाङ्गूलेभ्यः फणो जातः।।३/४०'**

**'शूर्पं दग्धं चणका न हि भृष्टाः स च युवातिगतः।**

**श्वश्रूर्गृहेऽपि कुपिता भूतानामिव हि वादितो वंशः।।६/५७'**

चारणकविभिरादृता डिङ्गलभाषा ओजोऽनुकूलाक्षरबाहुल्याद्यथा वीरादिषु रसेषु भूयस्तरां प्रभावशालिनी सम्पद्यते तथा न शृङ्गारादिषु, यथा हि पिङ्गल- (व्रज)- भाषा। एवमेव अक्षरमाधुर्याभावेऽपि निरर्गलशृङ्गारवर्णनस्वातन्त्र्यात्- शैल्यादिनिर्वाहतो भाषामधुर्येण-समय-महिम्ना तस्यैव प्रचारबाहुल्याच्च मध्ययुगे संस्कृतापेक्षया प्राकृतमेव मधुरं पर्यगण्यतेति सारम्।

## मुक्तककाव्यम्

गाथासप्तशती सङ्ग्रहकोष इति तु पूर्वमुक्तमेव। एष हि मुक्तककाव्यानां सङ्ग्रह इत्युदीर्यते। 'मुक्तकम् अन्येन नालिङ्गितम्। स्वतन्त्रतया परिसमाप्तनिराकाङ्क्षार्थमपि प्रबन्ध-मध्यवर्ति मुक्तकमित्युच्यते' इति रूपेण लोचनकारेण लक्षितम्। एतस्य निर्माणं न साधारणस्य कवेः कार्यम्। यतो हि मुक्तकमामूलचूडं रसप्रवाहनिर्भरं भवति। तत्र हि 'सङ्घटना' प्रतिपदं रसानुकूलैव कर्तव्या भवति। उक्तं हि आलोके-

**तत्र मुक्तकेषु रसबन्धाभिनिवेशिनः कवेस्तदाश्रयम् (रसबन्धाश्रयम्) औचित्यम्। मुक्तकेषु प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते। यथा ह्यमरुकस्य कवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः[१] प्रसिद्धा एव।**

मुक्तके ह्येकस्मिन्नेव अपरपद्यनैरपेक्ष्येण विभावानुभावादिभिः परिपुष्टस्तावान् रसोऽभिव्यज्यते यदास्वादेन तर्पितचेतसः सहृदयाः सशिरः कम्पमनुमोदन्ते। मुक्तकनिर्माण-

---

१. 'अमरुककवेरेकः श्लोकः प्रबन्धशतायते।'

मन्यकाव्यनिबन्धनापेक्षयापि सुतरां कठिनं भवतीति तद्विदामनुभवः। यतः किल महाकाव्य-खण्डकाव्य-आख्यायिकादिषु कथानकस्य नैपुण्येन निर्वाहे पठितुर्मानसं कथारसनिलीनतया गुणदोषादिविचारे मन्थरमेव भवति। तत्र हि कथैव चेतसस्तावत्किल वशीकारिणी भवति यावता उत्तरोत्तरघटनास्वादायोत्कण्ठितं चेतः सम्मुखापतितेषु गुणदोषादिषु गजनिमीलिकया त्वरितकारितया वा अनिच्छया यथाकथञ्चित्प्रवृत्त्यापि शीघ्रमेव कथापरिज्ञानार्थमग्रेसरं भवति। एवंविधेषु काव्येषु मध्यवर्तिनः कियन्तोऽपि श्लोकाश्चेत्सर्वात्मनोपश्लोकनीयाः सम्पद्यन्ते तावतैव स प्रबन्धो लोकानामभिनन्दनीयो भवति। मुक्तकानि तु प्रत्येकपद्यान्येव स्वतन्त्राणि भवन्तीति तत्रैव रसान्वेषणलोलुपं पठितुर्मानसं व्यासज्यते, न कथा तत्रोपष्टम्भिनी भवति। अत एवोक्तं लोचनकारेण- 'पूर्वापरनिरपेक्षेणापि हि येन रसचर्वणा क्रियते तदेव मुक्तकम्'।

पूर्वापरनिरपेक्षे एकस्मिन्नेव पद्ये पठितुश्चेतश्चमत्काराय वाच्यार्थापेक्षया व्यङ्ग्यस्यैव प्राधान्यमास्थापनीयं भवति। अत एव एवंविधध्वनिपूर्णस्य काव्यस्य निर्माता 'महाकविः' इति व्यपदेशं लभते। उक्तं हि लोचनकारेण- 'प्रतीयमानानुप्राणित- काव्यनिर्माणनिपुणप्रति-भाभाजनत्वेनैव महाकविव्यपदेशो भवती'ति। इदानीमालोचनीयं विवेचकैर्यद् गाथारूपाणीमानि मुक्तककाव्यानि 'महाकवि' लेखनीप्रसूतानि सन्ति न वेति। 'मुक्तकं संस्कृत-प्राकृताप-भ्रंशनिबद्धमिति' तत्प्रभेदान्निर्दिशता ध्वनिकारेण प्राकृतनबिद्धं मुक्तकं गाथासप्तशतीरूपं तु स्पष्टमिव निर्दिष्टमेव, किन्त्वभ्यर्हितबुद्ध्या यत्संस्कृतमुक्तकं पूर्वं निर्दिष्टं तद्दृष्टान्तविधया च अमरुककवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा इति परिगणितास्तेऽपि गाथासप्तशतीतो न पूर्वतनाः। अत एव क्वचित्क्वचिद्गाथार्थमुपजीवन्तो दृश्यन्ते।

## गाथासप्तशती अमरुकश्च

अमरुकशतकं हि अमरुकनाम्नो मृतस्य कस्यचिद्राज्ञः शरीरे परकायप्रवेशविद्यया प्रविश्य भगवता शङ्कराचार्येण निर्मितमिति पण्डितसमाजे पुरातनी प्रसिद्धिः। उक्तं चापि अमरुकशतकटीकां कुर्वता देवशङ्करेण- 'क्व मे मन्दा बुद्धिः क्व च रसमयं शङ्करवचस्तथापि व्याख्यातुं तरलमनसः शङ्करकृण्तिम्' इत्यादि। भगवतः शङ्कराचार्यस्योद्भवसमयः- ८४५ तमो विक्रमसम्वत्सर इति यज्ञेश्वरपडितेन आर्यविद्यासुधाकरे साधितम्। केचित्तु ख्रस्त्यां सप्तमशताब्द्यां शङ्कराचार्यस्योत्पत्तिमाचक्षते। यत्किञ्चिदस्तु, परं विक्रमादित्यसमकालिकात् शकप्रवर्तकात् शालिवाहनान्न स प्राचीन इति तु सर्वेऽपि जानीयुः। एवं च साहित्यनिबन्धकारेषु सुतरां प्राचीनैर्ध्वनिस्थापकैरानन्दवर्द्धनाचार्यैः प्रशंसाबुद्ध्या ये किलामरुकस्य मुक्तकाः श्रद्धातिशयात्पूर्वं निर्दिष्टास्तेऽपि गाथातो न प्राचीनाः सिध्यन्ति। प्रत्युत तदर्थमुपजीवन्तो बहुत्रावलोक्यन्ते। एवं च अस्मिन्मुक्तककाव्यजगति एतदवधिप्रसिद्धेषु ग्रन्थेषु गाथासप्तशत्येव सर्वेषां मुक्तककाव्याना-मादिम उपजीव्यश्चेति सिध्यति। उक्तं हि कविभेदान्परिगणयता महाकविना क्षेमेन्द्रेण कविकण्ठाभरणे-

**'छायोपजीवी पदकोपजीवी पादोपजीवी सकलोपजीवी।**
**भवेदथ प्राप्तकवित्वजीवी स्वोन्मेषतो वा भुवनोपजीव्यः।।'**

तत्र भुवनोपजीव्यो भगवान्व्यासो निरदिश्यत क्षेमेन्द्रेण। ततश्च मुक्तकानां विषये प्राप्तेषु ग्रन्थेष्वयमेव व्यास इव भुवनोपजीव्य इत्यभ्युपगन्तव्यमेव भवेत्। मा भूद्विस्तर इति अमरुककृतगाथोपजीवनस्य किञ्चिदुदाहरणमधस्तान्निर्दिशामि–

**कृतकस्वापनिमीलितनयन सुभग देहि मह्यमवकाशम्।**
**गण्डपरिचुम्बनोद्गतपुलक पुनर्नैव चिरयिष्ये।।१/१०'**

[गाथा]

**शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै–**
**र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।**
**विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं**
**लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता।।७७।।**

[अमरुकः]

**प्रणयकुपितयोरुभयोरपि मानवतोरलीकनिद्रितयोः।**
**निभृतनिरुद्धश्वासाऽवहितश्रवसोर्नु को मल्लः।।१/२७।।**
**अन्योन्यकटाक्षान्तरसम्प्रेषितमिलितदृक्प्रसरौ।**
**कृतकलहौ किल मन्ये द्वावपि सहसा समं हसितौ।।७/९९**

अनयोर्द्वयोर्गाथयोश्च्छाया यथा–

**'एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो–**
**रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम्।**
**दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो–**
**र्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः।।१९।।'**

[अमरुकः]

**'स्थगयिष्यामि कराभ्यां नयने तस्मिन्विलोकिते द्वाभ्याम्।**
**अपिधास्यामि कथं मम पुलकितमङ्गं कदम्बकुसुममिव।।४/१४**

[गाथा]

'भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते।
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिन् जने।।२४।।

[अमरुकः]

दयिते प्रसीद, कुपिता का, सुतनु त्वम्, परेऽस्ति कः कोपः।
कोऽस्ति परो, नाथ त्वम्, किमिति हि, मम दुरितशक्तिरियम्।।४/८४।।

[गाथा]

'बाले, नाथ, विमुञ्च मानिनि रुषं, रोषान्मया किं कृतं
खेदोऽस्मासु, न मेऽपराध्यति भवान् सर्वेऽपराधा मयि।
तत्किं रोदिषि गद्गदेन वचसा, कस्याग्रतो रुद्यते,
नन्वेतन्मम, का तवास्मि, दयिता, नास्मीत्यतो रुद्यते।।५३।।

[अमरुकः]

'यत्पृच्छसि विहसन्मां तनूयते या कृते नु किं ते सा।
'प्रकृतिरसौ मे ग्रीष्मे' हन्त भणित्वैवमवरुदिता।।७/११।।'

[गाथा]

अङ्गानामतितानवं कथमिदं कम्पश्च कस्मात्कुतो
मुग्धे पाण्डुकपोलमाननमिति प्राणेश्वरे पृच्छति।
तान्व्या सर्वमिदं स्वभावजमिति व्याहृत्य पक्ष्मान्तर-
व्यापी बाष्पभरस्तया चलितया निश्वस्य मुक्तकोऽन्यतः।।४५।।

[अमरुकः]

## गाथासप्तशती च आर्यासप्तशती च

अमरुशतकानन्तरो गाथासप्तशतीशैलीमुपजीव्य निर्मितो मुक्तकसङ्ग्रहः 'आर्यासप्तशती' नामकः प्रसिद्ध्यति। एष ह्यविकलं गाथासप्तशतीस्पर्धयेव संस्कृते समुपनिबद्धः शृङ्गारप्रमेयमयो मुक्तकसङ्ग्रहः। शृङ्गारस्य गोप्यं वा प्रकाश्यं वा यं यं विषयमधिकृत्य गाथा निरमीयन्त तस्मिंस्तस्मिन्नेव विषयेऽत्राप्यार्या न्यगुम्फ्यन्त। तत्र सफलता प्राप्ता न वेति तु मार्मिकाः

सहृदया एव जानीयुः। अहमप्यग्रे द्वयोस्तुलनां यथावकाशमवतारयिष्यामि। सोऽयं मुक्तकग्रन्थो गाथासप्तशतीमवलोक्यैव निर्मित इत्यत्र न मनागपि संशयोऽवतिष्ठते। गोवर्धनाचर्येण यदा हीयं सप्तशती निरमीयत ततः पूर्वं शृङ्गारविषये प्राकृतभाषाया एव माधुर्यं लोकैर्निरचीयतेति पूर्वमुक्तमेव विस्तरतः। तमिमं प्रवादं गड्डरिकाप्रवाहं प्रमापयितुमिव संस्कृतभाषामवलम्ब्य शृङ्गारप्रमेयेषु पर्यचाल्यत लेखनी गोवर्धनाचार्येण। यद्यपि प्राक्कविनियमानुसारं प्रारम्भे शिष्टाचारानुमोदितो विनयः 'वाणी प्राकृतसमुचितरसा बलेनैव संस्कृतं नीता' इत्यादिना वाचा प्रदर्शितः परं व्यञ्जनयात्राप्यात्मनो बहुमानः सूचित एवेति पूर्वं साधितवानस्मि। किं बहुना, प्राकृतभाषाया एव शृङ्गारविषयवर्णनायां या सफलता लोकैर्निरधार्यत तामसहमान इव संस्कृतसरस्वत्यामप्यार्यासप्तशतीं निर्मितवानसौ मुखतोऽपि स्वप्रशंसां निबबन्धैव। उक्तं ग्रन्थारम्भे-

**मसृणपदरीतिगतयः सज्जनहृदयाभिसारिकाः सुरसाः।**

**मदनाद्वयोपनिषदो विशदा गोवर्धनस्यार्याः।।५१।।**

ग्रन्थाते तु स्वस्य सफलतायां हर्षगर्वोद्रिक्तमना इव स्वयमेव स्वमुखतः प्राह-

**एका ध्वनिद्वितीया त्रिभुवनसारा स्फुटोक्तिचातुर्या।**

**पञ्चेषुषट्पदहिता भूषा श्रवणस्य सप्तशती।।६९९।।**

सप्तशतीप्रशंसयाप्यपरितुष्टः 'इयं मया कृता' इति स्वस्य महिमानं भुवनकोषे घोषयितुं सदर्पमाह-

**कविसमरसिंहनादः स्वरानुवादः सुधैकसम्वादः।**

**विद्वद्विनोदकन्दः सन्दर्भोऽयं मया सृष्टः।।७००।।**

आसीत्सोऽपि संस्कृतमहाकवीनां समयो यत्र भूमण्डलैकमण्डनायिता अपि रसानुसारिसरस्वतीनिःस्यन्दा अपि वशीकृतवाचोऽपि कविकुलैकशेखराः कालिदाससदृशा महाकवयोऽप्याहुः-

'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः' इत्यादि। एका चेयं सरणिः प्रसृता, यां किल पण्डितराजो जगन्नाथश्चरमसीमानं नीतवानिव व्यङ्ग्यविधया- 'दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः' इत्यादि संसूच्याप्यपरितुष्टः स्पष्टं मुखतो ब्रवीति- 'वाचामाचार्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः'। परमहमुत्प्रेक्षे- यदार्याकारस्य सेयमभिमानोक्तिः कदाचित्संस्कृतकविरङ्गस्थले नाधिकमुत्कटा परिगण्येत। यत्र किल पूर्वप्राकृतकविभिरन्यभाषाणां न्यक्कारः प्राकृतस्य चापरिसीमः सत्कारः सर्वत्रोद्घोषितोऽभूत्तत्रैव कविरङ्गस्थले यदा ह्यार्याकारेण संस्कृतसरस्वत्या अप्यधिकारः प्रमाणितो बहुष्वंशेषु सफलता च सूचिता तदा सेयमुक्तिर्मन्ये नाऽरुन्तुदा सिध्येत्। संस्कृतसरस्वत्याः सर्वतोमुखी शक्तिरिति साधितमेव गोवर्धनाचार्येण।

अत एव आर्यासप्तशतीनिगुम्फनोत्तरं संस्कृतपक्षपातिनः सूरयस्तस्यामेवैकान्तप्रणयिनो बभूवुः। अन्यथा कथमिव– किन्दुबिल्वजो जयदेवकविगीतगोविन्दादौ– 'शृङ्गारोत्तरसत्प्रमेयरचनैराचार्य– गोवर्द्धनस्पर्धी कोऽपि न विश्रुतः' इत्युच्चैरुद्घोषयेत। अस्तु, एवं सगर्वमात्मानं प्रशंसतापि गोवर्धनाचार्येण बहुत्र गाथार्थ उपजीवित इत्यधो निदर्श्यते–

गाथायां विरहोत्कण्ठिता चिरादागतं कान्तं ज्वरश्लाघाच्छलेनोपालभमानाह–

***सुखपृच्छकं सुदुर्लभजनमप्यस्माकमानयन्दूरात्।**

**उपकारक जीवितमपि नयन् न हि ज्वर कृतापराधोऽसि।।१/५०।।**

यः सुखदिवसेषु कदाचिदपि नागच्छति ईदृशं जनं दूरादप्यत्र आनयन्तं भवन्तमभिनन्दामि। प्राणा अपि यदि गच्छेयुस्तर्हि न तेऽपराधः। गोवर्धनाचार्योऽप्याह–

**'ज्वर वीतौषधबाधस्तिष्ठ सुखं दत्तमङ्गमखिलं ते।**

**असुलभलोकाकर्षणपाषाण सखे न मोक्ष्यसि माम्।।२४०।।**

गाथा–

**तं नमत यस्य वक्षसि रमामुखं कौस्तुभेऽभिसङ्क्रान्तम्।**

**मृगहीनं शशिबिम्बं विलोक्यते सूर्यबिम्ब इव।।२/५१**

आर्याकारो जुगुम्फ–

**प्रतिबिम्बतप्रियातनु सकौस्तुभं जयति मधुभिदो वक्षः।**

**पुरुषायितमभ्यस्यति लक्ष्मीर्यद्वीक्ष्य मुकुरमिव।।१२।।**

गलितयौवनायाः स्तनाववलोक्य कश्चित्सपरिहासमाह गाथायाम्–

**निबिडनिरन्तरयोरुन्नतयोर्व्रणलब्धशोभयोः सरसम्।**

**कृतकार्ययोः पतनमपि रम्यं भटयोरिव स्तनयोः।।५/२७।।**

अत्र हि सुभटावुपमानीकृत्य श्लेषेण स्तनयोः पतनं कृतकार्यतासूचनेन परिहासश्च वर्णितः। आर्याकारः सज्जनावुमेयीकृत्य स्तनयोर्निरन्तरसङ्गतं श्लेषेणाह–

**महतोः सुवृत्तयोः सखि हृदयग्रहयोग्ययोः समुच्छ्रितयोः।**

**सज्जनयोः स्तनयोरिव निरन्तरं सङ्गतं भवति।।४३८।।**

---

*. अस्मिन्प्रसङ्गे गाथासप्तशतीतो निदर्शनीयाः संस्कृतगाथा एव बोधसौकर्यार्थमुद्ध्रियन्ते।

बीजकोषान्निर्गतं रक्तवर्णमाम्राङ्कुरं ब्रह्मसर्पस्य पुच्छसदृशमाह गाथाकारः–

**दरभिन्नशुक्तिसम्पुटनिलीनहालाहलाग्रहपुच्छनिभम्।**

**पक्वाऽऽम्रास्थिविनिर्गतकोमलमाम्राङ्कुरं पश्य।।१/६२।।**

आर्याकारस्तु नवजातस्य कूर्मस्य पृष्ठास्थितो निर्गतस्य मस्तकस्य सदृशमाह। वर्ण्यो द्वयोरप्येक एव–

**आम्राङ्कुरोऽयमरुणश्यामलरुचिरस्थिनिर्गतः सुतनु।**

**नवकमठकर्परपुटान्मूर्द्धेवोर्ध्वं गतः स्फुरति।।९४।।**

'त्वमनेकासु वामास्वासक्तः, अत एव महिलासहस्रभरिते तव हृदये अमान्ती स्वभावतः कृशाङ्ग्यापि सा विरहतः पुनः स्वशरीरं कृशीकरोतीति' गाथाकार आह–

**महिलासहस्रभरिते तव हृदये सुभग सा किलाऽमान्ती।**

**अनुदिनमनन्यकर्मा ह्यङ्गं तन्वपि तनूकुरुते।।२/८२**

एतद्विपरीतमार्याकारः–पुष्टशरीरया तया एकयापि अन्तर्निखातकीलभावेन तव हृदये गुप्तं तथा स्थीयते यथाऽन्यासां नावकाश इत्याह–

**प्रददाति नापरासां प्रवेशमपि पीनतुङ्गजघनोरूः।**

**या लुप्तकीलभावं याता हृदि बहिरदृश्यापि।।३७४।।**

जालसूत्राल्लम्बमानं मर्कटकीटम् (मकडी) बकुलपुष्पसदृशमाह गाथा–

**पश्यत पटलविलम्बितनिजतन्तुतलोर्ध्वपादपरिलग्नम्।**

**दुर्लक्ष्यसूत्रसङ्गतबकुलकुसुममेकमिव हि मर्कटकम्।।१/६३**

आर्या तु लग्नबडिशतया सूत्रसम्बद्धं कर्कटमिव तं वर्णयामास–

**निजसूक्ष्मसूत्रलम्बी विलोचनं तरुण ते क्षणं हरतु।**

**अयमुद्गृहीतबडिशः कर्कट इव मर्कटः पुरतः।।३२२।।**

अतिसूक्ष्मे जालसूत्रेऽवलम्बितस्य सङ्कोचितबहुचरणस्य मर्कटस्य दुर्लक्ष्यसूत्रप्रोतेन सूक्ष्मबहुपत्रिकेण बकुलकुसुमेन साम्यं स्वाभाविकमाहोस्वित्–दृश्यसूत्रेण स्थूलाकारेण कर्कटेनेति सहृदया एव तारतम्यं परीक्षन्ताम्। कदाचन कूपानुप्रासी भूप इव शब्द साम्यादेव 'कर्कट इव मर्कट' इत्यवपातितो भवेत्।

प्रोषितभर्तृकया प्रथमे दिनार्ध एव 'अद्य गतः अद्य गतः' इति बहुदिवसानुभवनीय-दुःखमनुभवन्त्या दिनगणनारेखाभिर्भित्तिश्चित्रितेत्याह गाथा–

**अद्य गतोऽद्य गतो बत सोऽद्य गतश्चेति गणयन्त्या।**

**प्रथमे दिनार्द्ध एव हि रेखाभिश्चित्रितं कुड्यम्।।३/८**

आर्या तु रेखाभिश्चित्रितां भित्तिं गण्डस्थलीमिवाऽऽह–

**त्वद्गमनदिवसगणनावलक्षरेखाभिरङ्किता सुभग।**

**गण्डस्थलीव तस्याः पाण्डुरिता भवनभित्तिरपि।।६२०।।**

सुन्दरैर्बहुभिर्युवकैः सङ्कुलेऽपि नगरे त्वां विमार्गन्ती तस्या दृष्टिर्वन इव भ्रमति। त्वामेव सा सर्वत्र पश्यति। त्वत्तोऽन्यत्र दृष्टिरेव न पतति। अत एव त्वद्विरहितं पुरं तस्याः कृते वनमिवेत्याह गाथा।

आर्याप्याह–

**यूनः कण्टकविटपानिवाञ्चलग्राहिणस्त्यजन्ती सा।**

**वन इव पुरेऽपि विचरति पुरुषं त्वामेव जानन्ती।।४६०।।**

'सा वन इव पुरे भ्रमति'– 'तस्या दृष्टिर्वन इव पुरे भ्रमतीति च द्वयोस्तारतम्यं मार्मिकैरेव वेद्यम्। कुलजनायिकाया निशि मदनकेलौ प्रागल्भ्यम्, दिने विनयभावं चाह गाथा–

**आज्ञाशतानि ददती तथा रते हर्षविकसितकपोला।**

**प्रातस्त्ववनतवदना न श्रद्दध्मः प्रियां सेति।।१/२३**

आर्याप्याह–

**विनयविनता दिनेऽसौ निशि मदनकलाविलासलसदङ्गी।**

**निर्वाणज्वलितौषधिरिव निपुणप्रत्यभिज्ञेया।।५१३।।**

आयुधव्रणकर्कशे ग्रामनायकस्य वक्षसि तज्जाया कृच्छ्रं स्वपिति, तद्रक्षिता ग्राम-सम्पत्तिस्तु निर्भयं शेते इत्याह गाथा–

**प्रहृतिव्रणकिणविषमे कृच्छ्राज्जायाऽस्य निद्रितं लभते।**

**स्वपिति पुनः पल्ली सा सुखमुरसि ग्रामणीसूनोः।।१/३१**

आर्या द्वयोरपि सुखशयनमाह–

**विविधायुधव्रणार्बुदविषमे वक्षःस्थले प्रियतमस्य।**

**श्रीरपि वीरवधूरपि गर्वोत्पुलका सुखं स्वपिति।।५१६।।**

'याहं त्वय्यनुकूला तस्यां त्वमननुकूलः, या च सपत्नी त्वयि विरक्ता तस्यां त्वं रज्यसी'ति नायकमुपालभते गाथाद्वये नायिका–

**'सा ते प्रिया त्वमसि मे, तस्या द्वेष्यस्त्वमस्यहं ते च।**

**बाल! स्फुटं भणामः प्रेमेदं बहुविकारमिति।।२/२६'**

**'द्वेष्योऽसि हन्त यस्याः पांसुल सा वल्लभा तवाभ्यधिकम्।**

**इति विज्ञायापि मया दग्धप्रेम्णे न चेर्ष्यितं जातु।।६/१०**

इममुपालम्भमप्युपजिजीवार्या–

**या दक्षिणा, त्वमस्यामदक्षिणो दक्षिणस्त्वमितरस्याम्।**

**जलधिरिव मध्यसंस्थो न वेलयोः सदृशमाचरसि।।४८०।।**

पुरुषायितबन्धे श्रान्तां कान्तां नायकः सहासमाह–

**शिखिपिच्छलुलितकेशे निमीलितार्धाक्षि वेपमानोरु।**

**दरपुरुषायितविश्रमशीले पुंसामवेहि यद्दुःखम्।।१/५२**

आर्यायामप्युच्यते–

**वक्षःप्रणयिनि सान्द्रश्वासे वाङ्मात्रसुभटि घनघर्मे।**

**सुतनु ललाटनिवेशितललाटिके तिष्ठ विजितासि।।५२९।।**

वामाक्षिस्फुरणेनानुमितकान्तागमनहर्षा प्रोषितपतिका आगते प्रिये वामनयनाय पारितोषिकं प्रतिजानीते गाथायाम्–

**स्फुरिते वामाक्षि त्वयि यद्येष्यति स प्रियोऽद्य तत्सुचिरम्।**

**सम्मील्य दक्षिणं तत्प्रेक्षिष्येऽहं त्वयैवैतम्।।२/३७**

आर्या तु वामबाहुस्फुरणादनुमितकान्तागमना शुभाख्यायिने बाहवे पूर्वमेव पारितोषिकं दत्ते–

**प्रणमति पश्यति चुम्बति संश्लिष्यति पुलकमुकुलितैरङ्गैः।**

**प्रियसङ्गाय स्फुरितां वियोगिनी वामबाहुलताम्।।३४७।।**

दुष्टवृषभस्यापि शृङ्गे निजनयनपुटं कण्डूयन्त्या गोः सौभाग्यमन्योक्तिविधया प्रोक्तं गाथायाम्–

**प्रकटितमिह सौभाग्यं पश्य गवा गोष्ठमध्ये हि।**

**दुष्टवृषभस्य शृङ्गे कण्डूयन्त्या नयनपुटम्।।५/६०**

मत्तयोर्गजयोर्मध्यस्थित्या करिण्याः सौभाग्यमन्यापदेशेनोक्तमार्यायाम्–

**सौभाग्यगर्वमेका करोतु यूथस्य भूषणं करिणी।**

**अत्यायामवतोर्या मदान्धयोर्मध्यमधिवसति।।५९०।।**

द्वयोरेकस्याः प्रणयवर्णनौचित्यं स्वत एव परीक्ष्यम्। किञ्च–मत्तवृषशृङ्गकोट्या नयनसदृशस्य मर्मस्थलस्य कण्डूयनमधिकमार्मिकम् उत मत्तयोर्मध्ये गमनमात्रमित्यपि च सूक्ष्ममीक्षणीयम्। रागभृते हृदये वसन्नपि न रक्तोऽसीति अनुरक्तया नायिकया अननुरक्तो नायक उपालम्यते गाथायाम्–

**धवलोऽसि यदपि सुन्दर तदपि तु मम रञ्जितं हृदयम्।**

**रागभृतेऽपि च हृदये सुभग विनिहितो न रक्तोऽसि।।७/६५**

अनुरक्तस्य तस्य हृदये वसन्त्यपि न रक्तासीति अननुरक्ता नायिकोपालभ्यत आर्यायाम्–

**सखि लग्नैव वसन्ती सदाशये महति रसमये तस्य।**

**बाडवशिखेव सिन्धोर्न मनागप्यार्द्रतां भजसि।।६५५।।**

अनया शैल्या नायकोऽप्युपालब्धः–

**सा नीरसे तव हृदि प्रविशति निर्याति न लभते स्थैर्यम्।**

**सुन्दर सखी दिवसकरबिम्बे तुहिनांशुरेखेव।।६३९।।**

गच्छन्तं नायकं वृतिविवरदत्तनयनतया पश्यन्ती नायिका वर्णिता गाथायाम्–

**एकैकवृतिवेष्टनविवरान्तरदत्ततरललोचनया।**

**व्युत्क्रामति बाल त्वयि पञ्जरशकुनायितं हि तया।।३/२०**

आर्याकारोऽपि तां वर्णयति–

**वृत्तिविवरेण विशन्ती सुभग त्वमीक्षितुं सखीदृष्टिः।**

**हरति युवहृदयपञ्जरमध्यस्था मन्मथेषुरिव।।५४४।।**

**त्वयि सर्पति पथि दृष्टिः सुन्दर वृतिविवरनिर्गता तस्याः।**

**दरतरलभिन्नशैवलजाला शफरीव विस्फुरति।।२६७।।**

व्याधेन वाणलक्ष्यीकृताया हरिण्या मरणसमयेऽपि प्रियं प्रत्येव दृष्टिगमनं वर्णितं गाथायाम्–

**आकर्णाकृष्टनिशितभल्लकमर्माहतहरिण्या।**

**भविता ह्यदर्शनः प्रिय इति तु वलित्वा चिरं दृष्टः।।६/९४**

आर्याकारोऽपि तमिममर्थमवतारयति-

**दृष्ट्वैव विरहकातरतारकया प्रियमुखे समर्पितया।**

**यान्ति मृगवल्लभायाः पुलिन्दबाणार्दिताः प्राणाः।।२८३।।**

परं मृगमिथुनस्य मिथोऽनुरागवर्णनस्य परा काष्ठेव गाथायाम्-

**अन्योऽन्यरक्षणाय प्रहारसम्मुखकुरङ्गमिथुने हि।**

**व्याधेन मन्युविगलद्बाष्पविधौतं धनुर्मुक्तम्।।७/१**

एतस्य व्याख्या, ध्वनिचमत्कारश्च ग्रन्थान्तरेऽवलोकनीयः। कस्याञ्चिदनुरक्तस्य निजदयितस्य विरहवेदनातिशयं दृष्ट्वा सपत्न्यपि तत्पक्षपातिनी भवतीत्याह गाथा-

**सुन्दरि तथा कृते तव हालिकपुत्रः सुमहिलः क्षीणः।**

**दौत्यं यथास्य पत्न्या प्रतिपन्नं मत्सरिण्यापि।।१/८४**

आर्यायां तु दयितप्रियाया नायिकाया विरहवेदनार्शनात्सपत्न्यस्तत्पक्षगा भवन्तीत्युच्यते-

**प्रियविरहनिःसहायाः सहजविपक्षाभिरपि सपत्नीभिः।**

**रक्ष्यन्ते हरिणाक्ष्याः प्राणा गृहभङ्गभीताभिः।।३८०।।**

मानिनी नायिका विकलं स्वहृदयमामन्त्रयते गाथायाम्-

**दह्यस्व दह्यसे चेत्स्फुटसि स्फुट पच्यसेऽथ पच्यस्व।**

**हृदय गलिसद्भावः परिशेषित एव स खलु मया।।५/१**

आर्यायामपि दृश्यताम्-

**प्रियदुर्नयेन हृदय स्फुटसि यदि स्फुटनमपि तव श्लाघ्यम्।**

**तत्केलिसमरतल्पीकृतस्य वसनाञ्चलस्येव।।३७७।।**

अन्यदयितासमागमेऽपि पूर्वपत्न्याः स्मरणं भवत्येवेति प्रोक्तं गाथायाम्-

**हृदये प्रियाऽऽस्खलति किल रममाणस्यान्यमहिलायाम्।**

**दृष्टे गुणे तु सदृशे ह्यदृश्यमाने गुणेऽसदृशे।।१/४४**

आर्यायामप्युक्तम्-

**निहितायामस्यामपि सैवैका मनसि मे स्फुरति।**

**रेखान्तरोपधानात्पत्राक्षरराजिरिव दयिता।।३३७।।**

अगृहीतानुनयाया मानिन्याः पृष्ठाभिमुखं सुप्तो नायकः श्वासैस्तां खेदयतीत्युक्तं गाथायाम्-

**उष्णानि निःश्वसन्किल शयनार्धे किमिति मम पराङ्मुख्याः।**

**मानसमप्यनुशयतः प्रदीप्य पृष्ठं प्रदीपयसि।।१/३३**

आर्याप्येनमर्थमुपजीवति-

**कृतकस्वाप मदीयश्वासध्वनिदत्तकर्ण किं तीव्रैः।**

**विध्यसि मां निःश्वासैः स्मरः शरैः शब्दवेधीव।।१५२।।**

प्रोषितपतिकाया अपि ते दिननिद्रा रात्रेः परपुरुषसुरतं सूचयतीत्युक्तं गाथायाम्-

**अतिदीर्घास्वविनिद्रा त्वमसि भृशं हैमनीषु रजनीषु।**

**सुचिरप्रोषितपतिके न सुन्दरं यद्दिवा स्वपिषि।।१/६६**

आर्यायामप्ययमर्थः-

**इयमुद्गतिं हरन्ती नेत्रनिकोचं च विदधती पुरतः।**

**न विजानीमः किं तव वदति सपत्नीव दिननिद्रा।।१०७।।**

सङ्केतस्थलगमनचिह्नभूतं जम्बूदलं नायकसविधे दृष्ट्वा सङ्केते न प्राप्ता नायिका विषीदति-

**श्यामाया मुखाशोभा श्यामति नयनार्द्धसमवलोकिन्याः।**

**जम्बूदलकृतकर्णवतंसे हलिकात्मजे भ्रमति।।२/८०**

आर्यायामपि नायककरे आम्राङ्कुरं दृष्ट्वा नायिका मूर्च्छति-

**कोपवति पाणिलीलाचञ्चलचूताङ्कुरे त्वयि भ्रमति।**

**करकम्पितकरवाले स्मर इव सा मूर्च्छिता सुतनुः।।१९०।।**

एतदनुहारि 'ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरी' त्यादि पद्यं तु प्रसिद्धमेव। दम्पत्योः समसुखदुःखता यथा गाथायां प्रोक्ता-

**समसुखदुःखसमितयो रूढप्रेम्णोस्ततस्तु कालेन।**

**दम्पत्योर्म्रियते यो जीवति सोऽन्यो मृतो भवति।।२/४२**

तथा प्रोच्यते आर्यायामपि–

**निष्कारणापराधं निष्कारणकलहरोषपरितोषम्।**

**सामान्यमरणजीवनसुखदुःखं जयति दाम्पत्यम्।।३३४।।**

पूर्वं मुक्ताः सुन्दर्याः केशाः, पश्चाद्धम्मिल्ले भाविनो बन्धनस्य भयेनेव बिन्दुच्छलेन रुदन्तीति स्नानसमये वर्णितं गाथायाम्–

**प्राप्तनितम्बस्पर्शाः श्यामाङ्ग्या स्नानलग्नायाः।**

**बन्धस्येव भयेन हि रुदन्ति जलबिन्दुभिश्चिकुराः।।६/५५**

आर्यायां तु–बन्धनोत्तरं केशकलापस्य हृदयं विदीर्णमित्युच्यते–

**बन्धनभाजोऽमुष्याश्चिकुरकलापस्य मुक्तमानस्य।**

**सिन्दूरितसीमन्तच्छलेन हृदयं विदीर्णमिव।।४०४।।**

नायिका हंसीवेत्युपमा यथा गाथायाम्–

**निपिबति कर्णाञ्जलिभिर्जनरवमिलितमपि हि तव संलापम्।**

**दुग्धं जलसम्मिलितं सा बाला राजहंसीव।।७/७६**

तथा–

**त्वद्विरहापदि पाण्डुस्तन्वङ्गी छाययैव केवलया।**

**हंसीव ज्योत्स्नायां सा सुभग प्रत्यभिज्ञेया।।२५१।।**

सं. गाथा. ३

नायकदत्तायां मालिकायां नायिकाया बहुमानमाह गाथाकारः–

**भवता स्वहस्तदत्तां निर्गन्धामपि हि सुभग साऽद्यापि।**

**अवमालिकां विसर्जितनगरी गृहदेवतेव बत वहति।।२/९४**

आर्याकारोऽपि तदेतन्निजुगुम्फ–

**अपनीतनिखिलतापां सुभग स्वकरेण विनिहितां भवता।**

**पतिशयनवारपालिज्वरौषधं वहति सा मालाम्।।४६।।**

प्राकृतभाषायां शृङ्गारविषये बहुत्र प्रायो निर्मर्यादतापि सञ्जातेति पूर्वमुक्तवानस्मि, अग्रेऽपि च निदर्शयिष्यामि। परम् औचित्यसारां संस्कृतसरस्वतीमाददानोऽपि गोवर्द्धनाचार्यस्तां निर्मर्यादतामप्यक्षिणी निमील्य केवलमनुचकारैव न किन्तु ततोऽप्यग्रसरो बभूवेति स्थाने

स्थाने तच्चिह्नमवाप्यते। गाथासु अतिरसाकुलितानां कामुकानां पुष्पवत्या सह रतिप्रार्थनं स्पर्शलौल्यं च वर्ण्यते, किं त्वतिविदग्धतया। न तत्र प्रत्यक्षमासङ्गः सन्दर्श्यते। यथा–

**यदि लोकनिन्दितं यद्यमङ्गलं यदि विमुक्तमर्यादम्।**
**पुष्पवतीदर्शनमिह ददाति हृदयस्य निर्वृतिं तदपि।।५/८०**

अत्र हि अतिप्रणयिना, पुष्पवत्या अपि प्रेयस्या अवलोकनं सुखावहमेतन्मात्रमुच्यते।

**स्पृशसि न यदि पुष्पवतीं तिष्ठसि तत्किमिति वारितः पुरतः।**
**स्पृष्टोऽसि नः कराभ्यां धावित्वा चुलचुलायमानाभ्याम्।।५/८१**

अत्र, यदि पार्श्वदेशं न त्यजसि तर्हि एषा त्वां स्पृशामीति केलिपरिहासः प्रोच्यते।

**लोकस्ताम्यति ताम्यतु, वचनीयं भवति भवतु तन्नाम।**
**एहि विनिमज्ज पार्श्वे निद्रा मे नैति पुष्पवति।।६/२९**

इत्यादिषु रतिप्रार्थनं सूच्यते। किन्तु गोवर्द्धनः स्पष्टमाह–

**मा स्पृश मामिति सकुपितामिव भणितं व्यञ्जिता न च व्रीडा।**
**आलिङ्गितया सस्मितमुक्तमनाचार किं कुरुषे।।४२८**

पत्युः समक्षं कपटचेष्टया उपपतिगृहगमनं वर्ण्यते गाथायाम्–

**पतिपुरत एव नीता वृश्चिकदष्टेति जारवैद्यगृहम्।**
**निपुणसखीकरविधृता भुजयुगलान्दोलिनी बाला।।३/३७**

आर्यायां तु–

**गृहपतिपुरतो जारं कपटकथाकथितमन्मथावस्थम्।**
**प्रीणयति पीडयति च बाला निःश्वस्य निःश्वस्य।।१९७।।**

इति पत्युश्चक्षुषोरग्रत एव नायिकाया निःश्वासानुभावोऽपि दर्शितः। गाथायाम्–

**अयमागतोऽद्य नः किल कुलगेहादिति हि जारमसती स्वम्।**
**सहसाऽऽगतस्य पत्युस्त्वरितं कण्ठे नियोजयति।।४/१**

इति सहसागतस्य पत्युरग्रतो जारस्य निह्नवमात्रं वर्ण्यते। किन्तु आर्याकारेण चौर्यरतस्य पराकाष्ठा दर्शिता। एष हि नायिकाया मुखादेव श्रावयति–

**श्रोणी भूमावङ्के प्रियो भयं मनसि पतिभुजे मौलिः।**
**गूढश्वासो वदने सुरतमिदं चेत्तृणं त्रिदिवम्।।५६८।।**

अन्धकाराच्छन्ने भवने शयाना पतिमहाशयस्य भुजमुपधानीकृत्य निभृतनिलीनमुपपतिमङ्के वहन्ती सुरतोत्सवमनुभवति, स्वर्गमपि च तृणीकरोति!! सत्यमेव तादृशीनां स्वर्गो दूरतस्तिरस्कार्य एव! धन्यो गोवर्द्धनमहाभागस्य शृङ्गार! 'शृङ्गारोत्तरसत्प्रमेय-रचनैराचार्य-गोवर्द्धनस्पर्द्धी कोऽपि न विश्रुत:!!'

ग्रामनायकस्य तनयया सह हालिकनन्दनस्यासक्तिर्वर्ण्यते गाथायाम्-

**मन्दमपि हलिकनन्दन इह दग्धग्रामके न जानाति।**

**निर्वैद्ये कं ब्रूमो गृहपतितनया विपद्यते चाद्य।।६/१००**

ग्रामणीवनितापि हालिकसुते कस्मिंश्चिदनुरज्यति या हि परितुष्य प्रणयिने पाटलापुष्पाणि प्रयच्छति। तद्भ्रातृजाया च ग्रामे दुर्लभै: पाटलापुष्पैर्देवरस्य ग्रामनायकगृहासक्तिमनुमिनोति।

**बहुपाटलं च शीर्षे न सुन्दरं देवरस्यैतत्।।५/६९**

आर्याकारमहाभागस्तु ग्रामनायकस्य वध्वा सह शून्यदेवालयवासिनो भिक्षुकस्यासक्तिं वर्णयामास-

**भैक्षभुजा पल्लीपतिरिति स्तुतस्तद्वधूसुदृष्टेन।**

**रक्षक जयसि यदेक: शून्ये सुरसदसि सुखमस्मि।।४१५।।**

'देवालये मयैकाकिना स्थीयते तत्र त्वयागन्तव्यमिति ग्रामणीवधूं प्रति ध्वन्यते' इति तट्टीकाकारमहाभाग:। अहो धन्यं शृङ्गारे औचित्यपरिपालनम्!

गाथायां नायिकाया विवसनदर्शनं सकृद् वर्णितम्, तदप्यतिवैदग्ध्येन-

**आश्चर्यमिव च निधिरिव दिवि राज्यमिवामृतस्य पानमिव।**

**आसीन्मुहूर्तमिह नस्तद्विवसनदर्शनं तस्या:।।२/२५**

आर्याकारस्त्वतिस्फुटं नग्नशृङ्गारवर्णनं वारं वारमावर्तयति-

**अम्बरमध्यनिविष्टं तवेदमतिचपलमनलघु जघनतटम्।**

**चातक इव नवमभ्रं निरीक्षमाणो न तृप्यामि।।६४।।**

अतृप्त: पुनर्वर्णयति-

**निर्भरमपि सम्भुक्तं दृष्ट्या प्रात: पिबन्न तृप्यामि।**

**जघनमनंशुकमस्या: कोक इवाशिशिरकरबिम्बम्।।३१९।।**

पुनरपि न तृप्यामीति जल्पन् वर्णयामास-

**श्लिष्यन्निव चुम्बन्निव पश्यन्निव चोल्लिखन्निवातृप्त:।**

**दधदिव हृदयस्यान्त: स्मरामि तस्या मुहुर्जघनम्।।५६९।।**

पुनरप्यतृप्तस्तद्दर्शनेनैव निर्वाति-

**ईर्ष्यारोषज्वलितो निजपतिसङ्गं विचिन्तयंस्तस्याः।**

**च्युतवसनजघनभावनसान्द्रानन्देन निर्वामि।।१४४।।**

गाथायां स्पष्टं रतिवर्णनं प्राकृतभाषामयत्वेऽपि न कुत्रचिदवलोक्येत। परम् आचार्य-महाभागस्य तथा नागरिकता यथा स्पष्टं ग्राम्यता प्रतीयते-

**वीजयतोरन्योन्यं यूनोर्वियुतानि सकलगात्राणि।**

**सन्मैत्रीव श्रोणी परं निदाघेऽपि न विघटिता।।५२०।।**

मानग्रहिलाया नायिकाश्चरणप्रणामेनाऽनुनयो यथा रसिकसमो समादृतो विलोक्यते तथैव अधीरया नायिकया कृतं ताडनमपि कविसमयसिद्धमिव इच्छया अनिच्छया वा अनादिकालादारभ्यैतदवधि सर्वैरप्यूरीकृतम्। अन्यान्येषु शृङ्गारविषयेष्वतिशयं दर्शयन्नपि गाथाकरोऽस्मिन्विषये अतिसमञ्जसतया व्यवहरति। स हि नायिकाकर्तृकं ताडनं सकृत् निबध्नाति, परम् असमञ्जसतादोषो नैनं मनागपि स्पृशति-

**एकं प्रहारखिन्नं मुखमरुता वीजयन् हस्तम्।**

**सोऽपि हसन्त्या कण्ठे मया गृहीतो द्वितीयेन।।१/८६**

नायिकया येन हस्तेन स ताडितस्तं प्रणयातिशयाद्वा, अपराधक्षमापनाय वा, नायिकामीदृशकर्मतो ह्रेपयितुं वा नायकः-'अतिनिष्ठुरस्य मे ताडनात्तव करे पीडा जाता भवेत्' इति कृत्वा तं मुखमारुतेन फूत्करोति। इदानीं प्रणयाद्वा, कोपशान्तिवशाद्वा, कौतुकस्योत्तरे कौतुकाद्वा, नायिकापि द्वितीयेन करेण तं कण्ठे आलिलिङ्ग। सर्वाप्यसमञ्जसता आलिङ्गनपाशे निबद्धा सती मूकमुखा बभूव। किञ्च प्रहारपीडितस्य हस्तस्य मुखमारुतेन फूत्करणं स्पष्टमेव नायिकाया बाल्यचापल्यं साधयति। बालानां हि चक्षुरादिषु आघातजनितायां पीडायां जातायां फूत्कारप्रतारणेन तदाश्वासनं सुप्रसिद्धं लोके। एवं च तदिदं ताडनं कौतुकमात्रीभवत् न कस्याप्यरुन्तुदं भासेत, प्रत्युत कण्ठग्रहणाध्यवसायेन 'मधुरेण समाप्तिं' सूचयति।

गाथातोऽनन्तरभाविनि मुक्तककाव्ये अमरुकेण तदिदं ताडनं किञ्चिदतिरञ्जितम्-

**कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं**
**नीत्वा केलिनिकेतनं दयितया सायं सखीनां पुरः।**
**भूयोऽप्येवमिति स्खलन्मृदुगिरा संसूच्य दुश्चेष्टितं**
**धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदत्या हसन्।।८।।**

शनैः शनैः करस्य स्थाने पदेन ताडनमप्यनेन महाराजेनोपनिबद्धम्–

**सालक्तकं शतदलाधिककान्तिरम्यं रत्नौघधामनिकरारुणनूपुरं च।**
**क्षिप्तं भृशं कुपितया तरलोत्पलाक्ष्या सौभाग्यचिह्नमिव मूर्ध्नि पदं विरेजे।।**

शनैः शनैरेवंविधताडने रसिकतया बहुमानबुद्धिरप्युपनिबद्धा–

**सालक्तकेन नवपल्लवकोमलेन पादेन नूपुरवता मदनालसेन।**
**यस्ताड्यते दयितया प्रणयापराधात्सोऽङ्गीकृतो भगवता मकरध्वजेन।।**

एतदनन्तरम्, उत्तरोत्तरमतिशयप्रदर्शनं सूचयता गोवर्द्धनाचार्येण तु चरणप्रहारस्यापि चरमसीमा समाक्रान्ता। एष हि नायकमुखाद्घोषयति– 'त्वं कियतोऽपि चरणप्रहारान्कुरु, न मे प्रहारेभ्यो भयम्। अहं ताडयन्त्यास्ते न किञ्चिदपि दूरमपसरिष्यामि'–

**कुपितां चरणप्रहरणभयेन मुञ्चामि न खलु चण्डि त्वाम्।**
**अलिरनिलचपलकिसलयताडनसहनो लतां भजते।।१८४।।**

अमरुकेण 'प्रणयापराधादिः' पदैः स प्रहारः प्रणयरसेन किञ्चिदार्द्रीकृतोऽपि। परम् आर्याकारेण तु–'शुष्कः पादप्रहारः' सोऽपि शिरसि, स चापि वारम्वारेणोपनिबद्धः–

**शिरसि चरणप्रहारं प्रदाय निःसार्यतां स ते तदपि।**
**चक्राङ्कितो भुजङ्गः कालिय इव सुमुखि कालिन्द्याः।।१७०।।**
**गेहिन्या चिकुरग्रहसमयससीत्कारमीलितदृशापि।**
**बालाकपोलपुलकं विलोक्य निहतोऽस्मि शिरसि पदा।।२१६।।**
**यन्निहितां शेखरयसि मालां सा यातु शठ भवन्तमिति।**
**प्रहरन्ती शिरसि पदा स्मरामि तां गर्वगुरुकोपाम्।।४७०।।**

अयं प्रसादो न यस्य कस्यचिद्भाग्ये भवतीत्याह सबहुमानम्–

**कान्तः पदेन हत इति सरलामपराध्य किं प्रसादयथ।**
**सोऽप्यवमेव सुलभः पदप्रहारः प्रसादः किम्।।१८०।।**

गोवर्द्धनचित्रितस्य नायकस्य ताडने तादृशी प्रबला रुचिर्यत्कौतुकात् स कान्तायै धार्मिकशिक्षामपि न ददाति यत् 'पतिः स्त्रीणां पूज्यो भवति' इति। अन्यथा शिरसि लत्ताप्रहारप्रसादः कथमुपलभ्येत। आह सः–

**आक्षेपचरणलङ्घनकेशग्रहकेलिकुतुकतरलेन।**

**स्त्रीणां पतिरपि गुरुरिति धर्मं न श्राविता सुतनुः।।८७।।**

भाग्यवशन्नायिकैव स्वभावेन शीतला, अन्यथा शीतलायास्तस्या वाहनीभूतो नायकदेवस्तु ताडनसहने जन्मतः सिद्धः। दृश्यताम्-

**आज्ञाकरश्च ताडनपरिभवसहनश्च सत्यमहमस्याः।**

**न तु शीलशीतलेयं प्रियेतरद्वक्तुमपि वेद।।१०३।।**

गोवर्द्धनाचार्यचित्रितस्य नायकस्य ताडनेन तृप्तिरेव न भवतीति प्रतीयते-

**करचरणेन प्रहरति यथा यथाङ्गेषु कोपतरलाक्षी।**

**रोषयति परुषवचनैस्तथा तथा प्रेयसीं रसिकः।।१८८।।**

पूर्वं कराभ्यां, ततस्तयोः श्रान्तयोः चरणाभ्यां प्रहार आरब्धो भवति। सोऽपि च नैकत्र किन्तु 'अङ्गेषु'। मन्ये सेयं नायकदेवस्य सर्वाङ्गपूजा।

गोवर्द्धनाचार्यचित्रितमन्यदप्यौचित्यमाचम्यतां किञ्चित्। उपरितः करयोः चरणयोः काञ्च्याः हारस्य चाविरतं प्रहारा वर्षन्ति। परं नायकपुङ्गवो नायिकाया उपर्यापतित एव-

**करचरणकाञ्चिहारप्रहारमविचिन्त्य बलगृहीतकचः।**

**प्रणयी चुम्बति दयितावदनं स्फुरदधरमरुणाक्षम्।।१७०।।**

एवं प्रहारमुशलवर्षायामपि बलात्केशेषु गृह्णतो भर्तृमहाभागस्य 'प्रणयि' पदेन व्यपदेशः केवलं पतिपर्यायतयैव। अन्यथा 'बलगृहीतकचः' इत्यनेन बलात्स किल प्रणयिभावोऽपसार्यत एव। सत्यं त्वेतत्-यदार्यासप्तशत्यां दम्पत्योर्मध्ये निःस्वार्थप्रेमघटनाः परिगणनीया एव विलोक्येरन्। अधिकांशेष्वासङ्गलिप्सैवान्तस्तले प्रबला प्राप्येत। एतद्विपरीतं गाथासप्तशत्यामासङ्गलोलुपता अतिन्यूनतमैवालोक्येत। गाथायां प्रवत्स्यत्पतिका प्रातर्गमिष्यन्तं दयितमाकर्ण्य भविष्यन्त्या विरहवेदनया साम्प्रतमेव दुःखमनुभवन्तीव सर्वं केलिविलासादिकं नाभिरोचयति। 'अस्या रात्रेरवसानमेव न भवेत्' एतदेवैकान्तचित्ता सा निशि भावयति-

**कल्यं किल खरहृदयः प्रवत्स्यति प्रिय इति श्रुतं जनतः।**

**भगवति वर्द्धस्व निशे तथा, यथा कल्यमेव नोदेति।।१/४६**

प्रवत्स्यत्पतिकायास्तमेनं प्रणयातिशयं कामवासनायाः सुदूरीकृत्य अलौकिकमिव चित्रयितुमिच्छति कविः। प्रवासं गमिष्यन्दयितो यदा 'यामि' इति मां प्रक्ष्यति, तस्मिन्काले दुःखभाराकुलं मे जीवितं कथं स्थास्यतीत्येव सा हृदये चिन्तयति-

**भाविपथिकस्य जाया ह्यापृच्छनजीवधारणरहस्यम्।**

**पृच्छन्ती प्रतिगेहं भ्रमति प्रियविप्रयोगसहशीलाः।।१/४७**

गाथाचित्रितानां नायिकानां प्रियप्रवासस्य प्रथमरात्रौ नैतादृशी प्रचण्डतमा इन्द्रियोत्तेजना भवति यत्सम्पूर्णेऽपि प्रवासकाले भाविनीं सुरतानन्दकृतां त्रुटिमद्यैव पूरयेमेति विचारोऽप्युद्भवेत्। परम् आर्याचित्रिता नायिका प्रवासस्य प्रथमरात्रौ प्रवासावधिदिनानां समग्रमपि सुरतविषयक-मायव्ययजातम् (हिसाब) समीकृत्यैव विश्राम्यति-

**मयि यास्यति, कृत्वावधिदिनसङ्ख्यं चुम्बनं तथाऽऽश्लेषम्।**

**प्रिययानुशोचिता सा तावत्सुरताक्षमा रजनी।।४३२।।**

हन्त! रजनी तावद्दीर्घा नाऽभूदन्यथा कतिपयमासानामेतदृणशोधनं कृत्वैव प्रवासि-महोदयस्य गमनमभविष्यत्। दृश्यताम्-गाथावत् अत्रापि रजनीलाघवमनुशोच्यते। परम्-उभयत्र भावनाया भेदः। एकत्र विरहकातरता कारणम्। अपरत्र 'एतावतो वारान् सुरतानि नाऽभवन्' इत्येतदनुशोचनम्। आसङ्गलिप्साप्रचण्डाया आर्याकारलेखन्यास्तावान्प्रभावो यट्टीकाकारवराकेण स्थाने स्थाने 'स्त्रीणां रतेऽत्यन्तं प्रीतिरिति भावः' इति विवशतया लेखितव्यमभवत्। आर्याकारलेखनीचित्रितौ नायकौ तथा कामविवशौ यथा मानमर्यादामपि विस्मरतः। यस्य किल नाम मानः [प्रणयरोषः], तत्र सर्वैरपि साहित्यकारैः कविभिश्च रतिस्तु दूरे, द्वयोर्विस्पष्टेच्छा-पूर्वकमङ्गपरामर्शोऽपि विरलस्थलेष्वेवावर्ण्यत। परम्-आर्याकारस्य मते दृढे मानेऽपि, स्पष्टमनुन-यतिरस्कारेऽपि इन्द्रियोत्तेजनां तु परिसमाप्यैव नायिकानायकौ विश्राम्यतः! आर्या-गाथयोरने-नैवादर्शः स्थिरीकर्तुं शक्येत।

नायिकानायकौ द्वावपि परस्परविच्छेदस्यासहनतया मनसि मन्दीभूतमानौ स्तस्तथापि 'पूर्वमयमेव मामनुनयेत्' इति परस्परप्रतीक्षया शयनीये मिथ्यैव निद्राभिनयं दर्शयन्तौ तिष्ठतः, किन्तु द्वावपि स्वस्वनिःश्वासशब्दमवरुध्य अन्यं प्रति दत्तकर्णौ प्रतीक्षेते यत् 'इदानीमनुन-यार्थमुद्योगो भवेत्'। हृदयान्तः, एवंविधं मानशैथिल्यं यत् अनुनयार्थं वागारम्भणस्य का कथा, यदि हस्तस्याङ्गुल्यग्रेणापि मनाक् स्पर्शः क्रियेत तदापि 'प्रथमं त्वत्कृतेनानुनयेनैव मे मानमोक्षः' इति मिषमादाय मानसमाप्तिः सम्मुखोपस्थितासीत्। परम्-'अपरपक्षत एव अनुनयः प्रथमं भवेत्' इति, सूत्रमादायैव द्वावप्यन्योन्यस्य शक्तिपरीक्षां कुर्वन्तौ तिष्ठतः। कीदृशसीयमनुभवैकवेद्या सहृदयैकचित्रणीया दम्पत्योर्मानघटनास्ति, पश्यत गाथा कथमेतां चित्रयति-

**प्रणयकुपितयोरुभयोरपि मानवतोरलीकनिद्रितयोः।**

**निभृतनिरुद्धश्वासाऽवहितश्रवसोर्नु को मल्लः।।१/२७**

इदानीमार्यां प्रति दृष्टिर्दीयताम्। ग्रहिल्लमानयोर्द्वयोरपि मानस्तादृगवस्थ एव। मानो वा तस्य मर्यादा वा दूरे क्रन्दति किन्तु द्वयोर्ग्राम्यधर्मस्तु सञ्जात एव!

**निशि विषमकुसुमविशिखप्रेरितयोर्मौनलब्धरतिरसयोः।**
**मानस्तथैव विलसति दम्पत्योरशिथिलग्रन्थिः।।३२७।।**

मानः अशिथिलग्रन्थिः, किन्तु अमानः [अपरिमाणः] मकरकेतनस्तु कृतकर्तव्य एव। अहो धन्यो मानः।

गाथासप्तशती हि ग्रामे भवाः प्राकृतघटना एवाधिकं वर्णयतीति पूर्वमुक्तं वक्ष्यते च। एतस्याश्चित्राणि नातिरञ्जितानि सर्वाण्येव प्रायः स्वाभाविकानि। यथा लोके विलोक्यते तथैव सेयमङ्कयति। अयमेवार्थः स्वतःसम्भवीति साहित्यनिबन्धकारैर्व्यपदिश्यते। अत एव ग्रामवासिनामाचारानपि सेयं यथोपलब्धानेव चित्रयति। देवरभ्रातृजाययोश्चरित्रविषये 'नूपूरौ त्वभिजानामि नित्यं पादाभिवन्दनात्' इति रामायणीय आदर्शो ग्रामवासिषु नावलोक्यते। ग्रामवासिनीनां प्रणयगीतानि 'देवरिया' मुद्राङ्कितान्येव बहुशः श्रूयन्ते। अत एव गाथासु देवरप्रजावत्योः परस्परं प्रणयपरिहासोऽपि प्रकृत्यनुकारितयाऽवलोक्यते। यद्यपीदं ग्राम्यचित्रम्, तथापि तदिदं निपुणनागरेष्वपि बहुत्र दुर्लभं भवेत्। अत्र हि गाथाकारेण परमविदग्धतायाः परिचयः प्रादायि। व्रजभाषाकविना श्रीमता विहारिणा गाथानुकारेण देवरप्रणयो वर्णितः परं हरिप्रकाशादितट्टीकासु स्थाने स्थाने औचित्यानौचित्यविचारो विवशतया निबन्धनीयोऽभवत्। गाथा त्वनौचित्यं प्राचुर्येण परिहरन्ती सुविदग्धतया तदेतच्चरित्रं चित्रयति। भ्रातृजाया देवरेण सह परिहासं करोति– 'अयि देवर आकाशे अर्द्धचन्द्रदर्शनार्थं किमिति व्यग्रोऽसि। निजपत्न्याः स्तनतटे अर्द्धचन्द्राणां परम्परामेवावलोकय।'–

**किमयि न देवर पश्यसि किं वाकाशं मुधा प्रलोकयसि।**
**जायाया भुजमूले परिपाटीमर्द्धचन्द्राणाम्।।७०।।**

दृश्यतां कीदृशी वैदग्ध्यपूर्णा नर्मोक्तिः!'गोपनीयोऽपि ते प्रियतमासमागमः स्फुटमस्मा-भिर्लक्ष्यते, अहो ते वैदग्ध्यम्!' इति कीदृशो गूढः परिहासः। अप्यत्र अनौचित्यस्य विलोक्यते छायापि? निपुणनागराणामपि गृहे देवरभ्रातृजाययोः प्रसिद्धः किल परस्परं परिहासः। होलिका-महोत्सवस्य तु इमावेव अधिदेवतारूपेण विराजेते सर्वत्र।

गाथासु बह्व्यो भ्रातृजायास्त्वेवंविधाः सन्ति या अनुचितपरिहासलग्नं देवरमपि सुमार्गे आनेतुं यतन्ते–

**कुड्यलिखितानि दूषितमनसो ननु देवरस्य कुलयोषित्।**
**दिवसं कथयति रामानुलग्नसौमित्रिचरितानि।।१/३५।।**

नववयसो या नैतत्कर्तुं प्रगल्भन्ते ता वराक्यः कस्याऽप्यग्रे स्वदुःखमप्रकाशयन्त्यो मनःक्लेशात्कृशा भवन्ति–

**प्रेयसि सुविषमशीले शुद्धमना देवरेऽसदृशचित्ते।**

**न वदति कुटुम्बविघटनभयेन तनुकायते स्नुषा किन्तु।।१/५९**

अविकलं लोकचरित्रानुसरणार्थं कुत्रचित्प्रणयोऽपि वर्ण्यते, परं व्यञ्जनया। न ह्यत्र ग्राम्यधर्मस्य स्पष्टं प्रतीतिर्भवेत्कस्यचित्–

**सत्यं हि कथय देवर तथा तथा चाटुकारकेण शुना।**

**निर्वर्तितकार्यपराङ्मुखत्वमिह शिक्षितं कस्मात्।।७/८८**

**नवलतिकाऽऽहतिमिच्छति यतो यतोऽङ्गेषु देवरो दातुम्।**

**रोमाञ्चदण्डराजिस्ततस्ततो दृश्यते वध्वाः।।१/२८**

अत्र हि रोमाञ्चोद्गमेन देवरप्रणयोऽनुमीयते, न किन्त्वत्र ग्राम्यधर्मसङ्कथा। भोजमतेन सेयं 'चूतलतिका' नाम्नी क्रीडा। अत्र हि 'कस्ते प्रियतमः' इति पृच्छद्भिर्लता–द्वारा प्रियो जनो हन्यते। एवं सति सा घटनैव परिवर्तते।

अस्तु, एवं किल देवरविषयकाः पञ्च गाथाः। यद्यपि–' पृष्ठं प्रोञ्छ कृशोदरि.' ४/१३ इति गाथा देवरोक्तौ योज्यते, परं तदिदं टीकाकाराणां हस्तलाघवम्। मूले हि–'हे कृशोदरि! गृहपृष्ठे अङ्कोटतरुतलजातरतिसूचकं पृष्ठं प्रोञ्छ। अन्यथा विदग्धा देवरस्त्रियो ज्ञास्यन्ति। अन्ये गृहपुरुषा न जानीयुः, परं त्वत्समवयस्का देवरस्त्रियः स्त्रीस्वभावात्तमेवमभिसारं परिजानीयुः।' अत्र हि देवरेणैव सह रतिरभवदिति क्व मूलकृता प्रोक्तम्? अत एव साधारणदेवकृतरत्नाव–लीटीकायां [यत्र हि व्रज्याक्रमेण गाथा व्याख्याताः] पञ्चैव देवरव्रज्यायां गाथाः सन्ति, नेयम्। आर्यायां तु देवरेण सह पलालपुञ्जोपरि सुरतमेव सूचितम्–

**दलिते पलालपुञ्जे वृषभं परिभवति गृहपतौ कुपिते।**

**निभृतनिभालितवदनौ हलिकवधूदेवरौ हसतः।।३०२।।**

स्पष्टमुदीरणायां तु निवदेनीयं भवेत् यदार्यासप्तशतीचित्रितः शृङ्गारो विलक्षण एव। प्राकृते निर्भरः शृङ्गारो भवत्यत एव तत्र सुरसतासम्पादनं सुकरम्। संस्कृते तत्कठिनम्। वाणी प्राकृतसमुचित. ५२ (आर्या.) इति। एवं स्पर्द्धापारवश्येन गोवर्द्धनाचार्यमाहाभागास्तथा व्यग्राः समभवन् यच्चरित्रादर्शविषये तेषां दृष्टिरेव नापतत्। एतच्चित्रिता नायकनायिका निर्मर्यादं खेलन्ति। यत्र स्पष्टमेव मुखतः प्रोच्यते–'स्त्रीणां पतिरपि गुरुरिति धर्मं न श्राविता सुतनुः' ८७, तत्र शृङ्गारान्धता स्पष्टमेव साधारणेनापि परिज्ञेया विश्वनाथस्तु परकीयायां नायिकायामाभासमेव मन्यते शृङ्गारस्य, परमास्तां तावानुच्च आदर्शः। अस्तु परकीयापि नायिका, परं तत्र 'रस' ता न व्याहन्येत, औचित्यं नातिक्राम्येत्, स्पष्टमादर्शो नाधः पतेत्, अश्राव्यत्वं न भासेत्, एतत्त्ववश्यमनुसन्धातव्यं भवेत्। सिद्धान्तः किल साहित्यमार्मिकाणाम्– 'औचित्योपनिबन्धस्तु रसस्योपनिषत्परा' निजभर्तृतो विरक्ता अन्यस्मिन्दयितेऽनुरक्ताः स्त्रियो गाथास्वापि वर्णिता

एव। परं यन्मरणम्, अमङ्गलाश्लीलमिति कृत्वा कस्यचिदपि स्पष्टं न वक्तव्यं भवति, तत्र पत्न्या एव मुखात्स्पष्टं पत्युर्मरणकामना किमुचिता प्रतीयते?–

**तिमिरेऽपि दूरदृश्या कठिनाश्लेषे च रहसि मुखरा च।**
**शङ्खमयवलयराजी गृहपतिशिरसा सह स्फुटतु।।२७४।।**

'गृहपतिशिरसा सह स्फुटतु' इति किमश्राव्यं न प्रतीयते? इयमपि 'नायिका' नाम? अयमपि च शृङ्गारः!! 'शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्द्धनस्पर्द्धी कोऽपि न विश्रुतः' इति पद्यखण्डं पुनर्मनस्यावर्तते!

रसाकुलिताः स्वयमाचार्यचरणास्तेषां नायको वा वक्ति–

**असती कुलजा धीरा प्रौढा प्रतिवेशिनी यदासक्तिम्।**
**कुरुते सरसा च तदा ब्रह्मानन्दं तृणं मन्ये।।७०।।**

गाथास्वाचारोल्लङ्घनं नास्ति नेदमहं वच्मि। मन्मतेन, यत्किल वैगुण्यं तदग्रतः स्पष्टीकरिष्यामि। परमेवंविधा उत्कटा उक्तयः सर्वस्यामपि सप्तशत्यां नोपलभ्येरन्। यत्र किल चरित्रवैगुण्यं तन्मताद्भासते तत्र हि गाथाकारः स्फुटम् 'असती' प्रभृति पदं निर्दिशति। यथा–

**अयि गृहपते गतो नः शरणं रक्षैनमिति भणन्त्यसती।**
**सहसागतस्य तूर्णं स्वभर्तुरेव स्वजारमर्पयति।।३/९७।।**
**अयमागतोऽद्य नः किल कुलगेहादिति हि जारमसती स्वम्।**
**सहसागतस्य पत्युस्त्वरितं कण्ठे नियोजयति।।४/१ इत्यादि–**

अनेन स्पष्टं प्रतीयते यदियमसतीति लोकानामनादरभाजनम्। नेयं सत्सु परिगण्यत इति नास्याश्चरित्रं लोकानामनुगम्यम्। उचितं चैतत्। यद्धि काव्यं 'रामादिवद्वर्तितव्यं न रावणादिवत्' इति लोकशिक्षायै उपनिबद्धं तत्र स्पष्टमनाचारोद्घोषः किं श्रेयसे? यद्यपि हीनमिदं चरित्रं 'त्यक्तव्यम्' इति लोकशिक्षायै एवोपनिबद्धमिति तत्रापि समाधातुं शक्येत। परं यावत्किल कविः केनापि पदेन स्वस्यानभिमतिं तत्र न सूचयति तावत्स्पष्टमरुचिर्न प्रत्येतुं शक्येत। गाथासु सर्वत्रैव तथा चिह्नं निर्दिष्टं कदाचिन्न भवेत्परं बहुत्र तादृक्सङ्केतो व्यञ्जनया कृत इति मयाऽन्वभावि। दृश्यताम्–

निष्पश्चिमानि. २/४१, बहलतिमिरस्य. २/६६, कार्पासवप्रकर्षण. २/६५ पानेन भोजनेन च ७/६२, इत्यादिषु विगुणचरित्रेषु असतीत्यादिररुचिमुद्रा स्पष्टमङ्कितास्ति।

आर्याकारनिबद्धाऽन्यापि शृङ्गारसूक्तिराकर्ण्यताम्–

**प्रेतैः प्रशस्तसत्वा साश्रु वृकैर्वीक्षिता स्खलद्ग्रासैः।**
**चुम्बति मृतस्य वदनं भूतमुखोल्केक्षितं बाला।।३९५**

यावत्किल अन्तिमं 'बाला' पदं न कर्णयोः पतति तावद् अक्षरद्वयरहिता सर्वाप्यार्या भूतमुखान्निर्गच्छन्त्या उल्कायाः प्रकाशे शवस्य वदनमास्वादयन्त्याः कस्याश्चन शाकिन्या भूतभामिन्या वा श्मशानविहरणवर्णनं प्रतीयते। 'बाला' पदश्रवणेऽपि, मृतस्येतिपदेन सह यावत्प्रियस्येत्यादि विशेषणं नाक्षिप्येत तावन्मृतस्येति पदं ('मुर्दा') शवार्थमेव बोधयेत्। एवंभयानकरसेन शृङ्गाररसस्यावतारः कथमिवाङ्गीकृत इति न जानीमः। भयानकस्य बीभत्सस्य करुणस्यैव वा यत्रैतावती सामग्री तत्र केवलं 'बाला' कथमिव शृङ्गारं साधयतु। कियद्वा वराकी टीका समादधातु। चित्रं चित्रमियमपि बाला! अहो बालापदस्य स्वारस्यम्!

स्थूलं विषयमवलम्ब्य, एवमियं द्वयोः सप्तशत्योस्तुलनादिक्प्रकटिता। इदानीं मर्मणि निविश्य मीमांसनीयमेकमंशम् 'वर्णिका' ['बानगी'] रूपेण निवेद्य तमिमालोचनाडम्बर-मुपसंहरामि।

गाथाया नायिका मानमुपगतापि विदग्धजनोचितया मर्यादया अतिगूढमुपालभते। सा हि नायकव्यलीकैः खेदितापि महिलाजनोचितं मार्दवं न विमुञ्चति। नागरनितम्बिनीभि-रनुवर्तनीयं नैपुण्यं न विस्मरति। तथा हि–दयितस्यान्यासक्ततया मनःखेदेन दुर्बलाया नायिकाया दयितं प्रति 'किमिति कृशासि' इति प्रश्नस्योत्तरपाटवमाह सखी–

**यत्पृच्छसि विहसन्मां तनूयते या कृते नु किं ते सा ?**

**'प्रकृतिरसौ मे ग्रीष्मे' हन्त भणित्वैवमवरुदिता।।७/११**

समवेदनाभावेन सानुतापं प्रष्टव्यमपि यः किल हसित्वा पृच्छति, नायिका तस्मै प्रतीकाराशया अवश्यवक्तव्यमपि कार्श्यकारणं न प्रकाशयितुमिच्छति। अनुरागशून्यस्याग्रे स्वलाघवप्रकाशनेन किम्? आह सा–ग्रीष्मे एवंम्लानता मम स्वभाव एव। अत एवाहं कृशा। 'ममैव कृते दुर्बलेयमिति' त्वमात्मनः सौभाग्यं किं बहु मन्यसे?' अत्र व्यङ्ग्यं तु–'भवद्विरहे दौर्बल्यं वहन्त्योऽत एव भवता स्वस्मिन्नतिशयितानुरागिण्योऽनुमितास्ता एव ते विश्वासभाजन-भूतास्त्वद्गतप्राणाः। अहं तु त्वयि न स्निह्यामि। अत एव कथं मे त्वदुपेक्षया तानवं भवेत्।' इति विपरीतलक्षणया कोपातिशयं व्यञ्जयन्त्या सुविदग्धमुपालब्धो दयितः। उपालम्भप्रदानोत्तरं रोदनेन। स्वस्य प्रणयि हृदयं स्पष्टं सूचितं यदहम्–'त्वदुपेक्षयैव दौर्बल्यातिशयात्कण्ठागतप्राणा। अत एव एवंविधप्रश्नादिभिरपि मे मर्मवेधो भवति'।

सपत्नीसविधतः समागताय दयिताय खण्डिता अतिविदग्धं सूक्ष्मं चोपालभते–

**प्रत्यूषागत रञ्जितदेह प्रियालोक लोचनानन्द।**

**सन्नखमण्डनक नमो दिवसपतेऽन्यत्र नीतरजनीक।।७/५३**

प्रियाङ्गरागसङ्क्रमणाद्रञ्जितो देहो यस्य तादृक्। यास्तव एषु दिनेषु प्रियास्तासां लोचनानन्द! [अनेन–अहं तव साम्प्रतं न प्रियेति वक्रोक्तिः] सपत्नीनखक्षतानि सबहुमानं

भूषणतया वहन्! नैकद्वौ यामौ एव, अपि तु सर्वा रजनिरेव यापिता येन तादृश! अत एव दिनपते। दिनमात्रस्यैव कृते मम पतिभूत! (पातीति रक्षण-पालनमात्रकर्तः! न तु प्रमोदयितः!) इदानीं तुभ्यं नमः। तवाऽप्रियाया मे सम्प्रति त्वत्तो दूरस्थितिरेवोचिता।

इदानीं तव दर्शनमपि पुण्यमहिम्ना कदाचिदेव भवति। त्वमन्यत्रैव बहुतरा रजनीर्गमयसि। दूरे तिष्ठतु मम कार्श्यं प्रति सहानुभूतिः, परं त्वमेव सततसपत्नीगणसमागमाद्दुर्बलो जातः। तदिदं मे दुःखाय। परं किमहं कुर्याम्? न मां किञ्चिद् गणयसीत्याह सा-

**अनुभूतः पूर्णदिने सकलकलापूर्ण तव करस्पर्शः।**
**वन्दामहे द्वितीयासङ्गकृशाङ्गाधुना चरणौ।।७/५७**

हे सकलकलापूर्ण [अन्यासां सङ्गाय त्वं नानाविधाश्चातुरीरवलम्बसे इति सूचितम्] प्राकृते 'पुण्णदिअहम्मि' इत्यस्य 'पूर्णादिवसे' तथा 'पुण्यदिवसे' इत्युभयोऽर्थः। ततश्च यस्मिन्दिनेऽस्माकं तव करस्पर्शानुग्रहो जातः सोऽपि कश्चित्पुण्यदिवस एवासीत् इदानीं तु स्पर्शस्य का कथा दर्शनमपि कदाचिदेव भवति। हे चन्द्र! पूर्णिमादिवस एव तव कराणां स्पर्शोऽनुभूतः। इदानीं त्वं द्वितीयातिथेः संयोगात्कृशाङ्गोऽसि। साम्प्रतं तव चरणवन्दनस्यैव योग्यता। व्यञ्जनया तूपालभते-द्वितीयातिथेः सङ्गतस्त्वं कृशशरीरोऽसीति स्नेहवशान्मनसि खिद्यमानापि त्वयोपेक्षिताहं सम्प्रति त्वच्चरणप्रणाममेव करोमि, दूरतस्तव चरणवन्दनपूर्वकं विसर्जनमेव मे समुचितमित्याशयः। द्वितीयातिथेश्चन्द्रः अतिलालसया यथा वीक्ष्यते तथा कदाचिदेव दर्शनं प्रयच्छंस्त्वमप्यस्माकं कृते द्वितीयाचन्द्रोऽसि संवृत्तः। अहो ते मय्यनुग्रहः।

आर्यासप्तशत्या नायिका तु वल्लभस्य शरीरकृशतां वीक्ष्य वह्निरिव जाज्वल्यमाना नायकं यैरक्षरैरुपालभते तानि तां रुद्ररूपे परिणमयन्ति। आह सा-

**परपतिनिर्दयकुलटाशोषित शठ नेर्ष्यया न कोपेन।**
**दग्धममतोपतप्ता रोदिमि तव तानवं वीक्ष्य।।३९३।।**

परपतिषु शरीरसारशोषणान्निर्दया याः कुलटाः [याः किल न त्वय्येव परमनेकेषु पुरुषेषु रताः] ताभिः हृतशरीरसारतया शोषित। किञ्च कपटवचनैर्व्यामोहकतया हंहो शठ! ईर्ष्यया कोपेन वा नाहं रोदिमि, किन्तु त्वयि येयं मे ममता तत्सन्तप्ताहं त्वत्कृशतां वीक्ष्य रोदिमि। त्वां प्रत्यहं क्षीयमाणमालोक्य पुटपाकं दह्यमानाहं परवशा रोदिम्येव। प्रत्यहं लुप्यमानसारं त्वामनुरोदिम्येव। किमन्यत्कुर्याम्?

इदानीमार्यासप्तशतीचित्रिताया नायिकाया उपालम्भोऽपि श्रवणीयः- प्रत्यूषागतेत्यादिगाथायां यथा सूर्यविषयकं वाच्यार्थं सूचयन्ती व्यञ्जनया नायकमुपालभते, अत्राप्यविकलं सैव गाथाऽनुकृता। आह सा-

**कररुहशिखानिखात भ्रान्त्वा विश्रान्त रजनिदुरवाप।**
**रविरिव यन्त्रोल्लिखितः कृशोऽपि लोकस्य हरसि दृशम्।।१६५।।**

तत्र नखभूषण अत्र 'कररुहशिखानिखात'। तत्र अन्यत्रक्षपितशर्वरीक, अत्र 'रजनि-दुरवाप'। तत्र प्रत्यूषागत, अत्र 'भ्रान्त्वा विश्रान्त' [रात्रौ अन्यत्र भ्रान्त्वा प्रातर्गृहे आगत!] आर्यायां नवीनोऽर्थ: 'तेजोबाहुल्येन वीक्षितुमशक्य: सूर्यस्त्वष्ट्रा यन्त्रेणोल्लिखित सन्नल्पतेजस्कतया यथा लोकदृग्विषयोऽभवत्तथा त्वमपि सततसमागमेन कृशोऽपि सपत्नीलोकानां दृष्टिं लोभयसि।' एतस्य मूलं गाथायां दृश्यतां 'प्रियालोकलोचनानन्द' इति। 'भवेत्प्रेयसीनामेव लोचनानि साम्प्रतमानन्दयसि। मम न भाग्यं यद्दर्शनं ते भवेत्। रात्रौ सूर्यस्यादर्शनं यथा स्वाभाविकं तथा रात्रौ ते दर्शनाभाव: स्वाभाविक एवेति गूढोऽभिप्राय:। आर्यायां किलोपालभ्याम्-'त्वं रात्रौ सपत्नीषु भ्राम्यसि। तत्सङ्गाद्दुर्बलो जात:। त्वं दुर्बलोऽन्याभ्य एव रोचसे न मह्यम्।' इदानीं गाथायामुपालम्भेन तुलनीयमेतत्। प्रत्येकमपि विशेषणमुपालम्भं प्रगुणीकरोति। आर्यायां यानि विशेषणानि तानि तु सन्त्येव। ततोऽधिकं 'रक्तदेह' इति। इतोऽप्यधिकं सर्वस्याप्युपालम्भस्य मौलिकभूतं 'दिनपत' इत्यामन्त्रणम्। 'त्वं मया सह पतिपत्नीसम्बन्धं दिनमात्रस्यैव रक्षसि। रात्रौ अन्यत्रैव स सम्बन्धो भवतीति प्रत्यक्षमस्फुटोऽपि कियन्मर्मस्पृगुपालम्भ:। किञ्च-'यन्त्रोल्लिखित' इत्यस्य प्रतिबिम्बकोटौ 'कररुहशिखानिखात' इत्यपि न तथाऽर्थसमर्पक:। 'कररुहाणां शिखाभिर्निखात' इत्यत्र क्षतार्थे निखननमेव तावदप्रतीतम्। निखननं हि भूमौ प्रोथनार्थे (निधानार्थे) प्रयुज्यते। अस्तु यदि क्षतार्थेऽपि स्वीक्रियेत तर्ह्यपि 'सूर्यो यथा त्वष्ट्रा यन्त्रेणोल्लिखित:, तथा 'कररुहशिखाभिर्निखात!' इत्यर्थसिद्धौ नायिकानखानां कियद्दीर्घता तीक्ष्णाग्रता छिदुरता च कल्प्या स्यात्! एवं सति सा विलासिनीषु परिगण्येत उत किष्किन्धावासिनीषु? गच्छतु वा पदपरामर्शस्य कथा। परमुपालभ्येऽर्थे य उत्कर्ष: स मार्मिकैर्गूढमास्वादनीय एव। एवं गाथानुकारेणार्थमुपनिबध्नन्नपि कथमिव पश्चात्पदो भवत्यार्याकार इति विमृश्यताम्। दृश्यतां चाधुना औचित्यस्य कथा। यत्र हि गाथायाम्-'द्वितीयस्या: सङ्गेन त्वं कृशोऽसीति स्नेहवशान्मनसि खिद्यमानापि त्वदुपेक्षिताहं सम्प्रति दूरतश्चरणप्रणाममेव करोमि' इति विदग्धमुपालभ्यते, तत्र आर्यायां कृशतामेव कारणीकृत्य नायिका रौद्ररूपं धारयति- परपतिनिर्दय. (३९३)।

एवं प्रतीयते, यदतिक्रोधेन आर्यावर्णिता नायिका स्वस्य पत्नीत्वमेव किं निसर्गमार्दवानुरोधि स्त्रीत्वमपि विस्मरति। अन्यथा 'कुलटाशोषित! शठ!' इत्यादिपदानि कथं मुखादुद्गच्छेयु:। किञ्च 'रोदिमि तव तानवं वीक्ष्ये'त्यभिक्रोशस्तु स्पष्टं जदृगुर्जरीणां भर्तृकलहकेलिं चित्रयति।

द्वितीयासङ्गकृशाङ्गेत्यपूर्वश्लेषानुप्राणित: सोऽयं गाथावर्णितश्चन्द्रोपमार्थोऽप्यार्याकारेणोपजीवित:- 'सत्यं मधुरो.' (६८२)। अत्र हि-माधुर्यादिगुणविशिष्टोऽपि दयितो द्वितीयां स्त्रियं तथा न जानाति यथा तादृशगुण: प्रतिपच्चन्द्रो द्वितीयातिथिमिति प्रियस्य परस्त्रीविमुखत्वेन निजवश्यता सूचिता। गाथायां त्वन्यासक्तं दयितं प्रत्युपालम्भ इत्यर्थपरिवर्तनम्। किञ्च श्लेषमार्गेण प्रियस्य चन्द्रसादृश्यं साधयन्त्येकाऽन्यापि गाथा दृश्यते- 'दृश्यमानो नयनसुखो. ५/२१।'

एवमनयोः सप्तशत्योः किञ्चिद्वृत्तमावेदितम्–

**सूक्तिक्षोदनमेतद्धि तारतम्यविनोदनम्।**
**गोवर्द्धनोऽन्यथा कस्य भवेन्नानन्दवर्द्धनः।।**

## गाथासप्तशती 'बिहारीसतसई' च

व्रजभाषायाः साहित्यं संस्कृतसाहित्यमुपजीव्यैव सम्पन्नमिति सर्वेऽपि स्वीकुर्वन्ति। अत एव व्रजभाषायां दोहाछन्दस्सु मुक्तककाव्यनिर्माता विहारिमहाभागोऽपि यदि गाथासप्तशती–अमरुशतक–आर्यासप्तशतीप्रभृतीन्युपजिजीव तर्हि किं वाधिकम्। अतिप्राचीना या हि गाथासप्तशती अमरुकप्रभृतिभिः सुप्रथितैः संस्कृतनिबन्धकारैरप्याश्रिता तर्हि व्रजभाषायाः कवयितुः पक्षे नेदमवधीरणायै। विहारिमहाभागस्य कृतिर्गाथासप्तशतीप्रभृतिभ्यः संस्कृत–काव्येभ्यः सुबहुतरमर्वाचीना। प्राक्तना भाषाकवयः संस्कृतसाहित्याध्ययनेन प्रोज्जृम्भितप्रतिभा एव स्वावलम्बितभाषायाः सूक्तिगुम्फने साफल्यमवापुः। अत एवैषां रचनासु संस्कृतनिबन्धाश्रय एव प्रधानमवलम्बनमभूत्।

विहारिणा येषां संस्कृतमहाकवीनामर्थ उपजीवितस्तान्प्रति निजरचनायां वचसा विनयः कामं न प्रकटितो भवेत्परं मनस्यवश्यमेषामुपकारकार्तज्ञ्यं स्यादिति को वा न मन्वीत। किन्तु साम्प्रतिकाः केचन समालोचकचूडामणयो विहारिकृतेर्गाथादिभिस्तुलनां कुर्वन्तः स्थाने स्थाने 'वर्ण्यविषयः स्वायत्तीकृतः' ['मजमून छीनलिया'] 'क्रोशान् पश्चात्त्यक्ताः' [कोसों पीछे छोड दिया'] इत्यादिकमुत्कर्षं नाटयन्ति। अस्तु. सम्यगेवेदम्। स्ववर्ण्यस्य प्रशंसागीतिः स्थान एव। किन्तु साहित्यरङ्गस्थले द्वयोस्तत्त्वमीमांसायां कस्याऽत्रोत्कर्ष इति निष्पक्षपातमालोच–नीयमेव भवेत्। बहुतरं सम्भवो यद् गाथाकारादिभिर्या किल नवीननवीना कल्पना स्वयं स्वप्रतिभयोद्भाविता, पूर्वसिद्धां तामविकलमुपजीव्य तदर्थाहरणोत्तरं तत्सम्बन्धे विहारिणा काचन समञ्जसतापि सम्पादिता स्यात्। परं येन महाकविना नवीना सा कल्पना स्वयमाविष्कृता तस्योत्कर्षः, आहोस्विद्येन तां कल्पनां भित्तीकृत्य यत्किञ्चिन्नवीनमुदितं तस्य? एकश्चित्रकारः शून्यायां भित्तौ शास्त्रोक्तं तत्परिशोधनं विधाय, तदुपरि सूत्रेण मानरेखाः समुत्कीर्य, इदम्प्रथमतया नानारङ्गैः सुमनोहरं चित्रमुद्भावयति, नानाभावांश्च तत्र प्रकटयितुमात्मकलापाटवं प्रदर्शयति। अन्यस्तु कश्चिच्चित्रकारः पूर्वचित्रकारेण लिखिते सिद्धे तस्मिंश्चित्रे यत्किञ्चित्पुष्पपत्रादिकं वा रेखाबिन्द्वादिकं वा स्वलेखन्योत्कीर्य तच्चित्रं लोकानां दृष्टौ मनोहरीकुरुते। इदानीं द्वयोः कृतिता निष्पक्षपातया दृशा समीक्षणीया भवेत्। येन हि तच्चित्रमिदम्प्रथमतया स्वप्रतिभया उद्भावितं तस्य महत्त्वमुत येनैकद्वे पुष्पपत्रे तत्रालिखिते तस्य गौरवम्?

किञ्च समालोचकमहाभागेन विहारिकृतौ– 'कीदृशं मनोहरं पदम्' 'अहो कीदृशी सूक्तिः!' ['मरगजे' चीरने दोहेको चमका दिया है 'सबै मरगजे मुँह किये वहै मरगजे चीर

३३३''सुजान' पद कविता की जान है।'चितवन' तुम्हारी चितवन की ताब भला कौन ला सकता है 'वह चितवन औरै कछू जिहिँ बस होत सुजान ६७१'] इति प्राय: शब्दगतं माधुर्यमेव साधितं सर्वात्मना। परं बहुत्र ध्वनिकृतं यद् गाथाया महत्त्वं तत्प्रति दृष्टिरेव न कृता, प्रत्युत आलोचनायामुर्दूमिश्रभाषाचमत्कारमात्रेण वाचकानां मन आच्छिद्य ध्वनिविचारं प्रत्यवधानमेव तिरोधातुं चेष्टितम्। गाथाया: किल ध्वनिकृतमेव महत्त्वमिति न विस्मर्तव्यं भवेत्। एनं गुणमुद्दिश्यैव संस्कृतभाषापक्षपातिभिरपि साहित्यनिबन्धकारै: सेयं सप्तशती स्वनिबन्धेषूदाहरणरूपेण परिगृहीतेति पूर्वमुक्तवानस्मि। भाषा हि विचाराणां बाह्यं परिधानमात्रम्। समयपरिवर्तनेन भाषां प्रति लोकानां मनोरुचि: परिवर्तमाना दृश्यते। एक: स समय आसीद्यत्र वैदिकभाषायां कृतसंस्कारतया सुभृशं परिमृष्टरूपया श्रीमत्या संस्कृतभाषया संस्कृतेत्यमरगिरेति च गौरवमासादितम्। तदनन्तरं सोऽपि समय आजगाम यत्र संस्कृतभाषा अमधुरा, प्राकृतभाषा च सुमधुरा पर्यगण्यत! इदानीं वयमिममपि समयमवलोकयामहे यत्र प्राकृतमप्यवहेल्य– 'गाथ मरगजे मुंह करी वहै मरगजे चीर' [मर्द्दितवस्त्रेण गाथाया मुखमर्दनं कृतम्] इति जनसमाजादाकर्णयाम:। परं नात्र व्यामुह्यते तत्त्वपरिशीलकै:। भाषा किल रुचिमनुसृत्य समयानुरोधेन परिवर्तते, किन्तु कवितायां य: किल व्यङ्ग्यार्थकृतो जीवभूतश्चमत्कार: स किल युगपरिच्छेदशून्य: सर्वदैव जनेभ्य: सत्कारमवाप्तवान्, अवाप्नुते, अवाप्स्यते च। 'उक्तिविसेसो कव्वो भाषा जा होइ सा होइ' इति केन वा न विदितम्।

अस्तु. आलोचनायां कया वा दृष्ट्या समीक्षणीयमिति स्वावलम्बितां दिशं प्रदर्श्य– विहारिकृतं गाथार्थोपजीवनमुल्लिखाम्यधस्तात्। स्थाने स्थाने आलोचनाया उपरि मत्कृता टिप्पण्यप्युल्लिखिता। अयं विषयो मत्कृतसाहित्यवैभवस्य 'विहारिविलासे' [यत्र विहारि-दोहानां संस्कृते समपद्यानुवाद:] जयपुरवैभवस्य भूमिकायां चाप्यालोचित:।

गाथापेक्षया विहारिकृतेरुत्कर्षं साधयत: समालोचकचूडामणे: प्रथमं पद्यम्–

**नहि पराग नहि मधुरमधु नहि विकास इहिं काल।**
**अली कलीही तैं बँध्यो आगे कौन हवाल।।**

अत्र हि 'जाव ण कोसविकासम्.' इत्यादिपञ्चमशतकस्थचतुश्चत्वारिंशत्तमगाथात उत्कर्ष: साधित:। अस्य प्रत्यालोचना (५/४४) गाथायां मया हि मत्कृतटीकायां विस्तृत्य कृतेति तत एव मार्मिकैस्तत्तत्त्वमधिगन्तव्यम्, किं वात्र पुनरुक्त्या।

आलोचनायां द्वितीयं पद्यम्–

**'तीज परब सौतिन सजे, भूषन बसन सरीर।**
**सबै मरगजे मुँह करी, वहै मरगजे चीर।।३३३।।'**

[श्रावणतृतीयोत्सवे सपत्नीभिरङ्गकेषु भूषण-वसनान्यासञ्जितानि। परं नायिकाया रतिमर्दितेन तेन वस्त्रेण सर्वा अपि ता: (शृङ्गारिता: सपत्न्य:) 'मरगजे मुँह' (विच्छायवदना:)

कृताः। रात्रौ प्रियसम्भोगेन विलुलितवसनाया अस्याः प्रियतमस्वाधीनीकरणरूपं सौभाग्यं विलोक्य–एतदवधिप्रियसौभाग्यवञ्चितानि विफलप्रायाणि भूषणवसनानि साम्प्रतं प्रियप्रसाद–नेच्छया कुर्वत्यो विवर्णवदना अभवन्नित्याशयः] मुखमालिन्येन नायिकां प्रतीर्ष्या व्यज्यते। तथा च प्रियतमालम्बना रतिः पुष्यतीति विहारितात्पर्यम्।

यस्या गाथाया अत्र छाया गृहीता सा किल–

**उत्साहरभसमज्जनविमण्डितानां क्षणे सपत्नीनाम्।**
**कथितमिव मज्जनाऽनादरेण सौभाग्यमार्यया नूनम्।।१/७९**

मज्जनप्रसाधितानामस्माकं प्रियो वश्यः स्यादित्युत्साहजनितेन रभसेन यन्मज्जनं तेन प्रसाधितानां सपत्नीनां मध्ये, क्षणे उत्सवदिवसे आर्यया गुणौदार्येण श्रेष्ठया (तया नायिकया) मज्जनस्यानादरेण सौभाग्यं कथितमिव। भवत्यो मज्जनादिना शरीरं प्रसाध्य साम्प्रतं प्रियतमं वशयितुमिच्छथ, परं गुणगणवशीकृतो दयितः पूर्वत एव मे वचनानुगत इति स्नानं प्रति बहुमानाऽप्रदर्शनेन नायिकाया गर्वो व्यज्यते। सोऽयं विव्वोकाख्यो नायिकानामलङ्कार उक्तः– 'विव्वोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः[१]।'

उपरितः शरीरं प्रसाध्य नायकमनुकूलयितुमिच्छन्तीनां सपत्नीनां प्रातिद्वन्द्व्ये आर्यायाः (गुणगणौदार्यादिभिः श्रेष्ठायाः) गुणगणद्वारा दृढं प्रियतमवशीकरणं सूचयन्त्या नायिकायाः परमं नैपुण्यमुत्कर्षश्चात्र ध्वन्यते। आन्तरिकैर्गुणैर्यया प्रथमत एव प्रियतमो वशीकृतस्तस्या मे सविधे मज्जनादिना शरीरं परिशोभ्य प्रियतमप्रसादमिदानीमिच्छन्त्यो यूयं कं वा महिमानं प्रकाशयितुमिच्छथेति तदाशयः। अत्र हि स्नानं न प्रतिषिध्यते परं तत्प्रति सपत्नीनां यथा आदरस्तथा नेति 'मज्जनानादर'पदेन स्पष्टमेवाक्षरमुखानाम्।

अत्र महाबुद्धयः केचिदालोचकचूडामणयः सञ्जीवनभाष्यभूमिकायां गाथासप्तशत्यम–रुकादिभ्यो विहारिसप्तशत्याः परमोत्कर्षं साधयन्तः कथयन्ति– 'चाहै कुछभी हो, यह स्नान न करने की बात कुछ अच्छी नहीं हुई। ऐसा भी क्या सौभाग्यगर्व जो इस दशाविशेष में अवश्य कर्तव्यकर्म (स्नान) का भी अनादर करा दे यह स्पष्ट ही अनौचित्य है।'

इदं त्ववश्यामौचित्यं स्यात्– यद् गाथायां मज्जनं प्रत्यनादरो वर्णितः श्रीमता तु स्नानस्याकरणमेवोद्घोषितम्। सपत्नयः 'हल्लफलेण' उत्साहचञ्चलतया मज्जनं कुर्वत्यस्तेन चात्मानं प्रसाधयन्त्यः स्नानं प्रति सुमहान्तं बहुमानं प्रदर्शयन्ति। आर्या तु मज्जनं प्रत्यनादरं प्रदर्शयन्ती सौभाग्यमवचनं कथयति। अनयोर्द्वयोः प्रतिबिम्बभावः समालोचकचूडामणेर्न दृष्टिगोचरोऽभवत्। उत्साहरभसेन स्नानं कुर्वत्यः सपत्न्यः स्नानं प्रति यावन्तमादरं दर्शयन्ति, आन्तरेण गुणगणेन मण्डिता आर्या बहिःशरीरप्रसाधकं स्नानं प्रति तावन्तमेवानादरं दर्शयतीति

१. भूमिकायामालोचनाप्रसङ्गेण यत्र यत्र गाथा उद्धृतास्तत्र संस्कृतगाथा एवोल्लिखिताः, बोधसौकर्यात्। मूलजिज्ञासुभिर्ग्रन्थान्तस्ता अवलोकनीयाः।

तदाशय:। यद्यपि मज्जनं प्रत्यनादरो मुखतो वर्णित:, परं सपत्नी: प्रत्यनादर: फलितो व्यञ्जनया प्रतीयते। आर्या मुखेन निजसौभाग्यं नोद्घोषयति परं स्नानं प्रति बहुमानाभावो वचनचर्चा विनापि प्रसह्य स्वयमेव तत्सौभाग्यं जल्पतीति 'कथितमिवे'त्युत्प्रेक्षणस्य सौष्ठवम्।

न प्रतीमो यदुपरिवर्णिते सन्दर्भशरीरे क्व तावदनौचित्यपिशाच आविष्ट: ! शरीरोन्मर्द्दन-पूर्वकं फेनकादिद्वारा सोत्साहमज्जननिमग्नानां सपत्नीनां पुरतो गुणगणमण्डनेन स्वाधीनीकृत-भर्तृकाऽऽर्या, अवश्यकर्तव्यतया साधारणभूते स्नाने कञ्चिदप्युत्साहमादरं च न प्रकटयति, प्रत्युत प्रियप्रतारणफलकं बाह्यमेतादृशं कृत्रिमायोजनं प्रति मनस्वितया अवज्ञां प्रदर्शयति। वचनं विनाप्यात्मन: सौभाग्यनिर्वचनं ह्येतद् गाथाया अप्यनक्षरं सौभाग्यकथनं प्रथयतीति को वा मार्मिको न मंस्यते। एतादृशस्यापि गुम्फस्य अनौचित्य मुद्रयाऽङ्कनं किमालोचकस्यौचित्यं सूचयेत्? 'अश्रद्धया कृतं दत्तम्' यथा अकृतं मन्यन्ते धार्मिकास्तथैव अवज्ञया कृतं स्नानम-कृतमेव चेन्मन्येत, तर्हि तु सम्यगेव।

समालोचकचूडामणेर्दृष्टि: कदाचिन्न पतिता भवेत्परम् 'तीज परब.' इत्यादिदोहानि-गुम्फनात्पूर्वं विहारिमहाकवेरवश्यं वक्ष्यमाणाया अपि गाथाया उपरि पतिताऽस्ति, यस्याश्छायास्मिन्पद्ये प्रलोक्यते। सा किल गाथा-

**शिखिपिच्छकावतंसा व्याधवधूर्गर्विता भ्रमति।**

**गजमौक्तिकपरिरचितप्रसाधनानां पुर: सपत्नीनाम्।।( २/७३ )**

अस्यां गाथायां के वा ध्वनय: कश्च चमत्कारस्तदिह न प्रपञ्च्य द्वितीयशतकस्य त्रिसप्ततितमां गाथां पठितुं प्रार्थये। एतद्विलोकनेन सचेतसां स्पष्टं भवेत् यद्यं किल प्रसङ्गमादाय सेयं गाथा निगुम्फिता तत्र कविना सफलता प्राप्ता, न वेति। सपत्नीनां विभवातिशय-मालोक्यापमानेन म्लायन्तीं सुभगां नववधूं 'वैभवापेक्षयापि प्रियतमप्रणय एव गरीयान्' इति प्रबोधयन्ती तत्सखी सान्त्वयति। गाथागृहीतपदै: किं किं किल चमत्कारकमभिव्यज्यते तत्तु तद्व्याख्यालोकनेन विशदं भवेत् परं दोहाच्छन्दसो नायिका यथा रतिमर्दितेन वस्त्रेणापि सपत्नीनां मानमर्दनं करोति तथा शिखिपिच्छमात्राभरणा गाथाया नायिका महामूल्यगजमौक्तिकमण्डितानामपि सपत्नीनां पुरो भ्रमन्ती तासां गर्वगञ्जनं करोतीति कस्य न साम्यमवगतं भवेत्? इदानीं द्वयोस्तारतम्यं सहृदयाधीनं कृत्वा प्रकृतमनुसरामि-

**'अज्यौं न आये सहजरँग विरह दूबरे गात।**

**अबही कहा चलाइयत ललन चलनकी बात।।** १३०'

एतस्याधारगाथा-

**'हंहो दुष्करकारक पुनरपि चिन्तां करोषि गमनस्य।**

**नाद्यापि हन्त सरला भवन्ति वेण्यास्तरङ्गिणश्चिकुरा:।।३/७३'**

अस्या गाथाया व्याख्या तदुपरिकृतायाः समालोचनायाश्चालोचना चापि ग्रन्थाभ्यन्तर एव विलोकनीया। नेह पुनराम्रेड्यते। 'अज्यों न आये सहजरँग' तथा 'अबही कहा चलाइयत' इति चरणाभ्यां प्रवासे शीघ्रतानिवारणमभिप्रेतमिति साधारणोऽपि पुमान्परिज्ञास्यति। ततश्च प्रतिदिनं प्रसाधनेन सरलीक्रियमाणानां केशानां पूर्वावस्थापेक्षया रसरक्ताद्युपचयजन्या शरीरशोभा अवश्यं परतोभाविनी। एवं च प्रवाससाक्षिणः केशा अपि सरला न जाता भवांस्तु पुनः प्रवासं चिन्तयतीति गमनशीघ्रताकृतं नायकस्य कठिनहृदयत्वं गाथैवाधिकं सूचितवतीत्या-लोचनायामुक्तमेव।

**'अनियारे दीरघ दृगनि, किती न तरुनि समान।**
**वह चितवनि औरै कछू, जिहिं बस होत सुजान।।६७१'**
**'सन्ति मुखेऽन्यासामपि पक्ष्मलधवलानि दीर्घकृष्णानि।**
**नयनानि सुन्दरीणां तदपि द्रष्टुं न जानन्ति।।५/७०'**

अत्र 'द्रष्टुं न जानन्ति' इति असंलक्ष्यक्रमव्यङ्ग्यध्वनिरिति[१] समालोचकचक्रचूडा-मणिना न जाने कतमस्य जगतः साहित्येऽधीतम्! 'रसभावतदाभासभावशान्त्यादिकरक्रमः' इति साधारणसाहित्यवेद्यपि जानीयात्। किञ्च यः असंलक्ष्यक्रमव्यङ्ग्यध्वनिः (रसादिः) स किल चमत्कारमाविष्करोति, उत तमाच्छादयति? रसोऽपि यदि चमत्कारविघातकस्तर्हि नमः कवितायै!! अस्तु भारतीयसाहित्यस्य मौलिभूतानां गाथानामालोचने एवं प्रकारेण समुचितमधिकारं वहन्नालोचकमहाभागो गाथाकारेण सह परिहासौचित्यमप्यग्रे प्रकाशयति, आह सः- ''आखें देखना नहीं जानतीं क्यों? कोई विचित्र बीमारी तो नहीं है? कहीं चित्रलिखित आंखें तो नहीं हैं?'' अत्र द्रष्टुं न जानन्तीत्यस्य प्रख्यातमप्यर्थान्तरसङ्क्रमितं वाच्यं यः किल महाभागो द्रष्टुमपि न जानाति सोऽपि गाथाकारेण सह एवं परिहासधाष्ट्र्यं प्रकाशयतीत्यहो बलवती नियतिः!!

**'यों दलमलियत निरदई, दई कुसुम से गात।**
**कर धर देखो धरधरा, अजौं न उरको जात।।२२८'**
**'सहते सहत इतीयं रमितैवं सुरतदुर्विदग्धेन।**
**म्लानशिरीषाणीव हि जातान्यस्या यथाङ्गानि।।१/५५'**

विहारिपद्ये- सुरतान्ते नायिकासख्या उपालम्भः। 'अयि निर्दय! एवमपि किमामर्द्यते? हे दैव! अस्याः किल कुसुमसदृशान्यङ्गानि। उरसि करं विन्यस्य पश्य, अस्या हृदयकम्पो नाधुनापि विरमति।'

---

१. 'यहाँ 'द्रष्टुं न जानन्ति' की असंलक्ष्यक्रमव्यङ्ग्यध्वनि ने गाथाके चमत्कार पर कुछ भारी सा पर्दा डाल दिया है।' विहारीकी सतसई (पहला भाग)। 'बेताब प्रिंटिंग वर्क्स' अत्र प्रकाशितं द्वितीयं संस्करणम्।

गाथायां सामान्यनायिकाया माता भुजङ्गान्तरप्ररोचनाय दुहितुः सौकुमार्यातिशयं सुरतसुखावहत्वं च सूचयति। विहारिकाव्ये सामान्यकुसुममात्रस्य सादृश्यमङ्गे दीयते, गाथायां तु शिरीषकुसुमस्य, यद्धि जगतः सर्वेभ्योऽपि कुसुमेभ्यः कोमलम्। आह कालिदासः– 'पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः'। ततश्च–अतिशयितकोमलाङ्ग्यपि सेयं तथा रमिता, यथास्या अङ्गानि प्रम्लानशिरीषाणीव जातानि। ततश्च सर्वाङ्गव्यापी एतस्या अवसादः। अत एवैतस्याः प्रेयान् दुर्विदग्धः। सुरतोपचारचातुर्यानभिज्ञोऽपि आत्मानं तथा मन्यते इति तत्तात्पर्यम्। गाथायां सर्वाङ्गव्यापिनमवसादं स्फुटं प्रत्याय्य नायिकायाः सौकुमार्यातिशयस्तत्सम्भोक्तुर्दुर्विदग्धत्वं च साध्यते। विहारिपद्ये तु गात्राणामवसादः स्पष्टं न प्रत्याय्यते, किं तु उरः कम्पमात्रं निर्दिश्यते, यद्धि भयमात्रादपि सम्भवति।

अत्र यस्मिन्प्रसङ्गे दुर्विदग्धपदं गाथया प्रयुक्तं तत्स्थाने भूमण्डलस्य कापि भाषा शब्दान्तरं स्थापयितुं न प्रभवेत्। तथा विदग्धः अभवन्नपि तादृशमात्मानं मन्यमानश्च किञ्चिद् धृष्टश्च यो भवति तं किलैतत्पदं सूचयति। नास्य प्रतिशब्दः कुत्रचिल्लभ्येत। समालोचकमहाभागो ह्येतदर्थसूचकं हिन्दीशब्दं तु कञ्चन निर्दशतु! मन्येऽहमेवंविधमर्थसमर्पकं पदं नान्यभाषायां विलोक्येत। एतस्यातिशयो निष्पक्षपातया मत्या मार्मिकैः स्फुटमवगम्येत। इदानीं दृश्यताम्– व्रजभाषायां 'चितवन' 'सुजनादि' पदान्यालोक्य यथा किल समालोचकमहाभागः सशिरः कम्पमन्वमोदत तथा किं संस्कृतज्ञा एवंविधपदानि नाभिनन्देयुः ? सत्यं त्वेतत्– तत्तद्भाषा–नुकूलानि भवन्ति कानिचन पदानि यानि तस्यां भाषायामेव सुभृशमभिरुचिं पुष्यन्ति। परं यः किल व्यङ्ग्योऽर्थः स तु पदबन्धनिरपेक्षः कश्चिदन्य एव यो ह्युत्तमकाव्ये प्राधान्येन परामृश्यते। अस्तु, एवं सत्यपि दुर्विदग्धपदापेक्षया 'निरदई' पदे औचित्यमित्यालोचकमहाभाग आह। परं द्वयोः प्रकरणोपरि पुनर्दृष्टिर्देया भवेत्। विहारिणो नायिका मुग्धा गृह्या च। अत एव तत्सखी तत्परिखेदकं नायकं निर्दयमेव निर्दिशेत्। परं गाथाया नायिका सामान्या। वक्त्री च भुजङ्गसङ्ग्राहिका कुट्टनी। अत्र ह्युपभोक्ता सुरतोपचारचातुर्यमेव द्रष्टुं कामयते। स्वयं च निजवैदग्ध्यं प्रकाशयति। तत्र दयनीयतादर्शनमवैदग्ध्यमेव प्रकटयेत्। अत्र त्वयमेवोपालम्भः स्थाने यत्स यद्यप्यात्मानमेवंविधकर्मणि विदग्धं भावयति परं सहजसुकुमारीमपि नायिकां न तथानुवर्तमानः केवलं दुर्विदग्ध एव। अनेन दुहितुः कामकलाकौशलं कोमलता चेत्युभयमपि ध्वनितं भवति। इदानीं द्वयोरौचित्यं सहृदयैर्विमर्शनीयम्।

**'स्फुरिते वामाक्षि! त्वयि यद्येष्यति स प्रियोऽद्य तत्सुचिरम्।**
**सम्मील्य दक्षिणं तत्प्रेक्षिष्येऽहं त्वयैवैतम्।।२/३७'**

**'बाम बाहु फरकत मिलैं, जो हरि जीवनमूरि।**
**तौ तोही सो भेटिहों, राखि दाहिनी दूरि।।१४२'**

वामवाहो! त्वयि स्फुरति जीवातुर्हरिर्यद्यागच्छेत् तर्हि दक्षिणं बाहुं दूरीकृत्य त्वयैवैनमाश्लिक्ष्यामि। भावो द्वयोरेक एव। गाथायां स्फुरणद्वारा शुभशंसकाय वामनयनाय फलसिद्धौ समुचितपारितोषिकप्रदानं प्रतिज्ञातम्। दोहापद्ये वामबाहवे तदुचितं पारितोषिकम-भिकल्पितम्। एवं सत्यपि गाथायां 'सुचिरम्' इति सुतरां सन्तोषकमधिकमुपात्तम्। दोहापद्ये वामबाहुना आलिङ्गनमात्रं प्रतिश्रुतम्। समयस्त्वनियतः। कदाचन कतिपयक्षणेभ्य एव एकवारमात्रं वामबाहवे अवसरं प्रदाय ततो दक्षिण एव बाहुर्व्याप्रियेत तदपि सम्भवेत्। किञ्च 'भेंटना' (मेलनम्) यस्य नाम तद्धि द्वाभ्यामेव बाहुभ्यां सुकरतया सम्भवेत् नैकेन। दर्शनं त्वेकेनापि नेत्रेण भवति। सुचिरं च सम्भवति। येभ्यः किलैकमेव नेत्रमीश्वरेण वितीर्णं तेऽपि सर्वं नयनकार्यं साधयन्त्येव। परं येषामेको बाहुः स्कन्धपर्यन्तं छिन्नो भवेदपरश्च समग्रो भवेत्ते एकेन बाहुना यथावत्परिरम्भणं कर्तुं शक्नुयुर्न वेति स्वयमेव सहृदयैर्विमर्शनीयम्।

**'वहति वधूर्नवयौवनमनोहराणि हि यथा यथाङ्गानि।**
**कृशति नु तथा तथास्या मध्यो दयितः सपत्नश्च।।३/९२'**

**'देह दुलहियाकी बढै ज्यौं ज्यौं जोबन जोति।**
**त्यौं त्यौं लखि सौतें सबै बदन मलिन दुति होति।।'**

यथा यथा नववध्वा वपुषि यौवनविभा वर्द्धते तथा तथा सपत्नीनां मुखकान्तिर्मलिना भवति। द्वयोरविकलं स एव भावः। स एव च वचनक्रमः। द्वे अपि सूक्ती अलङ्कारोद्भासिते। वध्वा नवयौवनज्योतिरुदयरूपेण गुणेन सपत्नीनां मुखमालिन्यरूपदोषोदयादुल्लासालङ्कारो विहारिसूक्तौ। व्रजभाषायाः पीयूषमधुराण्यक्षराणि। विहारिसदृशश्च प्रवक्ता। किमत्र वक्तव्यम्। परं गाथायामर्थसमुच्चयस्य पराकाष्ठा। दोहापद्ये ईर्ष्यावशात् केवलं सत्पनीनामेव कान्तिक्षतिरुक्ता। गाथायां तु सहैव श्रोण्यास्तनुता, अत्यासक्त्या दयितस्थापि कृशता समीरिता। यथा यथा नवयौवनोदयादङ्गानि समधिकमनोहराणि भवन्ति तथा तथा तत्रात्यन्तमासक्तिः प्रियतमस्य प्रसज्यतीति तत्फलमप्युदीर्यते। दयिते सपत्ने च कृशतारूपतुल्यव्यापारवर्ण-नात्कण्ठाभरणोक्ता तुल्ययोगिता। यौवनरूपकारणस्य मध्यादिकृशतारूपकार्यस्य च समान-कालिकतावर्णनादक्रमातिशयोक्तिश्च। आभ्यामलङ्काराभ्यामलङ्कृता सेयं वाच्यार्थनीवी वयः-सन्धिकृतं नायिकायाः परमसौन्दर्यमाह। दोहासदृशे छन्दसि भूयसोऽर्थस्य सङ्ग्रहे प्रसिद्धो विहारी। परमत्र कोटित्रयसङ्ग्रहात्स्पष्टं गाथैवाधिकं धनिनी। किमेतत्तुल्ययोगिता मर्मतः समीक्ष्येतालोचकैः? अन्यत्रापि सेयं समुच्चयशैली गृहीता गाथाकारेण।

यथा–

**'मध्यः प्रियः कुटुम्बं पल्लीयुवकाः सपत्न्यश्च।**
**क्षीयन्ते पञ्च तथा व्याधगृहिण्याः स्तनौ यथैधेते।।६/९७'**

अस्तु, पुनः प्रकृतमनुसरामः।

**बालक भवतोऽप्यधिकं मम जीवितमेव वल्लभं निजकम्।**
**तत्त्वां विना न भवतीति तेन कुपितं प्रसादयामि त्वाम्।।३/१५**
**'अपनी गरजनि बोलियत कहा निहोरो तोहि।**
**तू प्यारो मो जीयको मो जिय प्यारो मोहि।।३५१'**

प्रणयकुपितं नायकमनुनयन्ती नायिका चातुर्येण निजगाढानुरागमपि सूचयति। आह सा- ममैव जीवितस्थितेरपेक्षा। अत एव त्वां कुपितं प्रसादयामि। अन्यथा तव कठोरहृदयतां पुनः पुनर्व्यलीकशतानि चानुभवन्ती का वा स्वतोऽनुनेतुमनुमन्येत। विहारिणो नायिकाऽऽह- 'अहं निजस्यावश्यकतानुरोधेनैव त्वया सह संलपामि। न तवोपरि कश्चिदुपकारभारः। यतः किल स्वजीवितं मम प्रियम्। मम 'जीवस्य' (प्राणानां कृते) च त्वं प्रियः।' गाथार्थमविकलमुज्जहार विहारी। न कश्चिद्द्वयोस्तात्पर्ये भेदः। परं किञ्चिन्मार्मिकतया विमर्शे तु उपजीव्योपजीव-कयोर्दातृप्रतिग्रहीत्रोश्च भेदः स्पष्टं प्रतीतो भवेत्। विहारी कथयति 'तू प्यारो मो जीयको' त्वं मम जीवस्य कृते प्रियः। गाथा आह- 'तत्' (जीवितं) त्वां विना न भवति।' त्वं मम प्राणानां कृते केवलं प्रिय एव न, तेषां स्थितिरेव त्वदधीना। त्वां विना मम जीवितसत्तैव नास्तीति द्वयोरुक्त्योस्तारतम्यं स्थूलैरपि वेद्यम्। विहारिणोऽनुसारं प्रियतमो जीवस्य प्रिय उक्तः। परं प्रियतमस्याभावे तस्याप्यभावः स्यादेतन्न प्रतीयते। प्रियवस्तुनोपहरणेऽपि सन्तोषः कर्तव्य एव भवति। परं गाथा प्रियतामात्रं नाह। सा कथयति- तन्मे जीवितं त्वां विना भवत्येव न।

किञ्च-एकमात्रेण पदेन सर्वमप्यर्थजातं गाथाकारेण शतगुणितीकृतम्। विहारिवराको न तत्सीमानमपि पस्पर्श। तत्किल पदम् 'एव' इति। गाथा आह- 'मम जीवितमेव वल्लभं निजकम्'। 'हे प्रिय त्वमपि मे वल्लभः। मम जीवोऽपि मे वल्लभः। परमेवं प्राणसंशयस्थाने तु मम जीवितमेव मे वल्लभम्।' मन्ये प्रियोऽपि नात्र विसंवदेत। दह्यमानसदनादिभ्यः पूर्वमात्मैव केन वा लोकेन न रक्ष्यते। किन्तु इयमप्युक्तिरभिप्रायविशेषं सूचयति। स चायम्- 'अहं जीवितादपि वल्लभं भवन्तमेव भावयामि। परमन्यासक्तो न त्वं ममैतावत्कोटिकमनुरागं परिज्ञास्यसि। त्वं हि मां स्वार्थिनीमेव जानासि। परं त्वद्भावनानुसारं मम जीवितमेव मे वल्लभमस्तु, न भवान्। परं तन्मे जीवितमेव तु त्वां विना न भवति! अत एव जीवितानुरोधेन त्वामनुनेतुं परवशास्मि! दृश्यताम्, कीदृशो ध्वनेश्चमत्कारः!! 'त्वं मम कोऽपि नासि। मम तु जीवितमेव प्रियम्।' इति तु मुखादुच्यते। परं प्रत्येकसहृदयस्य हृदये स्पष्टमङ्कितं त्विदं भवति-यत्त्वं जीवितस्यापि जीवितमिति। अयमेव ध्वनिकृतश्चमत्कारो नाम। अनेनैव च महाकवित्वव्यपदेशः। पदमाधुर्यनिबन्धनस्यापि महत्त्वस्य काव्यकलायामस्ति स्थानम्। परं ध्वनेरग्रे न तस्य मूल्यम्। एतद्धि साम्प्रतिका हिन्दीमहारथिनोऽपि मन्यन्ते। हिन्दी 'साहित्यालोचनेन'

ख्यातिं प्रापितो बी. ए. बिरुदो बाबूश्यामसुन्दरदासमहोदयो 'ललितकलानां' मध्ये काव्यकलां सर्वमूर्द्धन्यां मन्यते। कलानां श्रेष्ठतायाः परिभाषा च तेन स्थापिता– 'यस्यां कलायां मूर्त आधारो यावन्न्यूनो भवति तावदेव सा श्रेष्ठा परिगण्यते। अर्थरमणीये काव्ये शब्दस्यापि साहय्यमतिन्यूनं भवति। अतएव अर्थरमणीयं काव्यं सर्वकलापेक्षयापि श्रेष्ठम्' इति। इदानीमनेन मानदण्डेन काव्यस्योत्कर्षो न केन वा स्थूलमतिना परिज्ञायेत ? यत्र हि 'चितवनि' 'सुजान' 'मरगजे' इत्यादिपदैरेव मूर्द्धानमान्दोलयन्त्यालोचकपुङ्गवास्तत्र हि पूर्वोक्तेषु पदेष्वेवान्वय-व्यतिरेकानुविधायि माधुर्यमवतिष्ठते। ततश्च तादृशस्य शब्दरूपस्याधारस्य साहाय्यात् ध्वनिप्रधानकाव्यापेक्षया तद्धि सुतरां दुर्बलं भवतीति स्पष्टं तद्विदाम्।

अस्तु अस्यां गाथायां यावान्ध्वनिचमत्कारस्तं किल 'बालक' इत्यामन्त्रणं पुनर्मण्डयति। 'मम त्वेतावान्प्रणयो यत्त्वां विना मम जीवनमेवासम्भवम्। अत एव स्वजीवितस्थितये त्वदनुनयाय परवशा भवामि। परं पुनः पुनर्व्यलीककारितया दृढीभूतहृदयेन भवता त्विदं ज्ञायते यन्ममापराधः पूर्वमनया गृहीतः, इदानीं च मिथ्येति निश्चित्य स्वयं सोऽपमार्जित इति। परं प्रणयपरिपाकानभिज्ञत्वादेव तवेदृशो विचारः। अत एव भवानस्मिन्विषये मुग्ध एवेत्युपालम्भं 'बालक' शब्देनामन्त्रणं ध्वनयतीति सचेतसो विमृशन्तु। विशेषतश्च तेषां दृष्टिराकर्ष्टव्या भवेत् ये पदे पदे 'वर्ण्यविषय आच्छिन्नः' 'कीदृशः संस्कारः कृतः' इत्यादि वाक्ताण्डवं मण्डयन्ति।

**'वज्रपतनातिरिक्तं पत्युः श्रुत्वा तु शिञ्जिनीघोषम्।**
**स्वसदृशबन्दीनामपि बन्द्या द्राक् प्रोञ्छिते नयने।।१/५४'**

**'नाह गरज नाहरगरज, वचन सुनायो टेरि।**
**फँसी फौज बिच बन्दिमें, हँसी सबनि मुख हेरि।।६५९'**

बन्दीकृत्य स्त्रीणां बलादाहरणं पुरा वीरतासूचकमासीत्। उपलभ्यत एव तदिदं संस्कृतसाहित्ये। तदनुसारमेव काचिद्बन्दीकृता वीरवधूर्वज्रनिर्घोषादप्यधिकं भर्तुः प्रत्यञ्चा-घोषमाकर्ण्य स्वयमेव सन्तुष्टा नाभूत् प्रत्युत दस्युभिर्बन्दीकृतानामन्यासामपि बन्दीनामाश्वासनं तया दत्तम्। इति गाथार्थो विहारिणा प्रकारान्तरेण परिवर्तितः। तस्य समयो मोगलसाम्राज्यभुक्त आसीत्। नाभूत्तस्मिन्समये धनुर्युद्धम्। अत एव तेन प्रत्यञ्चारवस्य स्थाने सिंहध्वनिसदृशी नाथस्य गर्जना गुम्फिता। पूर्वार्द्धे तदिदं परावर्त्य, उत्तरार्द्धे यदिदं गर्वहास्यमुपनिबद्धं तद्धि बन्दीव्रज्याया द्वितीयस्या गाथात उपजीवितम्। विहारी कथयति– 'हँसी सबन मुख हेरि' अर्थात् इदानीं युष्माकं वीरतां द्रक्ष्यामि। मत्पतिः क्षण एव सर्वान् युष्मान्पराजित्य मां मोचयिष्यतीति गर्वस्मितमभूदित्यर्थः। किन्तु गाथायां यदुक्तं तदन्यादृशमेव मर्मस्पृक्–

**'नो बन्दि गम्यते किं को गर्वो येन मसृणगमनासि।**
**जल्पितमदृष्टदशनं विहसन्त्या 'ज्ञास्यसे चोर'।।६/२७'**

अत्र पदैः कस्को ध्वनिरिति तु मट्टीकायामालोकनीयम्, नेह विस्तार्यते।

**आदाय चूर्णमुष्टिं हर्षौत्सुक्येन वेपमानायाः।**

**प्रियमवकिरामि पुर इति हस्ते गन्धोदकं जातम्।।४/१२'**

अस्या गाथाया भावार्थो विप्रतीपतया उपजीवितो विहारिणा। अत्र हि मदनोत्सवे गन्धद्रव्यधूलिं (पिष्टातक 'गुलाल') गृहीत्वा प्रियतमोपरि विच्छुरणेच्छया नायिका स्थिता। परं यावत्कालं विच्छुरणेच्छा हृदयेऽवरुद्धा तावदुत्कण्ठायाः प्राबल्यात्कान्तदर्शनजनितस्वेदात्म-कसात्त्विकभावाच्च सा मुष्टिर्गन्धोदकमभूदित्युच्यते। एतद्विरुद्धं द्रवरूपमभ्यङ्गविलेपनम् ('अरगजा') नायिकाया मुष्टिनिविष्टं सत् शुष्कतया 'अबीर'- (पिष्टातक-) रूपमभूदिति विहारी निबद्धवान्-

**'मैं लै दयो लयो सुकर, छुवत छनक गौ नीर।**

**बाल तिहारो अरगजा उर ह्वै लग्यौ अबीर।।'**

पूर्वानुरागे नायिकाया विरहवेदनां सखी वक्ति- 'मया भवत्प्रहितः स विलेपनसुगन्ध-द्रवस्तस्या हस्ते दत्तः। तया गृहीतः। परं विरहतप्तायास्तस्याः करस्पर्श एव छनिति जलांशः शुष्कोऽभवत्। हे कुमार! तत्तव सुगन्धलेपनं गन्धचूर्णतामापद्य निश्वासोड्डीनं तस्या उरसि समसज्यत।'

गाथायां सम्भोगशृङ्गारः, विहारिकृतौ तद्विरुद्धो विप्रलम्भः। गाथायां गन्धचूर्णस्य गन्धोदकमभूत्। विहारिणा गन्धोदकमपि विरहतापाधिक्याद् गन्धचूर्णीकृतम्। अस्तु न कापि हानिः। होलामहोत्सवे गन्धधूलिर्गन्धोदकं चेत्युभयमपि रङ्गक्रीडोपयोगि।

**आगच्छतः प्रियस्य स्वाऽऽलम्बितमानतः पराङ्मुख्याः।**

**मानिनि हृदयं कथयति पृष्ठे पुलकोद्गमस्तवाभिमुखम्।।१/८७**

स्वयम् आलम्बितेन (त्वया बलात्परिधृतेन न तु वास्तवेन) मानेन पराङ्मुख्या अपि तव हृदयम्, प्रियदृष्टिनिपातेन सञ्जातः पुलकोद्गमस्तव पश्चादागच्छतः प्रियस्य सम्मुखं कथयति। अर्थात् त्वं पराङ्मुखी स्थितासि परं प्रियदृष्टिनिपातेन जातस्तव पृष्ठे रोमाञ्चस्त्वां गतमानां कथयतीति भावः। विहारी अनेनोपकरणेन लक्षितां चित्रयति-

**रही फेरि मुख हेरि इत हितसमुहे चित नारि।**

**दीठि परत उठि पीठिके पुलकैं कहत पुकारि।।**

'पृष्ठं परावर्त्य इतः अस्मत्सम्मुखं मुखं करोषि, परं प्रियदृष्ट्यां पतन्त्यामेव पृष्ठस्य पुलकस्तव चित्तं प्रियस्य सम्मुखं उच्चैरुद्घोष्य कथयति।' केचित् 'रहि मुह फेरि कि हेरि

इत' इति पाठं स्वीकुर्वन्ति। तेषां मते 'त्वं मुखं परावर्त्य तिष्ठ, अथवा एतं पश्यन्ती तिष्ठ' इत्यर्थः।

अविकलं स एवार्थः। उभयत्रपृष्ठपुलकोद्गमः पराङ्मुख्या अपि चित्तं सम्मुखं कथयति!!

**स्तोकमपि निःसरति नो मध्याह्ने पश्य गात्रतललीना।**
**छायाप्यातपभयतो विश्राम्यसि किं न तत्पथिक।।१/४९**

मध्याह्ने सूर्यस्य मस्तकस्थतया छाया शरीरतलगता भवति। तत्र कविर्हेतुमुत्प्रेक्षते- यत् आतपभयादेव छायापि शरीरतललीना भवति। बहिर्न निष्क्राम्यति। अनेन वाच्यार्थेन- यथा छाया शरीरतललीना भवति तथा मां कुर्विति स्वयंदूतिकाया आकूतम्। विहारी अप्याह-

**'बैठि रही अति सघनवन पैठि सदनतन माँहि।**
**देखि दुपहरी जेठकी छांहौ चाहत छाँहि।।५६२**

'ज्येष्ठमासस्य मध्याह्नं दृष्ट्वा छायापि छायां वाञ्छति। अतएव सा छाया निबिडेषु वनेषु, सदनेषु, अन्यत् किं मनुष्याणां शरीरतलेषु स्थिताऽस्ति।'

**तस्मिंश्च्युतविनये किल रोषितुमिह शक्यते न केल्यापि।**
**एभिर्याचितकैरिव मातर्विवशाऽसहैरङ्गैः।।१/९५**

काचिद्बन्धुपुरन्ध्री किञ्चित्प्रयोजनं साधयितुं नायिकां मानं कर्तुं शिक्षयति। तदुत्तरे सा आह- च्युतविनये रतिलौल्यलङ्घितलज्जतया विनयमवधीरयमाणे तस्मिन् (प्रेयसि) अभ्यर्थ्यानीतैरिव अवशीभूतैर्ममाङ्गैः क्रीडायामपि मानः कर्तुं न शक्यते। प्रियतमं दृष्ट्वा हर्षोल्लासान्ममाङ्गेषु पुलको भवति। अत एव ममाधिकाराद्बहिर्भूतैरेभिरङ्गैरहं मानं कुर्वती लज्जिता भवामि। मानस्य स्थितिरेव न भवति। विहारी आह-

**'मोहि लजावत निलज ये हुलसि मिले सब गात।**
**भानु उदैकी ओस लौं मान न जान्यों जात।।१००'**

'इमानि निर्लज्जानि मेऽङ्गानि नायकस्य सम्मुखागमने 'हुलसि' पुलकद्वारा हर्षं प्रकटय्य मां लज्जयन्ति। भानोरुदये यथा नीहारस्तथा मानो विलीयमानो न प्रतीयते। अत एवाऽहं मानं कर्तुं न समर्थेत्याशयः।'

**प्रेयसि सुविषमशीले शुद्धमना देवरेऽसदृशचित्ते।**
**न वदति कुटुम्बविघटनभयेन तनुकायते स्नुषा किन्तु।।१/५९**

देवरे कामविकारदूषितचित्ते सत्यपि अविकृतचित्ता पुत्रवधूर्वामस्वभावे प्रियतमे देवरस्य तां कुत्सितां वार्तां कलहकृतकुटुम्बविघटनभयेन न कथयति, किन्तु तद्दुःखेन कृशा भवति। विहारी अप्याह-

**'कहति न देवर की कुबत कुलतिय कलह डराय।**

**पंजरगतमंजार ढिंग सुग लौं सूकति जाय।।'**

'कूलवधू: कलहभयेन देवरस्य कुत्सितां वार्तां न कथयति। किन्तु मार्जारनिकटस्थिता पञ्जरगता शुकीव शुष्यति।' 'स्नुषा' पदेन श्वशुरादिसत्तायां सम्मिलितकुटुम्बे कलहो माभूदिति भयेन हृदय एव पुटपाको निर्भरं चित्रितो गाथया। किञ्च 'सुविषमशीले' 'असदृशचित्ते' इति पदाभ्यां य: किल भावविशेषश्चित्रित: सोऽन्यत्राऽप्राप्य:।

**किं भण्यतां नु वाचा कियदिव वा लिख्यते लेखे।**

**तव विरहे यद्दु:खं त्वमेव तस्यासि विदितार्थ:। ६/७१**

**'कागद पर लिखत न बनै कहत सँदेस लजात।**

**कहिहै सब तेरा हियौ मेरे हियकी बात।।३९४'**

'पत्रे लेखितुं न पार्यते। लज्जितया मया वाचापि च किं सन्दिश्यताम्?। तव हृदयमेव मम हृद्गतं सन्तापादिकं ते कथयिष्यति।'

**क्षणमुञ्छति मार्जयति क्षणमुद्धुवति क्षणं न तद्विदती।**

**मुग्धवधू: स्तनपृष्ठे दत्तं दयितेन नखरपदम्।।५/३३**

विहारी नखक्षतं दन्तक्षते परिवर्तयामास। आह स:-

**'छिनकु उघारत छिन छुवत राखत छिनक छिपाय।**

**सब दिन पियखण्डित अधर दरपन देखत जाय।।१०९'**

'प्रियेण खण्डितमधरं क्षणं विवृणोति क्षणं स्पृशति, क्षणं च तं निह्नुते। दर्पणे अधरमवलोकयन्त्यास्तस्या: सर्वं दिनं व्यत्येति।' गाथायां मुग्धा नायिका, विहारिणा तु प्रेमगर्विता निर्मिता। किन्त्वर्थ: स एवोपजीवित:।

**गेहिन्या माहानसकर्ममसीमलिनितेन हस्तेन।**

**स्पृष्टं मुखमुपहसति हि चन्द्रावस्थां गतं दयित:।।१/१३**

महानसे तन्मयतया प्रसक्ताया गृहिण्या मुखे पाकपात्रादिगता श्यामिका लग्ना। अत एव तदवस्थायामपि शोभमानं मुखं वीक्ष्य सानुरागहासं प्रिय आह- यदिदानीं सलाञ्छनस्य चन्द्रस्य दशां मुखं वास्तव एव गतमिति। गृहकार्यप्रसक्ताया: गृहिण्या: स्वाभाविकी शोभा। तत्रैव च प्रसाधनसाधनानपेक्ष: प्रियतमस्य स्वाभाविक: प्रेमहेतुकहर्षोत्कर्ष: सुभगतया चित्रितो गाथाकारेण। 'विहारी' तु प्रसाधनं कुर्वत्या: प्रेयस्या वर्णने इममर्थमुपजिजीव-

**'पिय तियसों हँसिकें कह्यौ लष्यौ डिठोना दीन।**

**चन्द्रमुखी मुखचन्द्र सों भलो चन्द्रसम कीन।।४९१'**

दृष्टिदोषनिवर्तकं कज्जललाञ्छनं दृष्ट्वा प्रियः सहासं प्रेयसीमाह– हे चन्द्रमुखि! त्वया (कज्जलरेखामाननैकदेशे कुर्वत्या) सकलङ्कश्चन्द्रो मुखस्य सम्यक् समानीकृतः! अथवा हे चन्द्रमुखि तव मुखं 'चन्द तें भलो' चन्द्रादप्यधिकं सुन्दरमासीत्। कज्जलबिन्दुरचयन्त्या तत्त्वया चन्द्रसमं कृतम्।'

मुखे श्यामिकासम्बन्धेन सकलङ्कस्य चन्द्रस्य समतासम्पादनवर्णना उभयत्रसमाना– परन्तु एकत्र श्यामिका गृहिणीत्वप्रयोजके गृहकार्ये लग्ना स्वाभाविकी वर्ण्यते। अपरत्र दृष्टिदोषनिवर्तनसंरम्भात् स्वयं स्वमुखसौन्दर्यं बहुमन्वानया शृङ्गारविधया रचितमित्युभ-योस्तारतम्यं मार्मिकैः परीक्ष्यम्। उभयत्र वर्णितः परिहासोऽपि कुत्राधिकं स्वारस्यमावहतीत्यपि सहृदयैरवगम्यम्।

चतुर्थीव्रते चन्द्रायार्घ्यदानावसरे नायिकामुखं दृष्ट्वा जनस्य चन्द्रभ्रान्तिर्भवतीति सविच्छित्ति वर्णितं गाथायाम्–

**हसितः प्रशंसता सखि चिरमावसथिकजनः पत्या।**

**विधुरिति तव किल वदने वितीर्णकुसुमाञ्जलिविलक्षः।।४/४६**

विहारिमहाभागोऽपि प्रकारान्तरेणाह–

**'तू रहि हौंही ससि लषौं चढि न अटा बलि बाल।**

**सब हि नु बिनुही ससि लषैं दैहैं अरघ अकाल।।'**

'त्वमिहैव तिष्ठ। अट्टालकं मा आरोह। अहमेव चन्द्रं वीक्ष्ये। सर्व एव जनो विनैव चन्द्रदर्शनमकाल एवार्घ्यं प्रदद्यात्।'

विहारिसूक्तौ 'दैहैं' इति सम्भावनैव। गाथायां तु चन्द्रबुद्ध्या अर्घ्यकुसुमाञ्जलिर्वितीर्ण एव।

प्रियनामग्रहणेन हर्षातिशयमालोक्य परिलक्षितवल्लभानुरागां लक्षितां वर्णयामास गाथा–

**वल्लभ एव स नहि यदि गोत्रग्रहणेन तस्य सखि किमिति।**

**भवति मुखं तव रविकरसम्भेदोद्भिन्नमिव नलिनम्।।४/४३**

विहार्यपि लक्षितां लक्षयति–

**'नाम सुनतही ह्वै गयो तन औरै मन और।**

**दबै नहीं चित चढि रह्यौ कहा चढाये त्यौर।।'**

'नामग्रहण एव देहे पुलकादि, मनसि चाञ्चल्यं चोदभूत्। इदानीं तव मनोवासी स नायको गोपयितुं न शक्यते। भ्रूभङ्गादिकृत्रिमकोपाभिनयेन किं भवति।'

एवमादिषु स्थलेषु गाथार्थोऽविकलमुपजीवितः श्रीमता विहारिणा। गाथासप्तशत्यां वर्णनीयो विषयः प्रायः प्रकृत्या यः किल लोके उपलभ्यते तादृश एव। प्राकृतिकशोभमयेषु ग्रामेषु यः किल जनानां परस्तरं स्वाभाविकः प्रणयपरीपाकः, स एव कविना काव्यसूक्तौ परिणमितः। क्षेत्रेषु नदीतटेषु लतागहनेषु वेतसवनेषु अकृत्रिमप्रणया रसिका विहरन्तीति सप्तशतीवर्ण्योऽयमग्रे प्रस्फुट एव भवेत्। किमिह विशेषपल्लवितेन। अत एव नायकयो रूपवर्णनमपि स्वाभाविकमेव। न तत्र कविः प्रायः प्रकृतिसीमानमतिक्रामति। यद्यत्र कश्चिदयितशयोऽपि वर्णनीयो भवेत्तदापि ध्वनिरूपेण तमभिव्यञ्जयति। यथा–

**तस्या अङ्गे प्रथमं यत्रैव हि यस्य निपतिता दृष्टिः।**

**तत्रैव तस्य मग्ना सर्वाङ्गं किल न केनचिद्दृष्टम्।।३/३४'**

सौन्दर्यसिन्धोस्तस्या एककैकाङ्गशोभादर्शने निश्चलनिलीना दृष्टिर्न सर्वाङ्गशोभादर्शने समर्थेति तात्पर्यम्। एवं च साकल्येन यदा द्रष्टुमेव जनेन न प्रभूयते तदा कथमिव तद्वक्तुं शक्येत, अत एवानिर्वचनीयं तस्या रूपमिति ध्वनितम्।

कस्याश्चिदतिशयोक्तेर्वाच्यरूपेणावतारणा गाथायामतिन्यूनैवावलोक्येत। नायिकाया वपुः कान्तिं सूचयितुं दीपशिखोपमापि दत्ता गाथायाम्, परमेकद्वस्थलेष्वेव। यथा–

**मा पुत्रि चौर्यसुरतश्रद्धाशीले! भ्रमान्धकारेऽस्मिन्।**

**दीपकशिखेव निबिडे तमसि निकामं निरीक्ष्यसे नूनम्।।५/१५'**

विहारी तु गाथासूचितमिदं सादृश्यं स्थाने स्थाने निबबन्ध– 'कहो दुराईं क्यों दुरै दीपसिखा सी देह।' 'पावक झरसी झमकिकें गई झरोखा झाँकि'। 'ज्यौं ज्यौं पावकलपट सी तिय हियसौ लपटाति।' 'जल चादरके दीपलों जगमगात तन जोति।' 'अङ्ग अङ्ग नग जगमगत दीपसिखा सी देह'। इत्यादि।

गाथायां यद्दीपशिखासाम्यं तन्न केवलं रूपातिशयवर्णनायैव, प्रत्युत दीपशिखा गोपितापि यथा प्रकाशते तथा तवाभिसारः सर्वैर्विदित इति सूचयन्त्या कयाचित्प्रौढया हितैषिताभावः 'पुत्री' तिसम्बोधनसहकारेणात्र ध्वन्यत इति जानीयुर्विमर्शकाः। अस्तु सत्यं त्वेतत्– यत् स्वतः सम्भवी एवार्थो गाथाकर्तुरभिप्रेतः। कविप्रौढोक्तिसिद्धो नात्र वर्ण्यत इति न मेऽभिप्रायः, परं तादृशोऽर्थः पूर्वस्यापेक्षयातितमां न्यूनविषय इति मर्मतो गाथातत्त्वालोचकानां स्पष्टम्।

व्रजभाषामहाकविना विहारिणा तु प्राक्तनसंस्कृतशैलीमुपजीव्य यदा ह्यात्मनः 'सतसई' समुपनिबद्धा, आसीत्तस्मिन्समये भारते मोगलमहीभृतां साम्रज्यम्। 'उर्दू' भाषा ह्येतस्मिन्काले राजाश्रयवशाल्लोकानामादरभूमिरभूत्। एतस्यां भाषायां च शैलीनाम् ('मुहाविरे')

यथार्थमनुसरणेन केवलं भाषागतमेव माधुर्यमनुभूयते। वर्ण्यविषयस्त्वतिसङ्क्षिप्तः। अत्युक्तिरवश्यं चमत्कारकरूपेण पदे पदे ह्युपनिबध्यते यया किल वर्णनीयविषये आकर्षकतोत्पद्यते। स्पष्टमिदमेतद्भाषाविदां तदालोचकानां च। अतो नेदमुदाहरणैः प्रपञ्चयितुं काम्यते। एतद्दर्शनाभिलाषुकैर्मत्कृतस्य 'साहित्यवैभवस्य' छन्दोवीथ्याम्, 'जयपुरवैभवस्य' भूमिकायां चैतदालोचना विस्तरतोऽवलोकयितुं शक्यते। अत्र त्विदमेव दर्शयितुमिष्यते यदेवंविधवातावरणस्य प्रभावं विहारिसूक्तिरपि नोल्लङ्घयितुमपारयत। अस्ति स्थाने स्थाने अत्युक्तिरूपेण वर्ण्यस्योत्क-र्षप्रदर्शनं विहारिसूक्तौ। विरहवर्णने यथा–

**'औंधाई सीसी सु लषि विरह बरी बिललात।**

**बीच हि सूखि गुलाब गौ छींटौ छुई न गात।।'**

'विरहसन्तापमवलोक्य शीतलीकरणार्थं सख्या यावदेव पाटलासलिलस्य (गुलाबजल) काचकूपिका आवर्जिता तावदेव सर्वमेव जलं परिशुष्य लुप्तमभूत् बिन्दुरपि तद्गात्रे नास्पृशत्।' अहो सन्तापः!!

**'सीरे जतननि सिसिर रितु, सहि बिरहिन-तन-ताप।**

**बसिवेकों ग्रीषमदिननि, पर्‌यो परोसिन पाप।।'**

'विरहिण्याः प्रतिवेशिन्या विरहजनितः शरीरोष्मा शीतर्तौर्निशि (न दिवसेऽपि) शरीरे हिमशिलास्थापनादिशैत्ययत्नैः कथञ्चित्प्रतिवेशिभिः सोढः। ग्रीष्मर्तौ तु तस्याः प्रतिवेशे निवासः प्रतिवेशिनां पापमिव परिहरणीयोऽभवत्।' इत्यादि

## दौर्बल्यम्

**'करी विरह ऐसी तऊ, गैल न छाँडत नीच।**

**दीनेहू चसमा चखनि, चाहै लखै न मीच।।'**

'मृत्युर्नेत्रयोरुपनेत्रं धृत्वा विरहतनुभूतां तां पश्यति परं न प्राप्नोति। एवंभूता सा नायिका विरहेण कृता। तथापि नीचः (विरहः) एतदनुसरणं न त्यजति।' पद्मसिंहः– 'तऊ न छाँडत गैल' इत्यस्य 'तथापि सा प्रेमपथं न त्यजति' इत्यर्थमाह। इत्यादि।

## शरीरसौकुमार्यम्

**'छाले परिबेके डरनि, सकत न हाथ छुवाइ।**

**झझकत हियै गुलाबके झमा झमावत पाइ।।'**

चरणौ प्रक्षालयन्ती परिचारिका कोमलौ तस्याश्चरणौ करेण न स्पृशति। कदाचन मत्करस्पर्शेन सुकुमार्या अस्याश्चरणयोः क्षतपिटका भवेयुः। पाटलाकुसुमसाहाय्येन शनैः-शनैश्चरणे प्रक्षालयन्त्या अपि तस्या हृदयं तत्कष्टशङ्कया बिभेति।

**'मै बरजी कइ बार तू इत कत लेत करौंट।**

**पखुरी लगैं गुलाबकी परिहैं अङ्ग खरौंट।।'**

मया कतिवारान् त्वं प्रतिषिद्धा यत् अस्यां कुसुमशय्यायामितः कथमिव पार्श्वपरिवर्तनं करोषि! पाटलाकुसुमपत्रिकायाः स्पर्शेऽपि तव गात्रे विलेखनजं क्षतं भविष्यति। इत्यादि।

## शरीरकान्तिः

**'सघनकुञ्ज घन घनतिमिर अधिक अँधेरी राति।**

**तऊ न दुरिहै स्याम वह दीप सिखासी जाति।।'**

'वर्षासमयः। तत्रापि कृष्णपक्षस्य रात्रिः। ततोऽपि घनघटा परित आच्छादिता। एतदुपर्यपि सङ्केतस्थलभूतः कुञ्जोऽतिघनतयाऽन्धकारिततमः। तथापि दीपशिखेव गच्छन्ती सा अलक्षिता न भवेत्।'

**'जुवति जोन्हमें मिलिगई नेकु न होति लखाइ।**

**सौन्धेके डोरैं लगी अली चली सँग जाइ।।'**

'गौरशरीरा नायिका ज्योत्स्नायां मिश्रिताऽभवत्। न किञ्चिदपि भेदः प्रतीयते स्म। तनुसुगन्धसूत्रेणैव सखी तामेतामनुगच्छति।' इत्यादि।

एवं सत्यपि स्वभाविकं वर्णनं विहारिसूक्तौ नोपलभ्यत इति न शक्यते वक्तुम्। दृश्यतां ग्रामवासिनीनां नारीणां प्राकृतं वर्णनम्।

**'गोरी गदकारी परै हँसत कपोलन गाड।**

**कैसी लसत गमारि यह सुनकिरवाकी आड।।'**

गौरवर्णा। स्वास्थ्यसूचकानि भरितान्यङ्गानि। हसन्त्यां यस्यां कपोलयोर्गर्तः पतति। स्वर्णकीटस्य (सपक्षकीटविशेषस्य) हरितं पक्षं भालबिन्दुस्थाने दधती सेयं ग्रामीणस्त्री कीदृशी शोभते।

**'पहुला हार हिये लसै, सनकी बैंदी भाल।**

**राखत खेत खरी खरी खरे उरोजन बाल।।'**

वन्यपुष्पाणां हारोवक्षसि। शणपुष्पस्य बिन्दुर्भाले विधृतः। उच्चकुचयुग्मा सेयं बाला तिष्ठन्ती क्षेत्ररक्षां करोति।

धूमपानस्यापि वर्णनमात्तं विहारिणा–

**'ओठ उचै हाँसीभरी दृग भौंहनकी चाल।**

**मो मन कहा न पीलियो पियत तमाखू लाल।।'**

तमाखूपानं कुर्वता प्रियेण ओष्ठमुन्नमय्य हसन्तीभ्यामिव दृग्भ्यां भ्रुवोर्भुग्नतया च किं मनो मे न पीतम्?

श्रीमदम्बिकादत्तव्यासकृतटिप्पण्यनुसारम्– 'पूर्वं तमाखू– गञ्जिकादीनां प्रचार आसीन्न वा। अथवा– 'तमाखुस्तमाखुस्तमाखुस्तमाखुः' इति भगवतो विरिञ्चेश्चतुर्भिर्मुखैः प्रशंसागीति–परमिदं पद्यं केवलं संस्कृतनिबद्धमेवास्ति, उत कस्मिंश्चित्प्राचीने काव्येऽप्युपलभ्यत इत्यादेः परस्परविवादस्य नावश्यकता। यदि 'पियत तमाखू लाल' इति सदुक्तिः श्रीमतां चेतोहरा तर्हि तस्या अपि विहारिकोषे न न्यूनतेत्येवात्र वक्तव्यम्।

गाथासप्तशत्यां यथा किल तिलक्षेत्राणि कार्पासकेदाराः शालिवप्राश्च कामिनोः सङ्केत–स्थलान्यावर्णितानि, एकस्य धान्यक्षेत्रस्य परिपाके सङ्केतभङ्गशङ्कया कामिनोर्विषादश्च यथोपनिबद्धः–

**'किं रोदिषि नतवदना शालिक्षेत्रेषु धवलितेष्वेषु।**

**हरितालमण्डितमुखी नटीव शणवाटिका जाता।।१/९**

तथैव विहारिणः सूक्तावपि प्रायोऽवलोक्यते–

**'सन सूख्यौ बीत्यौ बनौ उखौ लई उखारि।**

**हरी हरी अरहर अजौं धरि धरहरि हिय नारि।।**

शणोऽपि शुष्कः। कार्पास्यपि समाप्ता। इक्षुकृषिरप्युत्खाता। परमद्यापि (सङ्केतोपयोगि) आढकीक्षेत्रं हरितं वर्तते। हे सखि, हृदये धैर्यं धर।

## वर्णनीयो विषयः

प्राकृतभाषानिबद्धायास्तदेतस्याः सप्तशत्या वर्णनीयो विषयोऽपि प्राकृत एवेति विमर्शकानां विदितम्। एषा हि स्वतः सम्भविनमेवार्थं तथा माधुर्येणोपनिबध्नाति यथा स्वभाविकटघनानुबद्धं चेतः स्वतोऽस्यामेकान्तमवतिष्ठते। शृङ्गारप्रधानाया अप्यस्या वर्णनीया नायिकास्तादृश्यो न सन्ति दर्पणायितेषु यासामङ्गेषु भूषणानि प्रतिबिम्बैश्चतुर्गुणितानि भवेयुः[१]। न वा तथाविधाः सन्ति यासां गात्रेषु तनुद्युतिमिलितो मुक्ताहारः कर्पूरमणिमयो भवेत्, यस्य परीक्षायै प्रतिक्षणसन्निहिता सख्यपि तृणं स्पर्शयितुं परवशा भवति[१]। अत्र हि ग्रामवासिन्यो विलासिन्य एव शृङ्गारस्य नायिकाः। उन्मुक्तवातावरणे पोषिता हृष्टपुष्टाङ्गाः पल्लीवासिनो युवका एव तासां लक्ष्यम्। स्वभावरमणीया ग्रामस्य परिसरा एव तेषां प्रमोदस्थानानि। वेतसनि–कुञ्जाः पलालपुञ्जाश्चैषां विहारस्थलानि। हरितहरितानि निबिडसस्याच्छादितानि धान्य–क्षेत्राण्येवामीषामभिसारक्षेत्राणि। यथा–

---

१. 'अङ्ग अङ्ग प्रतिबिम्ब परि दर्पन से सब गात। दुहरे तिहरे चौहरे भूषन जाने जात।।' बिहारी,

**हृष्ट्वापि हरितदीर्घं प्रत्यूषे नातिखिद्यते हलिकः।**

**असतीरहस्यमार्गं तुषारधवले तिलक्षेत्रे।।७/८३**

अस्यां हि ग्रामवासिनां जीवनमानन्दमयं प्रतीयते। साम्प्रतमिव राजकरैः कृषकजीवनं दुःखभाराकुलं नासीत्तस्मिन्समये। प्रचुरवर्षिणा पर्जन्येन प्रकाममुदपाद्यन्त धान्यानि। धान्यपरित-गृहाः कृषकनिवहाः स्वैरमारमन्ति स्म तस्मिन्समये-

**निष्पन्नसस्यसम्पद् गायति शरदीह पामरः स्वैरम्।**

**दलितनवशालितण्डुलधवलमृगाङ्कासु रजनीषु।।७/८९**

तण्डुलारम्भकं सेचनजलं प्रदाय सुप्रसन्नः कृषको यदा हि शालिगुच्छकापूर्णं क्षेत्रमव-लोकयति स्म तदा पुत्रस्येव दर्शनेन स हि मनसि प्रासीदत्। अहो कीदृशी स्वाभाविकी च श्लेषवैदग्ध्यपूर्णा चोक्तिः-

**क्षीरैकपायिना दत्तजानुपतनेन पङ्कमलिनेन।**

**पुत्रेणेव हि शालिक्षेत्रेणानन्द्यते हलिकः।।६/६७**

कृषिसम्बन्धीनि कार्याण्यप्येषां भवन्ति, सहैव जीवने स्वाभाविक्यः प्रमोदचेष्टा अपि सञ्चलन्ति। स्त्रियः पुरुषाश्च कार्पासचयनाय क्षेत्रेषु सङ्गच्छन्ते। पारस्परिकव्यवहारादन्येऽपि कृषकाः कार्ये साहाय्यमापादयन्ति स्म। सुखदसूर्यातपाः शिशिरवासराः। रम्यो वनोद्देशः। उन्मादकसर्वसामग्रीपूर्णेऽस्मिन्समये समभवन्नेतेषु शृङ्गारचेष्टाः। हलिकपुत्रानुरक्ता वधूरनुभावैर-न्यासामभिलक्षणीया भवति-

**गृहपतिसुतोच्चितेष्वपि पश्यत कार्पासवृन्तेषु।**

**मोघं भ्रमति पुलकितो लग्नस्वेदाङ्गुलिः करो वध्वाः।।४/५९**

ग्रामवासिन्यो मधूकपुष्पावचयाय ग्रामपरिसरं प्रयान्ति। भवन्ति तासां सङ्केतकेलयोऽपि तत्रैव। यथा हि मधूकपादपापदेशेन प्रियमामन्त्रयते काचित्-

**बहुपुष्पभारनामितभूमीगतशाख शृणु हि विज्ञप्तिम्।**

**अयि विगलिष्यसि गोदातीरविकटकुञ्जमधुमधूक शनैः।।२/३**

ईर्ष्याकुलाश्च केचित्कृषका दयितामप्रेष्य स्वयमेव पुष्पाण्युच्चिन्वन्ति-

---

१. 'है कपूरमनिमय रही मिलि तनदुति मुकतालि।
छन छन खरी बिचच्छनौ लखति च्छाय तृन आलि।।' बिहारी-

**ईर्ष्यालुः पतिरस्या दत्ते निशि नो मधूकमुच्चेतुम्।**

**उच्चिनुते स्वयमेव हि मातर्ऋजुकस्वभावोऽयम्।।२/५९**

शालिगोपी शालिक्षेत्रे रममाणा शुकपतनशङ्काकुला मनोऽभीष्टं वल्लभमाह–

**पङ्क्तिं तरुकोटरतो निष्क्रान्तां पश्य पुंशुकानां हि।**

**शरदि द्रुमो ज्वरित इव सलोहितं पित्तमिव वमति।।६/६२**

आर्यासप्तशत्यामप्युक्तम्–

**पथिकासक्ता किञ्चिन्न वेद घनकलमगोपिता गोपी।**

**केलिकलाहुङ्कारैः कीरावलि मोघमपसरसि।।३/४६**

शालिपाके च सङ्केतभङ्गभिया सा विषीदति–

**दिवसे दिवसे शुष्यति सङ्केतकभङ्गवर्द्धिताशङ्का।**

**आपाण्डुरानतमुखी कलमेन समं कलमगोपी।।७/९१**

क्षेत्रे भोजनानेत्रीं दृष्ट्वा भावनामत्तो हालिको हलाद्बलदान्मोचयन् नाथमेव मुञ्चति–

**नवकर्मिपामरेण हि पश्य सपदि भक्तहारिकां वीक्ष्य।**

**योक्त्रप्रग्रहमात्रे मोच्येऽप्यवहासिनी मुक्ता।।७/९२**

वर्षासु कर्दमपूर्णे क्षेत्रे हलचालनश्रान्तः पामरो रात्रौ शेते, तत्पत्नी च मनोजाकुला खिद्यते–

**कर्दममग्नहलाग्रोत्कर्षणशिथिलेऽथ निद्रिते पत्यौ।**

**अप्राप्तमोहनसुखा घनसमयं पामरी शपते।।४/२४**

यस्मिन्दिने क्षेत्रकर्षणमारभ्यते स्म तद्दिने प्रथमं हलपूजाऽभवत्। सर्वेऽपि क्षेत्रेषु गच्छन्ति स्म। स्त्रियो हले आलेपनेन स्वस्तिकादि लिखन्ति। तस्मिन्नवसरे क्षेत्रान्तर्भाविनं प्रियसमागमं स्मरन्त्याः परसंसक्तायाः करौ कम्पेते–

**कार्पासवप्रकर्षणदिनमङ्गलमधिहलं प्रकुर्वत्याः।**

**हृदि धृतमनोरथायाः करावसत्या हि थरथरायेते।।२/६५**

नासीत्तासां सविधे साडम्बरा वेषभूषा। एता हि 'नवरङ्गकं' प्राप्यैव प्रसन्ना भवन्ति–

**हलिकस्नुषा हि लब्ध्वा नवनवरङ्गकमलभ्यलाभमिदम्।**

**पश्यत न माति बृहतीष्वपि तन्वी ग्रामरथ्यासु।।३/४१**

**नीतानि निबिड०।।४/२८**

**रतिरसलम्पटया०।।५/६१**

एतेषां प्रेम केवलमिन्द्रियलालसारब्धमेव नाभूत्। आसीदेतत्स्वाभाविकम्। दयिताविरहाकुलः पामरोऽपि प्रियाशून्यं गृहं न प्रविविक्षति–

**निष्कर्मणोऽपि शून्यात्क्षेत्राद्वसतिं न पामरो व्रजति।**
**मृतदयिताशून्यीकृतगृहदुःखं परिहरन् हन्त।।६९**

**जायाशून्ये भवने०।।४/७३**

निरुपाधिकप्रेमविषये कीदृङ् मधुरमुक्तं गाथाकारेण–

**विपिनात्तृणमथ विपिनात्पानीयं सर्वतः स्वयं ग्राह्यम्।**
**हरिणानां हरिणीनां तथापि च प्रेम मरणान्तम्।।३/८७**

गृहकार्यविलीनतया अशृङ्गारितापि हलिकसुता लोकानां मनोहारिणी–

**प्रेक्षन्तेऽनिमिषाक्षाः पथिका हलिकस्य पिष्टपाण्डुरिताम्।**
**तनयां दुग्धसमुद्रोत्तरत्सुलक्ष्मीमिव सतृष्णाः।४/८८**

**मुखनलिनच्छायायाम् ७/२४**

ग्रामनायकतनयो ग्रामयुवतीनां विलासलक्ष्यम्। स च जायानुरक्ततया नैतासामभिमुखो भवतीति तं प्रत्याक्रोशः– निष्कृप जीयाभीरुक०।।१/३०

एवं पूर्णयौवना हलिकवधूरपि ग्रामयुवकानां लक्ष्यं भवति–वृतिविवरनिर्गत.।।३/५७

अत्र केवलं ग्रामवासिनामेव स्वाभाविकः शृङ्गारो न वर्णितः प्रत्युत अरण्यवासिनां भिल्लानां किरातानां चापि नैसर्गिकी प्रणयचर्या चित्रिता। नागरिकचर्याभिमानिभिः साहित्य-निबन्धकारैः कैश्चित् शृङ्गाररसो नागराभिमानिषूत्तमपात्रेष्वेव स्वीकृतः, अन्यत्र त्वाभासरूप इति तृतीयशतकस्य अष्टत्रिंशत्तमार्या 'विक्रीणीते' इत्यादिगाथायां सरस्वतीकण्ठाभरण-मतमादर्शितं मया टीकायाम्। परं स्पष्टोऽयं प्रौढिवादः। सरलनिसर्गेषु ग्रामवासिषु यः किल पारस्परिकः स्वभावजः प्रणयबन्धो भवति स तावदनुचितः? यत्किञ्चित्प्रायमपि प्रेमलेशं कृत्रिमैराडम्बरैर्बहूकुर्वद्भिर्नागराभिमानिभिरेव किमीश्वरगृहादेतस्य स्वत्वमायत्तीकृतम्? अस्तु, अत्र वनेचराणां व्याधानामपि शृङ्गारः सुमधुरमाबध्यते। प्रियतममेकान्ततो वशीकृतवती व्याधवधूः प्रियप्रणयवञ्चितासु सपत्नीषु गजमुक्तालङ्कृतास्वपि मयूरपिच्छावतंसा भ्रमति–शिखिपिच्छकावतंसा.२/७३

तत्पतिः सततसुरतासक्ततया दुर्बलो भवति। अत एव दौर्बल्यवशादुराकर्षं धनुस्तक्षणेन तनूकरोति। एतत्किलात्मनः सौभाग्यं मन्वाना व्याधवधूर्मनस्यभिमन्यते–अद्य कतमोऽपि. २/१९

अत्रोपवर्णितो व्याधो न साधारणः। एष हि हेलयैव मत्तगजानां हन्ता। एतदधिष्ठिते वने वृक्षस्कन्धलग्नं गजमदमालोक्यैव तत्पत्नी निजपतिमरणमनुमिनोति– गज गण्डस्थल. ।।२/२१ अत्र पुलिन्द्यपि प्रियस्य सपत्नीसङ्गशङ्कयापि मानिनी भवति– मधुमक्षिकया. ७/३४

## प्राकृतदृश्यानि

अत्र हि स्थाने स्थाने प्राकृतदृश्यानां मनोहारि वर्णनम्– प्रोत्फुल्लघन. ७/३६, निरन्तरं या मेघधारा वर्षन्ति तासु रज्जूत्प्रेक्षां कृत्वा महीमुत्क्षेप्तुमप्रभवतः। अत एव शब्दं कुर्वतो जलदस्य कीदृङ् मनोहरं वर्णनम्– अविरलनिपत. ५/३६, विद्युतो यथा– खरपवन. ६/८३, ८४। मयूरनृत्यम्– ६/५९। मयूरस्तृणाग्रलग्नं वर्षाजलं कथमिवाचमतीति दृश्यतां स्वभाववर्णनम्– ४/९४। ग्रामे सायं भ्रमतां मशकानामपि कथमिव स्वभावश्चित्रितः– ६/६०। वर्षासु गिरिग्रामाणां शोभा.– ७/३६ वर्षासु क्षेत्रवृतेरुपरि ऊर्ध्वचञ्चवः काकाः कथं स्थिताः– ६/६३। अम्बरादवतरन्त्याः शुकपङ्क्त्याः कीदृङ् मनोहारि वर्णनम्– १/७५

शरदि मेघानां शोभा– ७/७९ कमलवनलक्ष्म्याः स्वाभाविकं वर्णनम्– ५/९५; ७/४, अलिपङ्क्तेः शोभा– ६/७४, रात्रौ कमलानामुपरि भ्रमराणां शोभा– ६/६१, शरदि जलानां स्वच्छता– ७/२२, सायमावासग्रहणाय वृक्षशिखरे तिष्ठतां पक्षिणां कीदृक् स्वभावचित्रणम्। उपरित उड्डीय ते प्रथमं लघुशाखाग्रे तिष्ठन्ति किन्तु यावत्तेषामग्रचरणमेव न स्थाप्यते ततः पूर्वमेव तेषां भरेण नमिते शाखाग्रे स्खलितचरणाग्रास्ते पक्षपुटं धुन्वन्तः कथञ्चित्संस्थानं लभन्त इति। मन्ये एवंविधं स्वभावचित्रणं सप्तस्वपि सप्तशतीषु नावलोक्येत किं पुनरेकद्वासु– भरनमित. ७/६०

## निर्माणदेशस्याभासः

इयं सप्तशती मध्येदेशे निरमीयतेति स्पष्टमेतदाभासः प्राप्यतेऽस्याम्। विन्ध्यस्य स्थाने-स्थाने वर्णनम्– १/७०, २/१५– १६, ६/७७, मध्यदेशवाहिन्या नर्मदाया अपि बहुशो वर्णनम्– अकृतज्ञ. ६/९९, गोदावर्या अपि प्राप्यते वर्णनम्– ४/५५,

अत्र ह्यार्याणामारम्भिकनिवासस्थले हिमाचलाञ्चल इव नातिमृदुर्ग्रीष्मः, किन्तु तिग्मः पतति। यथा मध्याह्नवर्णनम्– ६/५१, खिन्नस्य– ३/९९, अपराह्णस्नानस्य प्रशंसा– ५/७३,

## वस्त्रविशेषाणां सूचना

तस्मिन्काले अग्रे बन्धनीयां कञ्चुलिकाम् ('पीठचोली' व्रजप्रान्ते) स्त्रियो धारयन्ति स्मेत्यत्र सूच्यते। तस्यां हि स्तनयोः सन्धिबन्धस्थले द्व्यङ्गुलपरिमितमञ्चलम् ('मगजी' 'गोट') च संयोज्यते। तस्य हि नाम 'कपाटकम्'। यथा– द्व्यङ्गुलक.– ७/२०

अधुनापि मध्यदेशे तादृश्येव स्त्रीणां कञ्चुलिका प्रचलति। एषा हि 'खण'निर्मिता भवति, यत्र हि द्व्यङ्गुलमञ्चलम् ('कोर') वानकालिकमेव भवति। प्रायश्च नीलवर्णामधिकतयाभिरोचयन्तीत्यहो मध्यदेशीयानां प्राक्तनाचारपालनपाटवम्!

## वस्तूनां नामानि

तत्कालप्रचलितानि कानिचन वस्तूनां नामान्यपि चेतः प्रमोदयन्ति। यथा उपरितने पद्ये 'बानगी' पर्यायकं 'वर्णिका' पदम्। 'वस्तुपरीक्षार्थं यद्वस्त्वेकदेशप्रदर्शनं तद्वर्णिकेत्युच्यते' इति गङ्गाधरटीका। गुडनिर्माणाय इक्षुनिष्पीडकं 'यन्त्रम्' अपि विनियुज्यते स्म यान्त्रिकगुडम्. ६/५४, क्षेत्रसेचनार्थम् 'अरहट्ट'स्य प्रयोगः प्राप्यते- रिक्ता. ५/९०, हलादिचालनकाले बलीवर्द्दानां गले बन्धनीयश्चर्मपट्टः ('जोत' इति साम्प्रतं ख्यातः) 'योक्त्रम्' इति, नासारज्जुश्च ('नाथ') 'अवहासिनी'ति व्यपदिश्यते स्म ७/९२,

एवं 'त्रपुसी' ['तेवरसी' खीरा] ६/३४, 'तुवरी' ('अरहर') ४/५८, एकवृन्तगतं बदरयुगलम् 'बदरसङ्घाटी' ५/१९, कपिकच्छूः 'कोंछ' ६/३२, हालाहलः 'बहमनिया' १/६२, छल्ली 'छाल' २/१५, शारी ('सार' 'गोट') २/३८, दुर्मोच्यो ग्रन्थिः ('फंदा') दुर्दोली २/४९, इत्यादीन्यपि नामानि प्राप्यन्ते।

## व्रतविशेषाणां नामानि

प्राक्प्रचलितानां तपः सूचकानां केषाञ्चन व्रतविशेषाणामपि नामान्युपलभ्यन्ते- यथा श्यामशबलाख्यो यत्र वह्नौ प्रविश्य जले प्रविश्यते-२/८५, अग्निपानीयाख्यः ३/११, चतुर्थ्यादि-व्रतेषु चन्द्रायार्घ्यदानमपि वर्ण्यते- हसितः प्रशंसता. ४/४६, व्रजभाषाकविर्विहारी अप्याह-

**'तू रहि, हौं ही सखि लखौं, चढि न अटा बलि बाल।**
**सब हि नु बिन ही ससि लषैं, दैहैं अरघ अकाल।।'**

## उत्सवाः

होलिकामहोत्सवस्य साम्प्रतं प्रचलितः प्रकारस्तदुपकरणसम्भारश्च प्रागप्युपलभ्यते। अत्र हि रङ्गजलस्य वर्णचूर्णस्य ('गुलाल') च प्रक्षेपो वर्ण्यते- घेत्तूण. ४/१२,

संस्कृतग्रन्थेषु होलामहोत्सवे रङ्गप्रक्षेपादेर्वर्णनं न्यूनमेवोपलभ्यते। रत्नावल्यां श्रीहर्षेण 'पिष्टातक' प्रक्षेपादेरवश्यं वर्णनमुपनिबद्धम्-

**'कीर्णैः पिष्टातकौघैः कृतदिवसमुखैः कुङ्कुमक्षोदगौरैः**
**हेमालङ्कारभाभिर्भरनमितशिरः शेखरैः कैङ्किरातैः।**
**एषा वेषाभिलक्ष्यस्वविभवविजिताशेषवित्तेशकोषा**
**कौशाम्भी शातकुम्भद्रवखचितजनैवैकपीता विभाति।।'**

'पेक्ख दाव इमस्स महुमत्तकामिणीजणअंगाहगहिदसिंगकजलप्पहारणच्चन्तणा-अरजणजणिदकौदूहलस्स समन्तदो सुव्वत्तमद्दलुद्दामचच्चरीसद्दमुहररत्थामुहसोहिणो पइण्णपडवा-सपुञ्जपिञ्जरिज्जन्तदिसामुहस्स सिरिअं मअणमहुस्सवस्स[1]'।

अस्योत्सवा पूर्वं 'मदनः' 'मदनोत्सवः' इति वा प्रसिद्धिरासीत्। दक्षिणाञ्चलेऽद्यापि होलोत्सवस्य मदनोत्सवनाम्ना ख्यातिः। अस्मिन्निरर्गलः शृङ्गारः पूर्वमपि प्राचलत्। मादकसेवनं कुसुम्भरञ्जितवस्त्राणां धारणं च साम्प्रतमिव तदाप्युत्सवाङ्गं पर्यगण्यतदयितकर.।।६/४४, ४५।।

फाल्गुनोत्सवे मिथः कर्दमप्रक्षेपस्य सप्तशतीकालेऽपि रीतिरासीदित्युपलभ्यते– फाल्गुनमहनिर्दोष. ४/६९

अन्येषां क्रीडाविशेषाणामपि सप्तशत्यां सूचनं प्राप्यते। यथा उत्तानशयितस्य जनस्य चरणोपर्युपविष्टानां बालानां पतनोत्पतनात्मिका क्रीडा 'उत्फुल्लिका'–उत्फुल्लिकया. २/९६,

चूतलतिकानाम्नी युवक्रीडा, यत्र हि नवलतिकाभिर्हत्वा प्रियस्य नाम पृच्छ्यते– नवलतिका. १/२८,

## आचारविशेषाः

प्रथमप्रथमं वरसङ्गमे 'आनन्दपटः' [लग्नलोहितं वधूवस्त्रम्] वरसम्बन्धिनीभिर्महिलाभिर्लोकेषु प्रदर्श्यत इत्याचारस्य सूचनं प्राप्यते– कृत्रिममानन्द.।।५/५७,

राजपुत्रेषु सम्प्रतमपि सोऽयमाचारः प्रचरति। गङ्गाधरस्तु 'आनन्दपटः प्रथमपुष्पवतीवस्त्रम्। प्रथमरजोदर्शने जाते तद्वस्त्रं बन्धुभिर्लोकेषु प्रदर्श्यत इति देशविशेषे आचारः। जारसम्बन्धदृष्टशोणिताया अस्थानं सम्भ्रमदर्शनेन जारस्य हास इति बोध्यम्' इत्याह। रजोदर्शने जारसम्बन्धस्य कः स्वरस इति मार्मिकैर्विचार्यम्।

रजोदर्शने हरिद्रामिश्रघृतेन (वर्णघृतेन) लिप्तमुख्या पुष्पवत्या स्थीयत इत्याचारसूचनं यथा– आदरनमिता. १/२२

ऋतुस्नाते हरिद्रोद्वर्तनं क्रियते। यथा– स्नानहरिद्रा. १/८०, सन्ततेर्दन्तजननपर्यन्तं स्त्रीष्वरमणं यथा– गृह्णीत पश्य. २/१००,

उत्सवावसरे गृहनारीभिः प्रतिगृहं सम्बन्धिभ्यो वायनकानि [जयपुरे 'लाहिणा'] दीयन्ते– नीतानि निबिड. ४/२८, नवभोगिनी. ७/३,

विवाहोत्तरं चतुर्दिनानि श्वशुरगृह एव जामाता निवसति। चतुर्थे दिने चतुर्थीमङ्गलम् [होमादिकम्] सम्पाद्य स्वगृहं गच्छतीति व्यवहारो यथा– उपगत ७/४४,

कृष्णसारमृगो दक्षिणाद्वामं गच्छन्नशुभ इति शकुनविचारो यथा– एकोऽपि कृष्णसारो १/२५,

---

१. 'प्रेक्षस्व तावत् अस्य मधुमत्तकामिनीजनस्वयंग्राहगृहीतशृङ्गकजलप्रहारनृत्यन्नागरजनजनितकौतूहलस्य समन्ततः सुवृत्तमर्दलोद्दामचर्चरीशब्दमुखररथ्यामुखशोभिनः प्रकीर्णपटवासपुञ्जपिञ्जरायमाणदिशामुखस्य श्रियं मदनमहोत्सवस्य।'

अस्वस्थतायां सम्बन्धिनः स्वास्थ्यप्रश्नाय रोगिणो गृहं गच्छन्ति। यथा- सुखपृच्छक. १/५०, सुखपृच्छिका. ४/१७,

आसीत्पूर्वं ग्रामेषु पर्णकाष्ठाद्याच्छादितेषु गृहेषु वासः। अत एव दुर्दैवादग्निकोपे जाते तन्निर्वापणाय दूरदूरज्जना आहूयन्ते स्म। तत्सूचनार्थं डिण्डिमस्ताड्यते स्म- उत्पथधावित. ६/३५,

सप्तशतीनिर्माणकाले सतीदाहप्रथा साधारणतया प्रचलितासीदिति सूच्यते- अनुमरण. ७/३३, निर्वाप्यते हि. ५/७ ग्रामण्यः ५/४९,

पूर्वं ह्यपराधेषु घोरतमा दण्डाः प्रदीयन्ते स्म। श्मशानपादपे लम्बयित्वा चौराय उद्बन्धनेन प्राणदण्डः प्रादीयत- नोल्लापयमाने. ६/३६, शूलारोपणप्रथाया अपि सूचना यथा- धाराविधौत. ६/६३,

यः किल प्राणदण्डार्थं वधस्थाने नीयते स्म तदग्रे दोषघोषणार्थं पटहस्ताड्यते स्म- तेन विना बत. १/२९। मुद्राराक्षसेऽपि स्थाने स्थाने एतत्प्रथायाः सूचना प्राप्यते।

गृहवाटिकायां लोकाः प्रायशोऽङ्कोटवृक्षमवश्यं रोपयन्ति स्म- मदयति. ५/९७, गर्भिणीं प्रति दोहदप्रश्नस्य प्रथा यथा- किं किं नु. १/१५,। दुर्गतगेहे. ५/७२,

पूर्वं हि शौर्यपूर्वकमपहरणेन चौर्येण च बन्दीकृत्य नार्यो नीयन्ते स्म। एतद्बन्दीकरणम-पहर्तुः पक्षे यथा शौर्यचिह्नं पर्यगण्यत, तथैव शौर्यप्रदर्शनपूर्वकं तन्मोचनं तद्भर्तुरपि वीरताख्यात-येऽभूत्। वीरताभिमानिनो रावणस्य सुराङ्गनाबन्दीकरणात्परितोषो माघादावपि वर्णितः-

'अभीक्ष्णमुष्णैरपि तस्य सोष्मणः सुरेन्द्रबन्दीश्वसितानिलैर्यथा' १/६५

अत्रापि बन्दीकृतनारीणां भर्तृशौर्योपर्यभिमानः सबहुमानमाविष्कृतः-

वज्रपतना. १/५४, ५७। बन्द्या प्रवीर. २/१८, नो बन्दि. ६/२७,

शत्रुनारीणां बलाद्बन्दीकृत्यापहरणमस्मिन्समयेऽपि कविभिः शौर्यप्रख्यापकमगण्यत। 'टोंक' राज्याधिपतीनां पूर्वपुरुषो मीरखाँनामको यदा हि जयपुरराज्यमाचक्राम तदा जयपुरराज्येन प्रहितो 'लदाना' स्थानाधिपतिर्भारतसिंहो मीरखानं पराजित्य तन्नारीर्बन्दीकृत्यानिनाय। एतस्य वर्णनमस्मत्पूर्वजैः श्रीमण्डनकवीन्द्रैः कृते 'भारतचरित्र' नामके व्रजभाषाकाव्ये सुमनोहरमुप-लभ्यते। तस्यैकं पद्यमधस्ताद्दीयते-

**'मदनके बेटे तैनें मार पठनेटे सबै**
**घेरी ता समैंमें भई देह जिन जुरमें**
**मुख महताब औ गुलाब सम आव दिपै**
**नैंन धोय सुरमें बह्यौ है नीर उरमें।**

**हीरा पुखराज लाल मोतिनसों छांई रहैं**

**मण्डन अनेकविध खाती खान खुरमें**

**बात यह बाँकी चहुं चक्कनमें छाय गई**

**ल्यायकें किलामें धरीं मीरखाँ की हुरमें।।'**

सप्तशतीसमये खण्डखण्डराज्यानां प्रायशः सूचना प्राप्यते। शासनविषये तत्तद्ग्रामाधिपतीनां पूर्णं स्वातन्त्र्यमासीत्। यथा-प्रहरवनमार्ग. १/३१, चिन्तयति. ७/२८, ३१. प्रजानामुपरि राज्ञः पर्याप्त आतङ्कोऽभवत्। राजविरुद्धं यत्किञ्चिदपि कथयन् जनो राजतो निग्रहस्य पूर्णं भयमाशङ्कते स्मेति वर्तमानशासनतन्त्रस्य छाया तदाप्यन्ववर्ततेव। आह गाथा-पथिकः पथिकस्य ४/९६

## स्वाभाविकः शृङ्गारः

सेयं सप्तशती शृङ्गारप्रधानेति ग्रन्थसङ्ग्राहकेणैवारम्भे प्रोक्तम्। एतस्या निर्मापकः श्रीमान् सातवाहनो नवयौवनोज्जृम्भितः शृङ्गारविषयकाणि काव्यान्येवाभिरोचयामास, अथवा तस्मिन् काले समाजस्य रुचिरेव तादृशी बभूव। अत एवात्र शृङ्गाररस एवाङ्गी। परं सोऽयं प्रतिदिनव्यवहारे हृदयान्तस्तलेन मार्मिकैरनुभूयते तादृश एव, न केवलं कविप्रसूत इति तत्त्वतः प्रवृत्ता जानन्त्येव कोविदाः। इह काचिद्वर्णिका प्रकाश्यते। विस्तरभयात्तेषामङ्काः प्रदीयन्ते। ग्रन्थान्तस्ते विलोकनीयाः-

प्रथमशतके- ५, ११, २०, ४४। द्वितीये २३। तृतीये- २६। चतुर्थे ५, २४, ३३, ६८, ७३, १००। पञ्चमे- ७३, ७९, ९८। षष्ठे- १३, १५, ६४, ७६, ८६। सप्तमे- ४५, ४७, ९३, ९७, ९९।

मासप्रसूतादीनां रतिविषये पूर्वरसिकानामनुभवमाह-मासकसूताम्. ३/५९। मालाकारी बहोः कालादेव रसिकानां साभिलाषवीक्षणपात्रमासीदित्यप्यस्यां सूच्यते-युवहृदयानि.- ६/९६, ९८।

## विप्रलम्भः

'विरहिण्यास्तापोद्गारान्माघमासस्य रात्रौ सर्वस्मिन्नपि ग्रामे अग्निमय्यो वात्याः प्रवहन्ति[१]' एवंविधं वर्णनमन्यस्यामपि सप्तशत्यां शक्येत विलोकयितुम्, यस्य किञ्चित्परिचयः पूर्वमपि दत्तः। अवश्यमेतेषु कविकल्पनासौष्ठवं पूर्णमात्रायाम्। परं ये किल काव्यं 'जीवनस्य व्याख्याम् मन्यन्ते ते हि नैसर्गिकं वर्णनमेव बहु मन्यन्ते। दृश्यतां गाथाकार आह- वाष्पसलिल. २/८५। अतिकोपापि. ५/९३। पथिकवधू. ६/४०। आश्वासयति ३/८३ तस्या हृदये २/५३। एकैक. ३/२०। रक्षति पुत्रं. ७/२१

२/८५ गाथायामाह- तव विरहे तथा सन्तापो यथा तस्या अधरो वह्निप्रवेशमेवानुभवति। एवं विरहकृतदाहे त्वदनुध्यानजन्यस्तथा वाष्प्रवाहो भवति तथा यदधरो जलमग्नमेवात्मानं मन्यते, इति श्यामशबलव्रतस्य साङ्गता सम्पादिता। व्रतं साधयतीत्यनेन-सर्वमन्यत्प्रत्य-

वायजनकमिव अवहेल्य 'केनचिदुपायेन तं लभेय' इति साधनाचरमफलरूपं भवन्तमेव मन्यत इति नायकं प्रत्यनुरागातिशयः सर्ववस्तुषु निर्वेदश्च सूचितः। दृश्यताम्, अत्र केवलं सन्ताप एव नाधिकीकृतः किन्तु तेन सह विप्रलम्भस्य जीवभूतो रतिस्थायिभावोऽपि ध्वन्यात्मना परमं पोषितः।

विहारिमहाभागस्य विरहवर्णने तु सन्तापस्य दौर्बल्यस्य वा वाच्य एवातिशयोऽत्युक्ति-रूपेण रसिकाँश्चमत्करोति। वर्तमानोऽपि व्यङ्ग्योऽर्थो वाच्याया अतिशयोक्तेरग्रे आत्मानमवकुञ्च्य मादीभवतीति स्थाने स्थाने मार्मिकैः समीक्ष्यम्। गाथायास्तु स्वभावत एव सेयं सरणिर्यत् साधनीयमर्थं व्यङ्ग्यविधयैव सूचयतीत्यास्तां विस्तरो मार्मिकेषु।

## देववर्णने शृङ्गारः

ग्रन्थसङ्ग्राहकेण 'अमिअं पाउअकव्वम्' इति प्रतिज्ञानुरोधाद्देवानां वर्णनेऽपि शृङ्गार एवाङ्गीकृतः। अत्र हि चराचरनायको भगवान् भूतपतिरपि कर्ममार्गमनुरुन्धान इव सन्ध्यामुपास्ते। तन्मध्यत एव भगवत्युमाप्यन्तरीभवति। इयत्सन्निहिता भवति यदर्घ्याञ्जलौ तत्प्रतिबिम्बोऽ-प्यापतति। तदासक्तश्च भगवान्मन्त्रादिकमपि विस्मरति। इमां शैलीं गोवर्द्धनोऽप्यनुससार। आह स्म सः–

**सन्ध्यासलिलाञ्जलिमपि कङ्कणफणिपीयमानमविजानन्।**
**गौरीमुखार्पितमना विजयाहसितः शिवो जयति।।६।।**

गाथायां ग्रन्थान्तर्वर्णनीयस्य विषयस्य ध्वनिरूपेण सूचनार्थं भगवान्, शङ्करोऽपि पार्वत्या एकान्तमनुगतश्चित्रितः। स हि जन्मतोऽभ्यस्तं परमप्रियं फणिकङ्कणमपि पार्वतीभयशङ्कया परिहरति– पार्वत्याः १/६९

इतोऽग्रे संस्कृतकवयस्तु शनैः शनैस्तथाग्रेसरा अभवन् यद्देवानां रतिवर्णनमप्यारभन्त। सत्यमिदमनपलपनीयमेव, यत्केचन कवयः शृङ्गारे तथाऽभिमत्ता भवन्ति यदेतेषां विषयपरि-ज्ञानायाप्यवसरो न भवति। यान् देवानेते विघ्नविघाताय स्तोतुमारभन्ते तेषामपि सुरतमेव चित्रयन्तः प्रचलन्ति। ये किल साहित्यनिबन्धकारमूर्द्धन्यास्तदेतद्वर्णनम् 'पित्रोः सम्भोगवर्णनमिवात्यन्त-मनुचितं मन्यन्ते' तेऽपि स्वस्याकरग्रन्थेष्वेवोदाहरणविधया तादृशमेव वर्णनं प्रसह्य शिक्षयन्ति। काव्यप्रकाशे (५ उल्लासे) शेषोपरि लक्ष्मीनारायणयोः सम्भोगः स्फुटमेवोदाहरणविधयोपात्तः–

**विपरीअरए लच्छी बम्हं दट्ठूण णाहिकमलट्ठम्।**
**हरिणो दाहिणअणं रसाउला झत्ति ढक्केइ।।**

---

१. सुनत पथिकमुँह माहनिसि, लुएं चलति उहि गाम।
बिन बूझें बिनुही सुनै, जियत विचारी बाम।।'विहारी' सं. गाथा. ६

शिवपार्वत्योर्यथा– चतुर्थोल्लासे रइकेलिहिअ. (गाथा ५/५५)

शृङ्गरोत्तरसत्प्रमेयरचने अप्रतिद्वन्द्वः श्रीमान् गोवर्द्धनमहाभागस्तु न जाने आरम्भादन्त-पर्यन्तं कियद्वारान् देवानां सुरतं पुरुषायितादिनानाप्रकारैरतिप्रेमपूर्वकं वर्णयति। एष हि महाभागो भगवतीं जगन्मातरं श्रियमपि रागान्धां व्यपदिशति, यतो ह्यनया सुरतरसान्धतया अहिगरुडादय-स्तिर्यञ्च एव किं सर्वजगतः पितामहोऽपि सम्मुखस्थितो न परिगणितः। प्रत्युत स वराको हाराभिघातैर्भृशमभ्यर्चितः–

**तल्पीकृताहिरगणितगरुडो हाराभिहतविधिर्जयति।**
**फणशतपीतश्वासो रागान्धायाः श्रियः केलिः।।२४।।**

गाथाकारस्तु गोवर्द्धनपद्धत्या देवतानां स्तव एव सर्वं शृङ्गारसत्प्रमेयरचनाचातुर्यं न परिशेषयति। एवंविधा एकमात्रा गाथा सम्पूर्णायामपि सप्तशत्यामुपलभ्यते, या हि ध्वन्यर्थ-सूचनेयऽप्रतिद्वन्द्वा काव्यप्रकाशेऽप्युदाहृता 'रतिकेलि. ५/५५'। अन्यैर्वर्णनैः सह तुलयन्त्वस्या अपि तारतम्यं तीक्ष्णमतयः सूरयः।

## घोरः शृङ्गारः

प्राकृतभाषायाः शृङ्गारनिर्भरतामापादयितुं तत्कवयः प्रायः शृङ्गारं निर्मर्यादमावर्णयन्ति, येन घोरशृङ्गारप्रेमिणस्तत्राधिकमासज्यन्ति। अत्रापि स समयो निर्वाहित एव। पुष्पवत्या सह प्रणयचर्चा उक्तैव, यस्याः परिचयः पूर्वं दत्तः। रसिकम्मन्यास्तावत्पर्यन्तमप्यन्धा भवन्ति यत्कुमारीमपि न परिहरन्ति। 'आनन्दपट' वर्णने सोऽपचारोऽपि पूर्वं सूचितः। 'दीर्घरमणार्थं नायकमन्यमनस्कं करोति' इत्यादि तु कदाचिदवतरणसौकर्यार्थं टीकाकारैरेव कल्पितं भवेत्, परमनेन तत्समये शृङ्गारसाम्राज्यमवश्यमनुमितं भवति। कामशास्त्रप्रोक्तबन्ध- नखक्षतादिवर्णनं तु शृङ्गारकाव्यानां शोभैव। अत्रापि तेषां स्थाने स्थाने चर्चा। विपरीतबन्धस्य १/५२, ४/९१, ५/८३, ७/१४, आदिषु गाथासु वर्णनम्।

वेश्यानामपि रसिकसमाजे पूर्णः प्रवेश आसीदित्यनया सूच्यते। तासां प्रेमाणः प्रशस्यन्तेऽथ यथा– नन्दन्तु सुरत. २/५६

वात्स्यायनकामसूत्रेषु गणिकानां भूरितमं गौरवमावर्णितं यत्ताः परमविदुष्यश्चतुः-षष्टिकलानिष्णाता राजनीत्यां परमपडिताश्च समभवन्। अत एव राजानो बहुतरधनदानादिना ताः सम्मान्य राजनीतिसाध्यानि निजकार्याणि सम्पादयन्ति स्म। न ताः केवलं भोगसाधनमेव, प्रत्युत परमविदग्धास्ता राष्ट्राणामुत्थानपतनयोरपि परम्परयोपकरणं बभूवुः। अत एव मन्ये 'वाराङ्गना राजसभाप्रवेशः' इत्यादिको नीत्यनुमतस्तत्स्तुतिवादः प्रचलितोऽस्ति। अस्तु अत्र तद्विधा उन्नतप्रतिभा गणिकास्तु न सन्ति परं स्वस्य कलापाण्डित्यं बहुतरमभिमन्यमानास्तादृश्यः सन्ति या अन्यामाद्रियमाणां गुणवती स्वस्याग्रे निरक्षरां मन्यन्ते, यथा– वर्णानप्यविदन्तो. २/९१

स्त्रियो नानाकपटैः पत्युर्दृष्टितो जारं गोपयन्ति स्मेत्यस्य परिचयः पूर्वं दत्तः। एवं स्फुटशृङ्गारवर्णनासमयो गाथाकारेणापि प्रायो निर्वाहित एव। परमेवं सत्यपि पातिव्रत्यस्याप्यादर्शः

सामान्यो न। गाथावर्णिता पतिव्रता प्रोषितपतिकाया दीनाया: स्वप्रतिवेशिन्या: 'मन्मण्डनदर्शनेन चरित्रखण्डनं मा भूदिति' विचारेण स्वयमपि उत्सवादिष्वपि मण्डनादिषु सङ्कुचति- स्वाधीनेऽपि. १/३९

धनवतां निजबान्धवानामप्युहारादिकं दीनस्य पत्युराभिजात्यरक्षार्थमवहेलयति-छायां सुदुर्गतस्य. १/३८

## ज्यौतिषविषय:

ज्योतिर्वित्प्रसिद्धो ग्रहगतिसाधनप्रकारोऽपि मनोहरं वर्णितो गाथाकारेण। सूर्यादीनां गतिसाधनार्थं कठिनीरेखामाकृष्य ज्योतिर्विद् गणितं करोतीत्याह गाथा-

कुत्र गतं रविबिम्बम्.- ५/३५

धान्यादिराशेर्मानं यथा- मा प्रतिपक्ष. २/५२

## वैद्यकपरिचय:

शारदज्वरे पित्तस्य वमनं तेन सह रक्तमपि नि:सरतीत्याह- पश्यत. ६/६२

## नीति:

नीतिविषयिका: सूक्तयोऽपि सरसतमा: समासाद्यन्ते। यथा- प्रथमशतके- ८३, द्वितीयशतके- १३, ३५, ३६, ८६। तृतीयशतके- ५०, ५३, चतुर्थे- १९, २०, २१, पञ्चमे- २४। षष्ठे- १२, ४१। सप्तमे- ९५।

## श्लेषचमत्कार:

स्थाने स्थाने, विदग्धाभिनन्दनीय: श्लेषोऽपि चमत्करोति चेत:। यथा- ६/६८, ७/ ५७, ७/६५। सोऽयं श्लेष: संस्कृते निर्वाहयितुमसम्भव एव बहुषु स्थलेष्वभवत्। यथा 'गोरअम्' इत्यस्य प्राकृते 'गौरवम्' 'गोरज:' इत्युभयमप्यर्थो भवेत्कथमयं संस्कृते सम्भवेत्? यथा १/ ८९, २/३४, ४/११।

## टीका

सेयं गाथासप्तशती आमूलचूडं ध्वन्यर्थबहुलेति निवेदितमेव। अत एवात्र केवलं श्लोकयोजनमात्रेण न टीकानां कर्तव्यं पूरितं भवति। पूर्वमुद्रिता गङ्गाधरभट्टकृता टीका यद्यपि सुमनोहराक्षरगुम्फिता तथापि ध्वन्यर्थान्बहुत्र न सूचयत्यपि। अत्र हि प्रत्येकपदस्य यावद्व्यङ्ग्यार्थो न सूच्यते तावन्न गाथाया महत्त्वमवभासितं भवति। गङ्गाधरस्तु दुर्बोधस्थलेषु सङ्क्षिप्तां टिप्पणीमिव वाच्यार्थस्य करोति। कुत्रचित्तु तद्विषयेऽपि मौनव्रतमवलम्बते। तस्य किञ्चिन्मात्रं निदर्शनमुपस्थापयामि। सप्तमे-

**सुन्दर यदि कौतुकितोऽसि सकलतिथिचन्द्रदर्शनसुखानाम्।**
**तन्मोच्यमानकञ्चुकमीक्षस्व मुखं मसृणमस्याः।।७२।।**

अत्र हि 'सखायं प्रति सख्युक्तिः। दूत्या वा नायकं प्रत्युक्तिः' एतावन्मात्रीं कृपां कृत्वा पलायितवानग्रे गङ्गाधरः। अत्र को वा चमत्कार इति परीक्षारूपेण बहवो मार्मिका अपि पृष्टा आसन्परं न तेऽपि सहसा वक्तुं प्राभवन्। एवं स्थितौ कियत्यावश्यकता टीकाया इति प्रतीतं भवेत्। अस्यां हि परस्पराश्लिष्टोर्ध्वीकृतमण्डलायितबाहुलतिकं प्रतिलोमक्रमेण कञ्चुकावतारणकाले नायिकाया मुखशोभा सुमधुरमावर्तिता। अत एव कञ्चुकावरणस्य शनैः शनैरपगमे प्रतिपदादिसकलतिथिषूदितस्य चन्द्रस्य क्रमात्सादृश्यं भवतीति सकलतिथिचन्द्र-सदृशत्वं मुखे विचित्रमास्थापितं गाथया। नैतादृशी कल्पना अन्यत्रावलोक्येत। यावदहं स्मरामि सोऽयमर्थो रामभद्रदीक्षितेनाप्युपनिबद्धः, परमित एवोपजीवितः सः। नायं गाथया अपहृतः, प्राचीनत्वात्तस्याः। अस्तु एवंस्थलेऽपि टीकाया मूकता रोचेत कस्मैचित्?

कुत्रचित्स्वयं टीकापि भ्रान्ता भवति। नवकर्मिपामरेण. ७/९२ इति गाथायां हलवाहने लग्नः पामरो भक्तहारिणीं दृष्ट्वा क्षुभितचित्ततया योक्त्रस्य 'जोत' इति ख्यातस्य वृषकण्ठावसक्तस्य चर्मपट्टस्य प्रग्रहमात्रे बन्धमात्रे मोक्तव्येऽपि नासारज्जुं मुञ्चतीत्युच्यते। टीकाकृदाह- योक्त्ररूपे प्रग्रहे इति। छायापि भ्रामिका। अत एव सन्देहचिह्नाङ्किता छाया द्विर्मुद्रणीयाऽभवत्।

आपृच्छन्ति. ७/८० इति गाथायां 'खडिएहिं' खंडिएहिं' इति भ्रामकमात्रे पाठद्वये 'खड्गिकैः' इति छाया क्लृप्ता। न च टीकायां तत्सङ्गतिः कृता। इह हि 'खटिक' इति पाठो वास्तवः। स च पशुहिंसकार्थं सङ्गमयन्प्राकृतकोशेष्वप्युपलभ्यते, किन्तु टीकाकृदत्रापि मौनी। यद्वदति तदपि मूलान्न सङ्गच्छते।

बधिरान्धाः किल. ७/९५ गाथायां 'मूइल्लओ' इत्यस्य 'मूलकः' इत्यर्थः कृतो यः किल मार्मिकमपि विद्वांसं प्रच्यावयति सत्यादर्थात्। अत्र हि 'मूकः' इत्यर्थो वास्तवो, यः सङ्गच्छते प्रकरणेन। दृश्यतां धनपालकृतः 'पाइअलच्छी' प्राकृतलक्ष्मी' कोषः। आनन्दस्त्वयं यत् टीकाकृत् 'मूलकः' इति छायां करोति, परं न तां व्याख्यया सङ्गमयति। केवलं भ्रामयित्वा पृथक्पलायते।

एवमाद्या असुविधाः स्थले स्थले प्राप्यन्ते, कियत्यो वा ताः प्रदर्श्येरन्। किं च अस्मिन्समये न मादृशानां तलस्पर्शिनी मतिरित्यादि सर्वमिदं सौविध्यमनुमाय सेयं टीका निरमीयत। अत्र व्यङ्ग्यार्थप्रकाशनाय यावच्छक्यमधिकाधिकं प्रयतितम्। सेयं टीका गङ्गाधरटीकामवलोक्यैव न्यबध्यत। व्याख्यासापेक्षोऽपि योऽर्थस्तत्र परित्यक्तः सोऽस्यां पर्यगृह्यत। व्यङ्ग्यार्थस्थले विस्तरेण तत्प्रकाशनचेष्टाऽक्रियत। गुणदोषविवेचकाः वाचकाः स्वयमिदमेनाम-वलोक्य परीक्षिष्यन्ते तत्किं नाम वागारम्भणेन।

किञ्चेदमपि निवेदनीयमापतितं हतविधेर्दुर्विलासात् यत् 'सतसईसंहार' सर्गात् हिन्दी साहित्ये सुतरां लब्धप्रतिष्ठेन विहारिसप्तशत्याः सञ्जीवनभाष्यारम्भकेण पं. पद्मसिंह-महोदयेन गाथासप्तशतीं विहारिसप्तशतीं च मिथस्तुलयता गाथापेक्षया विहारिकृतेर्यः किल समुत्कर्षः साधितस्तस्यात्रालोचना विहिता। टीकां रचयता मया सोऽयं सन्दर्भो बहोः कालात्पूर्वमेव न्यबध्यत। अस्य कियांश्चनांशो 'माधुरी' नामकहिन्दीमासिकपत्रिकायां प्रकाशितोऽप्यभूत्पूर्वम्। किन्तु सम्प्रति सखेदं शृणोमि यत्साहित्यमार्मिकोऽसौ पद्मसिंहमहोदयो लोकान्तरं प्रयात इति। हन्त मन्मनसि भूयान्खेदो यदेषा आलोचना तल्लोचनातिथिर्न भूत्वा पुस्तकाकारे सम्प्रति प्रकाशिता भवतीति। हन्त को वा विधेः प्रभवेत्।

वाराणसेयगवर्नमैण्टसंस्कृतकालेजस्याध्यक्षपदमधितिष्ठतः सुप्रसिद्धप्राच्यसाहित्य-मार्मिकस्य एम्. ए. पदमण्डितस्य श्रीगोपीनाथकविराजमहाभागस्य भूयांसमुपकारमधिवहामि यो हि सातवाहनस्य गाथासप्तशत्याश्च परिचयदिक्प्रदर्शनाय पाश्चात्यपद्धत्या 'वाङ्मुखम्' [Fore words] निबन्धुमन्वग्रहीत्। मार्मिकाः पाठकमहाभागाः प्राक्संस्करणमुद्रितमुपोद्घातम्, मन्निबद्धां भूमिकाम्, तत्र प्रदर्शिता रचनामातृकाः, कविराजमहोदयस्य वाङ्मुखं चैतदादि सर्वामपि सामग्रीमेकत्र सङ्कलय्य सप्तशतीविषये भूयसः परिज्ञातव्यविषयान् तत्तथ्यनिर्णयं च स्वस्वमत्या सम्यगुन्नयेयुरिति मनसि भूयस्तरां विश्वसिमि।

एतद्ग्रन्थस्य सम्पादने जयपुरराजकीयज्योतिर्यन्त्रशालाप्रधानदैवज्ञेन भूतपूर्व काव्य-मालासम्पादकेन बाल्यसुहृदा पं श्रीकेदारनाथशर्ममहाभागेन समये समये सुबहु साहाय्य-माचरितमिति हृदयतः कृतज्ञ्यमावहामि।

अन्ते च नवसभ्यमहाभागान्प्रति पुनरावेदयामि-

**निभृतनिषेव्यममृतमयमुपवनमिदमार्यरसिकानाम्।**
**नाऽऽवश्यकप्रवेशाः[१] सुधियः क्षाम्यन्तु तत्सदयम्।।**

आषाढशुक्लद्वितीया **भट्टश्रीमथुरानाथशास्त्री साहित्याचार्यः**

सं. १९८९

१. शृङ्गाराधिक्यदर्शनान्नवरुच्यनुसारं न आवश्यकः प्रवेशो येषां ते। तथा च रुचेर्भेदात्तेषां सम्मतमत्र नास्तीत्यत्र निभृतोपवने तेषां प्रवेशाधिकारोऽपि नास्तीत्याशयः।

-------

# सातवाहनः

दीपकर्णिसूनुः सातवाहनो नाम कश्चन विद्वान्महीपतिः प्रतिष्ठानपुरे बभूव, यत्सभां बृहत्कथाप्रणेतृगुणाढ्य- कालापव्याकरणकर्तृशर्ववर्मप्रभृतयो भूयांसो विद्वांसो मण्डयाञ्चक्रुरिति कथासरित्सागरषष्ठतरङ्गस्थितकथातः प्रतीयते. 'सोऽहं दरिद्रो वित्तार्थी प्रयातो दक्षिणापथम्। प्राप्तः पुरं प्रतिष्ठानं नरसिंहस्य भूपतेः।।' (३९/१०८) इत्यादिकथासरित्सागरस्थश्लोकेभ्य एव दक्षिणापथे प्रतिष्ठानपुरमस्तीत्यप्यवगम्यते[१] तच्चाधुना 'पैठण' नाम्ना प्रसिद्धमस्ति. 'कर्तर्या-कुन्तलः शातकर्णिः शातवाहनो महादेवीं मलयवतीं [जघान]' इति वात्स्यायनप्रणीतकामसूत्रस्य द्वादशाध्यायोपान्ते समुपलभ्यते. डॉक्टर्पीटर्सनेन बुन्दीनगराधीशपुस्तकालयादानीते गाथासप्तशतीपुस्तके[२] 'राएण विरइआए कुन्तलजणवअइणेण हालेण। सत्तसई अ समत्तं सत्तममज्झासअं एअम्।। इति सप्तमं शतकम्। इति श्रीमत्कुन्तलजनपदेश्वर[३]-प्रतिष्ठानपत्त-नाधीश-शतकर्णोपनामक-द्वीपि (दीप) कर्णात्मजमलयवतीप्राणप्रियकालापप्रवर्तकशर्व-वर्मधीसखमलयवत्युपदेशपण्डितीभूतत्यक्तभाषात्रयस्वीकृतपैशाचिकपण्डितराजगुणाढ्य-निर्मितभस्मीभवद्बृहत्कथावशिष्टसप्तमांशावलोकनप्राकृतादिवाक्पञ्चक (?) प्रीत-कविवत्सलहालाद्युपनामक-श्रीसातवाहननरेन्द्रनिर्मिता विविधान्योक्तिमयप्राकृतगीर्गुम्फिता शुचिरसप्रधाना काव्योत्तमा सप्तशत्यवसानमगात्।।' एवं समाप्तिश्च वर्तते, एतद्विलोकनेन वात्स्या-यनस्मृतः कथासरित्सागरवर्णितश्च सातवाहन[४] एक एव। तेनैवेयं गाथासप्तशती प्राचीनग्रन्थेभ्यः सङ्कलिता. स च ख्रिस्ताब्दस्य प्रथमशतक आसीदित्याधुनिकानां विद्वद्वराणां निश्चयः। युक्तं चैतत् यतः शकप्रवर्तकः शालिवाहन एव सातवाहन इति निर्विवादैव प्रथमशतके[५] तस्य स्थितिः अयं गाथासंग्रहकर्ता सातवाहनोऽन्यैः प्रत्नकविभिरप्यभिष्टुतः यथा- 'अविनाशिन-मग्राम्यमकरोत्सातवाहनः। विशुद्धजातिभिः कोषं रत्नैरिव

१. राजशेखरसूरिप्रणीते प्रबन्धकोषे सातवाहनप्रबन्धे 'अधुना तु दक्षिणदेशस्थितं प्रतिष्ठानपुरं क्षुल्लकग्रामतुल्यं वर्तते।' इत्यस्ति. २. डॉक्टर्पीटर्सनस्य तृतीये रिपोर्टाख्यपुस्तके ३४९ पृष्ठे द्दष्टव्यम्, ३. 'कामगिरिं समारभ्य द्वारकान्तं महेश्वरि। श्रीकुन्तलाभिधो देशो हूणदेशं शृणु प्रिये।।' इति शक्तिसङ्गमतन्त्रम्. तस्मिन्समये च गुर्जरदेशेऽपि सातवाहनस्यैव प्रभुत्वमासीत्, यतस्तेन सन्तुष्टेन स्वसचिवाय शर्ववर्मणे भरुकच्छ (भरोच) देशप्रभुत्वं दत्तमिति 'राजार्हरत्ननिचयैरथ शर्ववर्मा तेनार्चितो गुरुरिति प्रणतेन राज्ञा। स्वामी कृतश्च विषये भरुकच्छनाम्नि कूलोपकण्ठविनिवेशिनि नर्मदायाः।।' अस्मात्कथासरित्सागरषष्ठतरङ्गसमाप्तिस्थश्लो-काज्ज्ञायते. ४. अनन्तराजकलशदेवहर्षदेवादयः कश्मीरमहीपाला अपि सातवाहनकुलोत्पन्ना आसन्निति कह्लणराजतरङ्गिणीतः कथासरित्सागरसमाप्तिस्थितप्रशस्तितश्च प्रतीयते. सोऽपि सातवाहनः कदाचिदयमेव स्यात्. ५. प्रबन्ध कोषे तु 'महावीरस्वामिनि मोक्षं गते ४७० वर्षानन्तरं विक्रमादित्यः। तत्समकालीन एवायं सातवाहनः। कालिकाचार्यसमकालीनोऽपि कश्चन सातवाहनः, सोऽस्मादर्वाचीनः।' इत्यस्ति.

सुभाषितैः ।।' इति हर्षचरितारम्भे बाणः। कोषश्चायमेव गाथासंग्रहरूपो बाणस्य विवक्षितः 'जगत्यां ग्रथिता गाथा सातवाहनभूभुजा। व्यधुर्धृतेस्तु विस्तारमहो चित्रपरम्परा।।' अयं श्लोकः केषुचित्सूक्तिमुक्तावलीपुस्तकेषु राजशेखरनाम्ना समुद्धृतो दृश्यते. 'सच्चं भण गोदावरि पुव्वसमुद्देण साहियासन्ती। सालाहणकुलसरिसं जइ ते कूले कुलं अत्थि।। उत्तरओ हिमवन्तो दाहिणओ सालवाहणो राआ। समभारभरक्कन्ता तेण न पल्लत्थए पुहवी।। एतद्गाथाद्वयं राजशेखरसूरिप्रणीते प्रबन्धकोषे सातवाहनप्रबन्धे समुपलभ्यते।

शतानन्दसूनुमहाकविश्रीमदभिनन्दप्रणीतरामचरिताख्यमहाकाव्यस्य सप्तमसर्गान्ते पञ्चदशसर्गान्ते च 'नमः श्रीहारवर्षाय येन हालादनन्तरम्। स्वकोषः कविकोषाणामाविर्भावाय सम्भृतः।।' अयं श्लोकः, द्वात्रिंशत्सर्गसमाप्तौ च 'हालेनोत्तमपूजया कविवृषः श्रीपालितो ललितः ख्यातिं कामपि कालिदासकवयो नीताः शकारातिना। श्रीहर्षो विततार गद्यकवये बाणाय वाणीफलं सद्यः सत्क्रिययाभिनन्दमपि च श्रीहारवर्षोऽग्रहीत्।।' अयं श्लोकः समुपलभ्यते। एतेन श्रीपालितकविनैव धनलिप्सया स्वप्रभोर्हालस्य नाम्नायं गाथासप्तशतकग्रन्थः संगृहीतः स्यादित्यप्यनुमीयते. सातवाहनस्यैव हालः, शालः, सालवाहनः, एते पर्यायाः सन्तीति हैमकोषादिषु[१] सुव्यक्तमेव।

संग्रहरूपेऽस्मिन्ग्रन्थे काश्चन गाथा हालप्रणीता अपि सन्ति. यतः क्वचित्पुस्तके चतुर्थगाथामारभ्य द्वादशगाथापर्यन्तं प्रतिगाथाग्रे तत्तद्गाथाकर्तॄणां 'हालस्स (हालस्य), वोडिसस्स, चुल्लोहस्स, मअरन्दसेणस्स (मकरन्दसेनस्य), अमरराअस्स (अमरराजस्य), कुमारिलस्स (कुमारिलस्य), सिरिराअस्स (रीराजस्य), भीमस्सामिणो (भीमस्वामिनः), हालस्स, एतानि षष्ठ्यन्तानि नामानि समुपलभ्यन्ते. अग्रे च लेखकप्रमादेन गलितानीति भाति एतद्ग्रन्थान्तर्गता

---

१. 'शालो हाले मत्स्यभेदे' इति, 'हालः सातवाहनपार्थिवे' इति च हैमानेकार्थः- ''शलति शालः। श्यति वा। 'श्यामाश्या-' इति लः। हालः सातवाहननृपः। तत्र यथा- 'जज्ञे शालमहीपालः प्रतिष्ठानपुरे पुरा।'' इति ''यथा-दिवं गते हालवसुन्धराधिपे।।' इति च तट्टीका अनेकार्थकैरवाकरकौमुदी, 'हालः स्यात्सातवाहनः' इति हैमनाममाला. 'हलत्यरातिहृदयं हालः। ज्वालादित्वात् णः। सातं दत्तसुखं वाहनमस्य सातवाहनः। सालवाहनोऽपि।' इति तट्टीका अभिधानचिन्तामणिः 'सालाहणम्मि हालो' इति देशीनाममाला। हालः सातवाहनः' इति तट्टीका।'शालोहालनृपेऽपि च' इति त्रिकाण्डशेषानेकार्थः. कथासरित्सागरे तु- 'सातेन यस्मादूढोऽभूत्तस्मात्तं सातवाहनम्। नाम्ना चकार कालेन राज्ये चैनं न्यवेशयत्।।' इति सातवाहनपदस्य निरुक्तिरुक्तास्ति. सातो नाम कश्चन यक्षः कुबेरशापेन सिंहतां प्राप्तः तेनायं स्वपृष्ठेऽधिरोपित इति कथापि तत्रैवास्ति. वात्स्यायनीयकामसूत्रे तु 'शातवाहन' इति तालव्यादिः समुपलभ्यते. वायु-मात्स्यविष्णुपुराणेषु भागवते च हालमहीपतेर्नाम समुपलभ्यत इति विद्वद्वरभाण्डारकरोपाह्व-रामकृष्णशर्मभिः प्रणीते दक्षिणप्राचीनेतिहासनाम्नि पुस्तके २५ पृष्ठे विलोकनीयम्, शातकर्णेः सातवाहनस्य विस्तरेण वर्णनं च तत एवावधार्यम्।

गाथा ध्वन्यालोके, तल्लोचने, सरस्वतीकण्ठाभरणे, काव्यप्रकाशे चोदाहृताः सन्ति, कुलबाल-देवनिर्मिता[१] गङ्गाधरभट्टनिर्मिता चास्य टीका समुपलभ्यते, तत्र गङ्गाधरभट्टनिर्मितैव समीचीना टीकाकर्त्रोर्देशकालौ चानिश्चितावेव।

जर्मनीदेशे टीकारहितोऽयं ग्रन्थो रोमन्‌लिप्या वेबरपण्डितेन मुद्रितः स च तद्देशी-यानामेवोपकारक इति गङ्गाधरभट्टप्रणीतटीकासमेतोऽस्माभिर्मुद्रयितुमारब्धः[२], भविष्यति चायमतिप्रत्नो मनोहरश्च ग्रन्थो रसिकानां हृदयावर्जक इति दृढमाशास्महे,

प्राक्संस्करणे काव्यमालासम्पादक म. म. पं. दुर्गाप्रसादशर्मणामुपोद्घातः।

------

१. पुस्तकान्तरे 'कुलनाथदेव' इत्यपि नाम दृष्टमस्ति,

२. प्रथमसंस्करणे गङ्गाधरभट्टटीकासहिता सेयं मुद्रिता। इदानीं तदाधारेण नवीना टीका मुद्रापितास्ति।

हालोपनामकमहाकविश्रीसातवाहनसङ्कलित-

प्राकृतगाथासप्तशत्याश्छायारूपा

## भट्टश्रीमथुरानाथशर्मसङ्ग्रथिता

# संस्कृतगाथासप्तशती

### निजनिर्मितया व्यङ्ग्यसर्वङ्कषाख्यव्याख्यया संवलिता

----

**गणनाथे [1]नतिमयता गुम्फितगाथेन[2] मञ्जुनाथेन।**

**व्यङ्ग्यार्थसारसिद्ध्यै सैषा सर्वङ्कषा क्रियते।।१।।**

तत्र प्रथमं प्रकाशयिष्यमाणगाथारत्नकोषस्य निर्विघ्नपरिसमाप्तिसिद्धये कृतं मङ्गलं श्रोतृजनसुखार्थमुपनिबध्नाति कविः-

**प्रमथपते रोषारुणगौरीमुखचन्द्रसञ्चरत्प्रतिमम्।**

**कलिताऽर्घसरसिरुहमिव सन्ध्यासलिलाञ्जलिं नम।।१।।**[3]

व्यङ्ग्यसर्वङ्कषानिशि तथा प्रकटितप्रणयपरिपाकचेष्टितोऽपि प्रातरेव कथमयं मां विहायाऽन्यां ध्यायतीति रोषेण अरुणं यद्गौरीमुखं तदेव चन्द्रः तस्य सञ्चरन्ती सङ्क्राम्यन्ती

---

१. नतिं प्रणामम्, अयता स्वीकुर्वता, प्रणामं कुर्वतेत्यर्थः।

२. संस्कृते निबद्धाः गाथाः येन।

३. **पसुवइणो रोसारूणपडिमासंकन्तगोरिमुहअन्दम्।**

**गहिअग्घपङ्कअं विअ संझासलिलञ्जलिं णमह।।१।।**

[पशुपते रोषारुणप्रतिमासङ्क्रान्तगौरीमुखचन्द्रम्।

गृहीतार्घपङ्कजमिव सन्ध्यासलिलाञ्जलिं नमत।।]

प्रतिमा प्रतिबिम्बो यत्र, अत एव कलितार्घसरसिरुहमिव रक्तमुखप्रतिबिम्बव्याजेन गृहीतार्घपङ्कजमिव प्रमथपतेः शिवस्य सन्ध्यासलिलाञ्जलिं नमत। प्राकृते पूर्वनिपातस्याऽनियततया 'सङ्क्रान्तप्रतिमम्' इति स्थाने प्रतिमासङ्क्रान्तमिति सङ्घटितम्। अथवा प्रतिमया सङ्क्रान्तमिति योजनीयं स्यात्। मत्कृतच्छायायां तु न तादृशक्लेशः। पशुपतेरित्यस्य स्थाने प्रमथपतेरिति तु- 'सर्वेषां प्रमथानां सविध एव मामयमुपेक्षते' इति प्रणयकोपातिशयं व्यनक्ति। पङ्कजपदस्यापि अर्घाञ्जलौ न स्वारस्यमिति सरसिरुहपदेन परिवर्तितं तद् द्युतिमेव पुष्णाति। शशधरकलामौलेः प्रातः सन्ध्यासलिलाञ्जलिवर्णनविच्छित्तिर्ग्रन्थारम्भमङ्गलमुमादेव्याः प्रणयकोपप्रकटनेन वर्णनीयस्य शृङ्गाररसनिर्भरतां चाऽभिव्यनक्ति। अत एवाऽवसानेऽपि 'सन्ध्योपात्तजलाञ्जलिबिम्बितगौरीमुखाम्बुरुहम्।' इत्यादि भगवतः सन्ध्यासलिलाञ्जलिमुपस्तुवन् समाप्तिमङ्गलं सूचयिष्यति। किं वा- आरम्भे प्रातः सन्ध्याञ्जलिवर्णनेन अवसाने च सायंसन्ध्याञ्जलिस्तवनेन सुनिपुणमयं ग्रन्थकारः प्रारम्भावसाने सूचयतीति स्यादेव सुधियां सुविदितमित्यलम्। ''यद्वा मानिन्याः प्रणयरोषमसहमानं नायकं प्रति दूत्या उक्तिरियम्- 'अनभिज्ञोऽसि प्रेमव्यवहाराणाम्, यस्त्वं प्रियाप्रणयरोषलक्षणे हर्षस्थाने कुप्यसि। न पश्यति किं देव्याः सन्ध्यासलिलाञ्जलावपि प्रणयरोषम्'' इति गङ्गाधरटीका।

गाथाकोषनिर्माणहेतुमवतारयति-

**अमृतं प्राकृतकाव्यं पठितुं श्रोतुं च ये न जानन्ति।**
**कामस्य तत्त्वचिन्तां कुर्वन्तस्ते कथं न लज्जन्ते।।२।।**[१]

स्त्रीबालादिसकलसुखोच्चार्यवर्णमयत्वादखिलानन्दनम्, शृङ्गाररसनिर्भरत्वेनाऽऽह्लादजनकत्वादमृतमिव सकलकामनाविषयं प्राकृतकाव्यमवसरे पठितुम्, अपरेण पठितं च श्रोतुं

---

**१. अमिअं पाउअकव्वं पढिउं सोउं अ जे ण आणन्ति।**
**कामस्स तत्ततन्तिं कुणन्ति ते कहँ[१] ण लज्जन्ति।।२।।**
[अमृतं प्राकृतकाव्यं पठितुं श्रोतुं च येन जानन्ति।
कामस्य तत्त्वचिन्तां कुर्वन्ति ते कथं न लज्जन्ते।।]

१. 'कहं' इति पदे 'हं' इति गुर्वक्षरस्याऽपि छन्दोभङ्गभयाल्लघ्वक्षरवदुच्चारणं विधेयम्, अत्र प्रमाणं प्राकृतपिङ्गले यथा- 'जह दीहो वि अ वण्णो लहु जीहा पढइ होइ सो वि लहु। वण्णो वि तुरिअपढिओ दोतिण्णि वि एक्क जाणेहु।' इति। 'यदि दीर्घमपि वर्णं लघुं कृत्वा जिह्वा पठति तदा सोऽपि वर्णो लघुरेव भवति। द्वौ वर्णौ त्रयो वा वर्णास्त्वरितपठितास्तानेक एव वर्ण इति जानीत।' इत्येतट्टीका। एवं 'इं' 'हिं' इति वर्णद्वयम्, 'ए' 'ऊ' इति वर्णद्वयं शुद्धम्। जवर्ण- (अन्यवर्ण)- मिलितं वा विकल्पेन लघु भवति। तथा रकारयुक्ते हकारयुक्ते वा व्यञ्जने परे- पूर्वाक्षरं विकल्पेन लघु भवति, इत्यादिनियमाः सोदाहरणाः प्राकृतपिङ्गले द्रष्टव्याः। अस्माभिरप्यत्र यस्य गुर्वक्षरस्य लघ्वक्षरवदुच्चारणं भवति तदुपरि एतादृशमर्धचन्द्राकारं चिह्नं स्थापितमस्ति। इति काव्यमालासम्पादकस्वर्गीयमहामहोपाध्याय-श्रीदुर्गाप्रसादानां टिप्पणी।

सम्यग् बोद्धुं ये न जानन्ति, कामस्य तत्त्वचिन्तां (कामतन्त्रचिन्तां वा) कुर्वन्तस्ते जनाः कथं न लज्जन्ते। प्राकृतपदाङ्कानुसरणमेव चेत्काम्यं तर्हि– 'कुर्वन्ति च ते' पाठ्यम्। कामशास्त्रव्युत्पत्ति-विधुरं विदग्धनायिका प्राकृतकाव्यस्तुतिव्याजेन शिक्षयति वा।

सारूपतया स्वग्रन्थस्योपादेयतां सूचयति–

**सप्त शतकानि कोटेर्मध्ये कविवत्सलेन हालेन।**

**गाथानां रचितानि हि नानालङ्काररललितानाम्।।३।।**[1]

कविगाथारत्नकोषनिर्माणेन तत्कीर्तिस्थिरीकरणात्कवीनां वत्सलेन हालेन शालिवाहनेन नानालङ्काररललितानां गाथानां कोटेर्मध्ये (मज्झआरो मध्यः) सप्तशतकानि विरचितानि सङ्गृहीतानीति यावत्। गाथालक्षणं तु पिङ्गले– 'पढमं बारह मत्ता बीए अट्ठारएहिं संजुत्ता। जह पढमं तह तीअं दहपञ्चबिहूसिआ गाहा।' संस्कृते तु बन्धानुरोधेनार्यागीत्यन्यतरच्छन्दसा साऽवबोद्धव्या।

पल्लवगहनतया दिनेऽपि दुष्प्रेक्ष्ये कमलिनीपुलिने कयोश्चित्सङ्केतसङ्घटनाऽऽसीत्। ततोऽन्याऽऽसक्तयाऽनागत्यैव–'दत्तसङ्केता त्वं नागता, अहं त्वागतः' इति वादिनं कामुकं प्रति काचिदाह–

**बिसिनीपत्रे निश्चलनिःस्पन्दा पश्य राजति बलाका।**

**निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव।।४।।**[2]

जनसञ्चाराभावान्निर्भयतया निश्चला चाऽसौ निःस्पन्दा च बलाका (बकस्त्री), निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव शङ्खघटितं शुक्त्याकारं चन्दनादिनिधानपात्रमिव राजते इति त्वं पश्य। अत्राऽचेतनोपमया लेशतोऽपि सञ्चलनाऽभावः, तेन च नितान्तं निर्जनत्वं

---

१. **सत्त सताई कइवच्छलेण कोडीअ मज्झआरम्भि।**

**हालेण विरइआइं सालङ्काराणँ गाहाणम्।।३।।**

[सप्त शतानि कविवत्सलेन कोटेर्मध्ये।

हालेन विरचितानि सालङ्काराणां गाथानाम्।।]

२. **उअ णिच्चलणिप्पन्दा भिसिणीपत्तम्मि रेहइ बलाआ।**

**णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्ति व्व।।४।।**

[पश्य निश्चलनिःस्पन्दा बिसिनीपत्रे राजते बलाका।

निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव।।]

गम्यते। अनेन च व्यङ्ग्यार्थेन–'मिथ्या वदसि। न त्वमत्राऽऽगतोऽभूः' इत्यर्थो व्यज्यते। चलनं शरीरक्रिया स्थानान्तरप्रापिका, स्पन्दस्त्ववयवक्रिया स्थानान्तराऽप्रापिका। एवं च पौनरुक्त्यं नाऽऽशङ्कनीयम्। यद्वा निःस्पन्दत्वेनाश्वस्तत्वं तेन च जनरहितत्वं, तेन च सङ्केतस्थानमिदमिति कयाचित्कञ्चित्प्रति व्यज्यते। अथवा– 'कल्लोलिनीकाननकन्दरादौ दुःखाश्रये चाऽर्पित-चित्तवृत्तिः। मृदुक्रमारम्भमभिन्नधैर्यः। श्लथोऽपि दीर्घं रमते रतेषु।' इति कामशास्त्राद्दीर्घरमणार्थं नायकस्याऽन्यचित्ततां कुर्वती काचिदाह। निश्चलोऽचलस्तद्वन्निःस्पन्दा वेगविधारणप्रयत्नवशात्। निश्चलेति पुरुषसम्बोधनं वा। तथा च यदि वेगविधारणपरोऽसि तदेनां बलाकां पश्यन्नन्य-मनस्कतया चिरं रमस्वेति भावः, इति गङ्गाधरभट्टः।

रतावपरितोषात्सुरतावसानोचितकृत्रिमोपचारशून्यतया रतान्तेऽपि कटाक्षभुजालिङ्गनादि-विभ्रमं कुर्वतीं नायिकां काचित्सखी शिक्षयति।

**रति-समये महिलानां राजन्ते विभ्रमास्तावत्।**
**कुवलयदलसदृशानि न यावन्मुकुलीभवन्ति नयनानि।।५।।**

रतिसमये महिलानामुत्तमस्त्रीणां न तु रमणीनाम्, तासां हि केवलं रमणमेव प्रयोजनमिति भावः। विभ्रमास्तावदेव राजन्ते पुरुषाणां मनोहारिणो भवन्ति यावद्रतिसुखसम्मोहिततया नयनानि मुकुलितानि न भवन्ति। अतस्तादृशं नायकमुपलभ्य रति सुखाऽप्राप्तावपि प्राप्तरतिसुखयेव त्यक्तविभ्रमया अत एव मुकुलीकृतनेत्रया त्वया भाव्यमिति। अत्र प्राक्तनटीकाकृद्गङ्गाधरभट्टः "पुरुषाणां नयनानि यावन् मुकुलितानि न भवन्ति" इति व्याचख्यौ। तदेतन्न रमणीयमिव। कामशास्त्रे सुरतान्ते नारीणां सुरतसुखनिमीलिताक्षत्वमुपवर्ण्यते न पुंसाम्। तथा च अनङ्गरङ्गे— "नारी विसृष्टकुसुमेषुजला रतान्ते नित्यं करोति बहुवल्गनरोदने च। कैवल्यमेति मुकुलीकृत-चारुनेत्रा शक्नोति नो किमपि सोढुमतिप्रयासा।।" यद्वा विपरीतरतप्रसङ्गे सदर्पां काञ्चिदुद्दिश्य कस्यचिदुक्तिरियम्। विभ्रमास्तावदेव हारिणो भवन्ति यावत्किल पुरुषायितपरिश्रमखेदालसतया नयनानि न मुकुलन्तीति। सरस्वतीकण्ठाभरणे रसाश्रितेषु भोवषूदाहृता सेयं गाथा। (परि. ५)

स्वविलासोपवनरोपितस्य फलपुष्पवन्ध्यस्य कुरबकतरोर्दोहदमन्वेषयन्तं नायकं प्रति बहोः कालादलब्धनायकसमागमाया नायिकायाः सखी वदति—

---

१. **तावच्चिअ रइसमए महिलाणं बिब्भमा विराअन्ति।**
**जाव ण कुवलअदलसेछआइँ मउलेन्ति णअणाइं।।५।।**
[तावदेव रतिसमये महिलानां विभ्रमा विराजन्ते।
यावन्न कुवलयदलसच्छायानि मुकुलीभवन्ति नयनानि।।]

२. दोहलिअम्, पाठान्तरम्।

**किं नात्मनो मृगयसे विमृगयसे दोहदं कुरबकस्य।**
**सुभगैवं तव जाया वलितानपङ्कजं हसति।।६।।**[1]

सुभगमात्मानं मन्यमानस्त्वं मदालिङ्गनरूपं कुरबकस्य दोहदं प्रार्थयसे नात्मनः। एवं तव जाया सम्बन्धानुरोधेन भार्यामात्रं न तु प्रेयसी, वैमुख्याभिव्यञ्जनाय परावर्तितमुखपङ्कजं हसतीति भावः। किञ्च 'जाया' पदेन 'सा सन्ततिजननोचिता' इति साकूतमुपालम्भो ध्वन्यते। स्त्रीणामालिङ्गनेन कुरबकविकासः कविसमयसिद्धः। यद्वा 'णोहलिअं' नवफलोद्गममित्यर्थः। मदालिङ्गनेन कुरबकस्य फलोद्गमं प्रार्थयसे, आत्मनः पुत्ररूपं फलं किमिति न प्रार्थयसे। अहो तव जाड्यमिति भावः।

वसन्तसमये प्रवासोन्मुखं नायकं प्रति तत्प्रस्थानमाक्षिपन्ती नायिकासखी समभिधत्ते–

**दयितविरहेऽप्यशोकैर्विदग्धवनिताः प्रताप्यन्ते।**
**कस्यापि कोऽपि सहते प्रभवन् पादप्रहारं किम्।।७।।**

अशोकैरननुभूतशोकतया परपीडानभिज्ञैः। दयितविरहेऽपि प्राणप्रियवियुक्ततया दयावसरेऽपि विदग्धवनिताः दयितसमागमवियोगानुभवशालिन्यः प्रकर्षेण ताप्यन्ते। यतः प्रभवन् अवसरोपलब्ध्या समर्थो भवन् कोऽपि कस्यापि पादप्रहारं किं सहते? अपि तु नेत्यर्थः। कान्तसन्निधौ तु सन्तापसामर्थ्याभावाद्दयितविरहेऽवसरमुपलभमानैः प्रताप्यन्ते इति भावः। कोऽपि कस्यापीत्यनेन, असम्बन्धिनः कस्यापि, कोऽपि सम्बन्धविशेषरहितः किं पादप्रहारं सहते? वरवर्णिनीचरणताडनरूपं दोहदं त्वयैव कारितेयं मत्सखी तव विरहे लब्धाऽवसरैः सानुशयैरशोकैः प्रताप्यमाना संशयितजीविता स्यादिति भावः। वनितासु विदग्धविशेषणेन 'याः किल प्रियैकचित्ता दक्षिणा भवन्ति ता एव विरहविकलतामधिकमनुभवन्ति, ततश्च तस्या वैदग्ध्यं न त्वया दुःखकारणं करणीयमिति प्रवासप्रतिषेधो ध्वन्यते। प्रोषितपतिकायाः सख्या तत्कान्तं प्रति लिखिता विरहगाथेयमिति कश्चित्।

---

१. **णोहलिअमप्पणो किं ण मग्गसे मग्गसे कुरवअस्स।**
**एअं तुह सुहग हसइ वलिआणणपङ्कअं जाआ।।६।।**
[दोहदमात्मनः किं न मृगयसे मृगयसे कुरबकस्य।
एवं तव सुभग हसति वलिताननपङ्कजं जाया।।]

२. **ताविज्जन्ति असोएहिँ लडहवणिआओं दइअविरहम्मि।**
**किं सहइ कोवि कस्स वि पाअपहारं पहुप्पन्तो।।७।।**
[ताप्यन्ते अशोकैर्विदग्धवनिता दयितविरहे।
किं सहते कोऽपि कस्यापि पादप्रहारं प्रभवन्।।]

कस्याश्चित्केनचित्कामुकेन सह तिलवाटिका सङ्केतस्थानं नियतमासीत्। ततः पक्वेषु तिलेषु सङ्केतस्थानान्तरं जारं प्रति श्रावयन्ती श्वश्रूं प्रत्याश्चर्यकथनव्याजेनाऽऽह–

**रमणीयं श्वश्रु तथाऽस्माकं ग्रामस्य मण्डनीभूतम्।**

**लूनतिलवाटसदृशं बिसिनीखण्डं कृतं हि शिशिरेण।।८।।**

'श्वश्रु' इति सम्बोध्यस्य मान्यतया निर्मायं निवेदनार्हत्वाद्वक्तव्यस्य सत्यत्वं सूचयते। पूर्वमस्माकं ग्रामस्य मण्डनस्थानीयं रमणीयं कमलखण्डं शिशिरेण हिमदग्धपल्लवतया नालमात्रशेषत्वाल्लूनतिलकोषेण तिलक्षेत्रेण समं कृतम्। पूर्वं हि पत्राद्याहरणार्थं जनानां तत्र सञ्चारोऽभूदिदानीं तु नेदमपि इति पद्मसरसो विजनत्वं ध्वन्यते। अत एव पूर्वं यथा तिलक्षेत्रं सङ्केतस्थलमासीत्तथा तदिदमिति भावः। केचित्तु 'तिलक्षेत्रपद्मसरसोरुभयोरप्यगुप्तत्वेन सङ्केत-स्थानान्तराऽभावाद्गृहमेव सङ्केतस्थानमिति ध्वनिः' इत्याहुः। अभिसारिकाणां तिलवनाब्जिनी-खण्डयोर्बहुमानप्रसिद्धिरिति प्रसङ्गे सरस्वतीकण्ठाभरणे सेयमुदाहृता।

कस्याश्चित्केनचित्सह शालिक्षेत्रं सङ्केतस्थलमासीत्। ततः पक्वेषु शालिषु तद्भङ्गं दृष्ट्वा रुदतीं तामुद्दिश्य सङ्केतस्थानान्तरं श्रावयन्ती सखी आह–

**किं रोदिषि नतवदना शालिक्षेत्रेषु धवलितेष्वेषु।**

**हरितालमण्डितमुखी नटीव शणवाटिका जाता।।९।।**

हरितालेन धातुविशेषेण मण्डितमुखी नटीव। शणवाटिका तु पीतकुसुमस्तबकनिकर-मण्डितमौलि-शणतरुनिवहनिरन्तरतया हरितालमण्डितमुखीवेत्युपमा। अथवा हरीणां मर्कटानां जालेन (आलेन) मण्डितं मुखं प्रवेशमार्गो यस्या इति शणवाटिकायां निर्जनत्वेन सङ्केतस्थलं तदिति सूचितम्। मण्डितमुखीत्यनेन यथा शणवाटिका मण्डितमुखी, तथा त्वमपि सङ्केतस्थल-

---

१. **अत्ता तह रमणिज्जं अह्मं गामस्स मण्डणीहूअम्।**

**लुअतिलवाडिसरिच्छं सिसिरेण कअं भिसिणिसण्डम्।।८।।**

[श्वश्रु तथा रमणीयमस्माकं ग्रामस्य मण्डनीभूतम्।

लूनतिलवाटीसदृशं शिशिरेण कृतं विसिनीषण्डम्।।]

२. **किं रुअसि ओणअमुही धवलाअन्तेसु सालिछेत्तेसु।**

**हरिआलमण्डिअमुही णडि व्व सणवाडिआ जाआ।।९।।**

[किं रोदिष्यवनतमुखी धवलायमानेषु शालिक्षेत्रेषु।

हरितालमण्डितमुखी नटीव शणवाटिका जाता।।]

नियमनेन प्रसन्नहृदया कृतमण्डना शृङ्गारनाट्यमाचरेति नायिकां प्रति सखी ध्वनयति। 'नतवदने'त्यनेन मुखमानतं कृत्वा किं तिष्ठसि, पश्य मे इङ्गितानीति उन्मुखतासम्पादनं सूच्यते। अथ वा शालिक्षेत्रपाकस्य हर्षस्थानत्वेऽपि रोदनेन लक्षितशालिक्षेत्रसङ्केतस्थला कापि परिहासशीलया कयाचिदेवमुपहस्यते।

कलहान्तरितां नायिकां कान्तानुवर्तनशीलां कर्तुं सखी आह–

**ईदृश्येव गतिः सखि तिर्यग्विवलितमुखेन्दु मा रोदीः।**

**प्रेम्णामेतेषां शिशुकर्कटिकातन्तुकुटिलानाम्।।१०।।**

सखीत्वेन निर्व्याजं शिक्षणार्हे! नवकर्कटिकातन्तुकुटिलानामेतेषां प्रेम्णामीदृश्येव गतिः, अर्थात् सन्निहितमेवाऽनुवर्तन्ते। वेष्टितमेव वेष्टयन्ति। शिशुपदेन अतिनवीनतया मार्दवाऽतिशयान्मनागाकर्षणेनापि त्रुट्यन्तीति शीघ्रमनुनयः सूच्यते। कर्कटिकातन्तुरतिमृदुलो भवति ततश्च यत्र स संसज्यते ततोऽन्यत्र संयोज्य–मानस्त्रुट्यतीति तात्पर्यम्। अत एव यावदन्यत्र दयितस्य प्रेमानुबन्धो न भवति तावदेव मानं विहाय तमेवानुवर्तस्वेति सखीं प्रति सूच्यते। एवं त्वदासक्तचित्ता विरहविधुरेयं मानिनी, तदेनां मनोमालिन्यादर्वागेवाऽनुनयस्वेति कान्तं प्रत्यपि व्यङ्ग्योऽर्थः।

गृहीतमानायाः कस्याश्चिदनुनयार्थं चरणपतितस्य भर्तुः पृष्ठमारूढं पुत्रं दृष्ट्वा बन्धविशेषस्मरणेन तस्या हास्योदयोऽभवदिति काचित्सखीं प्रत्याह–

**पादपतितस्य पत्युः संरोहति पृष्ठमग्रतः पुत्रे।**

**निरगाद् गेहिन्या अपि हासो दृढमन्युदूनायाः।।११।।**

---

१. **सहि ईरिसि व्विअ गई मा रुव्वसु तिरिअवलिअमुहअन्दम्।**
**एआणं बालबालुङ्कितन्तुकुडिलाणँ पेम्माणम्।।१०।।**
[सखि ईदृश्येव गतिर्मा रोदीस्तिर्यग्वलितमुखचन्द्रम्।
एतेषां बालकर्कटीतन्तुकुटिलानां प्रेम्णाम्।।]

२. **पाअपडिअस्स पइणो पुट्ठिं पुत्ते समारुहत्तम्मि।**
**दढमण्णुदुण्णिआएँ वि हासो घरिणीएँ णेक्कन्तो।।११।।**
[पादपतितस्य पत्युः पृष्ठं पुत्रे समारुहति।
दृढमन्युदूनाया अपि हासो गृहिण्या निष्क्रान्तः।।]

पत्युः स्वामिनः, न तु वल्लभस्येत्यर्थः। पुत्रे समारोहतीत्यनेन पुत्रवत्तया गलितयौव-नायामप्यनुरक्त इति ध्वन्यते। गेहिन्या इत्यनेन तस्या एव गृहस्वामिनीत्वात्प्रभावातिशयो द्योत्यते। दृढमन्युदूनाया इति प्रणामेऽपि कोपोपशमाऽभाववर्णनेन स्वाधीनपतिकायास्तस्याः सौभाग्यद-र्पाद्भर्तृविषयेऽनादरः, पत्युश्च तादृश्यामपि स्नेहातिशयो ध्वन्यते। यद्वा कृतकलहयोर्दम्पत्यो रात्रिवृत्तमनुसन्धायाऽऽगता सपत्नी सपत्नीं प्रति तद्वृत्तमाह।

प्रियविरहकातरया कयाचित्प्रेषिता निसृष्टार्था दूती विपरीतलक्षणया नायकं प्रशंसापूर्वकमुपालभमाना भङ्ग्या स्वसखीमरणं च सूचयन्ती आह-

**सत्यमवैति द्रष्टुं सदृशि जने युज्यते रागः।**
**म्रियतां न भणिष्यामि, श्लाघ्यं बत मरणमप्यस्याः।।१२।।**[१]

विपरीतलक्षणया "सा सत्यं द्रष्टुं जानाति, सदृशे जने रागो युज्यते" इत्यनेन त्वद्गतचित्तायास्तस्या अनुरागातिशयमपरिजानाति अत एव असदृशे निःस्नेहे त्वत्सदृशे जने तस्या अनुरागो न युज्यते, अत एव न सा मौग्ध्यात्प्रेमान्धतया वा द्रष्टुं जानाति। ततश्च परिणाममबुद्ध्वैव यत्र कुत्रचित्प्रीतिमादधती प्रत्यहं प्रतप्यमाना सा स्वकर्मणैव म्रियतामित्येव वरम्, परं न त्वां तज्जीवनाय भणिष्यामीत्यर्थः। एवञ्च यदि स्त्रीवधपातकं नाऽऽकार्षीस तर्हि त्वद्गतचित्ता सा त्वरितमेव जीवनीयेति नायकं प्रति त्वरितोपसर्पणं ध्वन्यते। अथवा न विपरीतलक्षणा। साधारण एवार्थो यथा- सा मत्सखी सत्यमेव द्रष्टुं जानाति, यतोऽनन्यरूपश्लाघिनी त्वद्रूपमेव बहु मन्यते इत्याशयः। 'सदृशि जने रागो युज्यते' इत्यनेन रूपाऽभिजनादिभिरनुरूपे त्वयि तस्याः समागमौत्सुक्यं युक्तमेवेति नायिकायाः स्तुत्यनुरागाभ्यां नायकप्रोत्साहनम्। म्रियतामित्यनेन तव समागममप्राप्य सा जीवितं जह्यादिति तस्या दशा सूच्यते। ततश्च तस्य स्त्रीवधपातकम्, आत्मनश्च चानुरोधभङ्गभीरुत्वं ध्वनितम्। अस्या मरणमपि श्लाध्यमित्यनेन अनुरूपानुध्यानात्त्वद्गतचित्ताया मरणे जन्मान्तरे त्वत्प्राप्तिसम्भव इति प्रेमातिशयध्वननेन नायकचेतःप्रोत्साहनं सूच्यते। सरस्वतीकण्ठाभरणे अनुरूपविषयस्यानुराग-स्योदाहरणे गृहीतेयं गाथा (५ परि.)

'गृहकार्यसक्तायाः प्रेयस्या वस्त्रादिमालिन्यं न प्रियवैमुख्याय' इति मालिन्यशङ्कया गृहकार्यपराङ्मुखीं स्वसखीं प्रबोधयन्ती काचिदाह-

---

१. **सच्चं जाणइ दट्ठुं सरसम्मि जणम्मि जुज्जए राओ।**
**मरउ ण तुमं भणिस्सं मरणं वि सलाहणिज्जं से।।१२।।**
[सत्यं जानाति द्रष्टुं सदृशे जने युज्यते रागः।
म्रियतां न त्वां भणिष्यामि मरणमपि श्लाघनीयं तस्याः।।]

**गेहिन्या माहानसकर्ममसीमलिनितेन हस्तेन।**

**स्पृष्टं मुखमुपहसति हि चन्द्रावस्थां गतं दयितः।।१३।।**[1]

महानससम्बन्धिकर्मणो या मसीमलिनाम्बुकालिमा तया मलिनीकृतेन हस्तेन स्पृष्टम् सङ्क्रान्तश्यामिकमित्यर्थः। अत एव सलाञ्छनमिवेति चन्द्रावस्थां गतं मुखं प्रेमातिशय-निबन्धनकुतुकेन दयित उपहसतीत्याशयः। यस्य यदुचितं कर्म तदनुतिष्ठतो वैरूप्यमप्य-लङ्करणमेव। यतो लग्नमसीश्यामिकमपि मुखं पत्या सपरिहासं चन्द्रेणोपमीयते। अत एव कुलस्त्रीणां गृहकार्यविमुखत्वमनुचितमेवेति सखीं प्रति सूच्यते। छायायां छन्दोनुरोधेन कर्मवाच्यस्य कर्तृवाच्येन विपरिणमनं सह्यम्। दयितपदं तु 'दयितत्वेनानुरागदृष्ट्या मलिनीकृतमपि मुखं चन्द्र इवाह्लादयति' इति स्वारस्यं पुष्णाति। सेयमात्मीया स्वा नायिकेति कण्ठाभरणे भोजः (५परि.)।

फूत्कारमरुता वह्नावज्वलति कुप्यन्तीं काञ्चित्प्रति स्वाभिलाषमभिव्यञ्जन्कश्चिदाह-

**रन्धनकर्मनिपुणिके! मा कोपी रक्तपाटलसुगन्धिम्।**

**धूमायते पिबंस्ते मुखमरुतं नो शिखी ज्वलति।।१४।।**[2]

तव अधरप्राप्त्यर्थम् अग्निकृतपूजोचितस्य रक्तपाटलाकुसुमस्येव सुरभिशीतलो गन्धो यस्य तम्। ते मुखमारुतं पिबन् शिखी धूममुद्गिरति-न च प्रज्वलति। त्वं मा कोपं कार्षीः। रोषारुणत्वन्मुखदिदृक्षया इव धूमोद्गमरूपं चाटुमयमग्निराचरति। त्वन्मुखमारुतपानलालसयैव नायं ज्वलति, ज्वलिते तस्मिन्मुखमारुतदानानवसरात्। अग्नौ कामुकचेष्टावर्णनेन स्वाभिलाषो ध्वनितः। त्वं तु रन्धनपरतया त्वदवलोकनकौतुकोपगतमपि मां दृष्टापि नाभिनन्दसीति साकूतमुपालभ्यते। वैषयिकीषु रतिषु गन्धे रतिरित्युदाहृतवान् कण्ठाभरणे भोजः (५ परि.)।

---

१. **घरिणीएँ महाणसकम्मलग्गमसिमलिइएण हत्थेण।**
**छित्तं मुहं हसिज्जइ चन्दावत्थं गअं पइणा।।१३।।**
[गृहिण्या महानसकर्मलग्नमषीमलिनितेन हस्तेन।
स्पृष्टं मुखं हस्यते चन्द्रावस्थां गतं पत्या।।]

२. **रन्धणकम्मणिउणिए मा जूरसु रत्तपाडलसुअन्धम्।**
**मुहमारुअं पिअन्तो धूमाइ सिही ण पज्जलइ।।१४।।**
[रन्धनकर्मनिपुणिके मा क्रुध्यस्व रक्तपाटलसुगन्धम्।
मुखमारुतं पिबन्धूमायते शिखी न प्रज्वलति।।]

नवोढायाः कस्याश्चिन्नूतनगर्भधारिण्याः कान्तं प्रति प्रणयातिशयं सूचयन्ती काचिदाह–

**किं किं नु रोचते ते मुग्धाया इति सखीविपृष्टायाः।**

**प्रथमोद्गतदोहदिन्या दयितं प्रति केवलं गता दृष्टिः।।१५।।**[१]

किं किं रोचत इति बहुवस्तुगतमप्यभिलाषं सखीभिः पृष्टया मुग्धया मौग्ध्याद् गर्भायासमजानत्या तया, दृष्ट्या केवलं दयिताऽभिलाषः सूचितः। सर्ववस्तुस्थाने दयित एव सर्वात्मना कामनीय इति भावः। यद्वा प्रश्ने सति दयिते दृष्टिदानेन 'ममाभिलाषमपि दयित एव जानातीति दयिते हृदयैक्यमभिव्यज्यते। अथवा सपत्नीं प्रति सासूयस्य सपत्नीजनस्योपालम्भवादोऽयम्। मुग्धाया इति मोहवशाद् गर्भायासमप्यपरिगणयन्त्याः। प्रथमोद्गतेति। बहुवारं प्रसूतास्तु गर्भखेदखिन्नाः पूर्वानुभवात्सुरतायासं परिहरन्ति। इयं त्वननुभूतप्रसवखेदा प्रियसमागममेव परमभिलषतीति तदाशयः। सम्भोगपरीष्टिषु, दोहदेन मुग्धायाः प्रेमपरीक्षेति सरस्वतीकण्ठाभरणम् (५ परि.)।

प्रोषितपतिका काचिद विरहदाहवैकल्यमभिव्यञ्जयन्ती कान्तसमागमविषये परिजनं त्वरयितुं चन्द्रप्रार्थनाव्याजेनाह —

**अमृतमय गगनशेखर रजनीमुखतिलक चन्द्र हे स्पृश माम्।**

**तैरेव तात किरणैर्यैरिह मे प्रियतमः स्पृष्टः।।१६।।**[२]

'दे' शब्दः सानुनयसम्बोधने। अमृतमयेत्यनेन जगज्जीवनहेतुत्वं शिशिरसुखत्वं च,गगनशिखरेत्यनेन उन्नततया अखिललोकलोचनानन्दकारित्वम्, रजनीमुखतिलकेत्यने–नाऽबलाजनपक्षपातित्वम्, तातेत्यनेन सदयत्वम्, चन्द्रेत्यनेनाह्लादकत्वं चाभिव्यज्यते। एवंविधोऽपि त्वं मां निर्दयं दहसि। प्रवासिनं मद्दयितं तु अमृतशिशिरैः करैः स्पृशसि, अत

---

१. **किं किं दे पडिहासइ सहीहिं इअ पुच्छिआएँ मुद्धाए।**
**पढमुग्गअदोहणीए णवरं दइअं गआ दिट्ठी।।१५।।**
[किं किं ते प्रतिभासते सखीभिरिति पृष्टाया मुग्धायाः।
प्रथमोद्गतदोहदिन्याः केवलं दयितं गता दृष्टिः।।]

२. **अमअमअ गअणसेहर रअणीमुहतिलअ चन्द दे छिवसु।**
**छित्तो जेहिँ पिअअमो ममं पि तेहिं विअ करेहिं।।१६।।**
[अमृतमय गगनशेखर रजनीमुखतिलक चन्द्र हे स्पृश।
स्पृष्टो यैः प्रियतमो मामपि तैरेव करैः।।]

एव नाऽद्याप्यायाति। ततो मामपि तैरेव करैः स्पृश, येन विरहवैधुर्यं सहेयेति भावः। प्रेमपुष्टिषु, प्रलापः सोऽयमित्युदाहृतं कण्ठाभरणे भोजेन (५ परि.)।

सखि मुञ्चेदानीं विषादम्। आगत एवाऽद्य श्वो वा तव वल्लभः। किन्तु आगतमात्र एवासौ न त्वयाभिनन्दनीयः, अपि तु मानोपालम्भादिभिः सुचिरं परिखेद्य, ततोऽग्रे प्रवासनिवृत्तिं स्वीकार्य ततोऽसौ परिरम्भणादिभिः सम्भावनीय इति सखीभिः शिक्षिता प्रियतमोत्कण्ठिता प्रोषितपतिकाह—

**सोऽप्येष्यति प्रवासी, कोपिष्याम्यहमथाऽनुनेष्यति सः।**
**इति कस्यापि फलति किल मनोरथानां प्रिये माला।।१७।।**[1]

प्रोषितः स एष्यति, निरनुक्रोशे बहोः कालादनन्तरमागते तस्मिन्नुत्कण्ठिता तदागमन-मात्रसुखिताऽहं कोपिष्यामि, कोपोऽपि तावत्कालं स्थास्यति यावत्स मामनुनेष्यति, इति किल पूर्वतः स्थिरीकृता मनोरथानां माला कस्यापि भाग्यशालिन एव प्रियविषये फलति न मत्सदृश्याः, या किल दृङ्मात्रे पतत्येव सर्वात्मना कान्तवशंवदा मानेऽप्यसमर्था। एवं च इयच्चिरं प्रियतमाऽऽगमने या मानं दधति कठोरचित्तास्ता एव धन्या भवन्तु नाहमित्यात्मनोऽनुरागातिशयो ध्वनितः। गङ्गाधरभट्टस्तु ''कान्तस्य निरनुक्रोशत्वात्, आत्मनश्च कान्तावधीरणभीरुत्वात्। इयच्चिरं प्रेमानुबन्धस्यासम्भाव्यमानत्वाच्च सर्वमेतन्मनोरथमात्रमित्याशयेनाह- इतीति। कस्यापि धन्यजनुष एतत्सम्पद्यते। मम तु मन्दभाग्यायाः कुत एतदिति भावः।'' इति वदन् कान्ताऽऽ-गमनादिकं सर्वमेव मनोरथमात्रं व्याचख्यौ। 'समारुहति' 'कुपिष्यामि' इत्यादिव्याकृतिविरोधास्तु कदाचन लेखकमुद्रकयोरेव प्रमादो भवेत्। प्रवासे, आलिङ्गनादीनां कालहरणमित्युदाहृतं भोजेन।

कथमेषु दिनेषु दुर्बलोऽसीति मित्रेण पृष्टस्य प्रियतमस्य बहुमहिलाऽऽकर्षणं काचित्सेर्ष्योपालम्भमन्यापदेशेनाह—

**दुर्गतकुटुम्बकृष्टिर्धौतेन मया कथं नु सोढव्या।**
**इति पश्य दशाऽपसरत्सलिलेन पटेन रुदितमिव।।१८।।**[2]

---

१. **एहइ सोवि पउत्थो अहं अ कुप्पेज्ज सोवि अणुणेज्ज।**
**इअ कस्म वि फलइ मणोरहाणँ माला पिअअमम्मि।।१७।।**
[एष्यति सोऽपि प्रोषितो अहं च कुपिष्यामि सोऽप्यनुनेष्यति।
इति कस्या अपि फलति मनोरथानां माला प्रियतमे।।]

२. **दुग्गअकुटुम्बअड्ढी कहं णु मएँ धोइएण सोढव्वा।**
**दसिओसरन्तसलिलेण उअह रुण्णं व पडएण।।१८।।**
[दुर्गतकुटुम्बाकृष्टिः कथं नु मया धौतेन सोढव्या।
दशापसरत्सलिलेन पश्यत रुदितमिव पटकेन।।]

इयत्कालमहं दरिद्रकुटुम्बकृतमाकर्षणं सोढवानस्मि, परं धौतेन मया जलसम्बन्धात्स्तिमिततन्तुतया जीर्णताधिक्ये, आकर्षणं कथं सोढव्यमिति शङ्कया खेदात् दशाभ्यः प्रान्तेभ्योऽपसरत्सलिलेन पटेन रुदितमिव। अर्थाद्बलादाकर्षणवशादचेतनोऽपि पटः प्रान्तगलज्जलधाराच्छलेन रोदिति, ततो विदग्धोऽयं मत्कान्तो बहुमहिलाच्छन्दानुवृत्त्या कथं न खिन्नः स्यादिति ध्वन्यते। यद्वा कापि वेश्या धनदानं विना बहूनां ग्रामप्रधानानामाकर्षणजन्यमुद्वेगं कुट्टनीं प्रति सूचयितुमित्थं कथयति। वास्तवे तु सप्तशत्यां हालेन गृहीतान्येवमादीनि नीतिसूक्तिरत्नानि 'अमृतं प्राकृतकाव्यम्' इत्यादिपद्ये प्राकृतकाव्यस्य कामशास्त्ररहस्यप्रतिपाद-कत्वप्रतिज्ञाबलादेव टीकाकारैर्बलाच्छृङ्गारपरतया व्याख्यातानि। परं प्राकृते शृङ्गारेतरप्रतिपादकं पद्यमेव नास्तीति नैतत्तात्पर्यम्। यत्किमप्यस्तु। प्राचामनुरोधादनिच्छयापि मयापि शृङ्गारपरतयैव व्याख्यातानीत्यलं मार्मिकेषु।

कोऽप्यात्मनः परवशतामनुरागातिशयं च नायिकां प्रति प्रकाशयितुं नायिकागृहगामिनं वत्समन्याऽपदेशेनाह —

**उन्नामितश्रवोभ्यां तर्णक कोशाम्रकिसलयसवर्ण।**
**हृदयस्थितं व्रजन्गृहमवाप्नुहि त्वं नु धवलत्वम्।।१९।।**[१]

उत्कण्ठावशादुन्नामिताभ्यां कर्णाभ्यामुपलक्षित। बीजकोषान्निः सृताम्रकिसलयसवर्ण। रक्तमसृणेति यावत्। एवंविध हे तर्णक! हृदयानुचिन्तितं गृहं व्रजन् धवलत्वं षण्ढत्वं श्रेष्ठतां वा प्राप्नुहि। अहमिव हृदयाऽनुध्यातगृहप्रवेशे पराधीनवृत्तिर्मा भूया इति भावः। अथवा यां वृद्धां कामयसे तस्याः कृते त्वं तर्णक इवेति कयाचिदाकृष्टया कश्चित्प्रत्युच्यते।

शय्यामनागच्छन्तीं प्रियतमां प्रतीक्ष्य तद्भावजिज्ञासार्थं मध्येशय्यं कृत्रिमनिद्रानिमीलिताक्षमत एव कपोलचुम्बनपुलकिताङ्गत्वेन विदितमिथ्यास्वापं कान्तं कान्ताऽऽह—

**कृतकस्वापनिमीलितनयन सुभग देहि मह्यमवकाशम्।**
**गण्डपरिचुम्बनोद्गतपुलक पुनर्नैव चिरयिष्ये।।२०।।**[२]

---

१. **कोसॅम्बकिसलअवण्णअ तण्णअ उण्णामिएहिँ कण्णेहिं।**
**हिअअट्ठिअं घरं वच्चमाण धवलत्तणं पाव।।१९।।**
[कोशाम्रकिसलयवर्ण तर्णक उन्नामिताभ्यां कर्णाभ्याम्।
हृदयस्थितं गृहं व्रजन्धवलत्वं प्राप्नुहि।।]

२. **अलिअपसुत्तविणिमीलिअच्छ दे सुहअ मज्झ ओआसम्।**
**गण्डपरिउम्बणापुलइअङ्ग ण पुणो चिराइस्सम्।।२०।।**
[अलीकप्रसुप्तकविनिमीलिताक्ष हे सुभग ममावकाशम्।
गण्डपरिचुम्बनापुलकिताङ्ग न पुनश्चिरयिष्यामि।।]

शयनीयमध्ये मह्यमवकाशं देहि अग्रे नैवं चिरयिष्यामीत्यनेन आत्मापराधक्षमापनर-भसेन नायिकाया अपि रसोद्गमो व्यज्यते। केचित्तु- 'देसु हअमज्झोओआसम्' इति पदच्छेदं विधाय 'हतमध्य अङ्गविन्यासेन रुद्धमध्य अवकाशं देहि' इति व्याचक्षते। गण्डपरिचुम्ब-नेत्यादिविशेषणेन नायिकायाः प्रियेङ्गितज्ञानं यूनोश्च परस्परमनुरागश्च ध्वन्यते। पुंसो व्याजोदाहरणे गृहीतेयं गाथा भोजेन (५ परि.)।

वेश्याऽऽह्वानार्थमागते नायकसुहृदि पूर्वतो गृहाऽवस्थितं विटमाच्छादयन्ती वेश्यामाता दुहितरमाह—

**असमाप्तमण्डनैव व्रज गेहं तस्य कौतुकिनः।**

**नातिगतौत्सुक्यस्य प्रसंक्ष्यसे मानसे पुत्रि।।२१।।**[१]

सकौतूहलस्य तस्य गेहमसमाप्तमण्डनैव व्रज। मण्डनविलम्बवशाद्व्यतिक्रान्तो-त्कण्ठस्य तस्य चित्ते न प्रसक्ता भविष्यसीत्यनेन वेश्यास्वनुरागोदयो गाढोत्कण्ठानामेव पुंसां भवति, औत्सुक्यशैथिल्ये तु चेतःप्रसक्तिर्हीयत इति वृद्धाया' कुट्टन्या अनुभवः प्रकटीक्रियते। एवं च मण्डनकरणेनैवाऽस्या विलम्बो जातो नान्यप्रसङ्गेनेति युक्त्या भुजङ्गगोपनम्। पुंसः कुतूहलस्योदाहरणमिदं सरस्वतीकण्ठाभरणे।

कश्चिन्नागरिकः शृण्वतीषु रसिकवामासु तच्चित्तहरणार्थं रजस्वलाया अप्यपरित्या-गेनात्मनः कामुकत्वातिशयं प्रकटयन् सहचरमाह—

**आदरनमिताधरपुटमघटितनासिकमसंहतललाटम्।**

**वर्णघृतलिप्तमुख्यास्तस्याः परिचुम्बनं स्मरामोऽद्य।।२२।।**[२]

हरिद्रावर्णमिश्रं घृतं वर्णघृतम्। देशविशेषे रजस्वलामुखं वर्णघृतेन लिप्यत इति काचित्प्रथा। तस्याः, यस्याः सौन्दर्यं मया त्वयि प्रकटितम्। एवंविधामपि मां न परिहरतीत्यादरेण

---

१. **असमत्तमण्डणा विअ वच्च घरं से सकोउहल्लस्स।**
**वोलाविअहलहलअस्स पुत्ति चित्ते ण लग्गिहिसि।।२१।।**
[असमाप्तमण्डनैव व्रज गृहं तस्य सकौतूहलस्य।
व्यतिक्रान्तौत्सुक्यस्य पुत्रि चित्ते न लगिष्यसि।।]

२. **आअरपणामिओट्ठं अघडिअणासं असंहअणिडालम्।**
**वण्णधिअतुप्पमुहिए तीए परिउम्बणं भरिमो।।२२।।**
[आदरप्रणामितौष्ठमघटितनासमसंहतललाटम्।
वर्णघृतलिप्तमुख्यास्तस्याः परिचुम्बनं स्मरामः।।]

स्वेच्छाप्रकाशनार्थं चुम्बनाय नमितोऽधरपुटो यस्मिन्। अधरपुट एव चुम्बनसमयादोष्ठपदापेक्षया स्वारस्यम्। वर्णघृतेन चिह्नभयाद् असंयोजिता नासिका यत्र, तथा असंहतललाटम्। परितः सर्वतश्चुम्बनमद्य स्मरामः, तत्स्मृतिरद्यापि स्मरन्नात्मानं विनोदयतीति गाथातात्पर्यम्। 'परिउम्बणं' परिरम्भणं स्यात्।

जनसम्मर्देऽपि प्रियतमं प्रति प्रकाशितशृङ्गारचेष्टां सखीं प्रबोधयितुं प्रच्छन्नकामुकोक्तं कुलजाया गाम्भीर्यगुणं काचिदाह—

**आज्ञाशतानि ददती तथा रते हर्षविकसितकपोला।**
**प्रातस्त्ववनतवदना न श्रद्ध्मः प्रियां सेति।।२३।।**[१]

रते सुखजनितहर्षेण पुलकितकपोला सती। गृहाणाधरम्, परामृश नितम्बम्, मुञ्च चिकुरमित्यादीन्याज्ञाशतानि तथा ददती, प्रातस्तु– किमप्यजानतीवाऽवनतवदना। 'रात्रिसङ्गता सेयं प्रियां' इति न विश्वसिमः। प्रातस्तु–इति अपिस्थाने तुरेवार्थसमर्पकः। लोकसमक्षं गूढाकारतैव नायकप्रीतिहेतुः, न तु चाञ्चल्यमिति भावः।

अन्यानुरक्ततया सविधमनागच्छन्तं पुनर्गुरुजनमर्यादां च कारणीकुर्वाणं नायकमुपाल-भमाना कुलीनतानमस्कारच्छलेन काचिदाह—

**प्रियविरहोऽप्रियदर्शनमपि गुरुके द्वे इमे दुःखे।**
**त्वं कार्यसे यया किल तस्यै नम आभिजात्यै ते।।२४।।**[२]

प्रियायास्तस्याः विरहः, अप्रियाया मम च दर्शनम्, द्वे अपि गुरुके इमे दुःखे यया कार्यसे त्वम् अनुभाव्यसे, तस्यै ते आभिजात्यै कुलीनतायै नमोऽस्तु। करोतिरत्राऽनुभवार्थः। अत एव मा दुःखमनुभवेत्यर्थे मा दुःखं कार्षीरिति व्यवह्रियते। अस्मिन्नृतुस्नानाद्यवसरेऽपि

---

१. **अण्णसआइँ देन्ती तह सुरए हरिसविअसिअकवोला।**
**गोसे वि ओणअमुही अह सेत्ति पिआं ण सद्दधिमो।।२३।।**
[आज्ञाशतानि ददती तथा सुरते हर्षविकसितकपोला।
प्रातरप्यवनतमुखी इयं सेति प्रियां न श्रद्दध्मः।।]

२. **पिअविरहो अप्पियदंसणं अ गरुआइँ दो वि दुक्खाइं।**
**जीएँ तुमं कारिज्जसि तीएँ णमो आहिजाईए।।२४।।**
[प्रियविरहोऽप्रियदर्शनं च गुरुके द्वे अपि दुःखे।
यया त्वं कार्यसे तस्यै नम आभिजात्यै।।]

यन्मामुपागतोऽसि तदपि बहुजनाभ्यार्थनां धर्ममर्यादां वाऽनुरुन्धान एव, न तु स्नेहेनेत्यहो ते कौलीन्यमिति प्रच्छन् उपालम्भो ध्वन्यते।

गमनाय सज्जीभूतोऽपि कथमयं न प्रस्थित इति केनचित्पृष्टे सपरिहासं तद्वयस्य आह—

**एकोपि कृष्णसारो न ददाति वलन् प्रदक्षिणं गन्तुम्।**
**किं पुनरस्त्राकुलितं लोचनयुगलं प्रियतमायाः।।२५।।**[१]

प्रदक्षिणं वलन् दक्षिणतो वाममागच्छन्नित्यर्थः। एकोऽपि कृष्णसारस्तथाविधो मृगो गन्तुं न ददाति। कृष्णसारे मृगे प्रदक्षिणं वलति यात्रा न सिध्यतीति शाकुनिकाः। पुनः बाष्पाकुलितं तथा विधयोः कृष्णशारयोः प्रियाया लोचनयोर्युगलं तु किमिति भावः। 'बाहाउलिअं' इत्यस्य मृगपक्षे 'व्याधाकुलितम्।' इत्यभिज्ञातव्यम्। संस्कृते तदिदं न सम्भवति। तथा च कान्तस्नेहनिगडितोऽयं न प्रवसतीति द्योतितम्। इयं प्रवासविलम्बेन पुंसः प्रेमपरीक्षेति सरस्वतीकण्ठाभरणे भोजः।

कश्चिदन्यवनितासक्तः प्रियया सोपालम्भमधरीकृतोऽभवत्। ततः स्वापराधप्रच्छादनाय मानमभिनयन्तमनुनीयमानमप्यनुनयमगृह्णन्तं प्रणयिनी सप्रेमदण्डमाह—

**मानमकरिष्य इह नो निशासु सुखसुप्तदरविबुद्धानाम्।**
**शून्यितपार्श्वविमोषणपीडामज्ञास्य एव यदि।।२६।।**[२]

निशासु स्वकान्तया सह सुखसुप्तानां मध्ये च किञ्चिद्विबुद्धानां ततोऽन्याभिसारिण्या स्वाकान्तया शून्यीकृतेन पार्श्वेन (शय्यैकदेशेन) यत्परिमोषणं प्रतारणं तेन या वेदना तां यदि त्वमज्ञास्यस्तदा त्वमिह अस्मिन्नन्यासक्तिविषये मानं नाऽकरिष्य एवेति योजना। यथा

---

१. **एको वि कह्णसारो ण देइ गन्तुं पआहिणवलन्तो।**
**किं उण बाहाउलिअं लोअणजुअलं पिअअमाए।।२५।।**
[एकोऽपि कृष्णसारो न ददाति गन्तुं प्रदक्षिणं वलन्।
किं पुनर्वाष्पाकुलितं लोचनयुगलं प्रियतमायाः।।]

२. **ण कुणन्तो व्विअ माणं णिसासु सुहसुत्तदरविबुद्धाणम्।**
**सुण्णइअपासपरिमूसणवेअणँ जइ सि जाणन्तो।।२६।।**
[नाकरिष्य एव मानं निशासु सुखसुप्तदरविबुद्धानाम्।
शून्यीकृतपार्श्वपरिमोषणवेदनां यद्यज्ञास्यः।।]

त्वमन्यासक्तोऽपि दोषमनभ्युपगच्छन् मानेन मां सुभृशं व्यथयसि, तथाहमप्यन्यासक्ता स्यां तदा त्वमिमां वेदनां जानीयाः। ममैवायं दोषः, यदहं त्वत्प्रणयभङ्गं न करोमीति भावः।

कृतकलहयोर्दम्पत्यो रात्रिवृत्तान्तपरिज्ञानायाऽऽगता प्रियसखी प्रणयरोषविनिवृत्यर्थमाह—

**प्रणयकुपितयोरुभयोरपि मानवतोरलीकनिद्रितयोः।**
**निभृतनिरुद्धश्वासाऽवहितश्रवसोर्नु को मल्लः।।२७।।**[१]

स्वनिःश्वासशब्दान्तरायेण अपरस्य निःश्वासशब्दो न श्रूयत इति निभृतं निश्चलं निरुद्धनिः-श्वासयोस्तथा च परस्परशब्देऽवहितश्रवसोर्दत्तकर्णयोरत एव कृतकप्रसुप्तयोर्मानवतोः। दत्तकर्णतया कृत्रिमनिद्रा प्रतीता। परस्परनिःश्वासाकर्णनदत्तावधानतया मानेऽपि परस्परमभिलाषः सूच्यते। अवहितश्रवसोरपि मानवतोरित्यनेन परस्पमनुनयेच्छायामपि बलादभिनीतमानयोरित्यहो अद्भुतो मान इति परिहासो द्योत्यते। को मल्ल इत्युपालम्भप्रश्नः। न कोऽपीत्यर्थः। परस्पराऽवधीरणाऽ-समर्थौ युवां वृथैवात्मानं खेदयथ इति भावः।।

काचिद्दूती नायिकाया देवरानुरक्तत्वेनाऽसाध्यतां सूचयन्ती कामुकं प्रत्याह—

**नवलतिकाऽऽहतिमिच्छति यतो यतोऽङ्गेषु देवरो दातुम्।**
**रोमाञ्चदण्डराजिस्ततस्ततो दृश्यते वध्वाः।।२८।।**[२]

येषु येष्वङ्गेष्विति सप्तम्यर्थे सार्वविभक्तिकस्तसिः। बहुवचनेन सर्वेष्वप्यङ्गेषु रोमाञ्चोदयेन रसोत्कर्षो ध्वन्यते। नवलताया आहतिः प्रहारः प्रणयविभ्रममभिव्यनक्ति। दण्डपदं रोमाञ्चकण्टकानां दृढावस्थानेन सात्विकस्थैर्यं ध्वनयति। 'वधू' पदेन श्वशुरादीनां कुटुम्बे

---

१. **पणअकुविआणँ दोह्न वि अलिअपसुत्ताणँ माणइल्लाणम्।**
**णिच्चलणिरुद्धणीसासदिण्णकण्णाणँ को मल्लो।।२७।।**
[प्रणयकुपितयोर्द्वयोरप्यलीकप्रसुप्तयोर्मानवतोः।
निश्चलनिरुद्धनिःश्वासदत्तकर्णयोः को मल्लः।।]

२. **णवलअपहरं अङ्गे जहिँ जहिँ महइ देवरो दाउम्।**
**रोमञ्चदण्डराई तहिं तहिं दीसइ बहूए।।२८।।**
[नवलताप्रहारमङ्गे यत्र यत्रेच्छति देवरो दातुम्।
रोमाञ्चदण्डराजिस्तत्र तत्र दृश्यते वध्वाः।।]

कृतावस्थाना गृहवासिना देवरेण च बद्धभावा नेयं साधयितुं शक्यत इति, कामुकं प्रति ध्वन्यते। सेयं 'चूतलतिका' नाम्नी क्रीडेति सरस्वतीकण्ठाभरणे भोजः। तत्र हि 'कस्ते प्रियतमः' इति पृच्छद्भिः नवलताभिः प्रियो जनो हन्यते।।

प्रोषितपतिका प्रियतमसमीपगामिनमध्वगं सखीजनं वा तदानयनत्वरार्थमेवमाह—

**तेन विना बत मयका ह्यनुभूतसुखानि संस्मरन्त्याऽद्य।**

**नादोऽभिनवघनानां निशामितो वध्यपटह इव।।२९।।**

गर्जितश्रवणाद्वर्षासु पूर्वानुभूतसुखानि संस्मरन्त्या मया मेघानां रवो वध्यपटह इव वध्यस्थानं नीयमानस्य दोषघोषणापटहशब्द इव श्रुत इति भावः। एवं च वर्षास्वपि तदनागमने मे मरणमवश्यम्भावीति यत्समयप्राप्तं तद्विधीयतामीति ध्वनितम्।।

असुन्दरभार्यानुरागितया दूतीजनसङ्घटनापराङ्मुखं ग्रामपालपुत्रं कस्याश्चित्सङ्गमा-योत्साहयितुं काचिद्दूती सोपालम्भमाह—

**निष्कृप जायाभीरुक दुर्दर्शन निम्बकीटसन्निभ हे।**

**तनुकायते कृते ते ग्रामोऽयं ग्रामणीसूनो।।३०।।**

अनुरक्तसुन्दरीजनविमुखत्वान्निर्दय! जायाभीरुक भार्यापरतन्त्र! अतएव स्वच्छन्द-विहरणाभावाद्दुर्दर्शन दुर्लभदर्शन! एवं तु अस्मादृशान्नैवाकारयसि, परं स्वैरविचरणा-भावान्मार्गादिष्वपि तव दर्शनं दुर्लभमित्यभिप्रायः निम्बकीटसन्निभ, तिक्तरुचिशालितया निम्बकीटो यथा दूरपरिहरणयोग्ये निम्ब एव रमते तथा सुन्दररमणीषु रुचिशून्यस्त्वं कुरूपायामेव भार्यायां व्यासज्यसे, अत एव निम्बकीटसदृश हे ग्रामणीसूनो ग्रामपालनन्दन! त्वं हि ग्रामप्रमुखस्य पुत्रः कस्त्वां दमयितुं शक्तः, अत एव भवता तु निर्भयेण भाव्यम्, परं भवांस्तु जायाभीरुकतया

---

१. **अज्ज मए तेण विणा अणुहूअसुहाइँ संभरन्तीए।**

**अहिणवगेहाणँ रवो णिसामिओ वज्झपडहो व्व।।२९।।**

[अद्य मया तेन विना अनुभूतसुखानि संस्मरन्त्या।

अभिनवमेघानां रवो निशामितो वध्यपटह इव।।]

२. **णिक्किव जाआभीरुअ दुद्दंसण डिम्बईडसारिच्छ।**

**गामो गामणिणन्दण तुज्झ कए तह वि तणुआइ।।३०।।**

[निष्कृप जायाभीरुक दुर्दर्शन निम्बकीटसदृक्ष।

ग्रामो ग्रामणीनन्दन तव कृते तथापि तनुकायते।।]

न तथेति निर्भयताप्रदर्शनेन प्रोत्साहनं व्यज्यते। अयं ग्रामः, ग्रामनिवासी समग्रोऽपि विलासिनीजनः, तव कृते 'कथं भवता समागमः स्यात्' इति भवच्चिन्तया तनुकायते दुर्बलो भवति। 'त्वं तथा कमनीयो यथा सकलोऽपि कामिनीवर्गस्त्वां कामयते। त्वं तु कुरूपापरवशो न तं वीक्षसे' इति भावः। 'ग्रामस्तनुकायते' इत्यनेन सुन्दरकामिनीवर्गः शनैः शनैर्ह्रसति, यतस्त्वत्सदृशा न तस्मै विलासावलम्बनं ददतीत्यपि सूच्यते।।

ग्रामणीसुतयोषिदनुरक्तत्वेऽपि तद्भर्तुः सुभटतया भयेन नाभ्युपगच्छन्तं कञ्चित्कामुकं प्रोत्साहयितुं पत्यावनिच्छया तस्याः सुखसाध्यतां पुरस्य सुखप्रवेशनिर्गमतया निरपायतां च सूचयन्ती दूती सुभटस्तुतिव्याजेनाह—

**प्रहरवनमार्गविषमे[१] कृच्छ्राज्जायाऽस्य निद्रितं लभते।**

**स्वपिति पुनः पल्ली सा सुखमुरसि ग्रामणीसूनोः।।३१।।[२]**

'उरे' इत्यस्य प्राकृते 'उरसि' 'पुरे' वा इति द्विधाऽर्थः सम्भवति। एवम् 'पहरवणमग्ग-विसमे' इति विशेषणस्यापि 'प्रहारव्रणमार्गविषमे' इति 'प्रहरवनमार्गविषमे' इति चोभयथाऽर्थः। शस्त्रप्रहारव्रणकिणैर्विषमे निम्नोन्नतकर्कशेऽस्य ग्रामणीपुत्रस्योरसि जाया पत्नीत्वेन वशंवदा स्त्री कृच्छ्रेण निद्रां लभते। अनिच्छन्त्यपि भयात्तमालिङ्ग्य स्वपितीत्यर्थः। पुरपक्षे तु— प्रहरेण गम्यो यो वनमार्गस्तेन विषमे दुर्गमे तस्य पुरे, पल्ली लक्षणया ग्रामवासी जनः सुखं स्वपिति। पुरस्य सुरक्षिततया निःशङ्कं निद्राति, न कोऽपि जागर्तीत्यर्थः। किञ्चमार्गस्य प्रहरगम्यतया न कोऽपि भवन्तं निर्गच्छन्तमनुसरिष्यतीत्यपि व्यज्यते। सा किल तस्य जाया, बहुवल्लभत्वात्तस्य स्त्रीमात्रम् न तु प्रियतमा। अत एवाऽसन्तोषेण निद्रामलभमाना सा साऽवसरैव। अतस्तत्र निर्विशङ्कं गच्छेति कामिनं प्रति दूत्या द्योत्यते। संस्कृते द्वयोरर्थयोर्युगपत्सङ्ग्रहाभावेन अर्थाऽनुगतशब्दानुसारं द्विधा पठनीयं स्यात्।।

आसक्तिवशाद् गोत्रस्खलिते सत्यन्यनायिकानाम्ना सम्बोध्य मानेऽनुनयन्तं नायकं धीरा खण्डिता प्रणयकोपवक्रतया सविनयोपालम्भमाह—

---

१. 'प्रहतिव्रणकिणविषमे' इति पाठः क्वचित्।

२. **पहरवणमग्गविसमे जाआ किच्छेण लहइ से णिद्दम्।**
**गामणिउत्तस्य उरे पल्ली उण सा सुहं सुवई।।३१।।**
[प्रहारव्रणमार्गविषमे जाया कृच्छ्रेण लभते तस्य निद्राम्।
ग्रामणीपुत्रस्योरसि पल्लीः सा सुखं स्वपिति।।]

**सम्भावितमार्गोऽयं निर्व्यूढः सुभग केवलं भवता।**
**हृदयेऽन्यद्वचनेऽन्यन्नूनमिदानीं तु लोकस्य।।३२।।**[१]

नूनमस्मिन्समये लोकस्य हृदये अन्यत् वचने त्वन्यत्- अयं पुनः प्राक्तनः सम्भावितमार्गः श्रेष्ठपुरुषाणां समयः केवलं भवतैव निर्व्यूढो यद्हृदये स्यात्तदेव वचने इति। तव हृदये सैव रात्रिसहचरी रमते अत एवानुनयेऽपि तन्नामैव गृहीतम् मौखिकेन प्रियवचसापि न मम नाम। अहो ते श्रेष्ठतेति भावः।।

पत्युरन्यासङ्गेन प्रणयकुपिता पराङ्मुखं शयाना काचित्पृष्ठाभिमुखसुप्तं कान्तमाह-

**उष्णानि निःश्वसन्किल शयनार्द्धे किमिति मम पराङ्मुख्याः।**
**मानसमप्यनुशयतः प्रदीप्य पृष्ठं प्रदीपयसि।।३३।।**[२]

शयनीयार्द्धे पराङ्मुख्याः। पूर्वं तव मम चोभयोः शयनीयमेकमासीन्न विभक्तम्। इदानीं न तथेति स्वकीयेऽर्द्धे पृष्ठं परावृत्त्य शयानायाः। त्वच्चिन्तामप्यकुर्वाणाया इत्यपि पराङ्मुखत्वेन ध्वन्यते। सपत्नीसमुत्कर्षजनितेनानुशयेन मम मानसं प्रदीप्य, उष्णनिःश्वासैः पृष्ठमपि किमिति प्रदीपयसि। अथवा पराङ्मुख्याः इति विपरीतमुच्यते। अहं तु त्वत्तः प्रेमपराङ्मुखी अस्मि। तामेवानुकूलां वल्लभामुपगच्छ। निःश्वासाभिनयादिभिर्मामात्मानं च किं मुधा खेदयसीति भावः।।

अवधिदिवसेऽप्यनागतं नायकं स्वयमुपगता दूती कस्याश्चिद्विरहिण्या अवस्थामेवमाह—

---

१. **अह संभाविअमग्गो सुहअ तुए जेव्व णवरँ णिव्वूढो।**
**एह्णिं हिअए अण्णं अण्णं वाआइ लोअस्स।।३२।।**
[अयं सम्भावितमार्गः सुभग त्वयैव केवलं निर्व्यूढः।
इदानीं हृदयेऽन्यदन्यद्वाचि लोकस्य।।]

२. **उह्नाइँ णीससन्तो किंति मह परंमुहीएँ सअणद्धे।**
**हिअअं पलीविअ वि अणुसएण पुट्ठिं पलीवेसि।।३३।।**
[उष्णानि निःश्वसन्किमिति मम पराङ्मुख्याः शयनार्धे।
हृदयं प्रदीप्याप्यनुशयेन पृष्ठं प्रदीपयसि।।]

**तव विरहे चिरकारक तस्याः पतदश्रुपूरमलिनेन।**
**छाया मुखेन नाप्ता रविरथशिखरध्वजेनेव।।३४।।**[१]

अवधिदिवसलङ्घनात् चिरकारक! पतदश्रुपूरमलिनेन निपतद्बाष्पमलिनेन तस्या मुखेन तव विरहे छायैव कान्तिरेव न प्राप्ता। तव समागमे या कान्तिरभूत्सा एकदिनमपि न दृष्टेति भावः। यथा सूर्यसान्निध्याद्रविरथध्वजेन कदापि छाया आतपाभावो न प्राप्त इति। 'छाया सूर्यप्रभा कान्तिः प्रतिबिम्बमनातपः' अमरः। ततश्च चिरकारितां परित्यज्य विरहविकलामेनामनुकम्पस्वेति व्यङ्ग्योऽर्थः।।

नववधूं सतीवृत्तशिक्षणार्थं कापि कुटुम्बसम्भाविता पुरन्ध्री आह–

**कुड्यलिखितानि दूषितमनसो ननु देवरस्य कुलयोषित्।**
**दिवसं कथयति रामाऽनुलग्नसौमित्रिचरितानि।।३५।।**[२]

कामविकारेण दूषितमनसो देवरस्य, देवरं प्रतीति भावः। कुलवधूः, कुलीनतया कुटुम्बविघटनभयेन तद्दुरभिप्रायमन्येष्वप्रकाशयन्तीति कुलवधूपदेन द्योत्यते। गृहभित्तौ लिखितानि रामाऽनुगतलक्ष्मणचरितानि, दिवसं समग्रदिनमभिव्याप्य कथयति। निशि दूषितहृदयतया न भवेत्तत्प्रभाव इति दिवसे वर्णनम्। दिवसमित्यत्यन्तसंयोगेन बहुकालवर्णनात्तद्दृढीकरणाध्यवसायो ध्वन्यते। सौमित्रिचरितानीत्यनेनैव देवरशिक्षणे सम्भवत्यपि, 'लक्ष्मणो रामं पितरमिवानुवर्तमानो यथा सर्वदा तन्मतानुयाय्यभवत्तथा त्वयापि ज्येष्ठो भ्राता तथैव बोद्धव्योऽन्यथा ज्येष्ठभ्रात्रा सह तवैककुटुम्बेऽनुगमनं दुर्घटम्' इति 'रामानुगत' पदेनाभिव्यज्यते। कुलवध्वा भित्तिचित्रितं रामायणवृत्तान्तं प्रदर्श्य वैमात्रेयेऽपि रामे सभार्येऽनुलग्नानि लक्ष्मणचरित्राणि समुदीर्य अशुद्धमना देवरोऽपि प्रत्याख्यायते, किमुताऽन्यः। सोऽप्येवम्, न तु प्रकटम्, सर्वत्र कलङ्कसङ्कीर्तनभयादिति भावः।।

---

१. **तुह विरहे चिरआरअ तिण्णा णिवडन्तवाहमइलेण।**
**रइरहसिहरधएण व मुहेण छाहि व्विअ ण पत्ता।।३४।।**
[तव विरहे चिरकारक तस्या निपतद्बाष्पमलिनेन।
रविरथशिखरध्वजेनेव मुखेन च्छायैव न प्राप्ता।।]

२. **दिअरस्स असुद्धमणस्स कुलबहू णिअअकुड्डलिहिआइं।**
**दिअहं कहेइ रामाणुलग्गसोमित्तिचरिआइं।।३५।।**
[देवरस्याशुद्धमनसः कुलवधूर्निजककुड्यलिखितानि।
दिवसं कथयति रामानुलग्नसौमित्रिचरितानि।।]

'सतीत्वखण्डनकारणेष्वपि दृढचित्तानां न विनाशो भवति' इत्युक्त्या स्वदोषं प्रच्छादयन्ती काचिदाह—

**चत्वरगृहिणी तरुणी प्रोषितपतिका च मञ्जुमूर्तिश्च।**
**असतीप्रतिवेशिन्यथ सुदुर्गता न खलु खण्डितं शीलम्।।३६।।**[१]

चत्वरे (चतुष्पथे) गृहं यस्याः, वास्तवे तु चत्वरे प्राङ्गणसदृशे शून्यप्रान्तरे गृहं यस्याः, तत्र विविक्ततया विटानां यातायातसम्भवात्। 'चत्वरे राजमार्गो गृहं यस्याः' इति गङ्गाधरभट्टः। मञ्जुमूर्तिः प्रियदर्शना, सुन्दरीत्यर्थः। असत्याः कुलटायाः प्रतिवेशिनी। सुदुर्गता भूरिदरिद्रा। तथापि शीलं पातिव्रत्यं न खण्डितम्। अत्र चत्वरगृहिणीत्वादेः शीलखण्डनकारणस्य सत्त्वेऽपि तदभावाद्विशेषोक्तिः। 'विशेषोक्तिरनुत्पत्तिः कार्यस्य सति कारणे' इति लक्षणात्। अनया च 'कलङ्ककारणाभिशङ्कया जनैर्मुधाहं निन्दिता, न मे चरित्रदोषः' इति निजदोषगोपनं व्यङ्ग्यम्। वस्तुतस्तु सेयं पतिव्रतायाः कस्याश्चिच्छीलप्रशंसा। भोजोऽपि सरस्वतीकण्ठाभरणे शीलसम्पदुदाहरणे इमामुदाजहार (५ परि.)।

नदीतटकदम्बनिकुञ्जकृतसङ्केतेन कान्तेन विप्रलब्धा नायिका 'अहं तत्र गता, त्वं तु नागतः' इति तं सूचयन्ती सखीजनमन्यापदेशेनाह-

**आवर्ताकुलखण्डितकेसरभारो भरेण गिरिनद्याः।**
**ह्रियते कदम्बशाखी दरमग्नोन्मग्नमग्नमधुपोऽयम्।।३७।।**[२]

तालूरो जलावर्त इति देशी। 'आवर्तानां जलभ्रमाणां भ्रमणेनाकुलः' इति पुनरुक्तमिवेति संस्कृतच्छायायामावर्तैः आकुलः इत्येव निबद्धम्। अतएव खण्डितः केसरभारः परागकोशसमूहो यस्य सः। तथापि दरमग्नोन्मग्नमग्नमधुपः ईषन्मग्नः, कदाचिदुपरिप्रवाहिततया उन्मग्नः, कदाचिच्च

---

१. **चत्तरघरिणी पिअदंसणा अ तरुणी पउत्थइआ अ।**
**असईसपज्जिआ दुग्गआ अ ण हु खण्डिअं सीलम्।।३६।।**
[चत्वरगृहिणी प्रियदर्शना च तरुणी प्रोषितपतिका च।
असतीप्रतिवेशिनी दुर्गता च न खलु खण्डितं शीलम्।।]

२. **तालूरभामउलखुडिअकेसरो गिरिणईएँ पूरेण।**
**दरबुड्डउबुड्डुणिबुड्डमहुअरो हीरइ कलम्बो।।३७।।**
[जलावर्तभ्रमाकुलखण्डितकेसरो गिरिनद्याः पूरेण।
दरमग्नोन्मग्ननिमग्नमधुकरो ह्रियते कदम्बः।।]

जलवेगेन मग्नो मधुपो यस्मिन्। मधुपानलोभिनोऽपि गलितमरन्दे प्रीतिरिति मधुपपदेनाभिव्यज्यते। तादृशोऽयं कदम्बवृक्षो गिरिनद्याः भरेण पूरेण ह्रियते। एवं च भग्नकेसरतया गलितमकरन्देऽपि कदम्बे सततमधुपानलोभिनोऽपि भ्रमरस्येयं दृढस्नेहता, तव तु का नाम चिरस्नेहताप्रत्याशा, इदानीमेवाहं छलितेति सरोष उपालम्भो व्यज्यते।।

कस्याश्चित्पतिव्रताया धनाद्यसाध्यतां सूचयितुं दूती कञ्चित्कामुकमेवमाह—

**छायां सुदुर्गतस्य हि रक्षन्त्यभिजातमानिनः पत्युः।**

**विभवेनागच्छद्भ्यः क्रुध्यति गृहिणी स्वबान्धवेभ्योऽपि।।३८।।**[1]

दरिद्रस्य अथ कौलीन्यमानवतः पत्युश्छायां महत्त्वं रक्षन्ती। विभवेन धनसमृद्ध्या सहाऽऽगच्छद्भ्यः। बान्धवानां धनसमृद्धिमालोक्य पत्युर्मनोग्लानिर्भवेदित्याशयेन। एवं च पतिचित्तानुवृत्त्यर्थं बन्धुजनस्याप्युपहारं न बहु मन्यते, किं पुनः कामिजनस्येति न धनादिना सा साध्येति कामुकं प्रत्यभिव्यज्यते।।

काञ्चित्पतिव्रतां कामयमानं विटं प्रति दूती तस्याः स्वभावमाह–

**स्वाधीनेऽपि प्रेयसी लब्धेऽवसरेऽपि मण्डितो नात्मा।**

**प्रतिवेशिनीं दरिद्रप्रोषितपतिकां हि दृढयन्त्या।।३९।।**[2]

स्वाभीष्टप्रियतमतया मनोऽभीष्टमण्डनसमृद्धिरभिव्यज्यते। मदनमहोत्सवादावसरे प्राप्तेऽपि, तथा च शालीनतया वेषभूषणासक्त्यभावेऽपि सौभाग्यादिनिमित्तं धारणार्हताऽ-भिव्यज्यते। दरिद्रश्च प्रवासं गतश्च पतिर्यस्यास्तां प्रतिवेशिनीं स्वचारित्र्ये दृढीकुर्वन्त्या आत्मा नालङ्कृतः। कृतमण्डनां मामवलोक्य व्याकुला सेयं खण्डितचरित्रा स्यादिति शङ्कया या

---

१. **अहिआअमाणिणो दुग्गअस्स छाहिं पअस्स रक्खन्ती।**
**णिअबन्धवाणँ जूरइ घरिणी विहवेण एत्ताणम्।।३८।।**
[आभिजात्यमानिनो दुर्गतस्य छायां पत्यू रक्षन्ती।
निजबान्धवेभ्यः क्रुध्यति गृहिणी विभवेनागच्छद्भ्यः।।]

२. **साहीणे वि पिअअमे पत्ते वि खणे ण मण्डिओ अप्पा।**
**दुग्गअपउत्थवइअं सअज्झिअं सण्ठवन्तीए।।३९।।**
[स्वाधीनेऽपि प्रियतमे प्राप्तेऽपि क्षणे न मण्डित आत्मा।
दुर्गतप्रोषितपतिकां प्रतिवेशिनीं संस्थापयन्त्या।।]

नात्मानमपि मण्डयति तस्याः स्वचरित्रखण्डनकल्पना दूर इति तात्पर्यम्। अथवा प्रतिवेशिनी-स्थापनार्थमनया मण्डनं न कृतम्, न तु कामुकान्तरविरहदुःखेनेति स्वसखीदोषप्रच्छादनार्थं सख्या वचनमिति गङ्गाधरभट्टः। प्रवासे स्त्रियो नात्मानं भूषयन्ति, अतएव 'प्रस्मरती' त्यादाविव निषेधार्थकप्रपूर्वोऽसौ 'वस अच्छादने' धातुः। न वस्त्रभूषादिकं यत्र स्त्रीभिः क्रियत इति सरस्वतीकण्ठाभरणे भोजः।।

दूती नायकमनुकूलयितुं नायिकानुरागं वर्णयति-

**वसतिस्तवेति हृदयं त्वममूभ्यां दृष्ट इति नेत्रे।**
**तव विरहे कृशितानीत्यङ्गान्यपि तु प्रियाण्यस्याः।।४०।।**[१]

हृदयं तव वसतिरित्यनेन 'सर्वदा त्वां सा हृदयेन विचिन्तयति' इत्यनन्यासक्तिरभि-व्यज्यते। ततश्च आत्मनः शरीरमपि त्वत्सम्बन्धेनैव सा बहु मन्यते, अन्यथा एतावत्पर्यन्तं तव विरहे तस्या जीवितमेव दुरवस्थानमासीदिति, अनुरक्तां तामचिरमानन्दयेति नायकं प्रति ध्वन्यते।।

काचित्खण्डिता बहुधा कृतापराधमथ च 'सद्भावस्नेहोचितं नेदम्, यत् इयत्कुप्यसि' इति भृशमनुनयन्तं कान्तं विपरीतार्थवाग्गुम्फेनोपालभते-

**सद्भावस्नेहभृते रक्ते रज्यत इति हि युक्तमिदम्।**
**यद्दीयतेऽन्यहृदये हृदयं यत्तज्जनो हसति।।४१।।**[२]

सद्भावेन सर्वकार्यानुकूलतया साधुभावेन, स्नेहेन च पूर्णेऽनुरक्ते जनेऽनुरज्यत इतीदं युक्तमेव। किञ्च कुन्तलकलापस्नेहवति अलक्तकादिरागरक्ते तस्मिन् हृदयानुकूले जने त्वमपि पादसंवाहनादिना रञ्जितो भवसीत्यपि साकूतमभिव्यञ्जितम्। यत् पुनः अन्यहृदये सद्भावस्नेह-

---

१. **तुज्झ वसइत्ति हिअअं इमेहिँ दिट्ठो तुमंति अच्छीहिं।**
**तुह विरहे किसिआइं ति तीएँ अङ्गाइँ वि पिआइं।।४०।।**
[तव वसतिरिति हृदयमाभ्यां दृष्टस्त्वमित्यक्षिणी।
तव विरहे कृशितानीति तस्या अङ्गान्यपि प्रियाणि।।]

२. **सब्भावणेहभरिए रत्ते रज्जिज्जइत्ति जुत्तमिणम्।**
**अणहिअए उण हिअअं जं दिज्जइ तं जणो हसइ।।४१।।**
[सद्भावस्नेहभरिते रक्ते रज्यत इति हि युक्तमिदम्।
अन्यहृदये पुनर्हृदयं यद्दीयते तज्जनो हसति।।]

शून्यस्य मादृशस्य हृदये यत् हृदयं दीयते तज्जनोपहासायेति तामेव स्नेहभरितां हृदयदयितामनुवर्तस्वेति भावः। यद्वा काचिद्दूती अभियोज्यायाः पत्यावनुरागभङ्गार्थं तस्मिन्नसन्तमपि दोषमुद्भावयन्ती इदमाह। अनुरक्त एव दृढानुबन्धो युज्यते, अननुरक्तेऽन्यत्रासक्ते तद्विडम्बनमात्रमिति तदाशयः।

वैफल्यशङ्कया नायिकाऽभिसारमनारभमाणं विमृश्यकारिणं नायकं प्रोत्साहयितुं दूत्याह–

**ध्रुवमारभमाणस्य प्रभवति लक्ष्मीर्नरस्य मरणं वा।**
**मरणमनारम्भेऽपि प्रभवति लक्ष्मीः पुनर्न भवतीयम्।।४२।।**[१]

एवं स्थितावपि लक्ष्मीमिव सौशील्यादिगुणोपेतामेतामङ्कगतां किमिति भीरुतयोपेक्षस इति नायकप्रोत्साहनं ध्वन्यते।।

'प्रवासादिषु चिरविरहमपि सहन्ते योषित इति किं नामाऽत्रैव वर्तमाने तस्मिञ्श्चिरयति इयदुद्विग्नासि' इति सान्त्वयन्तीं प्रौढां कामपि विरहोत्कण्ठिता काचिदाह–

**वल्लभजनस्य सह्यत आशाबन्धेन विरहवह्निरपि।**
**प्रवसतिरेकग्रामे मातर्मरणं विशेषयति।।४३।।**[२]

एकस्मिन्नेव ग्रामे प्रवासो मरणादतिरिच्यते, प्रत्याशाहेत्वभावादिति भावः। दूरस्थयोरिव अन्तिकस्थयोरपि सन्निकर्षाभावात्प्रवासो भवतीति विषये सेयमुदाहृता गाथा भोजेन(५ परि.)।

सुरतसमये नायकस्यान्यमनस्कतां वीक्ष्य विमनायमानां नायिकां दूती आह–

---

१. **आरम्भन्तस्स धुअं लच्छी मरणं वि होइ पुरिसस्स।**
**तं मरणमणारम्भे वि होइ लच्छी उण ण होइ।।४२।।**
[आरभमाणस्य ध्रुवं लक्ष्मीर्मरणं वा भवति पुरुषस्य।
तन्मरणमनारम्भेऽपि भवति लक्ष्मीः पुनर्न भवति।।]

२. **विरहाणलो सहिज्जइ आसाबन्धेण वल्लहजणस्स।**
**एकग्गामपवासो माए मरणं विसेसेइ।।४३।।**
[विरहानलः सह्यत आशाबन्धेन वल्लभजनस्य।
एकग्रामप्रवासो मातर्मरणं विशेषयति।।]

**हृदये प्रियाऽऽस्खलति[१] किल रममाणस्यान्यमहिलायाम्।**

**दृष्टे गुणे तु सदृश ह्यदृश्यमाने गुणेऽसदृशे।।४४।।[२]**

संस्कृते रमतेरकर्मकतया सप्तम्या विपरिणामश्छायायाम्। अन्यमहिलायां रममाणस्य प्रियस्य हृदये सीत्कृत-हसित-सौन्दर्यादौ सदृशे गुणे दृष्टे सति, विसम्वादिनि गुणे चादृष्टे सति पूर्वानुभूता प्रिया आस्खलति, सहसैवोदेति, स्मृतिपथमुपयातीत्यर्थः। 'प्रिया' पदेन 'हृदयस्य या प्रीतिपात्रं भवति, सा सदृशान् गुणान् दृष्ट्वा हृदये जागर्ति' इति पूर्वानुभूतनायिकायाः प्रेमास्पदत्वं ध्वन्यते। एवञ्च अन्यस्त्रीप्रसङ्गे सति भर्तुर्हृदये समानोत्कृष्टापकृष्टगुणाश्रयतया प्रिया स्मृतिपथं याति, न तु त्वयि वैराग्यादन्यमनस्कता। तथा च स्वैर्गुणैस्तामपि शनैः शनैर्विस्मारयेति नायिकां प्रत्युपदेशो ध्वन्यते। अथवा रममाण इति अन्तर्भावितण्यर्थमुपगम्य 'रममाणस्याऽपरां रमणीम्' इति छायापाठं स्वीकृत्य अन्यां रमणीं रमयत इत्यर्थोऽभ्युपगम्यः। एवमादिषु विषयेषु गङ्गाधरस्य मौनं धैर्यभङ्गायैव। यद्वा-कश्चिद्भुजङ्गो बहुवनितोपभोगेन कामुकत्वातिशयमात्मनः प्रकटयन्, शृण्वत्कामिनीजनचेतः समाकर्षणार्थं स्वानुभवमिवाह।।

मानिनीमनुनेतुमनुभवशालिनी काचित्प्रौढा यौवनादिदुर्लभतामेवमाह-

**तारुण्ये सरिदोघप्रतिमेऽतिप्रोषितेषु दिवसेषु।**

**अनिवृत्तासु च रात्रिषु पुत्रि नु किं दग्धमानेन।।४५।।[३]**

कतिपयदिनस्थायितया यौवनस्य नदीपूरसादृश्यम्। अतिप्रोषितेषु अत्यन्तं (दीर्घम्) प्रवासं गतेषु, अपुनरागामिषु इति यावत्। एते दिवसा रात्रयश्च गता न पुनः प्रतिनिवर्तन्त इति भावः। अतएव एवंविधेषु अपुनर्लभ्येषु यौवनदिवसेषु सुखविधातकारकोऽयं

---

१. 'अखरना' 'खलना' हिन्दीभाषाप्रसिद्धम् इति एव प्राकृतरूपाद्विपरिणतं भवेदित्यनुमनम्।

२. **अक्खडइ पिआ हिअए अण्णं महिलाअणं रमन्तस्स।**
**दिट्ठे सरिसम्मि गुणेऽसरिसम्मि गुणे अणीसन्ते।।४४।।**
[आस्खलति प्रिया हृदये अन्यं महिलाजनं रममाणस्य।
दृष्टे सदृशे गुणे असदृशे गुणे अदृश्यमाने।।]

३. **णइऊरसच्छहे जोव्वणम्मि अइपवसिएसु दिअसेसु।**
**अणिअत्तासु अ राईसु पुत्ति किं दड्ढमाणेण।।४५।।**
[नदीपूरसदृशे यौवने अतिप्रोषितेषु दिवसेषु।
अनिवृत्तासु च रात्रिषु पुत्रि किं दग्धमानेन।।]

मानहतकस्त्यज्यतामिति तात्पर्यम्। 'पुत्रि' इति सम्बोधनेन त्वत्तो वृद्धतया महाऽनुभवशालिन्यहं स्नेहभाजनं त्वां हितमुपदिशामीति निजवक्तव्यस्योपादेयता ध्वन्यते।।

काचित्प्रवत्स्यत्पतिका निशाप्रार्थनाऽपदेशेनात्मनो विरहाऽसहत्वं सूचयन्ती कान्तप्रवासनिरासर्थामाह–

**कल्यं किल खरहृदयः प्रवत्स्यति प्रिय इति श्रुतं जनतः।**

**भगवति वर्द्धस्व निशे तथा, यथा कल्यमेव नोदेति।।४६।।**[१]

मम पीडानभिज्ञत्वान्निष्ठुरहृदयः प्रियः कल्यं प्रातः प्रस्थास्यते इति जनतः श्रूयते। 'प्रत्यूषोऽहर्मुखं कल्यः।' 'जनात् श्रूयते' अनेन मद्विरहदुःखमनुमाय प्रत्यक्षं न स गन्तुमसूचयत्परं जनेभ्यः श्रूयते। तथा च मद्दुःखं जानन्नपि स प्रवसतीति निगूढ उपालम्भोऽभिव्यज्यते। भगवति निशे, तथ वृद्धस्व यथा कल्यं न भवतीत्यनेन अहमिमां निशामेव दृष्टवती, नदिनोदयं द्रक्ष्यामि, तद्विरहे जीवितस्य स्वतोगमित्वादिति ध्वन्यते। तथा च यदि मज्जीवितं कामयसे तर्हि परिहर प्रवासाध्यवसायमिति प्रियं प्रत्यभिव्यज्यते। यद्वा प्रातरयं गमिष्यति, इतोऽग्रे त्वं स्वच्छन्दं विहरेति जारं सुखयितुं स्वैरिण्या उक्तिरियमिति।।

सखीमौग्ध्यकथनव्याजेन तत्प्रियतमस्य प्रवासनिरासार्थं काचिदाह–

**भाविपथिकस्य जाया ह्यापृच्छनजीवधारणरहस्यम्।**

**पृच्छन्ती प्रतिगेहं भ्रमति प्रियविप्रयोगसहशीला।।४७।।**[२]

---

१. **कल्लं**[१] **किल खरहिअओ पवसिइहि पिओत्ति सुणणइ जणम्मि।**

**तह वड्ढ भअवइ णिसे जह से कल्लं विअ ण होइ।।४६।।**

**[कल्यं किल खरहृदयः प्रवत्स्यति प्रिय इति श्रूयते जने।**

**तथा वर्धस्व भगवति निशे यथा तस्य कल्यमेव न भवति।।]**

१. एतां गाथामविकलमनुहरति हिन्दीपद्यमिदम्– ''सजन सकारै जाँयगे नैन मरैंगे रोय, विधना ऐसी रैन करि, भोर कबहु ना होय।।''

२. **होन्तपहिअस्स जाआ आउच्छणजीअधारणरहस्सम्।**

**पुच्छन्ती भमइ घरं घरेण पिअविरहसहिरीओ।।४७।।,**

[भविष्यत्पथिकस्य जाया आपृच्छनजीवधारणरहस्यम्।

पृच्छन्ती भ्रमति गृहं गृहेण प्रियविरहसहनशीलाः।।]

भाविपथिकस्य अनुपदमेव पथिकतां स्वीकरिष्यतः, जाया स्त्री न तु वल्लभा। मत्सखी तु त्वां हृदयदयितं मन्यते परं त्वमेतां भरणीयां भार्यामात्रं मन्यसे, अत एव मुग्धामपीमां परित्यज्य प्रस्थातुं समीहस इत्युपालम्भो ध्वन्यते। प्रियविप्रयोगं सहते एवंविधं शीलं यासां ताः, अर्थात् प्रियविरहं याः सोढवत्य एवंविधाः दृढाः स्त्रियः प्रति, आपृच्छनम् 'प्रिये! याम्यहम्' इति गमनप्रश्नः। तस्मिन समये यज्जीवधारणं तस्य रहस्यं निगूढतत्त्वं पृच्छन्ती सती प्रतिगेहं भ्राम्यति। प्रियतमगमनसमये जीवधारणं सुतरां कठिनकार्यमिति न सहसा तादृशदृढमहिलालाभ-सम्भवः, अतएव अन्वेषणार्थं प्रतिगृहं भ्रमतीत्याशयः। 'रहस्य' पदेन, आपृच्छनकाले जीवधारणस्योपायो न साधारणतया सुलभः किन्तु अतिगूढं तत्तत्त्वमिति तस्य दुर्लभत्वं ध्वन्यते। एतेन 'तव विरहस्तु दूरे, तव गमनसमय एव मुग्धाया एतस्या जीवनसंशयः' इति सुस्पष्टं ध्वन्यते। प्रवासविषये साध्वसेन (भयेन) स्त्रियाः प्रेमपरीक्षा भवतीति सेयमुदाहरणरूपेण गृहीता गाथा भोजेन (५ परि.)।।

काचित्स्वाधीनपतिका, अन्यस्त्रीष्वात्मनः सौभाग्यमास्थापयितुं पत्युरन्यवनिताप्रसङ्ग-प्रार्थनाव्यपदेशेन भर्तर्यन्यकामिन्यवकाशाभावमाह-

**अन्यमहिलाप्रसङ्गं कुर्वस्माकं तु देव दयितस्य।**

**पुरुषा एकान्तरसा दोषगुणौ न खलु जानन्ति।।४८।।**[१]

'दे' शब्दः सानुनयसम्बोधने। हे देव, अस्माकं दयितस्यान्यमहिलाप्रसङ्गं कुरु। यतः खलु एकमात्ररसाः पुरुषाः स्त्रीणां गुणदोषौ न जानन्ति। अन्तशब्दः स्वरूपवाची, ततश्च एकरसा इत्यर्थः। एकमात्ररसो मे दयित इति सूचनान्नात्राऽपरवनिताऽवकाश इति ध्वनितम्। स्त्रीणां गुणदोषपरिज्ञानाय कामं प्रसज्यतां मद्दयितोऽन्यमहिलास्विति वदन्त्या 'मत्सदृशी अन्यगुणवती न लप्स्यते। अतएव गुणमुग्धो मे दयितो वशीभूतः' इति अन्यमहिलाः प्रत्यात्मनः सौभाग्यं ध्वन्यते। यद्वा पत्युरन्यासङ्गप्रार्थनेन, अवकाशमिच्छन्त्या जारं प्रति प्रच्छन्नरताभिलाषः सूच्यत इति कश्चित्। अहङ्कारर्द्धिः (अत्यहङ्कारा) सेयमुद्धता नायिकेति सरस्वतीकण्ठाभरणे भोजः (५ परि.)।।

---

१. **अण्णमहिलापसङ्गं दे देव करेसु अह्म दइअस्स।**

**पुरिसा एक्कन्तरसा ण हु दोसगुणे विआणन्ति।।४८।।**

[अन्यमहिलाप्रसङ्गं हे देव कुर्वस्माकं दयितस्य।

पुरुषा एकान्तरसा न खलु दोषगुणौ विजानन्ति।।]

स्वयंदूती पथिकमाह–

**स्तोकमपि निःसरति नो मध्याह्ने पश्य गात्रतललीना।**

**छायाप्यातपभयतो विश्राम्यसि किं न तत्पथिक।।४९।।**[१]

आतपखिन्नाः पथिका यस्यां छायायां विश्राम्यन्ति सा अचेतना छायाप्यातपभयेन बहिर्न निष्क्राम्यति किं पुनश्चेतन इत्युत्प्रेक्षया मध्याह्ने न कोऽपि बहिर्निःसरति, तथा च विविक्तनिरपायेऽस्मिन्सुखसमये छायामिव मां गात्रतललीनां कुर्विति प्रच्छन्नं रताभिलाषो व्यज्यते।।

विरहोत्कण्ठिता चिरकालानन्तरमागतं कान्तमुपालभमाना ज्वरश्लाघाच्छलेन सचातुर्यमाह–

**सुखपृच्छकं सुदुर्लभजनमप्यस्माकमानयन् दूरात्।**

**उपकारक जीवितमपि नयन् नहि ज्वर कृतापराधोऽसि।।५०।।**[२]

सुखपृच्छकं अस्वस्थदशायां सुखं पृच्छति तादृशम्। तथा च लोकव्यवहारादागतो भवान् न स्नेहादित्युपालम्भो ध्वन्यते। अस्माकं नितरां दुर्लभं जनमपि दूरादनयन्। अतएव दुर्लभप्रियाऽऽनयनकरत्वादुपकारक हे ज्वर, जीवितमपि नयन् न कृतापराधोऽसि। सुदुर्लभ इत्यनेन 'तुभ्यं समर्पितहृदया, अस्माकमतिदुर्लभः' इत्याक्षेपो द्योत्यते। दूरात् इति विपरीतलक्षणय समीपवासी, अपि न दर्शनावसरं ददासीत्युपालम्भसूचना वा। 'अस्माकं, इत्यनेन 'भवानस्मदर्थमेव निष्ठुरहृदयः, अन्यासु ते निर्बाधा प्रीतिः' इत्युपालम्भो व्यज्यते।

---

१. **थोअं पि ण णीसरई मज्झण्णे उह सरीरतललुक्का।**

**आअवभएण छाई वि पहिअ ता किं ण वीसमसि।।४९।।**

[स्तोकमपि न निःसरति मध्याह्ने पश्य शरीरतललीना।

आतपभयेन च्छायापि पथिक तत्किं न विश्राम्यसि।।]

२. **सुहउच्छअं जणं दुल्लहं वि दूराहि अम्ह आणन्त।**

**उअआरअ जर जीअं णि णेन्त ण कआवराहोसि।।५०।।**

[सुखपृच्छकं जनं दुर्लभमपि दूरादस्माकमानयन्।

उपकारक ज्वर जीवमपि नयन्न कृतापराधोऽसि।।]

एवञ्चैतावत्कालं त्वद्दर्शना-भिलाषेणैव दुःखं सोढमिदानीं तु त्वद्दर्शनोपकारो ज्वरेण साधित इत्येवं निःस्नेहे त्वयि मम मरणमेव साम्प्रतं वरमित्युपालम्भोऽभिव्यज्यते। कामबाधया प्रत्येतव्या सेयमप्रस्तुतप्रशंसेति भोजः। यतः अप्रस्तुतस्य ज्वरस्य स्तुत्या प्रियस्य प्रतीतिर्भवतीति।।

खण्डिता सुखप्रश्नार्थमागतं कान्तं प्रति सेर्ष्यमाह-

**आमज्वरोऽस्तु मन्दोऽथ मे न मन्दो जनस्य का चिन्ता।**

**सुखपृच्छक शुभगन्ध स्पृश मा मां गन्धितां सुभग।।५१।।**[१]

त्वद्गतक्रोधेन रात्रौ जागरणाद् उत्पन्नो मे आमज्वरः- अजीर्णोत्पन्नो ज्वरः। मन्दोऽस्तु अथवा न मन्दोऽस्तु, जनस्य मद्दुःखाद्यजानत उदासीनस्य का चिन्ता? जनस्येत्यनेन साधारणमनुष्यवत् त्वं तटस्थोऽसि, अतएव मद्दुःखाददुःखितस्य भवतः किमनेन मन्दाऽमन्दप्रश्नेनेत्युपालम्भो ध्वन्यते। सुखपृच्छक! लोकव्यवहारानुरोधादस्वास्थ्यवार्ताकारक! एतेन 'प्रातरपि केवलं लोकानुरोधादेव समागतो न पुनः स्नेहात्' इत्याक्षेपो ध्वन्यते। सुभग! बहुवल्लभत्वात्सौभाग्यसम्पन्न! हे शुभगन्ध! प्राणप्रियालिङ्गनसङ्क्रान्ताङ्गपरिमलत्वात्सौरभयुक्त। गन्धितां ज्वरगन्धयुक्तां मां मा स्पृश। असुभगाया मम स्पर्शमात्रेण सङ्क्रान्तज्वराऽशुभगन्धः प्राणवल्लभऽयास्त्वं किं मुधा कोपभाजनं भवसि? तथा च त्वम् एवमवस्थामपि मां परित्यज्य पुनरपि तत्रैव समासक्तो भविष्यसीति सोत्प्रासमुपालम्भो ध्वन्यते।

'स्तोकमायस्यन्नेव खिद्यसे, न यथावद्रमसे' इति कान्तमाक्षिप्य सुरतसुखसम्भ्रमात्स्वयमाबद्धपुरुषायितबन्धां पुनश्च सौकुमार्यादल्पायासेनैव श्रान्तां कान्तः सहासमाह-

**शिखिपिच्छलुलितकेशे निमीलितार्द्धाक्षि वेपमानोरु।**

**दरपुरुषायितविश्रमशीले पुंसामवेहि यद्दुःखम्।।५२।।**[२]

---

१. **आमजरो मे मन्दो अहव ण मन्दो जणस्स का तन्ती।**
**सुहउच्छअ सुहअ सुअन्धअन्ध मा अन्धिअं छिवसु।।५१।।**
[आमज्वरो मे मन्दोऽथवा न मन्दो जनस्य का चिन्ता।
सुखपृच्छक सुभग सुगन्धगन्ध मा गन्धितां स्पृश।।]

२. **सिहिपिच्छलुलिअकेसे वेवन्तोरु विणिमीलिअद्धच्छि।**
**दरपुरुसाइरि विसुमरि जाणसु पुरिसाणँ जं दुःखम्।।५२।।**
[शिखिपिच्छलुलितकेशे वेपमानोरु विनिमीलितार्धाक्षि।
ईषत्पुरुषायिते विश्रामशीले जानीहि पुरुषाणां यद्दुःखम्।।]

रतिजनितकम्पवशात् बर्हिबर्हवत् विस्रस्तकेशकलापे !स्तन–नितम्बभरसंवहनायासाद्वि–निमीलितार्द्धयने। ऊरुयुगल एव दत्ताऽखिलभारतया कम्पमानोरु! अतएव ईषत्पुरुषायिते एव विश्राम्यन्ति। पुसां यद्दुःखं (तदिदानीम्) अवेहि जानीहि। गङ्गाधरस्तु मूलमनुरुन्धानो 'ईषत्पुरुषायिते–विश्रामशीले' इति व्यस्तं व्याचख्यौ। विश्राम इत्यपि पाणिनीयानामरुन्तुदम्।

निःशेषितवैभवतया पूर्वं निष्कासितस्य, इदानीमुपार्जितप्रभूतधनसमृद्धेः कस्यचिद्भु–जङ्गस्य पुनर्वशीकरणाय प्रेषयन्तीं मातरं प्रति वेश्या आह–

**विच्छिन्नसंहितस्य प्रेम्णः प्रत्यक्षितव्यलीकस्य।**

**विरसो रसो भवति बत तापितशीतस्य पयस इव।।५३।।**[1]

पूर्वं विच्छिन्नस्य ततः संहितस्य योजितस्य प्रत्यक्षीकृतव्यलीकस्य प्रत्यक्षदृष्टापराधस्य प्रेम्णः। पूर्वं तापितस्य ततः शीतलीकृतस्य उदकस्येव रसो विरसो भवति। अयं भावः– पूर्वं तु विच्छिन्नस्य प्रेम्णः सन्धानमेव दुःसम्भवम्। तत्रापि प्रत्यक्षमवलोकितोऽन्यविटसम्भोगाद्यपराधः कथमिव समाधेयः। श्रुतेऽनुमिते वा विप्रिये भवेत्कदाचित्प्रतीकारः, प्रत्यक्षीकृते तु का नाम समाहितिः ? अत एव सुसृशं पर्युपास्यमानोऽपि नासौ तथानुरज्येत। किमिति मुधाऽवधीरणाऽ–वमानमनुभावयसीति ध्वन्यते।

कस्यचिदुदत्तापुरुषस्य समुचितेवैभवप्राप्तौ पूर्वावस्थासहचराणामप्यसौ दुःखनिरासाय यतते इति निदर्शयितुं बन्दीकृतायाः कस्याश्चन योषितः पतिपराक्रमवृत्तं कश्चिदभिधत्ते–

**वज्रपतनातिरिक्तं पत्युः श्रुत्वा तु शिञ्जिनीघोषम्।**

**स्वसदृशबन्दीनामपि बन्द्या द्राक् प्रोञ्छिते नयने।।५४।।**[2]

---

१. **पेम्मस्स विरोहिअसंघिअस्स पच्चक्खदिट्ठविलिअस्स।**
**उअअस्स व ताविअसीअलस्स विरसो रसो होइ।।५३।।**
[प्रेम्णो विरोधितसन्धितस्य प्रत्यक्षदृष्टव्यलीकस्य।
उदकस्येव तापितशीतलस्य विरसो रसो भवति।।]

२. **वज्जपडणाइरिक्कं पइणो सोऊण सिञ्जिणीघोसम्।**
**पुसिआइं करिमरिएँ सरिसबन्दीणं पि णअणाइं।।५४।।**
[वज्रपतनातिरिक्तं पत्युः श्रुत्वा शिञ्जिनीघोषम्।
प्रोञ्छितानि बन्द्या सदृशबन्दीनामपि नयनानि।।]

करिमरी बन्दी। दिग्बधिरीकरणातिशयात् वज्रपतनशब्दतोऽप्यधिकं पत्युः प्रत्यञ्चारवमाकर्ण्य, तेनाऽतिशयेन भर्तुरेवेति परिचीय। बन्दीकृतया शूरनार्या, स्वयमिव बन्दीकरणदुःखमनुभवन्तीनामन्यासामपि बन्दीनाम् 'अतिशयितधनुर्धरः सोऽयमुपस्थितो मे स्वामी, मामिव भवतीरपि मोचयिष्यति, तत्किमधुनाऽश्रुविमोचनेन' इति वाष्पकलुषिते नयने मार्जिते इत्यर्थः। ततश्च मनस्वी धनसमृद्धिमुपलभ्य दारिद्र्यदुःखानुभवशालितया दयाप्लुतो दीनानामन्येषामपि दुःखमपाकुरुते इत्यनेन निदर्श्यते। 'बहुशोऽनुभूतेऽर्थे भविष्यत्यपि भूतवत्प्रत्ययो भवतीति निदर्शयन् बन्द्याः पतिशौर्यबहुमानमाह कश्चिदिति' गङ्गाधरावतरणिका।

शृण्वन्तं कञ्चन भुजङ्गं मोहयितुं वेश्याधात्री स्वदुहितुः सुरतचातुर्येऽपि सौकुमार्यातिशयं प्रकटयितुं भुजङ्गान्तरनिन्दाव्याजेनाह–

**सहते सहत इतीयं रमितैवं सुरतदुर्विदग्धेन।**
**म्लानशिरीषाणीव हि जातान्यस्या यथाऽङ्गानि।।५५।।**[१]

इमं प्रकारमपि सहते इमं प्रकारमपि सहते इति मुहुः प्रकारान्परिवर्त्य इयं कोमलाङ्गी मद्दुहिता सुरतदुर्विदग्धेन सुरताऽऽयासादिपरिचयाऽचतुरेण एवं रमिता अर्थात्तथा उपभुक्ता। एवमत्र तथाऽर्थे यथास्या अङ्गानि म्लानशिरीषाणीव निःसहानि जातानि। सहते सहते इति वीप्सा बहून् सुरतप्रकारानाख्याति। तथा सेयं बहुषु सुरतप्रकारेषु विदग्धेति कामुकं प्रति व्यज्यते। सुरतायासादेव सेयं निःसहाङ्गी न पुना रोगादिनेत्यपि सूचितं भवति। एवं च त्वमपि तथैवैनामुपभोक्ष्यसे यथेयमतिसुकुमाराङ्गी नाधिकमाकुला स्यादिति दुहितुः परिश्रमस्य समयस्य च संक्षेपं सूचयति।

अन्यवनितासङ्गेनोपेक्षमाणं नायकं प्रति कस्याश्चनानुरागातिशयं प्रकाशयितुं दूती आह–

**अगणितसमस्तयुवका बाल व्युत्क्रान्तलोकमर्यादा।**
**अथ सा भ्रमति दिशामुखविकासिताक्षी तव कृतेन।।५६।।**[२]

---

१. **सहइ सहइ त्ति तह तेण रामिआ सुरअदुव्विअद्धेण।**
**पम्माअसिरीसाइँ व जह से जाआइँ अङ्गाइं।।५५।।**
[सहते सहत इति तथा तेन रमिता सुरतदुर्विदग्धेन।
प्रम्लानशिरीषाणीव यथास्या जातान्यङ्गानि।।]

२. **अगणिअसेसजुआणा बालअ वोलीणलोअमज्जाआ।**
**अह सा भमइ दिसामुहपसारिअच्छी तुह कएण।।५६।।**
[अगणिताशेषयुवा बालक व्यतिक्रान्तलोकमर्यादा।
अथ सा भ्रमति दिशामुखप्रसारिताक्षी तव कृतेन।।]

हे बालक तादृशस्त्रीरत्नोपेक्षणात्, रमणीवधाऽपराधाऽचिन्तनाच्च निजहितज्ञानशून्य। न गणिता न बहुमतास्त्वदन्ये अशेषा युवानो यया सा। एतेन नेदं मनस्यभिमन्येथा यदहमेव युवक इति, किं त्वनयैव त्वदनुरागादन्ये न वीक्षिता इति साकूतं ध्वन्यते। गुरुजनशिक्षाऽवधीरणात् लज्जात्यागच्च उल्लङ्घितलोकमर्यादा, सा पूर्वोक्तसौन्दर्यानुरागाद्यनेकगुणा, तव कृतेन त्वद्दर्शना–भिलाषेण दिङ्मुखप्रसारिताक्षी सती भ्रमति। तव नैकत्राऽऽसक्तिरिति चतुर्दिक् तवान्वेषणे यतत इति सूच्यते। ततश्च सावन्नेयं शोचनीयामवस्थामश्रुते तावदेवां त्वरितमनुगृहाणेति नायकं प्रति ध्वन्यते। प्रेमपुष्टिषु लज्जाविसर्जनमेतदिति सरस्वतीकण्ठाभरणे भोजः (५ परि.)।

वन्द्यां कस्याञ्चन जाताभिलाषश्चोरयुवा भर्तृशौर्याभिमानेन निजकारामुक्तिं विश्वसन्त्या–स्तस्या उत्साहभङ्गार्थमाह–

**बन्दि! अनवसरगर्जनशीलजलदवज्रपतनरव एषः।**
**पतिचापरवाकार्ङ्क्षिणि रोमाञ्चं किं मुधा वहसि।।५७।।**[१]

अकाले गर्जनशीलस्य जलदस्य वज्रपतनस्यैष शब्दः। पतिधनुष्टङ्कारश्रवणलालसे! पत्युः समरणेन मुधा रोमाञ्चं किं वहसि। नायं धनुष्टङ्कारस्ततः कथङ्कारं मदनुकम्पां विना मुक्तिं वाञ्छसीति तां प्रति सूच्यते। अत्र रोमाञ्चरूपेण रसस्य जन्मेति सरस्वतीकण्ठाभरणे भोजः (५ परि.)।

बहुवल्लभस्य साध्वी काचिन्नायिका भर्तुः शौर्यप्रकाशनेन सह असतीनां निजसपत्नी–नामभिसारसज्जतां सूचयितुं श्वश्रूं प्रत्याह–

**प्रोषित एषोऽद्यैव प्रोज्जागरको जनस्य चाद्यैव।**
**गोदानदीतटान्यपि हन्त हरिद्राविपिञ्जराण्यद्य।।५८।।**[२]

---

१. **करिमरि अआलगञ्जिरजलआसणिपडनपडिरवो एसो।**
**पइणो धणुरवकङ्खिरि रोमञ्चं किं मुहा वहसि।।५७।।**
[बन्दि अकालगर्जनशीलजलदाशनिपतनप्रतिरव एषः।
पत्युर्धनूरवाकाणिंशीले रोमाञ्चं किं मुधा वहसि।।]

२. **अज्ज व्वेअ पउत्थो उज्जअरओ जणस्य अज्जे अ।**
**अज्जे अ हलिद्दापिञ्जराइँ गोलाणइतडाइं।।५८।।**
[अद्यैव प्रोषित उज्जागरको जनस्याद्यैव।
अद्यैक हरिद्रापिञ्जराणि गोदानदीतटानि।।]

सङ्ग्रामप्रसङ्गेन भवत्पुत्र एषोऽद्यैव प्रवासं गतः। अद्यैव च चौराद्याक्रमणभयाद् ग्रामवासिनो जनस्य प्रकर्षेण उज्जागरकः (जागरणम्), अस्तीति शेषः। जनस्य सपत्नीजनस्याद्यैव अभिसरणाभियोगाज्जागरणमस्तीत्यपि ध्वन्यते। गोदावरीतीराण्यपि अद्यैव हरिद्राविपिञ्जराणि सन्ति, हरिद्रोद्वर्तिताङ्गप्रक्षालनेन असतीनामङ्गरागसङ्क्रमणादित्यर्थः। पूर्वं ग्रामप्रधानस्य भवत्पुत्रस्य सत्तायामसतीनां न तावदन्याभिसरणसाहसमभूदिति भावः। एतेन यथासौ मत्पति-श्चौराद्याक्रमणरोधकत्वेन शूरस्तथैव बहुनायिकारमणत्वेन वनितोपभोगकुशलोऽपीति ध्वन्यते।

कुलवधूशिक्षार्थं प्रौढा काचित्पारिवारिकपुरन्ध्री सतीवृत्तमाह-

**प्रेयसि सुविषमशीले शुद्धमना देवरेऽसदृशचित्ते।**
**न वदति कुटुम्बविघटनभयेन तनुकायते स्नुषा किन्तु।।५९।।**[1]

देवरे असदृशचित्ते कामविकारदूषितचित्ते सत्यपि शुद्धमनाः अविकृतचित्ता स्नुषा पुत्रवधूः वामस्वभावे प्रियतमे कुटुम्बकलहभयेन न किञ्चिद्वदति। विषमस्वभावः पतिः कदाचिद् भ्रात्रा कलहायमानः कुटुम्बं विशृङ्खलयेदिति भावः। किन्तु मानसिकदुःखगोपनेन प्रत्यहं कृशा भवति। अप्रियस्यापि यस्य प्रकाशनेऽनिष्टं सम्पद्यते तद् गोप्यमेवेति भावः। 'स्नुषा' पदेन श्वश्रूश्वशुरयोः सत्तासूचनात् कुटुम्बस्य वृद्धजनाधिष्ठितत्वं विस्तृतत्वं च ध्वन्यते।

कलहान्तरितायाः सखी प्रियतमेन 'किमवस्था सम्प्रति भवत्सखी' इति पृष्टा आह-

**चिन्ताऽऽनीतप्रियतमसमागमे विहितमन्युकानि संस्मृत्य।**
**शून्यं कलहाऽऽकुलिता रुदिताऽऽलीभिर्न चोपहसिता सा।।६०।।**[2]

ध्यानोपस्थापितस्य दयितस्य (भवतः) समागमे, विहितो मन्युः क्रधो यैस्तानि विहितमन्युकानि, क्रोधकारणानि सपत्नीसमागमादीन् संस्मृत्य। एतेन 'भवदपराधास्तथाऽस्या हृदये व्यथयन्ति यथैषा समयान्तरेऽपि न तान्विस्मरति' इति ध्वनितम्। शून्यं मुधैव कलहायमाना

---

१. **असरिसचत्ते दिअरे सुद्धमणा पिअअमे विसमसीले।**
**ण कहइ कुडुम्बविहडणभएण तणुआअए सोह्ला।।५९।।**
[असदृशचित्ते देवरे शुद्धमनाः प्रियतमे विषमशीले।
न कथयति कुटुम्बविघटनभयेन तनुकायते स्नुषा।।]

२. **चिन्ताणिअदइअसमागमम्मि कअमण्णुआइँ भरिऊण।**
**सुण्णं कलहाअन्ती सहीहिँ रुण्णा ण ओहसिआ।।६०।।**
[चित्तानीतदयितसमागमे कृतमन्युकानि स्मृत्वा।
शून्यं कलहायमाना सखीभी रुदिता नोपहसिता।।]

साऽस्मत्सखी, सखीभिः रुदिता रोदनेन शोचिता। एवमुपहासस्थलेऽपि करुणावशान्नोपहसिता। रुदितेत्यत्र कार्यस्य रोदनस्य कारणभूते शोके लक्षणया शोचितेत्यर्थः कार्यः, गौर्वाण्यां 'रुद' धातोरकर्मकतया यथास्थितस्याऽसङ्गतेः। प्राकृते तु हिन्दीभाषावद् रुदधातोः सकर्मकतया न दोषः। एवं च कृतकलहापि सा निरन्तरं भवन्तमेवाऽनुध्यायन्ती तन्मयतया तथा विचेष्टते यथा सर्वेषामप्यसौ शोचनीया जाता। ततश्च त्वद्गतप्राणामिमां किं मुधा व्यथयसि, अचिरमनुनयस्व, कृतमेभिः प्रश्नैरिति ध्वन्यते। अत्र चिन्तया मूलभूता रतिः प्रकृष्यते इति स, कण्ठाभरणे भोजः (परि. ५)।

प्रच्छन्नरताभिलाषिणं नागरिकं प्रति कुलजत्वेन प्रच्छन्नमेव समागमं कामयमानाऽभिसारिका सवैदध्यमाह–

**असमाप्तान्यपि हृदयाभिसैः साकं यथा हि सुखयन्ति।**
**कार्याणि नेतरैः सह समापितान्यपि तथा मन्ये।।६१।।**[1]

हृदयाभिज्ञैः हृदयेच्छां विजानद्भिः इङ्गितज्ञैः सह असमाप्तान्यपि यथाचिन्तितमपूरितान्यपि कार्याणि यथा सुखयन्ति तथा इतरैः हृदयमजानद्भिः सह पूरितान्यपि न सुखयन्तीति मन्ये। तथा च त्वद्विधविदग्धेन सह यदि सङ्कल्पेऽपि समागमो भवेत्सोऽपि सुखाय, न पुनर्जडेन कामं समागमोऽपीति सूच्यते। अथवा निजभर्तुः पामरताप्रकाशनेन पतिविषयको विरागो जारे चानुरागोऽनेन ध्वन्यते। किं वा अधमेऽनुरक्तां प्रति प्रबोधयन्त्याः सख्या वचनम्।

सन्निहितो घनागम इत्याम्रङ्कुरप्रदर्शनच्छलेन निभृतं सूचयन्ती कान्ता कान्तस्य प्रवासोद्यममपनेतुमाह–

**दरभिन्नशुक्तिसम्पुटनिलीनहालाहलाग्रपुच्छनिभम्।**
**पक्काऽऽम्रास्थिविनिर्गतकोमलमाम्राङ्कुरं पश्य।।६२।।**[2]

---

१. **हिअअण्णएहिँ समअं असमत्ताइं पि जह सुहावन्ति।**
**कज्जाइँ मणे ण तहा इअरेहिँ समाविआइं पि।।६१।।**
[हृदयज्ञैः सममसमाप्तान्यपि यथा सुखयन्ति।
कार्याणि मन्ये न तथा इतरैः समापितान्यपि।।]

२. **दरफुडिअसिप्पिसंपुडणिलुक्कहालाहलग्गछेप्पणिहम्।**
**पक्कम्बट्ठिविणिग्गअकोमलमम्बङ्कुरं उअह।।६२।।**
[ईषत्स्फुटितशुक्तिसम्पुटनिलीनहालाहलाग्रपुच्छनिभम्।
पक्काम्रास्थिविनिर्गतकोमलमाम्रङ्कुरं पश्यत।।]

दरभिन्ने ईषत्स्फुटिते शुक्तिसम्पुटे निलीनः गुप्तः, ईषद्दृश्यमान इत्यर्थः। यो हालाहलः 'वहमनिया'[1] इति प्रसिद्धो जन्तुविशेषः तस्य पुच्छाग्रसदृशम्। पक्वाम्रस्य यदस्थि ततो विनिर्गतं च कोमलं च। 'हालाहलो ब्रह्मसर्पे' इति मेदिनी। बीजकोषनिर्गतस्य आम्राङ्कुरस्य वर्णाकारौ हालाहलपुच्छसंवादिनाविति सङ्घटितयाऽनयाऽऽर्थ्युपमया- 'यदि सन्निहितघनरसमये समयेऽस्मिन्प्रवससि तर्हि सोऽयमाम्राङ्कुरो हालाहल इव मां कथावशेषां कुर्यादिति' सौष्ठवेन ध्वन्यते।

निरपायसुचिरसुरतयोग्यतां प्रदर्शयितुं गृहस्य जनसञ्चारशून्यतां सूचयन्ती, चिररमणाय जारमन्यमनस्कं वा कुर्वती काचिदाह-

**पश्यत पटलविलम्बितनिजतन्तुतलोर्ध्वपादपरिलग्नम्।**

**दुर्लक्ष्यसूत्रसङ्गतबकुलकुसुममेकमिव हि मर्कटकम्।।६३।।**[2]

पटलविलम्बितः छदिषोऽन्तरादवतीर्णो यो निजतन्तुः तस्य तले ऊर्द्ध्वपादैः परिलग्नम्। अत एव दुर्लक्ष्यसूत्रग्रथितमेकं बकुलकुसुममिव स्थितं मर्कटकं लूतां पश्यत। 'अथ मर्कटकः सस्यभेदे वानरलूतयोः।' इति मेदिनी। अनया मर्कटकस्वभाववर्णनरूपया स्वभावोक्तया 'इदं स्थानं जनयातायातशून्यमत एव सुचिरं रतोत्सवोऽनुभूयताम्' इत्यर्थो ध्वन्यते।

पुराणदेवकुलस्य जनसञ्चारशून्यतां प्रदर्श्य सुखसङ्गमार्थमुत्तेजयन्ती काचित्कामुकी जारमाह-

**उपरि दरदृष्टशङ्कुकनिलीनपारावतोच्चरुतैः।**

**निस्तनति जातपीडं शूलाभिन्नं व देवकुलम्।।६४।।**[3]

---

१. 'बिल ब्राह्मणी' इति जयपुरप्रान्ते

२. **उअह पडलन्तरोइण्णणिअअतन्तुद्धपाअपडिलग्गम्।**
**दुल्लक्खसुत्तगुत्थेक्कबउलकुसुमं व मक्कडअम्।।६३।।**
[पश्यत पटलान्तरावतीर्णनिजकतन्तूर्ध्वपादप्रतिलग्नम्।
दुर्लक्ष्यसूत्रग्रथितैकबकुलकुसुममिव मर्कटकम्।।]

३. **उअरि दरदिट्ठथण्णुअणिलुक्कपारावआणँ विरुएहिं।**
**णित्थणइ जाअवेअणँ सूलाहिण्णं व देअउलम्।।६४।।**
[उपरीषद्दृष्टशङ्कुनिलीनपारावतानां विरुतैः।
निस्तनति जातवेदनं शूलाभिन्नमिव देवकुलम्।।]

उपरि उपरिभागे, चूडाकलशस्य भग्नतया दरदृष्टो यः शङ्कुकः, ईषदवशिष्टतया कञ्चिद्दृश्यमानो यः कीलकः, तत्र निलीनानां निर्जनतयां सङ्कोचितचरणं कुब्जीभूय स्थितानां पारावतानामुच्चैः रुतैः शूलाभिन्नं व शूलाप्रोतमिव जातवेदनं देवकुलं (देवमन्दिरम्) निस्तनति करुणं रौतीत्यर्थः। इवार्थको वशब्दः। तथा च रतिसमये पारावतरुतानुकारि यन्मणितादि जायते तदपि नात्र सङ्लक्ष्येतेति गूढं सूचितम्। शूलाभिन्नमिव जातपीडमित्युत्प्रेक्षया वसतिबाह्यतां प्रदर्श्य स्थानस्य निर्जनता द्योत्यते। एवं चानुपलक्ष्यरतिकूजितं निःशङ्कमत्र सुरतमनुभवेति वक्तृवैशिष्ट्येन ध्वन्यते। नायकस्य दीर्घरमणार्थं चमत्कारमुत्पादयितुं शूलाभिन्नमिवेत्युत्प्रेक्षणम्। तथा च कामशास्त्रम्- 'कल्लोलिनीकाननकन्दरादौ दुःखाश्रये चार्पितचित्तवृत्तिः। मृदुद्रुतारम्भ-ममिन्नधैर्यः श्लथोपि दीर्घं रमते रतेषु।।' इति गङ्गाधरः।

परवनितालोलुपस्य निजदयितस्यानुरागमाकृष्टवतीं पुनः 'नासौ मय्यनुरक्तः, न चाहं तस्य प्रिया' इत्यादिना प्रेमाणमनभ्युपगच्छन्तीं परकीयां काञ्चन सपत्नीं काचिदाह-

**यदि तस्य न प्रियासि प्रतिदिवसं निःसहैरङ्गैः।**

**पीयूषमत्तनवशिशुमहिषीवत्सेव किं स्वपिषि।।६५।।**[१]

त्वं यदि तस्य प्रिया न भवसि, तर्हि अनुदिवसं सुरतपरिश्रमपरिम्लानतया निःसहैरङ्गैरुपलक्षिता सती, पीयूषेण अभिनवदुग्धेन मत्ता निद्रावशीकृता नवशिशुः नवजाता महिषीवत्सेव किं स्वपिपि ? 'पीयूषं सप्तदिवसावधिक्षीरे तथाऽमृते।' इति मेदिनी। 'पीयूषममृते नव्यसूतधेनोः पयस्यपि' हैमोऽपि। प्रसवोत्तरसप्तदिवसाभ्यन्तरीणदुग्धपानेन पशुवत्सो निद्रातीति लोकप्रसिद्धम्। सुरतपरिश्रमजातो जागर एव ते तदनुरागं प्रकाशयतीति भावः। अत्र 'पाड़ी' इवेति महिषीवत्सोपमा अनर्हतां सूचयन्ती सपत्नीगतामीर्ष्यां व्यनक्ति। गङ्गाधरस्तु- ''निजभर्तुरेवाऽप्रियास्मि, तत्किं मया दुर्भगया' इति निरस्यन्तीं नायिकां प्रति साभिलाषस्य कस्यचिदुक्तिरियम्' इत्याह। तत्र नायिकायां 'पाडी' इत्युपमा विचारणीयैव। 'प्रियतमस्य त्वं प्रियासि' इति समर्थनमपि जारविषयेऽनुपपन्नम्। स हि प्रियस्य वैगुण्यं संसूच्य नायिकां साधयतीति दृष्टम्। सख्यादिभिरवगतः प्रकाशोऽयं प्रेमा इति सरस्वतीकण्ठाभरणे भोजः।

विदेशगतपतिकां काञ्चिदन्याऽऽसक्तां लोकापवादभीता काचिद्बन्धुवधूराह-

---

१. **जइ होसि ण तस्स पिआ अणुदिअहं णीसहेहिँ अङ्गेहिं।**

**णवसूअपीअपेऊसमत्तपाडि व्व किं सुवसि।।६५।।**

[यदि भवसि न तस्य प्रियानुदिवसं निःसहैरङ्गैः।

नवसूतपीतपीयूषमत्तमहिषीवत्सेव किं स्वपिषि।।]

**अतिदीर्घास्वविनिद्रा त्वमसि भृशं हैमनीषु रजनीषु।**

**सुचिरप्रोषितपतिके न सुन्दरं यद्दिवा स्वपिषि।।६६।।**[1]

इयद्दीर्घासु रात्रिषु अविगतन्द्रिा (अपूरितनिद्रा) त्वं यद्दिने स्वपिषि तन्न सुन्दरम्, लोकानामसतीत्वशङ्काकारणत्वादयुक्तमित्यर्थः। प्रोषितपतिकात्वेन प्रियसम्भोगादिकं रात्रिजागरणकारणं तु निवारितमेव। ननु तत्कालमेव प्रियप्रवासे तच्चिन्तयापि रात्रिजागरणं सम्भवति, प्रियसत्त्वे प्रतिदिनाभ्यासाद्वा। तच्छङ्कानिरासार्थं सम्बोधनम्- 'सुचिरप्रोषितपतिके!' इति। तथा च बहोः कालात्प्रियविप्रयोगसहत्वान्न प्रियचिन्तया विनिद्रत्वमपि सम्भवतीत्याशयः।

'पङ्किले पथि, कर्दमभयादुत्प्लुत्य तया मम पदस्थाने पदं निक्षिप्तं न पुनरनुरागात्' इति प्रियाप्रणयं गोपयन्तं कान्तं काचिदाह-

**पङ्कभयोत्प्लुतपदमिदमलसितया तव पदे प्रदत्तं चेत्।**

**पुलकितमङ्गमिदानीं किमिति सुभग तत्स्फुटं वहसि?।।६७।।**[2]

अलसायमानया न तु वास्तवमलसया। तथा च तस्या मन्दगमनमपि अनुरागमूल-कमेवेति भावः। पङ्कभयेनोत्प्लुतमिदं पदं तव पदे चेत्प्रदत्तं तर्हि स्पष्टं कण्टकितमङ्गमिदानीं किमिति वहसि। मार्गे गच्छन्त्योऽपि त्वय्यनुरज्यन्तीत्याकूतेन सुभगेत्यामन्त्रणम्। यदीयं त्वयि नाऽनुरक्ता, तर्हि तव पदस्थानेऽनया पदे दत्ते कथं ते रोमाञ्चो जात इत्याशयः।

अनुरागातिशयं प्रकाशयतोऽपि दानशून्यस्य भुजङ्गस्य ह्रेपणार्थं दुहितुश्च शिक्षार्थं वेश्याधात्री आह-

---

१. **हेमन्तिआसु अइदीहरासु राईसु तं सि अविणिद्दा।**
**चिरअरपउत्थवइए ण सुन्दरं जं दिआ सुवसि।।६६।।**
[हैमन्तिकास्वतिदीर्घासु रात्रिषु त्वमस्यविनिद्रा।
चिरतरप्रोषितपतिके न सुन्दरं यद्दिवा स्वपिषि।।]

२. **जइ चिक्खल्लभउप्पअपअमिणमलसाइ तुह पए दिण्णम्।**
**ता सुहअ कण्ठइज्जन्तमङ्गमेह्णिं किणो वहसि।।६७।।**
[यदि कर्दमभयोत्प्लुतपदमिदमलसया तव पदे दत्तम्।
तत्सुभग कण्टकितमङ्गमिदानीं किमिति वहसि।।]

**प्राप्तः क्षणो न राजत्यतिकल्ये पूर्णिमेन्दुरिव।**
**अन्तविरस इव कामो ह्यसम्प्रदानश्च परितोषः।।६८।।**[1]

प्राप्तः अतिक्रान्तः क्षणः उत्सवो न शोभते, यथा अतिप्रभाते पूर्णिमाचन्द्रः, तत्प्रकाशस्यातिक्रान्तत्वात्। सम्यक्प्रदानशून्यः परितोषश्च न शोभते, यथा अन्तविरसः कामः। यस्याः कामनाया अन्ते वैरस्यमुत्पद्यते न सा लोकानां प्रिया। तथैव परितोषप्रकाशनान्ते समुचित-वितरणाभावे रसक्षतिरिति यदि त्वमिमामनुरक्तां कामयसे तर्हि सम्यग्वितरणीयमिति कामुकं प्रत्यभिव्यज्यते।

पूर्वोक्तं सर्वमिदं 'अइप्पहाअव्व पुणिमाअन्दो। अन्तविरसो व्व कामो' इति पाठं निर्मितवतो गङ्गाधरस्यानुरोधेन। वस्तुतस्तु-

**पत्तो छणो ण सोहइ अइप्पहाअम्मि पुण्णिमाअन्दो।**
**अन्तविरसो अ कामो असंपआणो अ परिओसो।।**
**प्राप्तः क्षणो न राजत्यतिकल्ये पूर्णिमाचन्द्रः।**
**अन्तविरसश्च कामो ह्यसम्प्रदानश्च परितोषः।।**

प्राप्तेराशायामेव आनन्दाधिक्यात्प्राप्त उपस्थितः क्षण उत्सवो न शोभते, प्राप्तत्वेन उत्कण्ठानिवृत्तेः। तथा अतिप्रभाते पूर्णिमाचन्द्रो न शोभते। सायं क्रमेणोदेष्यतस्तस्य दर्शने यथोत्कण्ठा न तथाऽस्तं जिगमिषोस्तस्य दर्शन इति भावः। परिणामविरसा कामना च न शोभते, एवं सम्यक्प्रदानशून्यः परितोषश्च न शोभते। एते चत्वारो न शोभन्ते इति दीपकः। अग्रेऽपि सैषा शैली प्रदर्शिता गाथाकोषकारेण यथा- 'छज्जइ पहुस्स ललिअम्' [२ शतके ४३]।

स्वाधीनभर्तृकां काञ्चन नवीनां कामयमानं प्रति तत्प्राप्तेराशां निरस्यन्ती दूती अन्यापदेशेनाह-

**पार्वत्याः सौभाग्यं करग्रहण एव विदितमालीभिः।**
**व्यपनीते पशुपतिना निजवासुकिकङ्कणे दूरम्।।६९।।**[2]

---

१. **पत्तो छणो ण सोहइ अइप्पहाअ व्व पुणिमाअन्दो।**
**अन्तविरसो व्व कामो असंपआणो अ परिओसो।।६८।।**
[प्राप्तः क्षणो न शोभते अतिप्रभात इव पूर्णिमाचन्द्रः।
अन्तविरस इव कामो असम्प्रदानश्च परितोषः।।]

२. **पाणिग्गहणे व्विअ पव्वईएँ णाअं सहीहिँ सोहग्गम्।**
**पसुवइणा वासुइकङ्कणम्मि ओसारिए दूरम्।।६९।।**
[पाणिग्रहण एव पार्वत्या ज्ञातं सखीभिः सौभाग्यम्।
पशुपतिना वासुकिकङ्कणेऽपसारिते दूरम्।।]

पार्वत्या भयनिवृत्त्यर्थम्, अभिरुचितेऽपि स्वीये वासुकिरूपे कङ्कणे पशुपतिना दूरमपसारिते सति पाणिग्रहण एव प्रियानुरागरूपं पार्वत्याः सौभाग्यं सखीभिर्ज्ञातम्। इदानीमेव एवंविधमनुगतत्वं तर्हि अग्रे का कथेति भावः। तथा च नित्यमनुकूलमाचरतः प्रियस्य सेयं प्रथमत एव तथा वल्लभा यथा नेयमन्यं कामयितुमर्हतीति कामुकं प्रत्यभिव्यज्यते। 'विज्ञा उपक्रम एव भद्रं विरुद्धं च जानन्तीति दर्शयन् कश्चिदाह' इति गङ्गाधरः। शिवनिष्ठः प्रथमानुरागानन्तरः सोऽयं सम्भोगशृङ्गार इति सरस्वतीकण्ठाभरणे भोजः (५ परि.)।

कस्याश्चन प्रोषितपतिकाया ग्रीष्मान्तः प्रियप्रत्यागमावधिरासीत्। नवमेघोदयशङ्कयाऽवधिलङ्घनं मत्वा प्रियतमस्याऽन्यासक्तिं सम्भाव्य व्याकुलायास्तस्याः समाश्वासनार्थं सखी आह–

**ग्रीष्मे भान्ति दवानलमसीमलिनितानि विन्ध्यशिखराणि।**

**न नवप्रावृड्जलदाः प्रोषितपतिके समाश्वसिहि।।७०।।**[१]

विन्ध्यशिखराणि ग्रीष्मे दावानलमसीसम्पर्केण मलिनानीवाऽऽचरितानि, न तु वास्तवं मलिनानि भान्ति प्रतीयन्ते, दृश्यन्त इति यावत्। औपम्यवत्यपह्नुतिरलङ्कार इति सरस्वतीकण्ठाभरणे भोजः (४ परि.)।

प्रथमसङ्गमेऽनुरागाऽतिशयं प्रकाश्यन्तं बहुवल्लभं कान्तं सर्वदा एकरसप्रणयानुवृत्त्यर्थं काचिदाह–

**शक्यो वोढुं यावांस्तावन्तं देहि मे प्रणयम्।**

**सर्वो जनो निवृत्तप्रसादपीडासहो नाऽयम्।।७१।।**[२]

---

१. **गिह्मे दवग्गिमसिमइलिआइँ दीसन्ति विज्झसिहराइं।**
**आससु पउत्थवइए ण होन्ति णवपाउसब्भाइं।।७०।।**
[ग्रीष्मे दवाग्निमषीमलिनितानि दृश्यन्ते विन्ध्यशिखराणि।
आश्वसिहि प्रोषितपतिके न भवन्ति नवप्रावृडभ्राणि।।]

२. **जेत्तिअमेत्तं तीरइ णिव्वोढुं देसु तेत्तिअं पणअम।**
**ण अणो विणिअत्तपसाअदुक्खसहणक्खमो सव्वो।।७१।।**
[यावन्मात्रं शक्यते निर्वोढुं देहि तावन्तं प्रणयम्।
न जनो विनिवृत्तप्रसाददुःखसहनक्षमः सर्वः।।]

यावान् प्रणयः सर्वदापि निर्वोढुं शक्यते तावन्तं मे देहि। अयं सर्वोऽपि जनः, निवृत्तो यः प्रसादः प्रणयस्तस्य या पीडा दुःखं तत्सहः सहनक्षमो नास्ति। तथा च बहुवल्लभेन भवता पूर्वं बह्व्योऽपि प्रणयभङ्गं कृत्वा परित्यक्ताः, न तद्वदहमपि बोधनीया। अननुभूत-प्रणयखण्डना त्वदनुरक्ताऽहं तु त्वया प्रणयखण्डने कृते न जीवामीति ध्वन्यते।

प्रियतमप्रणयभङ्गतः परिगृहीतमाना, प्रियेण च 'किमेवं मय्यद्यापि प्रणयविमुखासि' इत्यनुनीयमाना काचिन्मानिनी तत्प्रणयस्याऽस्थिरतामात्मनश्चानुरागातिशयमाविष्कर्तुमेवमाह-

**बहुवल्लभस्य दिवसान् पञ्च कथञ्चित्तु वल्लभा या स्यात्।**
**सा षष्ठं नु मृगयते ? कुतो हि मृष्टं च बहुकं च।।७२।।**[1]

बह्व्यो वल्लभा यस्य स बहुवल्लभः तस्य या वल्लभा भवति सा कथञ्चित् पञ्च दिवसांस्तु पश्यति। अनन्तरमन्यत्रासक्तस्य कान्तस्याभिप्रायमवगत्य सा नु (किम्) षष्ठं दिवसं मृगयते पश्यति, नैव पश्यतीत्यर्थः। यतो हि मृष्टं च बहुकं च कुतः। यद्यनुकूलं परिमाणतोऽधिकञ्च तत्सुकृतपरिपाकलभ्यमित्यर्थः। "मिष्टं च" इत्यपि सम्भवति। तथा च या बहुकालं तवाऽनुराग-मुपलब्धवती स्यादवश्यं सा धन्या, मम मन्दभाग्यायास्तु कुत एतदिति कान्तं प्रत्यभिव्यज्यते। यद्वा, अभिमतप्रियस्य सार्वदिकसम्भोगाऽलाभात्खिद्यमानां नायिकां बोधयन्त्याः सख्या इयमुक्तिः। अपैति च शोभते च तादृशोऽयं कुसुम्भराग इति सरस्वतीकण्ठाभरणे भोजः (परि.५)।

सततमनुगतस्य दयितस्यानुरागमात्मनोऽपि च तं प्रत्यभिलाषातिशयं प्रकाशयितुं नायिका सखीमाह-

**निर्ध्यायति किल यं यं सोऽनिमिषाक्षोऽङ्गकाऽवकाशं मे।**
**प्रच्छादयामि तं तं वाञ्छामि च तेन दृश्यमानं च।।७३।।**[2]

---

१. **बहुवल्लहस्स जा होइ वल्लहा कह वि पञ्च दिअहाइं।**
**सा किं छट्ठं मग्गइ कत्तो मिट्ठं व बहुअं अ।।७२।।**
[बहुवल्लभस्य या भवति वल्लभा कथमपि पञ्च दिवसानि।
सा किं षष्ठं मृगयते कुतो मृष्टं च बहुकं च।।]

२. **जं जं सो णिज्झाअइ ऊङ्गोआसं महं अणिमिसच्छो।**
**पच्छाएमि अ तं तं इच्छामि अ तेण दीसन्तम्।।७३।।**
[यद्यत्स निर्ध्यायत्यङ्गावकाशं ममानिमिषाक्षः।
प्रच्छादयामि च तं तमिच्छामि च तेन दृश्यमानम्।।]

अभिलाषातिशयादनिमिषनयनः स यं यम् अङ्गकस्य तनोरङ्गस्यावकाशं निर्ध्यायति पश्यति, तं तं दयितस्य निरन्तरदर्शनाद्व्रीडोदयेन आच्छादयामि, तेन दृश्यमानं वाञ्छामि च, अङ्गदर्शनेन प्रियमनोहरणाभिलाषादित्याशयः। 'कापि पत्यावन्ययोषाऽवकाशनिरासार्थं स्वसौभाग्यमात्मनश्च पत्यावनुरागमाह' इति गङ्गाधरः। छायायां यद्यदित्यवकाशविशेषणं तु चिन्त्यमेव।

कलहान्तरितायाः सखी अनुनयार्थं तत्कान्तं प्रोत्साहयितुमाह–

**दृढमन्युदूनयापि च पश्यत दयितेऽनया गृहीतोऽपि।**

**सुरसुरिति हन्त मानो निरयत इव बालुकामुष्टिः।।७४।।**[१]

दृढमन्युदूनयाऽप्यनया दयितया, दयिते दयितं प्रति गृहीतोऽपि दृढं स्वीकृतोऽपि मानः बालुकामुष्टिरिव हन्त सुरसुर् इति निरयते अपगच्छति। सुरसुरिति मुष्टितो बालुकानिः-सरणस्वभावोक्त्या 'तवानुरागवशादिदानीं स्वत एव मानः शिथिलीभवन्नपसरति, ततश्चावसरोऽ-धुनाऽनुनयस्य' इति दयितं प्रति द्योत्यते।

उद्याने विहरन्कश्चन कान्तामनसि मनसिजोद्दीपनाय समीपगतां तामेवमाह–

**अवतरति पश्य नभसो मरकतमणिपद्मरागसम्वलिता।**

**गगनश्रीगलमध्याद् गलिता किल कण्ठिकेव शुकपङ्क्तिः।।७५।।**[२]

नभःश्रीकण्ठमध्याद् भ्रष्टा, मरकतमणिभिः पद्मरागैर्माणिक्यैश्च सम्वलिता सङ्घटिता कण्ठिका इव 'कण्ठी' इति ख्यातं कण्ठाभरणमिव शुकपङ्क्तिर्नभसोऽवतरतीति त्वं पश्य। शुकानां हरितवर्णत्वान्मरकतमणिसादृश्यम्, तच्चञ्चूनां च लोहितवर्णत्वात्पद्मरागसाम्यमिति सेयमुत्प्रेक्षा। तथा च मनसिजरसमयोऽयं समय इति कान्तां प्रति सूच्यते। 'रतासक्ता काचिच्चिररमणार्थं कान्तमन्यमनस्कं कर्तुमाह' इति गङ्गाधरः। (सं. गा. ४)

---

१. **दिढमण्णुदूणिआएँ वि गहिओ दइअम्मि पेच्छह इमाए।**

**ओसरइ बालुआमुट्ठि उव्व माणो सुरसुरन्तो।।७४।।**

[दृढमन्युदूनयापि गृहीतो दयिते पश्यतानया।

अपसरति बालुकामुष्टिरिव मानः सुरसुरायमाणः।।]

२. **उअ पोम्मराअमरगअसंवलिआ णहअलाओं ओअरइ।**

**णहसिरिकण्ठब्भट्ठ व्व कण्ठिआ कीररिञ्छोली।।७५।।**

[पश्य पद्मरागमरकतसम्वलिता नभस्तलादवतरति।

नभः श्रीकण्ठभ्रष्टेव कण्ठिका कीरपङ्क्तिः।।]

अन्यपुरुषाभिषङ्गं बुद्ध्वा भर्त्रा दुर्गमस्थाने निरुद्धा काचिज्जारप्रेषितां दूतीं दुर्दशापन्नस्य मनस्विनो व्यपदेशेनैवमाह–

**न तथा विदेशवासो जनयति दौर्गत्यमपि न मे तापम्।**
**आशंसितार्थविमना निवर्तमानो यथा प्रणयी।।७६।।**[१]

विरुद्धदेशे (कुग्रामे) वासः, दारिद्र्यं च मम तथा सन्तापं न जनयति यथा प्रत्याशंसिते अर्थे (धने) विमना विषण्णमनाः सन् (निराशम्) निवर्तमानो यथा प्रणयिजनः, इति मनस्विपक्षे। कुलटापक्षे तु– बन्धनस्थाने वासः, दुर्गतता (गतिनिरोधः) च मम तथा दुःखं न जनयति यथा प्रत्याशंसिते अर्थे (प्रयोजने' (प्रियसङ्गमे)') विमुखः प्रणयी (कान्तप्रहितदूतीजनः)। नायमवसरोऽभिसारस्येति जारनिवर्तनाय कुलटोक्तिर्वा।

रात्रिनिवासकामः पथिक इति सर्वान्प्रवञ्च्य, अलिन्दे गोपायितस्य जारस्य सोऽयं रतिसमय इति सूचयन्ती दूती कामुकीमाह–

**स्कन्धाग्निना वनेषु ग्रामे च तृणैः सुरक्षितः पथिकः।**
**शीतेन खेद्यतेऽसौ साऽनुशयेनेव संवसन्नगरे।।७७।।**[२]

वनेषु स्कन्धाग्निना बृहत्काष्ठाग्निना, ग्रामे च तृणैः (तृणानां ज्वालनेन अवगुण्ठनेन वा) सुष्ठु रक्षितः पथिकः नगरे संवसन् असौ (पथिकः) सानुशयेनेव स्मृतपूर्वाऽमर्षेणेव शीतेन खेद्यते। तथा च शीतभयाद् गृहाभ्यन्तरनिलीनसकलजनायामस्यां शिशिरनिशायां शीतव्याकुलमेनं पथिकं त्वमेव निरपायं गोपायेति सूच्यते। 'स्कन्धाग्निः स्थूलकाष्ठाग्निः' इति हारावली। यद्वा–स्वयंदूतिकायाः पथिकं प्रति निजाऽभिलाषाविष्करणमेतत्– 'नगरे तृणकाष्ठादीनां दुर्लभत्वात्, नागरिकाणां च निर्दयत्वात्, दुःसहशीतभीषणायामस्यां शिशिरनिशीथिन्यां यद्यात्मानं गोपायितुमिच्छसि तर्हि स्तनोष्मणि मच्छयनीये निलीयस्व' इति।

---

१. **ण वि तह विएसवासो दोग्गच्चं मह जणेइ संतावम्।**
**आसंसिअत्थविमणो जह पणइजणो णिअत्तन्तो।।७६।।**
[नापि तथा विदेशवासो दौर्गत्यं मम जनयति सन्तापम्।
आशंसितार्थविमना यथा प्रणयिजनो निवर्तमानः।।]

२. **खन्धग्गिणा वणेसुं तणेहिँ गाममिम रक्खिओ पहिओ।**
**णअरवसिओ णडिज्जइ साणुसएण व्व सीएण।।७७।।**
[स्कन्धाग्निना वनेषु तृणैर्ग्रामे रक्षितः पथिकः।
नगरोषितः खेद्यते सानुशयेनेव शीतेन।।]

कश्चिदात्मनो दृढस्नेहतां कामकलाकोविदतां च प्रकाशयन् शृण्वत्कामिनीजनमनोहरणायाऽऽह–

**आत्ताधरधुतशीर्षभ्रान्ताऽलकसङ्कुलं स्मरामोऽस्याः।**
**वदनं परिमलतरलितमधुकरपुञ्जप्रकीर्णकमलमिव।।७८।।**[1]

रसास्वादनाय गृहीते अधरे तन्निवारणविभ्रमेण धुते (कम्पिते) शीर्षे, भ्रान्तैः मौलिकम्पनेन भ्रमणशीलैः अलकैराकुलम्, अत एव परिमलेन तरलितः इतस्ततो भ्राम्यन् यो मधुकरपुञ्जः (भ्रमराऽऽलिः) तेन व्याप्तं कमलमिव स्थितम्, अस्या वदनं स्मरामः। यद्यस्मासु स्निह्यसि तर्हि त्वामपि तथैव लालयाम इति शृण्वन्तीं प्रति ध्वन्यते।

प्रियतमसमादृतायाः प्रसाधनाऽभावेऽपि सौभाग्यं वर्धत एवेति काचिद्विदितरहस्यां वयस्यामाह–

**उत्साहरभसमज्जनविमण्डितानां क्षणे सपत्नीनाम्।**
**कथितमिव मज्जनाऽनादरेण सौभाग्यमार्यया नूनम्।।७९।।**[2]

हल्लफलमुत्साहतारल्यम्। 'मज्जनप्रसाधितानामस्माकं प्रियो वश्यः स्यात्' इत्युत्साहरभसेन यन्मज्जनं स्नानं तेन प्रसाधितानां सपत्नीनां मध्ये, क्षणे उत्सवदिवसे आर्यया गुणौदार्येण श्रेष्ठया सपत्न्या मज्जनानादरेण स्नानाऽवज्ञया सौभाग्यं कथितमिव। रूप-गुण-वशीकृतः पूर्वत एव वचनाऽनुगतो दयित इति गर्वेणेति भावः। सोऽयं विव्वोकाख्यो भावः– 'विव्वोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः' इति साहित्यदर्पणः। केचित्तु 'हल्लफल' शब्दं कदुष्णजलवाचिनं स्वीचक्रुः। तथा च किञ्चिदुष्णजलस्नानप्रसाधितानामित्यर्थः। 'सहचर-प्रलोभनार्थं विटः कस्याश्चित्सौभाग्यगर्वसूचकं विव्वोकमाह' इति गङ्गाधराऽङ्गीकृत-मवतरणम्।

---

१. **भरिमो से गहिआहरधुअसीसपहोलिरालआउलिअम्।**
**बअणं परिमलतरलिअभमरालिपइण्णकमलं व।।७८।।**
[स्मरामस्तस्या गृहीताधरधुतशीर्षप्रघूर्णनशीलालकाकुलितम्।
वदनं परिमलतरलितभ्रमरालिप्रकीर्णकमलमिव।।]

२. **हल्लफलह्णाणपसाहिआणँ छणवासरे सवत्तीणम्।**
**अज्झाएँ मज्जणाणाअरेण कहिअं व सोहग्गम्।।७९।।**
[उत्साहतरलत्वस्नानप्रसाधितानां क्षणवासरे सपत्नीनाम्।
आर्यया मज्जनानादरेण कथितमिव सौभाग्यम्।।]

कृतहरिद्रोद्वर्तनतया जालवलयलग्नमलमपनयन्तीं कृतविशुद्धिस्नानां पुष्पवतीं प्रति साभिलाषः कश्चन विदग्ध आह–

**स्नानहरिद्राभरितान्तराणि जालानि जालवलयस्य।**
**कं किल कृतार्थयिष्यसि विशोधयन्ती नु वंशकण्टकतः।।८०।।**[१]

जालप्रधानस्य वलयस्य (करकङ्कणस्य) स्नानीयहरिद्रारुद्धावकाशानि जालानि क्षुद्रेण वंशकण्टकेन शोधयन्ती तल्लग्नमलमपनयन्ती त्वं कं जनं कृतार्थं करिष्यसि।' अपवाहितदिन-चतुष्टयतया गोढोत्कण्ठां कृतप्रसाधनां त्वामद्य यः किल रमयिष्यति तस्य जन्म कृतार्थमित्या-शयः।'किलिञ्चिअ'शब्दो वंशवाची। यद्वा-हरिद्रादिस्नानीयद्रव्येण कृतस्नानां केशसम्मार्जनोल्ल-ग्रकरतया प्रकटितघनबाहुमूलां काञ्चन रमणीमुद्दिश्य नागरिकस्य कस्यचिदुक्तिरियम्। अस्मिन्पक्षे जालवलयस्य कङ्कतिकाया जालानि वंशकण्टकेन शोधयन्ती त्वं कं कृतार्थयिष्यसीति पूर्वपदार्थः।'कं कृतार्थं करिष्यसि' इति साधारणशब्दप्रयोगात्तस्याः कुलटात्वं व्यज्यते। यद्वा-कमिति काक्वा न कमपीति लभ्यते। कङ्कतिकासंस्कारेणैव कालातिपातादिति गङ्गाधरः।

काचिद्विदग्धनायिका निजदयितस्य प्रवासम्, अतिपरिचयात्प्रणयन्यूनीकरणम्, पिशुनवचनविश्वासं च प्रतिषेधन्ती, आत्मनोऽनुरागं प्रकाशयति-

**प्रेमाऽदर्शनतोऽपैत्यपैति नूनं च सततदर्शनतः।**
**पिशुनजनजल्पितेनाऽप्यपैत्यथाऽपैति चैवमेवाऽपि।।८१।।**[२]

प्रवासादिजातेन अदर्शनेन प्रेम अपैति। एवं चतुर्षु। अथ च एवमेवापि अपैतीति चतुर्थे पदयोजना।

---

१. **ह्णाणहलिद्दाभरिअन्तराइँ जालाइँ जालवलअस्स।**
**सोहन्ति किलिञ्चिअकण्टएण कं काहिसी कअत्थम्।।८०।।**
[स्नानहरिद्राभृतान्तराणि जालानि जालवलयस्य।
शोधयन्ती क्षुद्रकण्टकेन कं करिष्यसि कृतार्थम्।।]

२. **अद्दंसणेण पेम्मं अवेइ अइदंसणेण वि अवेइ।**
**पिसुणजणजम्पिएण वि अवेइ एमेअ वि अवेइ।।८१।।**
[अदर्शनेन प्रेमापैत्यतिदर्शनेनाप्यपैति।
पिशुनजनजल्पितेनाप्यपैत्येवमेवाप्यपैति।।]

एतां गाथामेव स्फुटं बोधयितुमन्यामाह–

**स्त्रीणामदर्शनेन हि नीचस्य च सततदर्शनेनेह।**

**पिशुनजनजल्पितेनाज्ञस्य खलस्यैवमेवाऽपि।।८२।।**[1]

अदर्शनेन स्त्रीणां प्रेम अपैति, तासां लघुहृदयत्वादिति भावः। नीचस्य तुच्छहृदयस्य सततदर्शनेनाऽपैति, प्रयोजनसाऽपेक्षत्वेन शीघ्रमेवोत्कण्ठानिवृत्तेः। मूर्खस्य, न तु स्वयं विवेकशालिनः। खलस्य दुष्टस्य, एवमेवापि कारणं विनाऽपि। ततश्च 'उदारहृदयस्य त्वद्विधविवेकशालिनः प्रेम प्रत्यहमुपचीयेतैव, प्रवासादिनिरासेन मादृशचित्ताऽनुवृत्तेरिति' ध्वन्यते।।

प्रसवानन्तरभाविस्तनपतनोत्तरमपि सेयं पूर्ववदनुवर्तनीयेति प्रथमगर्भायाः सुभगायाः सखी तत्कान्तं बोधयन्ती स्तनकालिमकथनव्याजेनाह–

**उन्नतिभृद्भ्यां भूत्वोदरपतिताभ्यां बताऽऽस्यते दुःखम्।**

**इति चिन्तयतोर्मन्ये स्तनयोः कृष्णं मुखं जातम्।।८३।।**[2]

उन्नताभ्यां भूत्वा उदरपतिताभ्यां सद्भ्यां बत दुःखं आस्यते स्थीयते। लोकेऽपि यः पूर्वं प्रणयबहुमानादिना उन्नतिशाली भूत्वा दुर्दैववशाद्दुर्दशामापन्नः सन्नुदरभरणव्यग्रो भवति तस्याऽपि चिन्तया लज्जया च श्यामं मुखं भवतीत्यर्थान्तरं ध्वन्यते। तथा च भवद्विधदक्षिणनायकेन सेयं चिन्ता व्यपनेयेति नायकं प्रत्यभिव्यज्यते।

केनचिद्यूना सह काञ्चन सुन्दरीं सङ्घटयितुकामा काचन दूती नायकानुरागमाह–

---

१. **अद्दंसणेण महिलाअणस्स अइदंसणेण णीअस्स।**
**मुक्खस्स पिसुणअणजम्पिएण एमेअ वि खलस्य।।८२।।**
[अदर्शनेन महिलाजनस्यातिदर्शनेन नीचस्य।
मूर्खस्य पिशुनजनजल्पितेनैवमेवापि खलस्य।।]

२. **पोट्टपडिएहिँ दुःखं अच्छिज्जइ उण्णएहिँ होऊण।**
**इअ चिन्तआणँ मण्णे थणाणँ कसणं मुहं जाअम्।।८३।।**
[उदरपतिताभ्यां दुःखं स्थीयत उन्नताभ्यां भूत्वा।
इति चिन्तयतोर्मन्ये स्तनयोः कृष्णं मुखं जातम्।।]

**सुन्दरि कृते तथा तव हालिकपुत्रः सुमहिलः क्षीणः।**

**दौत्यं यथाऽस्य पत्न्या प्रतिपन्नं मत्सरिण्यापि।।८४।।**[१]

हे सुन्दरि! सुन्दरीत्यनेन 'तव सौन्दर्यं तथा तस्य हृदये प्रतिफलितं यथा नान्या काचन हृदये प्रतिभाति' इति द्योत्यते। तव कृते सुमहिलः स हालिकपुत्रः तथा क्षीणः, यथा मत्सरिण्याऽपि अस्य जायया दौत्यं स्वीकृतम्। सुमहिल इत्यनेन 'तव सौन्दर्याग्रे रूपवतीं भार्यामपि विहाय त्वय्यनुरक्तः' इति नायिकास्तुतिर्ध्वन्यते। हालिकपुत्र इत्यनेन 'तस्य सोऽयमनुरागो न कृत्रिमः। इत्यार्जवं सूच्यते। हालिकोऽस्य पिता वर्तमानस्तथा च नास्य कृषिकार्यादिव्यासङ्गेन त्वदनुरागभङ्गः, प्रभूतं च धनमिति व्यज्यते। जायया दौत्यं प्रतिपन्नमिति सापत्न्यशङ्का न कार्या, यतः पत्युरनिष्ठभयाज्जायापि स्वयमेव सङ्गमोपयाचिकेति द्योत्यते। क्षीण इति भूतकालिकक्तप्रत्ययेन 'तस्य भूयान् गात्रापचयो जातः, इदानीमेवमकृत्रिमाऽनुरागं सरलहृदयं तं यदि नाऽभ्युपगच्छसि तर्हि पुरुषवधपातकं ते भविता' इति ध्वन्यते।

बहुवल्लभे नायके चिरादागते स्नेहोपालम्भसम्भृतेन वाग्गुम्फेनात्मनोऽनुरागं प्रकाशयति काचन वचनविदग्धा–

**दाक्षिण्येनागच्छन्नपि सुखयसि सुभग हृदयमस्माकम्।**

**निष्कैतवेन यासां गतोऽसि का निर्वृतिस्तासाम्।।८५।।**[२]

बहूनां वल्लभत्वात् हे सुभग! दाक्षिण्यवशादप्यागच्छन्, न त्वनुरागादित्यर्थः। अस्माकं हृदयानि सुखयसि। अस्माकमिति बहुत्वेन 'दक्षिणतया याः किल त्वयाऽनुगम्यन्ते ता अपि न जाने कियत्यः' इति ध्वन्यते। यासां समीपे कैतवाभावेन गतोऽसि तासां सुखं तु किं वाच्यमिति भावः। तथा च 'चिरानुरागसम्पन्ना अस्मद्विधा विहाय न जाने कियतीषु त्वं

---

१. **सो तुज्झ कए सुन्दरि तह छीणो सुमहिलो हलिअउत्तो।**

**जह से मच्छरिणीएँ वि दोच्चं जाआएँ पडिवण्णम्।।८४।।**

[स तव कृते सुन्दरि तथा क्षीणः सुमहिलो हालिकपुत्रः।

यथा तस्य मत्सरिण्यापि दौत्यं जायया प्रतिपन्नम्।।]

२. **दक्खिण्णेण वि एन्तो सुहअ सुहावेसि अह्म हिअआइं।**

**णिक्कइअवेण जाणं गओसि का णिव्वुदी ताणम्।।८५।।**

[दाक्षिण्येनाप्यागच्छन्सुभग सुखयस्यस्माकं हृदयानि।

निष्कैतवेन यासां गतोऽसि का निर्वृतिस्तासाम्।।]

हृदयेनानुरज्यसि, इदानीं केवलं कैतवेनागच्छता त्वया वयं कियत्सुखिता इति त्वमेव जानीहि' इत्युपालम्भो व्यज्यते। 'कलहान्तरिता चिरागते कान्ते सस्नेहोपालम्भमाह' इति गङ्गाधरः।

ताडयन्त्यामपि मयि नोपचारान्परित्यजति दयित इति स्वसौभाग्यं प्रकाशयन्ती स्वाधीनपतिका अन्यवनिताप्रसङ्गं निरस्यति–

**एकं प्रहारखिन्नं मुखमरुता वीजयन् हस्तम्।**
**सोऽपि हसन्त्या कण्ठे मया गृहीतो द्वितीयेन।।८६।।**[1]

प्रहारेण खिन्नमुद्विग्नम् एकं मम हस्तम् 'अहो कोमले ते हस्ते भवेत्पीडा' इति मुखमारुतेन वीजयन् स दयितो हसन्त्या मयापि द्वितीयेन हस्तेन कण्ठे गृहीतः। एवमनुकूले दयिते का कथाऽन्यवनिताप्रसङ्गस्येति सूच्यते। स्त्रीपुंसयोश्चाटुप्रसङ्गे उदाहृता सेयं गाथा भोजेन कण्ठाभरणे। (५ परि.)।

प्रणयकलहवशात्केलिसदनतो निष्क्रान्तां कान्तानुगम्यमानां कान्तां परावर्तयितुं तत्सखी आह–

**आगच्छतः प्रियस्य स्वाऽऽलम्बितमानतः पराङ्मुख्याः।**
**मानिनि हृदयं कथयति पृष्ठे पुलकोद्गमस्तवाऽभिमुखम्।।८७।।**[2]

स्वयमवलम्बितेन मानेन पराङ्मुख्याः, न तु हार्दिकेनेति भावः। तव पृष्ठे पुलकोद्गमः अभिमुखं सम्मुखस्थितं हृदयम् आगच्छतः प्रियस्य कथयति। उपरितः पराङ्मुख्या अपि हृदयतः प्रियाभिमुख्यास्तवोत्कण्ठां पृष्ठे रोमाञ्चः प्रथयतीति स्पष्टमलीकमिमं रोषं परित्यजेत्याशयः। अयत्नाऽपनेयमात्रा सेयमधीरा नायिकेति सरस्वतीकण्ठाभरणे भोजः।

---

१. **एक्कं पहरुव्विण्णं हत्थं मुहमारुएण वीअन्तो।**
**सो वि हसन्तीएँ मए गहिओ बीएण कण्ठम्मि।।८६।।**
[एकं प्रहारोद्विग्नं हस्तं मुखमारुतेन वीजयन्।
सोऽपि हसन्त्या मया गृहीतो द्वितीयेन कण्ठे।।]

२. **अवलम्बिअमाणपरम्मुहीएँ एन्तस्स माणिणि पिअस्स।**
**पुट्ठपुलउग्गमो तुह कहेइ संमुहठिअं हिअअम्।।८७।।**
[अवलम्बितमानपराङ्मुख्या आगच्छतो मानिनि प्रियस्य।

पृष्ठपुलकोद्गमस्तव कथयति सम्मुखस्थितं हृदयम्।।]

प्रणयकलहे प्रियतमं भृशं परिभवन्तीं शिक्षयितुं सखी मानिन्यन्तरस्तुति-प्रसङ्गेनाह-

**ज्ञापयितुं जानीतेऽनुनयगमिततिग्ममानपरिशेषम्।**

**विजनेऽपि कुर्वती किल सुदती विनयावलम्बनं सैव।।८८।।**[१]

विजनेऽपि एकान्तेऽपि, सुरतसमय इति यावत्। विनयावलम्बनं कुर्वती भुजप्रक्षेप-सीत्काराद्यकरणात्सुरतसामयिकं धाष्ट्र्यं परिहरन्ती सैव सुदती, अनुनयेन गमितस्य विद्रावितस्य तिग्ममानस्य परिशेषं सूचयितुं जानीते, नान्या युवतीत्यर्थः। 'सुदती' इत्यनेन तत्समयोपस्थिते हास्यप्रसङ्गेऽपि केवलं दन्तमुकुलान्येव व्यञ्जयन्ती, न तु हृदयेन हसन्तीति सूचितम्। अयमाशयः- मानिनी सा प्रियतमेनाऽनुनये कृतेऽपि यदि तिग्मो मानो न परिशाम्यति तर्हि मौनाऽऽलम्बनादिना तं सूचयति, न तु त्वमिव दयितं परिभवति। अत एव भवत्यापि प्रियतमः सर्वदानुवर्तनीय एव न त्वधरीकरणीय इति। गूढमानर्द्धिः उदात्ता सेयं नायिकेति कण्ठाभरणे भोजः।

बहुवल्लभत्वेऽपि एकस्यामेवानुरक्तं कञ्चन रसिकमुद्दिश्य कृष्णव्याजेन काचिदाह-

**त्वं कृष्ण राधिकाया मुखमरुता गोरजोऽपनयन्।**

**आसामन्यासामपि गोपीनां गौरवं हरसि।।८९।।**[२]

हे कृष्ण! मुखमारुतेन राधिकायाः 'गोरअम्' गोरजः कपोलादिलाग्नां गोधूलिमपनयन्। गोरजोऽपनयनच्छलेन कपोलादि चुम्बन्नित्यर्थः। कृष्णराधिकापदसन्निधिना 'गो'- पदस्य

---

१. **जाणइ जाणावेउं अणुणअविद्दविअमाणपरिसेसम्।**

**अइरिक्कम्मि वि विणआवलम्बणं सच्चिअ कुणन्ती।।८८।।**

[जानाति ज्ञापयितुमनुनयविद्रावितमानपरिशेषम्।

विजनेऽपि विनयावलम्बनं सैव कुर्वती।।]

२. **मुहमारुएण तं कह्न गोरअं राहिआएँ अवणेन्तो।**

**एताणँ वल्लीणं अण्णाण वि गोरअं हरसि।।८१।।**

[मुखमारुतेन त्वं कष्ण गोरजो राधिकाया अपनयन्।

एतासां बल्लवीनामन्यासामपि गौरवं हरसि।।]

धेनावेव शक्तेः।'गोरजः चक्षूरजः' इति गङ्गाधरः। त्वम् एतासामन्यासामपि बल्लवीनां 'गोरअम्' गौरवं हरसि, राधिकाचुम्बनेन सौभाग्यखण्डनादिति भावः। अत्रैकस्या 'गोरअं' हरन् अन्यासामपि 'गोरअं' हरसीति प्राकृते सम्भवन् विरोधः संस्कृतच्छायायां न निर्वोढुं शक्य इति बोध्यम्। 'यद्वा गोरअं गौरतां हरसि, अपमानेन कृष्णीकरणादिति भावः' इति गङ्गाधरः।

बहुवारं कृतापराधमथ केवलं 'क्षमस्व' इत्येतावतैव क्षमापयन्तं कान्तं खण्डिता काचिदाह–

**सुभग कृता अथवा यान् करोषि किं वा करिष्यसीदानीम्।**
**अपराधानां कतरे क्षम्यन्तां कथय निर्ह्रीक।।९०।।**[१]

सुभग! बहुवल्लभत्वात्सुभगम्मन्य! 'त्वं सौभाग्यदर्पेणैव स्वैरमाचरन्नपराधान्करोषि' इति ध्वनितम्। किं ये अपराधाः पूर्वं कृताः, अथवा यान् वारितोऽपि इदानीं करोषि, अग्रे यान्करिष्यसि वा, एतेषां भूत–वर्तमान–भविष्यतां मध्ये कतरे क्षम्यन्तामिति हे अलज्जशील! कथय। केऽपि क्षन्तुं न शक्यन्त इति परिणतेन निषेधेन 'पूर्वं ते कियन्तोऽपराधा न सोढाः' इति ध्वनितम्। किञ्च– 'त्व तथा शाठ्यं यथाऽग्रेप्यपराधान्करिष्यस्येव' इति सोपालम्भसम्भारं संसूच्यते।

अनुनयाद्यकुर्वाणं दुर्विदग्धं नायकं शिक्षयितुं दूती आह–

**गोपायन्ति प्रभुतां येऽनुनयन्ते च दासवत्कुपिताम्।**
**स्त्रीणां त एव दयिताः स्वामिन एवाऽपरे वराकाः स्युः।।९१।।**[२]

---

१. **किं दाव कआ अहवा करेसि कारिस्सि सुहअ एत्ताहे।**
**अवराहाणँ अलज्जिर साहसु कअए खमिज्जन्तु।।९०।।**
[किं तावत्कृता अथवा करोषि करिष्यसि सुभगेदानीम्।
अपराधानामलज्जाशील कथय कतरे क्षम्यन्ताम्।।]

२. **णूमेन्ति जे पहुत्तं कुविअं दासा व्व जे पसाअन्ति।**
**ते व्विअ महिलाणँ पिआ सेसा सामि व्विअ वराआ।।९१।।**
[गोपायन्ति ये प्रभुत्वं कुपितां दासा इव ये प्रसादयन्ति।
त एव महिलानां प्रियाः शेषाः स्वामिन एव वराकाः।।]

ये स्वकीयं प्रभुत्वं कान्ताविषये गोपायन्ति, न तु प्रकटयन्ति। अपराधेऽपि दण्डादिकं न प्रयुञ्जत इति भावः। ये च कुपितां तां दासवदधीनाः सन्तः प्रसादयन्ति, त एव महिलानां दयिताः प्रियाः। अपरे शेषाः दण्डप्रयोक्तारोऽनुनयपराङ्मुखाश्च स्त्रीणां स्वामिन एव स्युः, न वल्लभाः। अत एव वराकाः, प्रणयपरिपाकफलाऽप्राप्त्या शोचनीयास्ते इति भावः। तथा च त्वं यदि तत्प्रियतमतां कामयसे तर्हि अननुयादिषु माऽऽत्मनोऽवधीरणां मन्यस्वेति ध्वन्यते। 'दूमेंति जे मुहुत्तम्' (दुन्वन्ति ये मुहूर्तम्) इति पाठं स्वीकुर्वन्भोजः, गोत्रस्खलनादिना परिखेद्य नायकः प्रेमपरीक्षां करोतीति निदर्शयामास।

पूर्वमतिप्रेमाभिनिवेशेन प्रणये प्रवृत्तम्, पश्चाद् गर्भदशायामुदासीनं नायकमुपालभमाना दूती भ्रमरव्याजेनाह–

**मधुकर कृतार्घ न तदा रमसे ह्यन्यासु कुसुमजातिषु भोः।**
**बद्धफलभारगुर्वीमधुना वत मालतीं परित्यजसि।।९२।।**[१]

कृतः अर्घः पूजाविधिर्येन, सर्वाणि पुष्पाण्यवधीर्य कृतादरेत्यर्थः। 'मूल्ये पूजाविधावर्घः' इत्यमरः। भो मधुकर! मधुकरेत्यनेन केवलं मध्वास्वाद एव ते प्रयोजनं न प्रणय इति ध्वन्यते। 'किअग्घ' इति पाठे कृतघ्नेत्यर्थः, तथा च मालतीकृतं परिमलोपकारं विस्मृतवत्तया अधमस्त्वमित्याक्षिप्यते। तदा तस्मिन्प्रणयसमये अन्यासु पुष्पजातिषु न रमसे। वर्तमानतानिर्देशेन 'स ते प्रणयसमयो मम चक्षुषोर्भ्रमन् वर्तमान इव, इदानीमचिरेणैव परिवर्तसे' इत्युपालम्भो द्योत्यते। 'पुष्पजातिषु' इति जातिपदोपादानेन बहुवचनेन च 'समग्रा अपि कुसुमानां जातयः परीक्ष्य मालतीसौरभासक्तेन त्वया परित्यक्ताः' इति भ्रमरपक्षे। 'सर्वविधा अपि रमण्यो रसिकम्मन्येन त्वया परीक्ष्य मत्स्वामिनीगुणासक्तेन सताः सतिरस्कारमवहेलिताः, इति नायकपक्षे एवमारूढप्रणयातिशयोऽपि, इदानीमेतां परित्यजसीत्युपालम्भेऽतिशयो ध्वन्यते। इदानीं बद्धेन फलभरेण गुर्वीं मालतीं परित्यजसि! फलभारगौरवेण मालत्या मकरन्दशून्यता, नायिकायाश्च विपरीतरतादियथेच्छसुरताऽक्षमत्वं व्यज्यते। तथा च पूर्वं दर्शितताद्दशप्रणयाऽभिनिवेशस्त्वमधुना स्वार्थपरतामात्रेण तां परित्यजन् किं वा वाच्य इत्युपालम्भो ध्वन्यते। 'धृतगर्भा सेयं सम्प्रति नोपभोगयोग्या' इति जारं प्रति दूत्याः सूचनेति कश्चित्।

---

१. **तइआ कअग्घ महुअर ण रमसि अण्णासु पुप्फजाईसु।**
**बद्धफलभारगुरुइँ मालइँ एह्लिं परिच्चअसि।।९२।।**
[तदा कृतार्घ मधुकर न रमसेऽन्यासु पुष्पजातिषु।
बद्धफलभारगुर्वीं मालतीमिदानीं परित्यजसि।।]

नायकस्य विकलतातिशयमालोक्य स्वीकृतदूतीभावया मातुलान्या तस्य गुणसौन्दर्यादिषु कथितेषु तं प्रत्यनुरक्ता नायिका तामाह–

**दृष्टेन तेन मातुलि तत्क्षणमवितृष्णवीक्षणीयेन।**

**तृष्णैव नापयाता पयसेव स्वप्नपीतेन।।९३।।**[1]

मातुलि! अवितृष्णम् अपरिशाम्यदभिलाषं वीक्षणीयेन तत्क्षणं दृष्टेन तेन नायकेन स्वप्नपीतेन पानीयेनेव तृष्णैव न भ्रष्टा नाऽपयाता। तदवलोकनेन नाहं परितृप्यामीति तदनुरागो द्योत्यते। अथवा समीपस्थितं जारं 'त्वद्दर्शनाभिलाषो मम नापयातः' इति श्रावयन्ती अन्यापदेशेन काचित्सूचयति।

प्रथमसङ्केतभङ्गं दृष्ट्वा सङ्केतस्थानान्तरस्थिरीकरणाय काचित्कुलटा भुजङ्गं सुजन–प्रशंसाच्छलेनाह–

**देशमलङ्कुरुते यं सुजनः प्रवसंस्तमेव बत कुरुते।**

**ग्रामासन्नोन्मूलितमहावटस्थानसममचिरात् ।।९४।।**[2]

सुजनो यं देशं निवासेनाऽलङ्करोति, तमेव देशं प्रवसन् देशान्तरं गच्छन् सन् ग्रामासन्ने ग्रामसमीपे उन्मूलितो यो महावटस्तत्स्थानसदृशं करोति। प्रोषितसुजनो देशो रहोवृत्त–विश्रमाद्यभावाद्गुणिजनगोष्ठीविदग्धान् यथा दुःखयति तथा उन्मूलितवटस्थानमपि दुःखयतीत्यर्थः। ततश्च दिवापि दिनकरकराचुम्बितत्वेन सततान्धकारबन्धूकृतो जटागहनगो–

---

१. **अविअह्लपेक्खणिज्जेण तक्खणं मामि तेण दिट्ठेण।**

**सिविणअपीएण व पाणिएण तह्न व्विअ ण फिट्टा।।९३।।**

[अवितृष्णप्रेक्षणीयेन तत्क्षणं मातुलानि तेन दृष्टेन।

स्वप्नपीतेनेव पानीयेन तृष्णैव न भ्रष्टा।।]

२. **सुअणो जं देसमलंकरेइ तं विअ करेइ पवसन्तो।**

**गामासण्णुम्मूलिअमहावडट्ठाणसारिच्छम्।।९४।।**

[सुजनो यं देशमलङ्करोति तमेव करोति पवसन्।

ग्रामासन्नोन्मूलितमहावटस्थानसदृशम्।।]

पायितो महान् वटपादपो वात्ययोन्मूलित इति किञ्चिदन्यत्सङ्केतस्थानं स्यादिति जारं प्रति सूच्यते।

गमनसमये 'स्मर्तव्यस्तेऽयं जन:' इति वदन्तं भविष्यत्पथिकं कान्तं प्रति प्रियतमाऽऽह–

**संस्मर्यते स नाम क्षणमपि हृदयात्पृथक्कृतो यो हि।**

**स्मर्तव्यं च कृतं यदि गतं निरालम्बनं प्रेम।।९५।।**[1]

य: क्षणमपि हृदयात्पृथक्कृतो भवेत् स नाम स्मर्यते। यस्तु रात्रिदिन्वं हृदयमधितिष्ठेत् स किं स्मर्यताम्। यदि च प्रेम स्मर्तव्यं प्रियस्मरणयोग्यं कृतं तदैव निरालम्बनं सद् गतम्। ततश्च क्षणकालमपि हृदयममुञ्चतस्तव विरहे मम काऽवस्था भवेदिति प्रवासमभ्युपगच्छता त्वयैव विचार्यतामिति प्रियं प्रत्यभिव्यज्यते।।

प्रथममनुरागातिशयं प्रदर्श्योपभुक्तवन्तं ततोऽन्यासक्ततया तां चिराद्विस्मृतवन्तं मन्दस्नेहं नायकमनुकूलयितुं दूती नायिकाऽनुरागमाह–

**न्यासमिव सा कपोलेऽद्यापि तु तव दन्तमण्डलं बाला।**

**उद्भिन्नपुलकमण्डलवेष्टनगतमङ्ग रक्षति वराकी।।९६।।**[2]

अङ्ग (सम्बोधने)। बाला बाल्यवशात्प्रथमं त्वत्कृतशीलखण्डना सा वराकी, उद्भिन्नं यत्पुलकमण्डलं तदेव रक्षणनिमित्तं वेष्टनं तेन परिगतं परिवृतमिति यावत्। अन्योऽपि रक्षणीयं वस्तु वृतिवेष्टनादिना साऽवहितं रक्षति। अनेन 'तव दन्तक्षतं यदा यदा स्मरति तदा तदा

---

१. **सो णाम संभरिज्जइ पब्भसिओ जो खणं पि हिअआहि।**
**संभरिव्वं च कअं गअं च पेम्मं णिरालम्बम्।।९५।।**
[स नाम संस्मर्यते प्रभ्रष्टो य: क्षणमपि हृदयात्।
स्मर्तव्यं च कृतं गतं च प्रेम निरालम्बम्।।]

२. **णासं व सा कवोले अज्ज वि तुह दन्तमण्डलं बाला।**
**उब्भिण्णपुलअवइवेढपरिगअं रक्खइ वराई।।९६।।**
[न्यासमिव सा कपोलेऽद्यापि तव दन्तमण्डलं बाला।
उद्भिन्नपुलकवृतिवेष्टपरिगतं रक्षति वराकी।।]

रोमाञ्चितकपोलपाली भवति' इति नायकालम्बनोऽनुरागो ध्वनितः। तव दन्तमण्डलं मण्डलाकारं दन्तक्षतं न्यासमिव निक्षेपमिव अद्यापि तु रक्षति।'बाला'इत्यनेन कृतशीलखण्डनां बालामपीमां परित्यजतस्तवाऽहो नैर्घृण्यं चाऽसौभाग्यं चेत्युपालम्भो ध्वन्यते। निःक्षेपमिव सा रक्षतीत्यनेन तस्याः सुदृढो विश्वासो यत्पुनरपि तामभ्युपगमिष्यसीति नायिकायाः सत्यप्रेमानुबन्धो ध्वन्यते। वहतीत्याद्यनुपादाय 'रक्षति' पदेन तव स्मारकरूपेण तस्मिन्नतिबहुमानबुद्धिरिति सूच्यते। सा त्वेवं निष्कपटहृदया भवन्तमनुध्यायति, भवांस्तु न तत्राऽनुरज्यतीति एवंविधे शठे त्वयि मुग्धायास्तस्याः सुदृढोऽयमनुरागो न युक्त इति दैन्यं वराकीपदेन ध्वन्यते। ततश्च प्रथमदिनमिवाद्यापि त्वामनुध्यायन्तीं सुदृढानुरागामनुकम्पार्हामिमाम्, यदि किञ्चिदपि सौजन्यमस्ति तर्हि त्वरितमनुवर्तस्वेति नायकं प्रति चरमं व्यङ्ग्यम्। प्रथमानुरागानन्तरे दन्तक्षतमित्युदाजहार सरस्वतीकण्ठाभरणे भोजः (परि. ५)।

कार्यवशाद्विलम्बितस्ते दयितस्तत्समाप्त्यव्यवहितमेवाऽऽगमिष्यतीति अवधिदिनसज्जीकृतसमागमसामग्रीं प्रोषितभर्तृकामाश्वासयन्तीं मातुलानीं प्रति सा सनिर्वेदासूयमाह–

**दृष्टाश्चूताश्च सुराऽप्याघ्राता दक्षिणानिलः सोढः।**
**कार्याण्येव गुरूण्ययि मातुलि को वल्लभः कस्य।।९७।।**[१]

मन्मथमुन्मदयन्तः आम्राङ्कुरा दृष्टाः। कान्तेन सह वसन्तेऽस्मिन् पानगोष्ठीसुखार्थं सज्जीकृतायाः सुराया गन्धोऽप्यनुभूतः। कान्तसमागमार्थमङ्गान्युन्मीलयन् मलयानिलः सोढः। तथा च कार्याण्येव गुरूणि, दुःखैकभागिन्या मम जीवनस्यैतान्येव महान्ति कार्याणि। एतदनुभवार्थमेव हतजीवितं न त्यजामि। अयि मातुलि! कः कस्य वल्लभः। येनाद्यापि तद्विरहं सहमाना जीवामि। यदि मे स वल्लभोऽभविष्यत् तर्ह्यहमद्यप्रभृति जीवितमत्यक्ष्यमिति प्रियानुरागसञ्चारितः आत्मानं प्रति निर्वेदो ध्वन्यते। एतत्सर्वं गङ्गाधराऽनुषङ्गात्। वस्तुतस्तु–

विदेशमधितिष्ठता प्रियतमेन चूताः दृष्टाः। मधुगोष्ठीगरिष्ठेऽस्मिन्वसन्ते वैधुर्यदुःखाद् यदि सुरा नास्वादिता भवेत्तथापि स्थाने स्थाने रसकैः सज्जीकृता उग्रगन्धा साऽवश्यमाघ्राता। मलयानिलः सोढः। अतः अहं जानामि, अत्र कार्याण्येव उपार्जनादिप्रयोजनान्येव महान्ति। अयि मातुलि! कः कस्य वल्लभः? यदि स मय्यनुरक्तोऽभविष्यत् तर्हि विदेशगतान्दयि–

---

१. **दिट्ठा चूआ अग्घाइआ सुरा दक्खिणाणिलो सहिओ।**
**कज्जाइं व्विअ गरुआइँ मामि को वल्लहो कस्स।।९७।।**
[दृष्टाश्चूता आघ्राता सुरा दक्षिणानिलः सोढः।
कार्याण्येव गुरुकाणि मातुलानि को वल्लभः कस्य।।]

तान्बलात्स्वस्वभवनमाकर्षन्तं तमिमं चूताङ्कुर- मलयानिलादिवसन्तसमुदयं दृष्ट्वा सर्वाणि कार्याणि दूरतः परिहृत्याऽवश्यमागमिष्यत्। अतः प्रयोजनसारे जगति कः कस्य वल्लभ इति अवधिलङ्घनविचेतसा नायिकयाऽऽत्मानं प्रति निर्वेदो ध्वनितः। यद्वा- कार्याण्येव गुरूणि, तस्य युवत्यन्तरसमागमरूपाणि कार्याण्येव महान्तीत्यनेन अन्यासङ्गं प्रत्याक्षेपो ध्वन्यते। अन्यथा कथं वसन्तेऽपि नागतः? किं वा- कार्याण्येव गुरूणि, कः कस्य वल्लभः। तथा च तत्र स्थिताभिर्युवतिभिस्तस्य कार्यम्, देशान्तरस्थितया मया किं तस्य कार्यम्। अत एव कार्यनिबन्धनं तासामेव वाल्लभ्यं न ममेति वल्लभं प्रत्यसूया व्यज्यते। समीपस्थितं पान्थं विमोहयितुं स्वनायके वैराग्यं प्रदर्शयन्त्याः स्वयंदूत्या उक्तिरिति केचित्।

सर्वदा दयितसान्निध्येन सङ्गमे न तथाविधोत्कण्ठा। अत एव प्रियं प्रवासाय किमिति नाऽनुजानीषे। अनुभव प्रवासागतदयितनिर्भरोत्कण्ठाकृतोपगूहनानि सुरतसुखानीति शिक्षयन्तीं सखीं स्वाधीनपतिका काचिदाह-

**रन्त्वा पदमपि विगतो यदा स उपगूहितुं प्रतिनिवृत्तः।**

**प्रोषितपतिकेवाऽहं स तत्क्षणं च प्रवासीव।।९८।।**[१]

रमणोत्तरं यावता स एकपदमपि गच्छति, उत्कण्ठावशाच्च पुनः परिरब्धुं प्रतिनिवर्तते एतस्मिन्क्षणान्तराले एवाहमात्मानं प्रोषितपतिकां प्रियतमं च प्रवासिनं भावयामि। एवं विधेऽनुरागे का नामोत्कण्ठाविगमस्य कथा। क्षणमात्रमपि मुखाऽनवलोकने यदा प्रवासदुःखमनुभवामि, तर्हि प्रियविरहे मम जीवितस्य कियदाशेति त्वयैव बोद्धव्यमिति दृढोऽनुरागो ध्वन्यते। मानं धत्स्वेति बोधयन्तीं वयस्यां प्रति स्वस्य मानधारणाऽसामर्थ्यं प्रदर्शयन्त्या नायिकाया उक्तिरिति कश्चित्। प्रवासानन्तरं स्त्रीपुंसयोः पेमपरीक्षेति सरस्वतीकण्ठाभरणे भोजः (५ परि.)।

सुन्दरे सहृदये सद्व्यवहारे सानुरागे च कस्मिन्नपि यूनि जातानुरागा काचित्कुलटा निजपतिं प्रति तादृशगुणाभावजनितं वैराग्यं सूचयन्ती सखीमाह-

---

१. **रमिऊण पअं पि गओ जाहे उवऊहिउं पडिणिउत्तो।**

**अहअं पउत्थपइआ व्व तक्खणं सो पवासि व्व।।९८।।**

[रन्त्वा पदमपि गतो यदोपगूहितुं प्रतिनिवृत्तः।

अहं प्रोषितपतिकेव तत्क्षणं स प्रवासीव।।]

**अवितृष्णवीक्षणीयं समसुखदुःखं वितीर्णसद्भावम्।**
**अन्योन्यहृदयलग्नं पुष्कलपुण्यैर्जनो जनं लभते।।९९।।**[1]

जनः, अवितृष्णम् अनिवृत्तोत्कण्ठं यथा स्यात्तथा वीक्षणीयम्, सुन्दरमित्यर्थः। निजप्रेमिणः सुखदुःखयोः सतोरात्मनोऽपि सुखदुःखे मन्यमानं सहृदयमिति यावत्। वितीर्णः प्रकटितः सद्भावो येन, ततश्च लोकव्यवहारदक्षिणमित्यर्थः। अन्योन्यं हृदयलग्नं सानुरागमिति भावः। एवंविधगुणसम्पन्नं जनं पुष्कलैः पुण्यैर्लभते। मम मन्दभाग्याया एवंविधप्रियप्राप्तिः कुत इत्याशयः। मन्दस्नेहस्य पत्युश्चित्तमनुकूलयितुं पतिव्रताया उक्तिरिति कश्चित्। 'निजपतिं प्रति वैराग्यं व्यञ्जयन्ती कुलटा (तम्) पतिमाह' इति गङ्गाधरोऽवतरणमाह। सं. गा. ५

'गाढनिग्रहकारितया दुःखप्रदेऽपि पत्यौ कथं न विरज्यसि? अहो ते निजसौख्याव-धीरकता' इति भेदयन्ती दूतीं प्रतिनिवर्तयितुं दयितेऽनुरागातिशयमाह काचित्पतिव्रता-

**दुःखं दददपि जनयति सुखं हि यो यस्य वल्लभो भवति।**
**दयितनखदूनयोरपि रोमाञ्चो वर्धते स्तनयोः।।१००।।**[2]

यः यस्य वल्लभो भवति, स तस्य दुःखं ददत् अपि सुखं जनयतीति सम्बन्धः। भवतीति स्थाने 'वर्धते' इत्युक्त्या दयितकरस्पर्शेनैव प्रणयिन्याः समुद्भिद्यते रोमाञ्चः, ततो नखदाने स वर्धत इत्यतिशयो व्यज्यते। तथा च- 'प्रणयरसनिर्भरेण प्रियतमेन कृतः सोऽयं निग्रहोऽपि मिथोऽनुरागं वर्धयत्येव इति दूतीं प्रति सूच्यते।

---

१. **अविइह्णपेच्छणिज्जं समसुहदुःखं विइण्णसब्भावम्।**
**अण्णोण्णहिअअलग्गं पुण्णेहिँ जणो जणँ लहइ।।९९।।**
[अवितृष्णप्रेक्षणीयं समसुखदुःखं वितीर्णसद्भावम्।
अन्योन्यहृदयलग्नं पुण्यैर्जनो जनं लभते।।]

२. **दुःखं देन्तो वि सुहं जणेइ जो जस्स वल्लहो होइ।**
**दइअणहदूणिआणं वि वड्ढइ थणाणँ रोमञ्चो।।१००।।**
[दुःखं दददपि सुखं जनयति यो यस्य वल्लभो भवति।
दयितनखदूनयोरपि वर्धते स्तनयो रोमाञ्चः।।]

शतकसमाप्तौ, गाथारत्नकोषस्याऽस्य प्रख्यातसुकविसङ्कलितत्वेनोपादेयतां सूचयितुमाह–

**रसिकजनहृदयदयिते कविवत्सलमुखसुकविसङ्कलिते।**
**सप्तशतके समाप्तं प्रथमं गाथाशतकमेतत्।।१०१।।**

कविवत्सलो (हालः) सुखमिव प्रधानं येषु ते कविवत्सलमुखाः सुकवयः, तैः परिरचिते।

**(इति प्रथमशतकम्)**

---

१. **रसिअजणहिअअदइए कइवच्छलपमुहसुकइणिम्मविए।**
**सत्तसअम्मि समत्तं पढमं गाहासअं एअम्।।१०१।।**
[रसिकजनहृदयदयिते कविवत्सलप्रमुखसुकविनिर्मिते।
सप्तशतके समाप्तं प्रथमं गाथाशतकमेतम्।।]

------

# द्वितीयशतकम्

मानमवलम्ब्य 'कियद्वशीभूतस्ते वल्लभः' इति दयितकृतानुनयेन गवेषयस्वेति तव सखीं शिक्षयेति वदन्तीं सखीं प्रति नायिकासखी सपरिहासमाह–

**विगलति मुहुर्धृतोऽप्ययमुपदेशो दीयमान आलीभिः।**
**हृदयेस्या मकरध्वजबाणाऽऽहतिजर्जरे नूनम्।।१।।**[१]

आलीभिः प्रियसखीभिर्दीयमानः, अनया च प्रियसखीविश्रम्भेण मुहुर्धृतोऽपि 'इदानीं मानमवलम्बिष्ये' इति चेतसि स्थिरीकृतोऽपि। मुहुरित्यनेन 'प्रियमुखावलोकने मानं विस्मरति पुनः सख्युपदेशस्मरणेन तं दृढयति' इति ध्वनितम्। अयं मानोपदेशः कामशरप्रहारजर्जरे अस्या हृदये नूनं विगलति नीचैः पतति, नावतिष्ठत इत्यर्थः। तथा च मनसो विवशता ध्वन्यते। दीयमान इति वर्तमानार्थकेन शानचा, धृत इति भूतार्थं सूचयता क्तेन च 'सखीभिर्यदा उपदेशो दीयमान एव भवति, न तदनन्तरं कालविलम्बो भवति, तस्मिन्नेव क्षणे चेतो दृढीकृत्य तमुपदेशमियमधरत्, परं धृतोऽप्ययं गलति' इति कामशरप्रगुणीकृतो नायिकानुरागातिशयो द्योत्यते। मूलपदाङ्कानुरोधे 'विगलति धृतो धृतोऽपि' इति पाठ्यम्।

नदीतटनिकुञ्जे कृतसङ्केतेन कान्तेन विप्रलब्धा काचिन्नायिका 'अहं तत्र गताऽभूवम्, सरित्पूरेण सङ्केतस्थानं नौ भग्नम्' इति जारं सूचयन्ती सखीमाह–

**तटसंस्थितनीडान्तरशावकपरिरक्षणैकदत्तमनाः।**
**अगणितविनिपातभया पूरेण समं वहति काकी।।२।।**[२]

---

१. **धरिओ धरिओ विअलइ उअएसो पिहसहीहिँ दिज्जन्तो।**
**मअरद्धअबाणपहारजज्जरे तीएँ हिअअम्मि।।१।।**
[धृतो धृतो विगलत्युपदेशः प्रियसखीभिर्दीयमानः।
मकरध्वजबाणप्रहारजर्जरे तस्या हृदये।।]

२. **तडसंठिअणीडेक्कन्तपीलुआरक्खणेक्कदिण्णमणा।**
**अगणिअविणिवाअभआ पूरेण समं वहइ काई।।२।।**
[तटसंस्थितनीडैकान्तशावकरक्षणैकदत्तमनाः।
अगणितविनिपातभया पूरेण समं वहति काकी।।]

तटसंस्थितस्य नीडस्यान्तरे विद्यमाना ये शावकास्तेषां परिरक्षणमात्रे दत्तं मनो यया तादृशी काकी, नीडतरुमज्जनोत्तरं भावि विनिपातभयं मरणभयमप्यगणयन्ती सती पूरेण नवजलौघेन समं वहति, प्रवाहेण ह्रियत इति यावत्। एतेन 'अहं सङ्केतरक्षणार्थं नदी तटपतन-सहभावि मरणभयमप्यगणयन्ती तत्र गताऽभूवम्' इति, काकीति ङीपा 'स्त्रीजातेः पश्य प्रेमानुबन्धदार्ढ्यम्' इति च जारं प्रति द्योत्यते।

मधूकपुष्पावचयव्याजेन कृताभिसारा कुलटा आत्मनश्चिरकालसुरताभिलाषं जाराय सूचयन्ती मधूकपादपामन्त्रणव्याजेनाह-

**बहुपुष्पभारनामितभूमीगतशाख शृणुहि विज्ञप्तिम्।**
**अपि विगलिष्यसि गोदातीरविकटकुञ्जमधुमधूक शनैः।।३।।**[१]

बहुपुष्पभरेण अवनामिताः। अत एव भूमिगताः शाखा यस्य ईदृश। अयि गोदावरीतीर-विकटकुञ्जस्य मधुरमधूकतरो! शनैः क्रमेण विगलिष्यसि, शनैः शनैः पुष्पाणि प्रस्त्रोष्यसे, येनाहमेकाकिनी सर्वाणि तानि अधूल्यवलुण्ठनमवचिनोमीत्याशयः। बहुपुष्पभारेतिसम्बोधनेन बहोः कालादुत्कण्ठिततया सन्धुक्षितबहुलवीर्योऽपि गोदातटादिदत्तमनस्कतया चिरात्स्खलिष्यति, यतो हि विकटतया जनसञ्चारशून्येऽस्मिन् गोदानिकुञ्जे पुष्पावचयव्याजेन समागतया चिरं मया रन्तव्यमित्यभिलाषोऽभिव्यज्यते। मधूके मधुविशेषणेन कामनीयत्वातिशयः प्रकाश्यते।

मधूककुसुमावचयव्याजेन सङ्गमसुखं साधयन्त्या कयाचिन्मधूकतरुसमीपगतो निकुञ्जः सङ्केतस्थलं नियमितमभूत्। क्रमेण कुसुमेषु न्यूनीभूतेषु तदवचयमिषेण तत्रागमनमपि दुःसम्भवमित्यवशिष्टानि कुसुमान्यवचिन्वतीं रुदतीं काञ्चन सुदतीं दृष्ट्वा रसिकपौरः सहचरमाह-

**निष्पश्चिमानि दुःखालोकान्यसती मधूककुसुमानि।**
**अस्थीनीव चितायां बन्धो रुदती समुच्चिनुते।।४।।**[२]

---

१. **बहुपुप्फभरोणामिअभूमीग असाह सुणसु विण्णत्तिम्।**
**गोलातडविअडकुडङ्गमहुअ सणिअं गलिज्जासु।।३।।**
[बहुपुष्पभरावनामितभूमीगतशाख शृणु विज्ञप्तिम्।
गोदातटविकटनिकुञ्जमधूक शनैर्गलिष्यसि।।]

२. **णिप्पच्छिमाइँ असई दुःखालोआइँ महुअपुप्फाइं।**
**चीए बन्धुस्स व अट्ठिआइँ रुअई समुच्चिणइ।।४।।**
[निष्पश्चिमान्यसती दुःखालोकानि मधूकपुष्पाणि।
चितायां बन्धोरिवास्थीनि रोदनशीला समुच्चिनोति।।]

निष्पश्चिमानि सर्वान्तिमानि, परिशिष्टानीत्यर्थः। दुःखालोकानि कुसुमावचयव्याजेन लभ्यस्य जारसमागमस्य तदभावे दुर्लभत्वाद्दुःखेन आलोकयितुं शक्यानि मधूकपुष्पाणि, चितायां बन्धोरस्थीनीव। तान्यपि न पुनर्दर्शनीयानीति बन्धुप्रेम्णा रुदद्भिः सञ्चीयन्ते। असती रुदती सती समुच्चिनोति।

बह्वीषु संसक्तत्वेनास्थिरप्रणयतया निजवचनमविश्वसन्तीं नायिकामनुकूलयितुं कश्चिद्विदग्धनायको हृदयामन्त्रणव्याजेनाह–

**स्वल्पसरिज्जलवेगह्रियमाणसुदीर्घदारुवन्नूनम्।**
**स्थाने स्थाने विलगत्सम्प्रति केनापि धक्ष्यसे हृदय।।५।।**[१]

हे हृदय! स्वल्पसरितो जलरवेण ह्रियमाणं सुदीर्घदारु इव स्थाने स्थान एव विलगत्। स्वल्पजले प्रवहतः सुदीर्घतया तलस्पर्शवशात्स्थाने स्थाने संसक्तिरित्याशयः। त्वं सम्प्रति एतावत्कालमनुकूलदैवेन रक्षितमसि साम्प्रतं केनापि धक्ष्यसे। कस्यामपि हृदयहारिण्यां संसक्तं सत्तस्याः क्षणविरहेणापि दग्धं भविष्यसीत्याशयः। स्वल्पाशयत्वेन अनभिमतासु नानावनितासु सुदीर्घाशयत्वेन रसतलस्पर्शिनो मम मनोयोगाभावादेव नाभून्निश्चला स्थितिरत एव स्थाने स्थाने मदासक्तिरभून्न तु दुर्विदग्धतयेति 'स्वल्पसरित्– सुदीर्घा' दिपदैर्विचार्यमाणगभीररमणीयोऽर्थो ध्वन्यते। 'मडह' शब्दः स्वल्पवाचको देशी। 'नायकस्यास्थिरप्रेमतया तद्वचनमस्वीकुर्वतीं नायिकामभिमुखीकर्तुं कश्चिद्विदग्ध आह' इति गङ्गाधरः। नायकार्थं नायिकामनुकूलयतोऽन्यजनस्य 'हृदय!' इत्यामन्त्रणं कियदुचितमिति सुधीभिरेव विचार्यम्।

नायिकासपत्नीनां वचनोपतप्ता काचन निजसख्याः सौभाग्यं बन्धुजनगोष्ठ्यामेवमाह–

**तस्या योऽधररागो रात्रावुद्वासितः प्रियतमेन।**
**उषसि स एव सपत्नीनयनेष्वालोक्यते नु सङ्क्रान्तः।।६।।**[२]

---

१. **ओ हिअअ मडहसरिआजलरअहीरन्तदीहदारु व्व।**
**ठाणे ठाणे व्विअ लग्गमाण केणावि डज्झिहसि।।५।।**
[हे हृदय स्वल्पसरिज्जलरयह्रियमाणदीर्घदारुवत्।
स्थाने स्थाने एव लगत्केनापि धक्ष्यसे।।]

२. **जो तीएँ अहरराओ रत्तिं उव्वासिओ पिअअमेण।**
**सो व्विअ दीसइ गोसे सवित्तणअणेसु संकन्तो।।६।।**
[यस्तस्या अधररागो रात्रावुद्वासितः प्रियतमेन।
स एव दृश्यते प्रातः सपत्नीनयनेषु सङ्क्रान्तः।।]

उद्वासितः निरन्तरपानेन विसर्जितः। 'गोसे' उषसि, प्रातः। स एव रागोऽरुणिमा सपत्नीनयनेषु संक्रन्तो दृश्यते। रात्रौ प्रियतमनिर्दयपीत- विगतरागनायिकाधरदर्शनेन प्रातः सपत्नीनयनेष्वरुणिमोदयोऽभवदित्याशयः। सपत्नीनयनैः स्वगुणं परित्यज्यान्यदीयोऽरुणिमगुणः स्वीकृत इति तद्गुणेन अन्यासु वल्लभासु सतीष्वपि प्रियतमोपभोगशालिनी सैव सुभगेति नायिकायाः सौभाग्यमभिव्यज्यते। नयनेष्विति बहुवचनेन सर्वासामपि सपत्नीनामीर्ष्योद-यात्सर्वापेक्षयाऽप्युत्कर्षो ध्वन्यते। एकस्याः सौभाग्यवर्णनेन अन्यासां तत्सपत्नीनामीर्ष्यालुतया सुखसाध्यत्वं सूचयितुं रसिकं प्रति दूत्या उक्तिरियमिति कश्चित्। व्यत्ययवत्यमुख्या परिवृत्ति-रलङ्कार इति सरस्वतीकण्ठाभरणे भोजः। (३ परि. ३०)।

'विदग्धा महिलाः प्रसङ्गेन प्रियप्रणयं परीक्षन्ते' इति काचन चतुरा कान्तस्नेहमनिशं गवेषयन्तीं सखीं शिक्षयति-

**हलिकस्नुषा हि गृहपतिसुतमनुगोदातटस्थितं वीक्ष्य।**
**आरब्धाऽवतरीतुं सा दुःखोत्तारया बत पदव्या।।७।।**[1]

अनुगोदातटस्थितम्। गोदातटसमीपे स्थितं गृहपतिसुतं निजदयितं वीक्ष्य। सा दुःखोत्तारया दुःखेनाऽवतरणं यस्यामीदृश्या पदव्या मार्गेण अवतरीतुमारब्धा बत। नदीपूरे गच्छन्तीं पदस्खलनतो निमज्जन्तीं मामयमवलम्बते न वेति परीक्षार्थं विषममार्गेणाऽवतरीतु-मारब्धेत्याशयः। हालिकस्नुषाया गृहपतिसूनोश्च 'हस्तावलम्बदानेनावयोरङ्गसङ्गमः सम्पद्यताम्' इति अभिप्रायात्सोऽयं भावो नामालङ्कारः, कार्यद्वाराऽप्रकटनात्सोऽयं निरुद्धेदश्चेति सरस्वतीकण्ठाभरणे भोजः (३ परि. ४३)।

मनोऽभिलषिते नायके शृण्वति तत्प्रलोभनार्थमात्मनः सौभाग्यं श्रावयन्ती कापि सखीमाह-

**चरणान्तिकपतितस्यानालपतस्तस्य संस्मरामोऽद्य।**
**पादाङ्गुष्ठावेष्टितकेशदृढाकर्षणातिसुखकेलिम्।।८।।**[2]

---

१. **गोलाअडट्ठिअं पेच्छिऊण गहवइसुअं हलिअसोह्णा।**
**आढत्ता उत्तरिउं दुःखुत्ताराएँ पअवीए।।७।।**
[गोदावरीतटस्थितं प्रेक्ष्य गृहपतिसुतं हलिकस्नुषा।
आरब्धा उत्तरीतुं दुःखोत्तारया पदव्या।।]

२. **चलणोआसणिसण्णस्स तस्स भरिमो अणालवन्तस्स।**
**पाअङ्गुट्ठावेड्ढिअकेसदिढाअड्ढणसुहेल्लिम्।।८।।**
[चरणावकाशनिषण्णस्य तस्य स्मरामोऽनालपतः।
पादाङ्गुष्ठावेष्टितकेशदृढाकर्षणसुखम्।।]

प्रणयकोपेनाऽनुनयममानयन्त्या मम प्रसादनार्थं चरणान्तिकपतितस्य। पतितस्यैव हि केशाः पादाङ्गुष्ठेनावेष्टयितुं शक्यन्ते न निषण्णस्य। भयवशादनालपतः न त्वभिमानेन। मदीयपादाङ्गुष्ठेनावेष्टितानां केशानां दृढाकर्षणेन जाता या तस्यातिसुखकेलिस्ताम्, अद्य संस्मरामः। मम रूपगुणवशीकृतो दयितो मामेवमनुवर्तते, सैवाहं त्वां कामये, अत एव पश्य ते सौभाग्यमिति जारं प्रत्यभिव्यज्यते। संस्मराम इति बहुवचनेन स्मरणसामान्यताप्रदर्शनेनात्मनो वचनेऽकृत्रिमता प्रकाश्यते।

'सङ्केतस्थाने सम्प्रति कश्चित्पथिकोऽवतिष्ठते' इति जारं श्रावयितुं काचित्कुलटा सखीमाह-

**भल्लमिव पाटयति भोः पश्यत कुग्रामदेवकुलनिकटे।**

**हेमन्तकालपथिको निर्वान्तं किल पलालाग्निम्।।९।।**[1]

हेमन्तकालस्य पथिकः। कुग्रामे यद्देवकुलं तस्य निकटे, द्वार इत्यर्थः। निर्वान्तम्। (विध्मायन्तम्) पलालाग्निं फलशून्यव्रीहिनालाग्निं किल भल्लमिव भल्लूकमिव पाटयति इति भोः पश्यत। हेमन्तकाले न कुत्रापि शीतनिवारणोचितः पथिकनिवासो लभ्यत इति कुग्रामता। पलालकूटेऽग्नौ दीयमाने तृणानि दग्ध्वा द्रुतमेव स निर्वाति। निर्वाणे तस्मिन् पलालभस्मकूटो दग्धतृणश्यामतन्तुसंवलितत्वेनोपरिभागे श्यामः, फूत्कारेणान्तरग्नौ दृष्टे सति लोहितभागदर्शनाद्रक्त इति पाट्यमानस्य भल्लूकस्य साम्यं स्वाभाविकरीत्या सङ्घटत इत्याशयः। 'नाडी नालं च काण्डोऽस्य पलालोऽस्त्री स निष्फलः' इत्यमरः। एवं च पथिकसत्तया सङ्केतस्थाने नाधुना सङ्गन्तुं शक्यते। हेमन्तकाले च पथिको न रात्रौ प्रस्थास्यते, तथा च नाद्य समागमो भावीति भूयानर्थोऽभिव्यज्यते।

ग्रामतडागसमीपे कयोश्चित्सङ्केत आसीत्। तत्र किञ्चिच्छेषायामेव रात्रौ 'जनकराऽ-नालोडितं विमलजलमानयामि' इति व्याजेनाऽऽगता नायिका जारेण विप्रलब्धा। ततोऽपरदिने 'अहं तत्र गताऽभूवम्' इति जारं श्रावयन्ती पितृष्वसारमुद्दिश्य तत्र दृष्टाद्भुतकथनच्छलेनाह-

---

१. **फालेइ अच्छभल्लं व उअह कुग्गामदेउलद्दारे।**
**हेमन्तआलपहिओ विज्झाअन्तं पलालग्गिम्।।९।।**
[पाटयत्यच्छमल्लमिव पश्यत कुग्रामदेवकुलद्वारे।
हेमन्तकालपथिको विध्मायमानं पलालाग्निम्।।]

**कमलाकरा न मृदिता हंसा नोड्डायिताः पितुर्भगिनि।**
**ग्रामतडागे केनचिदभ्रमिहोत्तानितं क्षिप्तम्।।१०।।**[१]

हे पितृष्वसः! ग्रामतडागे केनचित् अभ्रमाकाशं पतनसमये अनुत्तानमपि उत्तानीकृत्य क्षिप्तम्। एवं सत्यपि कमलोपमर्दनादिकं न जातमित्यद्भुतम्। ततश्च 'अतिप्रत्यूषेऽहं तत्र गता, त्वं तु न गतः। यदि त्वं गतोऽभविष्यस्तर्हि हंसा न निभृतमस्थास्यन्' इति जारं प्रत्युपालम्भ-गर्भोऽयमर्थोऽभिव्यज्यते। 'विमलजलप्रतिबिम्बितस्याकाशस्योत्तानतया भानादियमुत्प्रेक्षेति' गङ्गाधरः। प्रतीयमानमपि जलधरप्रतिबिम्बदर्शनं वाच्यस्याङ्गमिति नात्र ध्वनिव्यवहारः, किन्तु गुणीभूतव्यङ्ग्यव्यवहारः, वाच्येन विस्मयविभावरूपेण मुग्धिमातिशयप्रतीत्या चारुत्वनिष्पत्तेरिति ध्वन्यालोके सेयमुदाहृता (२ उद्द्योतः ३४)।

जारप्रवासवार्ताश्रवणेन विमनस्कतया गृहकृत्येष्वसज्जामानां सपत्नीं प्रति ईर्ष्योपालम्भ-सम्भृतं वयोज्येष्ठा सपत्नी आह-

**मन्ये केन विमर्दितमनोरथेन प्रवास इति लपितम्।**
**येनाङ्गानि हि वध्वाः सविषाणीवालसायन्ते।।११।।**[२]

मन्ये, भग्नमनोरथेन हताशेनेति यावत्। केनचित्प्रवासो विदेशगमनमिति लपितम्। अत्र केनेति केनचिदित्यर्थे। येन कारणेन दत्तविषाणीव वध्वा अङ्गानि अलसायन्ते। एवं च 'जारप्रवासकथाद्य विषमिव तेऽप्रियाऽभवत्, येनावश्यकानि गृहकार्याण्यपि कर्तुं न प्रभवसि। अहो ते उच्छृङ्खलत्वम्।' इतीर्ष्योपालम्भौ सप्त्नीं प्रत्यभिव्यज्येते। यद्वा पतिप्रवासवार्ताश्रवणेन विमनस्कायाः प्रोष्यत्पतिकायाः प्रियतमेऽनुरागातिशयं प्रकाशयन्ती दूती येन प्राप्तुं शक्येति जारं प्रति तस्या असाध्यतां सूचयति। 'गृहकृत्यपराङ्मुखीं वधूं प्रति श्वश्रूरुपालम्भच्छलेनाह' इति गङ्गाधराऽवतरणम्।

---

१. **कमलाअरा ण मलिआ हंसा उड्डाविआ ण अ पिउच्छा।**
**केणॉवि गामतडाए अब्भं उत्ताणअं व्वूढम्।।१०।।**
[कमलाकरा न मृदिता हंसा उड्डायिता न च पितृष्वसः।
केनापि ग्रामतडागे अभ्रमुत्तानितं क्षिप्तम्।।]

२. **केण मणे भग्गमणोरहेण संलाविअं पवासो त्ति।**
**सविसाइँ व अलसाअन्ति जेण बहुआएँ अङ्गाइं।।११।।**
[केन मन्ये भग्नमनोरथेन संलपितं प्रवास इति।
सविषाणीवालसायन्ते येन वध्वा अङ्गानि।।]

'चतुराः स्फुटीभवन्तमपि भावमिङ्गिताकारगोपनेनाच्छादयन्ति' इति शिक्षयन्ती काचिद् गोपीगतं वैदग्ध्यं स्वसखीं प्रत्याह–

**गदिते यशोदयेति हि बालो दामोदरोऽद्यापि।**
**कृष्णमुखनिहितनयनं निभृतं हसितं व्रजवधूभिः ।।१२।।**

दामोदरः अद्यापि बाल इति यशोदया जल्पिते सति। दामोदरपदेन 'दुग्धभाण्डादि-भङ्गे यथा पूर्वं दाम्ना अबध्यत, तादृशमेवाऽधुनापि मन्ये' इति पूर्वकथा द्योत्यते। व्रजवधूभिरनुभूततरुणातिशायिकृष्णप्रौढभावाभिः निभृतं यथा रहस्याभिज्ञमन्तराऽन्यो न जानाति तथा हसितम्। 'कृष्णमुखनिहितनयनम्' इत्यनेन कृष्णेन सह नानाविधविलासानुभवो व्रजवधूभिः प्रकाश्यते। यः किल तथाविधनानासुरतविमर्दपाटूपटः सोऽपि बाल इत्युदीर्यत इति हासहेतुत्वेऽपि सोऽयं हासो वैदग्ध्यान्नाभिव्यञ्जित इति विदग्धचर्या प्रकाश्यत इति भावः। वधूभिरिति बहुवचनेन बहुत्र प्रकाशितासाधारणप्रौढितया कृष्णे सुरतवैदग्ध्यातिशयः प्रकाश्यते। साकाङ्क्ष अवसरात्मकः सोऽयं पर्यायालङ्कार इति सरस्वतीकण्ठाभरणम् (४ परि. ८० श्लोकः)।

कापि निपुणा सुजनप्रशंसाच्छलेन चिरकालमप्यमन्दप्रणयरक्षार्थं नायकमुपच्छन्दयति–

**ते विरलाः सत्पुरुषाः स्नेहो येषामभिन्नमुखरागः।**
**अनुदिवसवर्धमानः पुत्रेष्वृणमिव हि सङ्क्रामेत्।।१३।।**[2]

न भिन्नो मन्दीकृतो मुखरागो मुखप्रसादो यत्र, एवं भूतो येषां स्नेहः अनुदिवसं क्रमेणोपचीयमानः सन् [न तु प्रारम्भगुर्वी खलमैत्रीव सहसैव वर्धमानः] ऋणमिव पुत्रेषु

---

१. **अज्जवि बालो दामोअरो त्ति इअ जम्पिए जसोआए।**
**कह्णमुहपेसिअच्छं णिहुअं हसिअं वअवूहिं।।१२।।**
[अद्यापि बालो दामोदर इति इति जल्पिते यशोदया।
कृष्णमुखप्रेषिताक्षं निभृतं हसितं व्रजवधूभिः।।]

२. **ते विरला सप्पुरिसा जाण सिणेहो अहिण्णमुहराओ।**
**अणुदिअहवड्ढमाणो रिणं व पुत्तेसु संकमइ।।१२।।**
[ते विरलाः सत्पुरुषा येषां स्नेहोऽभिन्नमुखरागः।
अनुदिवसवर्धमान ऋणमिव पुत्रेषु सङ्क्रामति।।]

सङ्क्रामेत अवतरेत्। अन्तेऽपि न विलीयते किन्तु उत्तमर्णाय दयतया ऋणं यथा पुत्रेषु सङ्क्रामति, तथा वंशपरम्परया अग्रेऽप्यनुवर्तत इत्यपरिहरणीयत्वं सुजनस्नेहस्य सूचयति। पुत्रेष्विति बहुवचनेन वंशव्यापकत्वं सुजनस्नेहस्य ध्वनितम्। इह तु पुत्रेषु सङ्क्रामेत् इत्युक्त्या 'प्रसवोत्तरमपि मयि तथैव स्निह्यतां,न वक्षोजादिशैथिल्येन विमनाय्यताम् प्रत्युत स्वीयबद्ध्या सन्ततावपि स्नेहोऽनुवर्तयितव्यः' स्निहोनुवर्तयितव्यः' इति स्वसमीहितमभिव्यनक्ति। पितृकृतस्य ऋणस्य परिशोधो यथावश्यकस्तथा स्नेहनिर्वाहोऽपीति पुत्राणां कर्तव्यभारं ध्वनयितुमृण-पदोपादानम्। 'अनुवर्तेत' इत्याद्यनुक्त्वा सङ्क्रामेदित्यनेन 'पितरि यः स्नेह आसीत्स एवाविकलं पुत्रेषु गच्छेत्' इति स्नेहस्याऽकिञ्चित्परिवर्तनीयत्वं ध्वन्यते।

काचिज्जनसमक्षमेव प्रकटितप्रणयभावां निजसखीं शिक्षयन्ती कृष्णानुरक्तगोप्याः परमनैपुण्यमाह–

**नृत्यश्लाघननिभतः पार्श्वे परिसंस्थिता निपुणगोपी।**

**समगोपीनां चुम्बति कपोलविम्बागतं कृष्णम्।।१४।।**[१]

समीपे स्थिता निपुणा गोपी, समगोपीनां समीपस्थित्या सदृशीनां गोपीनां कपोले बिम्बेन प्रतिबिम्बरूपेणागतम्। तथा च गोपीषु पार्श्वस्थितास्वपि चुम्बनानुभावं चातुर्येण पिदधातीत्यर्थः। समगोपीनामित्यस्य कृष्णानुरागितया सदृशीनां गोपीनामित्यप्यर्थः। तथा च अनुरक्तानामपि पुरतः स्वानुरागं वैदग्ध्येन न तथा प्रकाशयति, त्वं तु साधारणानामपि समक्षमुद्भटभावा भवसीति भावः। अथवा नृत्यकर्मणा सदृशीनां गोपीनाम् 'सम्यगियं नृत्यति' इति कर्णे कथनापदेशेनेत्यर्थः। अत्र गोपीनामिति बहुत्वेन प्रत्येकं गोपीनां नृत्यश्लाघनसम्भवेन असकृच्चुम्बनेऽपि न रहस्यभङ्गः प्रत्युत तत्कृतो नायिकायाः कृष्णालम्बनः प्रेमातिशयो ध्वन्यत इत्याकूतम्। किं च 'निपुणगोपी समगोपीनाम्' इत्यस्य निपुणत्वेन समानां गोपीनामिति वार्थः।

विजृम्भमाणेऽस्मिन् जलदकाले कथं त्वया गन्तव्यमिति ध्वन्यन्ती कान्तं प्रति काचिद्वर्षागममाह–

---

१. **णच्चणसलाहणणिहेण पासपरिसंठिआ णिउणगोवी।**

**सरिसगोविआणँ चुम्बइ कवोलपडिमागअं कह्णम्।।१४।।**

[नर्तनश्लाघननिभेन पार्श्वपरिसंस्थिता निपुणगोपी।

सदृशगोपीनां चुम्बति कपोलप्रतिमागतं कृष्णम्।।]

**अन्योन्यकटकलग्नैः सर्वत्र दिशामुखेषु विसरद्भिः।**
**छल्लीमिव बत मुञ्चति विन्ध्यो मेघैर्विघटमानैः।।१५।।**[१]

अन्योऽन्यं कटके पर्वते नितम्बे लग्नैः, पर्वते निबिडमामिलितैरिति यावत्। पुनर्विघटमानैर्विश्लिष्यद्भिः, अत एव सर्वेषु दिशामुखेषु व्याप्नुवद्भिर्मेघैः, विन्ध्यः छल्लीमिव वल्कलमिव मुञ्चति। यथा कश्चनोपरितनं वल्कलं विमुच्याभिनवो भवति तथा विन्ध्यो मेघाडम्बरं त्वचमिवावमुच्य नवां सुषमां धारयतीति भावः। तथा चैवंविधे विरहिजनदुरन्ते घनसमयेऽपि किं भवता प्रस्थातव्यमिति निभृतं गमननिरोधो ध्वन्यते।'छल्ली वीरुधि सन्ताने वल्कले कुसुमान्तरे' इति मेदिनी।

गाथान्तरेऽपि तमेवार्थं भङ्ग्यन्तरेणाह-

**परिपश्यन्ति पुलिन्दाः पर्वतशिखरस्थिता धनुःसक्ताः।**
**हस्तिकुलैरिव विन्ध्यं विपूर्यमाणं नवाम्भोदैः।।१६।।**[२]

पर्वतशिखरे स्थिताः धनुषि सक्ताः, क्षितितलनिहितकोटिकं चापमवलम्ब्य स्थिता इत्यर्थः। पुलिन्दाः शबराः। वर्णेन ध्वनिना देहमहत्त्वेन च गजयूथसदृशैर्नवाभ्रैर्विपूर्यमाणं विन्ध्यमालोकयन्ति, उपरि शिखरे हस्तिकुलैरिव पूर्यमाणं विन्ध्यं कुञ्जरमृगयासक्ता अपि धनुर्निषण्णा एव साश्चर्यमालोकयन्तीति भावः। शबराणां पर्वतेऽवस्थानान्न विन्ध्यवनेऽभिसारसम्भव इति नायिकाया जारं प्रत्युक्तिरिति केचित्।।

प्रशान्तमार्गान्तरायः सन्निहितः प्रियोपगमनयोग्यः शरत्समय इति प्रोषितपतिकां सान्त्वयन्ती सखी वर्षावसानमाह-

---

१. **सव्वत्थ दिसामुहपसॉरिएहिँ अण्णेण्णकडअलग्गेहिं।**
**छल्लिं व्व मुअइ विज्झो मेहेहिँ विसंघडन्तेहिं।।१५।।**
[सर्वत्र दिशामुखप्रसृतैरन्योन्यकटकलग्नैः।
छल्लीमिव मुञ्चति विन्ध्यो मैघैर्विसङ्घटमानैः।।]

२. **आलोअन्ति पुलिन्दा पव्वअसिहरट्ठिआ धणुणिसण्णा।**
**हत्थिउलेहिँ व विज्झं पूरिज्जन्तं णवब्भेहिं।।१६।।**
[आलोकयन्ति पुलिन्दाः पर्वतशिखरस्थिता धनुर्निषण्णाः।
हस्तिकुलैरिव विन्ध्यं पूर्यमाणं नवाभ्रैः।।]

**वनदवमसीमलिनितो राजति विन्ध्यो घनैर्धवलैः।**

**मधुमथनः क्षीरोदधिमथनोद्धतदुग्धसिक्त इव।।१७।।**[1]

उज्ज्वलोऽपि वनदवकालिम्ना मलिनीकृतो विन्ध्यः, जलाऽपायाद्धवलैर्घनैः, क्षीरोदधेर्म-थनेन उद्धतम् उच्छलितं यद्दुग्धं तेन सिक्तः श्रीकृष्ण इव राजति। वनदवेत्याद्युक्त्या मार्गावरोधि-तृणकण्टकादिदाहान्मार्गस्य सुगमता सूच्यते।।

गुणानुरागादपि सचेतसां चित्तवृत्तिराकृष्या भवति, न पुनः सर्वत्र समागम एव कामनीय इति चक्षूरागादिभिर्नायिकायाः परपुरुषानुरागमाशङ्कमानं नायकं प्रति सखी आह-

**बन्द्या प्रवीर इति हतबान्धवविमनस्कयापि चोरयुवा।**

**अवलोकितोऽनुरागाद् गुणेषु को मत्सरं वहति।।१८।।**[2]

हतबान्धवत्वेन विमनस्कयापि बन्द्या, प्रत्यक्षदृष्टशौर्यानुभावतया प्रवीर इति कृत्वा चोरयुवा अनुरागाद्विलोकितः, न तु सुरताऽभिलाषादिति भावः। गुणेषु को मात्सर्यं वहतीत्यर्थान्त-रन्यासेन 'गुणवशंवदं स्वत एव चित्तमाह्रियते, न पुनस्तत्र सहृदयैरन्यथा शङ्कनीयम्' इति सूच्यते।

व्याधवध्वाः सौभाग्यवर्णनेन नायकान्तस्य तत्राऽनवकाशं सूचयन्ती काचिद्दूती आह-

**अद्य कतमोऽपि दिवसो व्याधवधू रूपयौवनोन्मत्ता।**

**तष्टधनुस्त्वक्छलतो विकिरति रथ्यासु सौभाग्यम्।।१९।।**[3]

---

१. **वणदवमसिमइलङ्गो रेहइ विञ्झो गणेहिँ धवलेहिं।**
**खीरोअमन्थणुच्छलिअदुद्धसित्तो व्व महुमहणो।।१७।।**
[वनदवमषीमलिनाङ्गो विन्ध्यो घनैर्धवलैः।
क्षीरोदमथनोच्छलितदुग्धसिक्त इव मधुमथनः।।]

२. **वन्दीअ णिहअबन्धवविमणाइ वि पक्कलो त्ति चोरजुआ।**
**अणुराएण पलोइओ गुणेसु को मच्छरं बहइ।।१८।।**
[वन्द्या निहतबान्धवविमनस्कयापि प्रवीर इति चोरयुवा।
अनुरागेण प्रलोकितो गुणेषु को मत्सरं वहति।।]

३. **अज्ज कइमो वि दिअहो वाहबहू रूवजोव्वणुम्मत्ता।**
**सोहग्गं धणुरुम्पच्छलेण रच्छासु विक्किरइ।।१९।।**
[अद्य कतमोऽपि दिवसो व्याधवधू रूपयौवनोन्मत्ता।
सौभाग्यं धनुस्तष्टत्वक्छलेन रथ्यासु विकिरति।।]

अद्य कियन्तिचिद्दिनानि व्यतीतानि, रूपयौवनाभ्यामुन्मत्तेव व्याधवधूः। रूपयौवनवशीकृतस्य दयितस्य सततसुरतासक्तिकृतदौर्बल्यादाक्रष्टुमशक्यतया तष्टस्य कृतावतक्षणस्य धनुषः त्वक्छलेन सौभाग्यं रथ्यासु विकिरति इतस्ततः प्रक्षिपतीत्यर्थः। रथ्यासु विकिरतीत्यनेन सौभाग्यस्य सुलभता सूचिता। इतस्ततो रथ्यापर्यन्तं व्याधवधूसौभाग्यं सुप्रसिद्धं त्वं कथमजानन्निव तत्र यतस इति भावः। 'रुम्प' शब्दस्य अभिनवजाता सूक्ष्मा त्वग् अर्थः। 'धणुरम्प.' इति पाठं स्वीकुर्वन् कुलबालदेवस्तु 'रम्प' शब्दः कच्छे वर्तत इत्याह। अतिसुरतासक्तं मित्रं प्रति तन्निवृत्त्यर्थं सहचरोक्तिरिति कश्चित्।

एतमेवार्थं प्रकारान्तरेणाह–

**उत्क्षिप्यतेऽद्य मण्डलमरुता व्याधस्त्रिया गृहाङ्गणतः।**

**सूक्ष्मधनुस्त्वक्पङ्क्तिः सौभाग्यध्वजपताकेव।।२०।।**[१]

मण्डलाकारवाहिना मारुतेन ('भभूलिया' इति ख्यातेन)। सूक्ष्माः याः धनुषस्त्वचस्तासां परम्परा। उपरि प्रस्फुरत्तया सौभाग्यवैजयन्तीव उड्डाय्यते। तदेतत्पश्यतेति प्राकृतच्छायानुसार्यर्थः। आत्मनो विज्ञताप्रकाशनार्थं नागरिकस्य निजसहचरं प्रत्युक्तिरिति कश्चित्।

'कथनं विनापि चिह्नैनैव चतुराः कञ्चिदर्थमवबुध्यन्ते' इति निजसखीमिङ्गितचातुर्यमवबोधयन्ती काचिदेवमाह–

**गजगण्डस्थलघर्षणमदमलिनीकृतकरञ्जशाखाभिः।**

**आयान्त्या कुलगेहाज्ज्ञातं व्याधस्त्रिया हि पतिमरणम्।।२१।।**[२]

---

१. **उक्खिप्पइ मण्डलिमारुएण गेहङ्गणाहि वाहीए।**
**सोहग्गधअवडाअ व्व उअह धणुरुम्परिञ्छोली।।२०।।**
[उत्क्षिप्यते मण्डलीमारुतेन गेहाङ्गणाद्व्याधस्त्रियाः।
सौभाग्यध्वजपताकेव पश्यत धनुः सूक्ष्मत्वक्पङ्क्तिः।।]

२. **गअगण्डत्थलणिहसणमअमइलीकअकरञ्जसाहाहिं।**
**एत्तीअ कुलहराओ णाणं वाहीअ पइमरणम्।।२१।।**
[गजगण्डस्थलनिघर्षणमदमलिनीकृतकरञ्जशाखाभिः।
आगच्छन्त्या कुलगृहाज्ज्ञातं व्याधस्त्रिया पतिमरणम्।।]

कुलगृहात् पितृगृहात्। आयान्त्या व्याधस्त्रिया। गजानां गण्डस्थलघर्षणे सति निषक्तो यो मदस्तेन मलिनीकृताभिः करञ्जशाखाभिः। पतिभयेन दूरं पलायितानां गजानां पुनरागत्य मदस्रवणेन पतिमरणमनुमितमित्यर्थः। तज्जीवितदशायां तत्रागमनम्, आगमनेऽपि मदस्रवण-मनुपपन्नम्, ततश्च ममाऽभावे महावीरः स विपन्न इति भावः। नायिकान्तरासक्तस्य पूर्वमिव गजमारणासामर्थ्यान्मत्सरैर्गजैः स व्यापादयिष्यत इति निश्चितमित्यर्थं इति कश्चित्।

वनचारिणोऽपि पूर्वप्रेमानुवृत्तिं न विस्मरन्ति किं पुनः सहृदया इति पूर्वप्रियाप्रणया-नुवृत्त्यर्थं काचिद्दूती नायकमाह-

**व्याधोऽभिनववधूरतितनूकृतः प्रथमगेहिनीप्रणयम्।**
**रक्षन् नयत्यरण्यं तनितदुराकर्षमपि च धनुः।।२२।।**[1]

नववध्वाः सुरतेन दुर्बलीकृतः। गृहगतायाः पत्न्याः प्रेममात्रेण तनुता स्फुटं न प्रसिध्यतीति उभयार्थवाहि 'रति' पदमुपात्तं छायायामिति बोध्यम्। प्रथमगेहिन्याः प्रणयं रक्षन् व्याधः। अवतक्षणादिना तनूकृतं तनितम् [तत्करोति तदाचष्टे इति ण्यन्तात् क्तः] तथापि दुराकर्षं धनुररण्यं नयतीत्यर्थः। 'सुचिरविरहोत्तरमपि, अभिनवयौवनामपि वधूमुपलभ्य वनेचरोऽपि व्याधः पूर्वप्रियतमाप्रणयं न विस्मरति, प्रत्युत तत्प्रणयरक्षार्थं तदभिज्ञानभूतं दुराकर्षमपि धनुः सुलभसङ्कटे गहने नयति। त्वं तु सततमनुरक्तामपि सहजमिमां कथं विस्मरसि' इति नायकं प्रति ध्वयति। पूर्वप्रियाप्रेमानुवृत्तिशिक्षार्थं सहचरं प्रति नागरिकस्योक्तिरिति गङ्गाधरावतरणम्। पत्युर्नववधू-वशीभूतत्वेन प्रथमगृहिण्याः साध्यत्वं सूचयितुं जारं प्रति दूत्या उक्तिरियमिति कश्चित्।

सुभगां प्रति केनचित्कारणेन प्रकुप्य तया सह पुनः सङ्गमं सप्रतिज्ञावचनं मुहुर्मुहुः प्रत्याचक्षाणस्य वल्लभस्य तदिदं प्रत्याख्यानमस्थिरत्वादुपहासजनकमेवेति काचन सपत्नी सोत्प्रासमुपवर्णयति-

**प्रथमं प्रसूयमाना हासयति श्यामला जनानखिलान्।**
**वल्लभवादेनालं ममेति बहुशो भणन्त्येव।।२३।।**[2]

---

१. **णववहुपेम्मतणुइओ पणअं पढमघरणीअ रक्खन्तो।**
**आलिहिअदुप्परिल्लं पि णेइ रण्णं धणुं वाहो।।२२।।**
[नववधूप्रेमतनूकृतः प्रणयं प्रथमगृहिण्या रक्षन्।
तनूकृतदुराकर्षमपि नयत्यरण्यं धनुर्व्याधः।।]

२. **हासाविओ जणो सामलीअ पढमं पसूअमाणाए।**
**वल्लहवाएण अलं मम त्ति बहुसो भणन्तीए।।२३।।**
[हासितो जनः श्यामया प्रथमं प्रसूयमानया।
वल्लभवादेनालं ममेति बहुशो भणन्त्या।।]

श्यामला परिभाषितरूपसौन्दर्यशालिनी वरस्त्री। वल्लभसमागमेनैव प्रसवदुःखोपलम्भात् वल्लभवादेन प्रियतमस्य वर्णनेन। वल्लभस्य नामग्रहणेनापि मम अलम्, नास्ति प्रयोजनमिति बहुशः कथयन्त्येव अखिलान् जनान्हासयति, पुनः प्रियतमसमागमादेतस्य वचनस्य स्फुटमेव हासहेतुत्वात्। सहजसुकुमाराङ्गी श्यामा प्रथमप्रसववेदनाकुलतया तथा तत्कालं प्रियसमागमं प्रत्याख्याति तथा तवापि वचनमिदमिति भावः। मूले कर्मवाच्यस्यापि इह कर्तृवाच्यत्वं बन्धानुकूल्येन सारल्येन च।

आगमने विलम्बेन प्रेम्णः कृत्रिमतामाशङ्क्य प्रियतमनिमित्तमुत्ताम्यन्ती प्रोषितभर्तृका निजाश्वासनपरां मातुलानीं सनिर्वेदमाह-

**कैतवरहितं मातुलि नास्त्येव प्रेम मानुषे लोके।**
**अथ भवति कस्य विरहो विरहे वा भवति जीवति कः।।२४।।**[१]

येषां निर्मायं प्रेम भवति, तेषु कस्य विरहो भवति ? न कस्यापीत्यर्थः। अन्योन्यानुरागमात्रजीवितयोः क्षणमदर्शनमप्यसहमानयोः कथं वा विरहः स्वेच्छया स्यादिति भावः। दैववशाद्विरहे भवति जायमाने वा को जीवति ? न कोऽपीत्यर्थः। तद्विरहेऽप्यहं जीवामि, सोऽपि च मामपहायान्यत्र तिष्ठति, इति प्रेम्णो निष्कैतवत्वमविश्वसनीयमिति भावः। 'मानुषे लोके' इत्यनेन एवंविधस्य प्रणयस्य लोकोत्तरता सूचिता।

कामिनीजनमनोहरणार्थमात्मनः कामुकतातिशयं ख्यापयन् रसिकताभिमानी कश्चिद् भुजङ्गः कस्याश्चन कुलसरोजदृशः स्नानसमयेऽङ्गप्रक्षालनार्थं वस्त्रपरिवर्तनार्थमुद्घाटितसुन्दरावयवदर्शनेनात्मनः परितोषमेवमाह-

**आश्चर्यमिव च निधिरिव दिवि राज्यमिवालममृतपानमिव।**
**आसीन्मुहूर्तमिव नस्तद्विवसनदर्शनं तस्याः।।२५।।**[२]

---

१. **कैअवरहिअं पेम्मं णत्थि व्विअ मामि माणुसे लोए।**
**अह होइ कस्स विरहो विरहे होत्तम्मि को जिअइ।।२४।।**
[कैतवरहितं प्रेम नास्त्येव मातुलानि मानुषे लोके।
अथ भवति कस्य विरहो विरहे भवति को जीवति।।]

२. **अच्छेरं व णिहिं विअ सग्गे रज्जं व अमअपाणं व।**
**आसि म्ह तं महुत्तं विणिअंसणदंसणं तीए।।२५।।**
[आश्चर्यमिव निधिमिव स्वर्गे राज्यमिवामृतपानमिव।
आसीदस्माकं तन्मुहूर्तं विनिवसनदर्शनं तस्याः।।]

नः अस्माकं तस्याः सुन्दर्याः तद्विवसनदर्शनं तादृशं विवसनं दर्शनम्। विवस्त्रायास्तस्या अवलोकनमिति वाऽर्थः। इह अस्मिन् लोके। आश्चर्यमिव लोकोत्तरत्वादद्भुतमिव। परमसुखकरत्वान्निधिरिव। प्राकृते लिङ्गविभक्त्यादेर्नियमाभावात् 'णिहिं व' [निधिमिव] इति प्रयुक्तम्। अलौकिकभूमिकास्पर्शात् निधीश्वरत्वलाभाद्वा दिवि स्वर्गे राज्यमिव। मदनहुतवहक्लान्तसकलशरीरनिर्वृतिजनकत्वात् निरतिशयतृप्तिकारकत्वात् विलीनानामपि मनोभावानामुज्जीवनाच्च अलं पर्याप्तम् अमृतपानमिव आसीत्। एतादृशभावुकोऽपि भवतीः कामयत इत्यहो भवतीनां सौभाग्यमिति शृण्वत्कामिनीभ्यो ध्वन्यते।

सपत्न्यां द्वेषम्, आत्मनि चानुरागमुत्पादयितुं काचिन्निपुणा नायिकान्तरासक्तमस्थिरप्रेमाणं नायकमेवमाह–

**सा ते प्रिया, त्वमसि मे, तस्या द्वेष्यस्त्वमस्यहं ते च।**
**बाल! स्फुटं भणामः प्रेमेदं बहुविकारमिति।।२६।।**[1]

या त्वयि नानुरज्यति सा ते प्रियास्ति। त्वं मे प्रियोऽसीति लिङ्गविपरिणामेनान्वयः। अन्यनायके दत्तचित्तायास्तस्यास्त्वं द्वेष्योऽसि। अहं च ते, द्वेष्याऽस्मीति विपरिणामेनानुषङ्गः। [अत एव] बाल! उचितानभिज्ञतया नितान्तमप्रौढ! इदं प्रेम बहुविकारम्, प्रकृतिभेदानुसारेण बहुप्रकारमिति स्पष्टं कथयाम इत्यर्थः। अनुरक्तां मां विहाय तस्यामननुरक्तायां तव प्रणयः कियद्रसोचितः, अहं च त्वां तथापि तयैव स्नेहदृशा पश्यामीति प्रेमचरितं त्वमेव प्रौढ्या विचारयेति व्यङ्ग्योऽर्थः।

कान्तस्य नितान्तमनुरागमात्मनश्च सौभाग्यं लज्जाशीलतां च सूचयन्ती काचित्सत्स्वाधीनभर्तृका पादयोरलक्तकं विन्यस्यन्तीं प्रसाधिकामाह–

**एषाहं लज्जालुः प्रेमाण्युन्मत्सराणि किल तस्य।**
**आलीगणोऽपि निपुणोऽपगच्छ किं पादरागेण।।२७।।**[2]

---

१. **सा तुज्झ वल्लहा तं सि मज्झ वेसो सि तीअ तुज्झ अहम्।**
**बालअ फुडं भणामो पेम्मं किर बहुविआरं त्ति।।२६।।**
[सा तव वल्लभा त्वमसि मम द्वेष्योऽसि तस्यास्तवाहम्।
बालक स्फुटं भणामः प्रेम किल बहुविकारमिति।।]

२. **अहअं लज्जालुइणी तस्स अ उम्मचछराइँ पेम्माइं।**
**सहिआअणो वि णिउणो अलाहि किं पाअराएण।।२७।।**
[अहं लज्जालुस्तस्य चोन्मत्सराणि प्रेमाणि।
सखीजनोऽपि निपुणोऽपगच्छ किं पादरागेण।।]

तस्य मद्दयितस्य प्रेमाणि उन्मत्सराणि स्वल्पस्यापि सङ्गमविघ्नस्याऽसहनतया उत्कटानि सन्ति। सखीगणोऽपि निपुणः किञ्चिच्चिह्नमात्रेण सर्वं रहस्यं जानातीत्यर्थः। 'अलाहि' शब्दो निवारणे। अतः अपेहीत्यर्थः। चरणयोररुणिम्नः स्वतःसिद्धतया पादरागेण किं प्रयोजनमित्यर्थः। लाक्षारसे पादयोर्विन्यस्तेऽपि स्वल्पमपि सङ्गमविघ्नमसहमानो दयितस्तादृशीमेव सङ्गमकेलौ मां व्यापारयिष्यति, ततश्च प्रियस्योदरादिषु चरणचिह्नोदयेन सखीजनः सर्वमिदमवगत्य मां लज्जयिष्यति, अहं च लज्जाशीलास्मीति किं मुधानेन पादरागेणेत्याशयः।"उन्मत्सराण्युद्भटानि। उदरालक्तकादिष्वव्याजप्रवृत्तानीत्यर्थः" इति तु दुर्बोधेव गङ्गाधरटीका।

अरण्ये दत्तसङ्केता सा तिष्ठति। त्वरितमिमामनुसरेति सूचयन्ती दूती जारं प्रत्याह–

**मधुमासमारुताहतमधुकरझङ्कारनिर्भरेऽरण्ये।**
**गायति विरहाक्षरकृतपथिकमनोमोहनं गोपी।।२८।।**[१]

मधुमासमारुतेन आहते, मधुकरझङ्कारेण पूरिते अरण्ये। विरहसूचकैरक्षरैः कृतं पथिकानां मनोमोहनं यथा भवति तथा गोपी गायति। मधुकरझङ्कारसहकारेण गीतेर्मधुरगभीरनादिता पवनेन तद्विजृम्भणं च ध्वन्यते। अत एव पथिकमनोमोहकत्वमिति भावः। अस्मद्वनितानामप्येवं विरहवेदना भविष्यतीति चिन्तया पथिकानां मनोमोहो भवतीति तात्पर्यार्थः। मलयमारुताद्युद्दीपन-सामग्रीसहिते विपिने भावमयगीतिभिर्विरहवेदनां विनोदयन्ती सा त्वत्प्रतीक्षया तिष्ठति। उदासीनाः पथिका अपि तद्विरहेण द्रवन्ति। तत्त्वरितमिमामानन्दयेति ध्वन्यते। गृहगमनाय पथिकान्तरं त्वरयितुं पथिकस्योक्तिरिति कश्चित्।

अतिभूमिं गतो मानः कदाचिद्दयितस्यासह्योऽपि भवतीति काञ्चिन्मानविषये शिक्षयन्ती सखी कस्याश्चन कलहान्तरिताया वृत्तान्तमुपवर्णयति–

**मानधनयाऽनुबद्धस्तया तथा मान एवमेव भृशम्।**
**प्रोषित एकग्रामेऽप्यनुनीय यथा प्रियस्तस्याः।।२९।।**[२]

---

१. **महुमासमारुआहअमहुअरझंकारणिब्भरे रण्णे।**
**गाअइ विरहक्खरॉबद्धपहिअमणमोहणं गोवी।।२८।।**
[मधुमासमारुताहतमधुकरझङ्कारनिर्भरेऽरण्ये।
गायति विरहाक्षराबद्धपथिकमनोमोहनं गोपी।।]

२. **तह माणो भाणधणाएँ तीअ एमेअ दूरमणुबद्धो।**
**जह से अणुणीअ पिओ एक्कग्गाम व्विअ पउत्थो।।२९।।**
[तथा मानो मानधनया तया एवमेव दूरमनुबद्धः।
यथा तस्य अनुनीय प्रिय एकग्राम एव प्रोषितः।।]

मान एव धनं यस्याः सा मानधना तया एवमेव कारणं विनैव मानः तथा तेन प्रकारेण भृशं दूरमनुबद्धः, यथा तस्याः प्रियः अनुनीय एकग्रामेऽपि प्रोषितोऽभूदित्यर्थः। एकग्रामे विद्यमानस्यापि प्रियादर्शनाभावात्प्रवास एवेति भावः। तथा च सामान्यकारणे तावानेव मानः प्रशस्यते यावान्नासौ दयितस्यासह्यो भवेदिति सूच्यते। ''निष्कारणमानग्रहनिन्दाच्छलेन दूती जारस्यागमनावसरमाह'' इति गङ्गाधरटीकाऽवतरणम्।

विदग्धवनिताः प्रियतमस्य परवनितासक्तिं चतुरचेष्टयैव निवारयन्ति न पुनः कलहैरिति वैदग्ध्यं शिक्षयन्ती काचित्सखीं प्रति मधुरमाह–

**सालोक एव सूर्ये गृहभर्तुरनिच्छतोऽपि गृहिणीयम्।**
**पश्य गृहीत्वा धावति पादौ हसतो हसन्त्येव।।३०।।**[१]

सूर्ये आलोकसहिते एव। सूर्यप्रकाशसत्तायामेवेत्यर्थः। इयं गृहिणी। गृहिणीपदेन गृहभारसञ्चालकतया गृहकार्यविशृङ्खलतोत्पादके कलहे विमुखत्वं सूच्यते। अन्यवनितागतचित्ततया अनिच्छतोऽपि। चातुर्येण गृह एवावस्थितिं साधयन्त्याः गृहिण्याः वैदग्ध्यमालोक्य दाक्षिण्येन हसतो गृहस्वामिनः पादौ गृहीत्वा। विदिताभिप्रायस्य दयितस्य हास्यं हास्येनैवोत्तरयन्ती न तु वाचा। धावति प्रक्षालयति इति त्वं पश्य साधु समीक्षस्वेत्यर्थः। गृहोपवेशनसमये पादौ प्रक्षालनीयाविति सतामाचारः। असमय एव पादप्रक्षालनादन्यत्र गमननिषेधे चतुरगृहिण्यास्तात्पर्यमवगत्य हसतो गृहस्वामिनः पादौ गृहिणी 'मदभिप्रायो दयितेन विदितः' इति हसन्ती सती प्रक्षालयतीति भावः। गृहिणीनां दयितेषु परासक्तिनिवारणस्य सेयं पद्धतिरिति सखीं प्रति ध्वन्यते। अभितः सोद्भेदः [प्रकाशः] सोऽयं भावालङ्कार इति सरस्वतीकण्ठाभरणम्। स्वाधीनपतिकोदाहरणेऽपि सेयं कण्ठाभरणे गृहीता (५परि.)। मूले 'घरिणी घरसामिअस्स घेत्तूण' इत्यादिर्दूरान्वयश्छायापद्ये निवारितः।

अधिकासक्तिवशात्सपत्नीनाम्ना व्यवहरन्तं कान्तं प्रति 'प्रत्यक्षोपस्थितामपि नेमां पश्यसि' इति गोत्रस्खलितकुपितां निजसखीं निवारयन्तीं वाग्विदग्धा काचन सगूढोपालम्भमाह–

---

१. **सालोए व्विअ सूरे घरिणी धरसामिअस्स घेत्तूण।**
**णेच्छन्तस्स वि पाए धुअइ हसन्ती हसन्तस्स।।३०।।**
[सालोक एव सूर्ये गृहिणी गृहस्वामिनो गृहीत्वा।
अनिच्छतोऽपि पादौ धावति हसन्ती हसतः।।]

**सख्यो मां व्याहरतां तस्य गोत्रेण किमिह भणितेन।**

**मा भणत किमप्येनं यतस्ततोऽप्यस्तु सुस्थिरप्रेमा।।३१।।**[१]

हे सख्यः! तस्या गोत्रेण (नाम्ना) मां व्याहरतां व्यवहरतु। अत्र स्थूलव्यवहारसूचकेन कथनेन किम्। एनम् अनुरक्तामपि मां विहाय अन्यत्र कृतासक्तिकम्, किमपि मा कथयत। यतस्ततोऽपि यस्यां कस्याञ्चन नायिकायामेष सुस्थिरप्रेमा भवतु। पूर्वमयं मयि सुदृढमनुरज्यति स्म, ततः शीघ्रमेव मामपहाय अन्यस्यामासक्तिं बबन्ध, या हि सम्प्रति निरन्तरमेतस्याऽऽन्तरम-धिवसति। वाचि निहितसपत्नीगोत्रः सोऽयं तत्रैव स्थिरप्रायः स्यादेतदेवाऽस्तु, परं नास्य प्रेम्णः स्थिरतेति भावः। एवमस्थिरप्रणये त्वयि किं वोपालम्भवचनैरिति दयितं प्रति ध्वन्यते।

दयितविरहावकाशमुपलभ्य निजवाञ्छितं साधयितुमिच्छन्तीं दुष्टदूतीं प्रतिनिवर्तयन्ती काचित्साध्वी प्रोषितभर्तृका दयितेऽनुरागातिशयमेवमाह–

**स्थितमक्ष्णोस्तद्रूपं स्पर्शो ह्यङ्गेषु जल्पितं श्रवसोः (कर्णे)।**

**हृदयं हृदये निहतं वियोजितं किमिह दैवेन।।३२।।**[२]

तमेव निरन्तरं भावयन्त्या ममाक्ष्णोस्तस्य रूपं स्थितम्। अङ्गेषु (तदङ्गानाम्) स्पर्शः स्थित इत्यादिलिङ्गविपरिणामेन योजनीयम्। रूपम्, सौकुमार्यम्, प्रियवचनानि, सद्भाववर्तनानि च यथाक्रमं भावयन्त्या मम विरहवेदना न समुदेतीति भावः। 'अत्र दैवेन किं वियोजितम्' इत्यनेन दैवमपि दयितेन सह मम वियोगं साधयितुं न प्राभवत्। प्रियेण सहाऽविश्वासोपदेशकानि तव वचनानि तु कानीति दूतीं प्रति ध्वन्यते।

प्रोषितभर्तृकायाः सखी तत्कान्तसमीपगामिनं पान्थं प्रति निजसख्याः सुविषमां विरहवेदनां गृहागमनाय त्वरयितुमेवमुपवर्णयति–

---

१. **वाहरउ मं सहीओ तिस्सा गोत्तेण किं त्थ भणिएण।**
**थिरपेम्मा होउ जहिं तहिं पि मा किं पि णं भणह।।३१।।**
[व्याहरतु मां सख्यस्तस्या गोत्रेण किमत्र भणितेन।
स्थिरप्रेमा भवतु यत्र तत्रापि मा किमप्येनं भणत।।]

२. **रूअं अच्छीसु ठिअं फरिसो अङ्गेसु जम्पिअं कण्णे।**
**हिअअं हिअए णिहिअं विओइअं किं त्थ देव्वेण।।३२।।**
[रूपमक्ष्णोः स्थितं स्पर्शोऽङ्गेषु जल्पितं कर्णे।
हृदयं हृदये निहितं वियोजितं किमत्र दैवेन।।]

**शयने निमीलिताक्ष्या कृत्वा चिन्तामयं प्रियं तावत्।**

**प्रशिथिलवलयाभ्यामुपगूढो ह्यात्मैव बाहुभ्याम्।।३३।।**[१]

भावनासमुपस्थितदयितसमागमनेनानन्दातिशयात् निमीलितनेत्रया अनया मत्सख्या शयने शयनीये भावनामयं दयितं कृत्वा कल्पयित्वा। विरहदौर्बल्यात्प्रशिथिलवलयाभ्यां बाहुभ्याम् आत्मैव उपगूढः। दयितभावनया स्वशरीरमेवालिङ्गितमिति भावः। 'आलिङ्गितः' इत्याद्यनुक्त्वा 'उपगूढः' इत्यत्र 'गुह' धातुरूपप्रकृत्या विरहोत्तरं दयितलाभेनोत्कण्ठातिशयान्न पुनरपसरेदिति हृदयैकीकरणरूपं सुदृढं परिरम्भणमभिव्यज्यते। तद्यावदियं दशमीं दशां न प्रयाति तावदेव लघुतरमनुकम्पस्वेति तद्दयितं प्रति समीहितं सूच्यते।

प्रणयकलहेन दूरमवस्थितयोर्यूनोः समञ्जसकरणाय गतागतखिन्ना दूती द्वयोरपि मानशमनार्थमात्मनिन्दामाह–

**परिभूतेनाऽपि दिनं गृहं गृहं भ्रामिणाऽन्यकार्येण (अन्नकार्येण)।**

**चिरजीवितेन सपदि क्षपिताः स्मोऽनेन दग्धकायेन (काकेन)।।३४।।**[२]

रोषकटुवचनैः परिभूतेन तिरस्कृतेन। दिनं समस्तदिनपर्यन्तम् अन्यकार्येण परप्रयोजन-सिद्ध्यर्थम्। युवयोः प्रणयकलहनिवृत्त्यर्थमिति भावः। गृहं गृहं प्रति भ्रमणशीलेन। चिरजीवितेन बहोः कालादेवंविधजीवनयापकेन वृद्धेन अनेन दग्धकायेन सपदि अधुना क्षपिताः स्मः उद्वेजिताः स्मः। प्राकृते 'अण्णकज्जम्मि' 'दड्ढकाएण' इति पदाभ्यां 'अन्नकार्येण' 'दग्धकाकेन' इत्यपि बुध्येते। ततश्च पक्षान्तरे– लोष्टप्रक्षेपादिना परिभूतेन। अन्नकार्येण अन्नप्राप्त्यर्थं समस्तदिनं यावत् प्रतिगृहं भ्रमता, चिरजीवितेन दीर्घायुषा ['स एव च चिरञ्जीवी चैकदृष्टिश्च मौकुलिः'

---

१. **सअणे चिन्तामइअं काऊण पिअं णिमीलिअच्छीए।**
**अप्पाणो उवऊढो पसिठिलवलआहिँ बाहाहिं।।३३।।**
[शयने चिन्तामयं कृत्वा प्रियं निमीलिताक्ष्या।
आत्मा उपगूढः प्रशिथिलवलयाभ्यां बहुभ्याम्।।]

२. **परिहूएण वि दिअहं घरघरभमिरेण अण्णकज्जम्मि।**
**चिरजीविएण इमिणा खविअह्मो दड्ढकाएण।।३४।।**
[परिभूतेनापि दिवसं गृहगृहभ्रमणशीलेनाऽन्यकार्ये।
चिरजीवितेनाऽनेन क्षपिताः स्मो दग्धकायेन।।]

इत्यमरः] काकहतकेन दध्याद्युपघाताद्युपद्रवादुद्विग्नाः स्मः, इत्यर्थः प्रतीयते। 'अण्णकज्जम्मि' 'दड्ढकाएण' इत्यादिशब्दशक्तिमूलध्वनिना 'अहं युवयोः प्रसादनाय गृहाद् गृहं परिभ्रमन्ती काकस्येव तिरस्क्रियामनुभवामि, युवां नैतद्विचारयथस्तदात्मनो मम च क्लेशमात्रदायकेनाऽनेन हठहतकेन सम्प्रति किं वा फलम्' इत्यर्थः प्रकाश्यते।

दुर्जनसविधे न रहस्यं प्रकाशनीयमिति शिक्षयन्कश्चित्सहचरमाह–

**यत्रैव पोष्यमाणो वसति खलः स्नेहदानेन।**
**दीपक इवाचिरेणाऽऽलयं तमेवैष मलिनयति।।३५।।**[१]

स्नेहपूर्वकमाश्रयदानेन, स्नेहस्य प्रणयस्य दानेन वा। पोष्यमाणः संवर्ध्यमानो दुर्जनः यत्रैव वसति यदाश्रयेणैव वसतीत्यर्थः। एष खलस्तमेवालयमाश्रयभूतं जनमचिरेणैव पोषणदशायामेव मलिनयति अपवादप्रचारणादिना दूषयतीत्यर्थः। पक्षे–तैलदानेन दीप्यमानो दीपकः स्वाश्रयभूमिभागमचिरेणैव कज्जलादिभिर्मलिनयतीत्यर्थो बोध्यः। तथा चैवंविधविश्वास-वञ्चकेभ्यः सुतरामवधेयमिति भावः। 'सिणेहदाणेहिं' इति मूलपदाङ्केन बहुत्वाग्रहे तु 'स्नेहदानैर्हि' इति पाठ्यम्।

गृहायातं कञ्चन भुजङ्गं बहुधनदानाय प्रोत्साहयन्ती कुट्टनी कृपणनिन्दामुपन्यस्यति–

**भवति कृपणपुरुषस्य प्रभवन्त्यपि निष्फलैव धनवृद्धिः।**
**ग्रीष्मातपसन्तप्तस्य निजच्छायेव पथिकस्य।।३६।।**[२]

प्रकर्षेण भवन्त्यपि, प्रभूतेत्यर्थः। यथा पथिकस्य स्वीया छाया नात्मनो नापि वा परस्य सन्तापं हरति तथा कृपणस्य धनमिति भावः। आतपसन्तप्तस्यापि यथा स्वच्छायया न सुखोपलब्धिस्तथा स्वधनेनापि न तस्य सुखमित्याशयः। छायोपमया छायावत्सर्वदा धनेन साकं सहभावेऽपि तत्कृतः सुखाभावो ध्वन्यते। पथिश्रान्ततया अनातपं वाञ्छन्नपि स्वच्छायया

---

१. **वसइ जहिं चेअ खलो पोसिज्जन्तो सिणेहदाणेहिं।**
**तं चेअ आलअं दीअओ व्व अइरेण मइलेइ।।३५।।**
[वसति यत्रैव खलः पोष्यमाणः स्नेहदानैः।
तमेवालयं दीपक इवाचिरेण मलिनयति।।]

२. **होन्ती वि विप्फलच्चिअ धणरिद्धी होई किविणपुरिसस्स।**
**गिह्माअवसंतत्तस्स णिअअछाहि व्व पहिअस्स।।३६।।**
[भवन्त्यपि निष्फलैव धनऋद्धिर्भवति कृपणपुरुषस्य।
ग्रीष्मातपसन्तप्तस्य निजकच्छायेव पथिकस्य।।]

सौख्यमलब्ध्वैव पथिको यथा यात्रां समापयति, तथा कृपणः आवश्यकत्वेऽपि धनसौख्यमलभमान एव जीवनयात्रां कष्टं समापयतीति पथिकपदेन ध्वन्यते।

स्त्रीणां वामनेत्रस्फुरणं शुभशकुनसूचकमित्याकलय्य स्फुरितवामनेत्रा प्रोषितपतिका प्रियतमागमनपरितोषेण वामनयनमेवमामन्त्रयते–

**स्फुरिते वामाक्षि! त्वयि यद्येष्यति स प्रियोऽद्य तत्सुचिरम्।**
**सम्मील्य दक्षिणं तत्प्रेक्षिष्येऽहं त्वयैवैतम्।।३७।।**[१]

हे वामनेत्र! त्वयि स्फुरिते विदेशगतः स प्रियो यदि अद्यैष्यति तत् तर्हि दक्षिणं तत् (नयनम्) निमील्य तदागमनसम्वाददायकेन त्वयैव एतं प्रियं सुचिरं प्रेक्षिष्ये। अन्यत्र सर्वत्र कृतसमादरमपि दक्षिणं नयनं निमील्य कृतज्ञताबुद्ध्या त्वामेवैकं प्रियतमदर्शनेन कृतार्थयिष्यामीति भावः।

कामुकान्तरसम्भोगभयं प्रदर्श्य कयाचिन्नायिकया सह कञ्चन नायकं संयोजयितुकामा दूती तस्या अनुरागातिशयमाह–

**शुनकप्रचुरे ग्रामे भ्राम्यन्ती तव कृतेन सा बाला।**
**पाशकशारीव गृहं गृहेण खादिष्यते कदाऽप्यङ्ग।।३८।।**[२]

शुनकप्रचुरे सारमेयबहुले ग्रामे तव कृतेन भवद्दर्शनार्थं पाशकशारीव चतुष्पटीगुटिकेव ('चौपड़कीऽसार')। द्यूतगुटिका यथा द्यूतपट्टस्य प्रतिगेहं भ्राम्यति तथा गृहेण गृहं भ्राम्यन्ती सा बाला।'अङ्ग' इति सम्बोधने, हे भद्र! कदापि कस्मिंश्च लोकानामनवधानसमये खादिष्यते शुनकैर्भक्षयिष्यते। ततश्च शुनकप्रायकामुकबहुले ग्रामे भ्राम्यन्ती सैषा नवयौवना यावदन्येन

---

१. **फुरिए वामच्छि तुए जइ एहिइ सो पिओ ज्ज ता सुइरम्।**
**संमीलिअ दाहिणअं तुइ अवि एहं पलोइस्सम्।।३७।।**
[स्फुरिते वामाक्षि त्वयि यद्येष्यति स प्रियोऽद्य तत्सुचिरम्।
सम्मील्य दक्षिणं त्वयैवैतं प्रेक्षिष्ये।।]

२. **सुणअपउरम्मि गामे हिण्डन्ती तुह कएण सा बाला।**
**पासअसारिव्व घरं घरेण कइआ वि खज्जिहिइ।।३८।।**
[शुनकप्रचुरे ग्रामे हिण्डमाना तव कृतेन सा बाला।
पाशकशारीव गृहं गृहेण कदापि खादिष्यते।।]

नोपभुज्यते तावदेव त्वय्यनुरक्ता सेयं द्रुतमनुकम्पनीयेति कामुकं प्रति व्यज्यते। शुनकपदेन 'त्वदग्रे अन्ये कामुकाः शुनका इव दृश्यन्ते' इति दूत्युपदर्शितः कामुके बहुमानातिशयः सूचितः। 'सारी' इति दन्त्यपाठस्थापने 'पाशयुक्ता सारीव सारिकेव खादिष्यते' इत्यर्थोऽपीति केचित्।

यस्मिन्यूनि त्वं बद्धानुरागा स किल चञ्चलप्रणय इति कथयन्तीं सखीं नायिका निजसौभाग्यं साभिमानमाह-

**कुसुमरसमन्यमन्यं मधुकर इच्छति स यत्पातुम्।**

**दोषः स नीरसानां कुसुमानां नैव मधुपस्य।।३९।।**[१]

अन्यम् अन्यं नानाविधं कुसुमरसमित्यर्थः। एकत्र निजेच्छानुरूपस्य मधुनोऽलाभादेव यथा मधुकरो नानाकुसुमेषु भ्रमति, तद्वदयमपि इच्छानुकूलां नायिकामलभमान एव नैकत्र स्थिरतां लभते। मामुपलभ्य यथामनोरथं रसमुपभुञ्जानस्याऽस्य यथा चाञ्चल्यं शाम्यति तादृक्सौभाग्यं मे भवतीभिर्द्रक्ष्यत इति व्यज्यते। 'मधुप' पदेन मधुपानं तस्य स्वभावस्ततश्च नीरसेषु तदलाभे को दोषस्तस्य। एवमेव रसिकस्याऽस्य न दोषः, प्रत्युत रसमार्गमजानतीनां नारीणामेव इति सूच्यते।

मन्द्रस्नेहं नायकं नायिकया सङ्घटयितुं दूती तस्याः प्रणयातिशयमाह-

**रथ्याप्रकीर्णनयनोत्पलोपयन्तं प्रतीक्षते सा त्वाम्।**

**द्वारधृताभ्यां मङ्गलकलाभ्यामिव कुचाभ्यां हि।।४०।।**[२]

स्वागतनिमित्तं रथ्यायां प्रकीर्णे प्रसारिते नयने एवोत्पले यया [अभीष्टस्यागमने चरणन्यासार्थं पथि वरवस्त्रम् ('पगपाँवडा') आस्त्रियते इत्याचारः] पूजार्थं रथ्यायां

---

१. **अण्णण्णं कुसुमरसं जं किर सो महइ महुअरो पाउम्।**
**तं णीरसाणँ दोसो कुसुमाणं णेअ भरस्स।।३९।।**
[अन्यमन्यं कुसुमरसं यत्किल स इच्छति मधुकरः पातुम्।
तन्नीरसानां दोषः कुसुमानां नैव भ्रमरस्य।।]

२. **रत्थापइण्णणअणुप्पला तुमं सा पडिच्छए एन्तम्।**
**दारणिहिएहिँ दोहिँ वि मङ्गलकलसेहिँ व थणेहिं।।४०।।**
[रथ्याप्रकीर्णनयनोत्पला त्वां सा प्रतीक्षते आयान्तम्।
द्वारनिहिताभ्यां द्वाभ्यामपि मङ्गलकलशाभ्यामिव स्तनाभ्याम्।।]

निहितनयनोत्पला वा। द्वारधृताभ्यां मङ्गलकलशाभ्यामिव स्तनाभ्याम् (उपलक्षिता) सती उपनयन्तम् आगच्छन्तं त्वां प्रतीक्षते। आगच्छन्तं प्रतीक्षते इत्युक्त्या 'भवान् मार्गे आगच्छतीव' इति दिवानिशं भवदनुध्यानादुत्कण्ठातिशयस्तस्या दूत्या सूच्यते। अथवा–त्वदाह्वानाय मां सम्प्रेष्य भवदनुरागे सुदृढविश्वासा सा त्वां प्रतीक्षते इति। 'तुमं सा पडिच्छए एन्तम्' इति स्थाने 'तुमं पुत्ति कं पलोएसि' इति क्वचित्पुस्तके पाठो दृश्यते। 'त्वं पुत्रि कं प्रलोकयसि' इति तस्याऽर्थः। तत्रेत्थं व्याख्या– रथ्यावलोकन–द्वारस्थिति–स्तनप्रदर्शनैः कलितशीलखण्डनां कुलवधूं प्रति आह– रत्थेति। अयं भावः– नयनोत्पलाभ्यां कृतरथ्यापूजा द्वारि कलशाविव स्तनौ निधाय यस्य वर्त्म प्रतीक्षसे तं कथय मया तदानयने यत्नो विधेय इति गङ्गाधरटीका।

अगृहीतानुनयां कलहान्तरितां विमुच्य रोषविलक्षतया तिष्ठन्तं नायकं पुनरनुनयाय प्ररोचयितुं दूती तस्याः परितापमाह–

**रुदितं तावद्यावद्रुद्येत क्षीणमङ्गमपि तावत्।**
**निःश्वसितं च वराक्या तावत्प्रभवन्ति यावदुच्छ्वासाः।।४१।।**[१]

वराक्या दयनीया तया यावद्रुद्येत रोदितुं शक्येत तावद् रुदितम्। रुद्येत इति सम्भावनार्थ–कलिङ यतोऽधिकं रोदनं न सम्भवति तावद्रुदितमित्यतिशयो द्योत्यते। अङ्गमपि तावत्क्षीणं यावत्क्षेतुं शक्येत इति पूर्वानुषङ्गेणार्थः। यावन्निःश्वासाः प्रभवन्ति तावन्निःश्वसितम्। त्वदवधी–रणेन रुदन्त्यास्तस्यास्तथा क्षीणमङ्गं यथेदानीं श्वसितुमपि न सामर्थ्यम्। तदिदानीं भवदुपेक्षया म्रियमाणामिमामनुनयेनानुकम्पस्वेति दूत्याभिव्यज्यते।

कस्याञ्चन नायिकायां शृण्वन्त्यामुपरतदयिताविरहविह्वलमात्मानमनुशोचन्कश्चिदात्मनः स्थिरस्नेहतासूचनेन तां प्ररोचयितुमाह–

**समसुखदुःखसमितयो रूढप्रेम्णोस्ततस्तु कालेन।**
**दम्पत्योर्म्रियते यो जीविति सोऽन्यो मृतो भवति।।४२।।**[२]

---

१. **ता रुण्णं जा रुव्वइ ता छीणं जाव छिज्जए अङ्गम्।**
**ता णीससिअँ वराइअ जाव अ सासा पहुप्पन्ति।।४१।।**
[तावद्रुदितं यावद्रुद्यते तावत्क्षीणं यावत्क्षीयतेऽङ्गम्।
तावन्निःश्वसितं वराक्या यावत् [च] श्वासाः प्रभवन्ति।।]

२. **समसोक्खदुक्खपरिवड्ढिआणँ कालेण रूढपेम्माणम्।**
**मिहुणाणँ मरइ जं तं खु जिअइ इअरं मुअं होइ।।४२।।**
[समसौख्यदुःखपरिवर्धितयोः कालेन रूढप्रेम्णोः।
मिथुनयोर्म्रियते यत्तत्खलु जीवति इतरन्मृतं भवति।।]

समाभ्यामुभयोः साधारणाभ्यां सुखदुःखाभ्यां समितयोरेकीभूतयोः। सुखदुःखावस्थायामेकीभूय परिवर्धितयोरिति भावः। ततः क्रमेण गच्छता कालेन दृढप्रणययोर्दम्पत्योर्मध्ये यः (जाया पतिर्वा) म्रियते स जीवति। अन्यस्तादृशवियोगदुःखान्मृतो भवति। विरहदुःखदग्धादीदृशाज्जीवितान्मरणमेव वरमिति भावः। प्राकृते 'मिथुन' शब्दः समुदायवाचकोऽपि लक्षणया प्रत्येकं पत्यौ जायायां च प्रयुक्तः, गङ्गाधरेण तु संस्कृतच्छायायामपि तथैव गृहीतः। मत्कृतच्छायायां तु दम्पतीशब्दप्रयोगान्न तादृशक्लेशः। ईदृशे दृढप्रेमणि मयि चेदनुरज्यसि, तर्हि पश्य कीदृक्त्वामनुवर्ते इति शृण्वन्तीं प्रति द्योत्यते।

वसन्ते प्रियप्रवासश्रवणेन समधिकविह्वलां कुलवतीमाश्वासयन्ती चतुरा काचित्सखी ससान्त्वनमाह–

**पुत्रि प्रस्थानकलशमुखनिहितः प्रथममञ्जरीसहितः।**
**नवचूतपल्लवोऽयं हर्ता गमनं प्रियस्य, मा रोदीः॥४३॥**[१]

आश्वासनीयतया वात्सल्यपात्रतया वा अयि पुत्रितुल्ये! शकुनच्छलेन मया प्रस्थानकलशमुखे स्थापितः। वसन्तकालोद्भिन्नप्रथममञ्जरीसहितः अयम् अभिनवरसालकिसलयः प्रियस्य प्रस्थानं हर्ता हरिष्यति, अत एव मा रोदीरित्यर्थः। वसन्तागमनलक्षणं विलोक्य रसिकः प्रियः स्वयमेव गमनं परिहरिष्यतीति भावः। 'हर्ता' इति अनद्यतनभविष्यत्कालवाचकेन लुटा 'अद्य न चेत्तर्हि श्वः अवश्यं विरहदुःखभावनया वसन्ते प्रस्थानं परिहरिष्यति' इति सूच्यते। मूले 'पत्थाणकलसमुहसंठिओ गमणम्' इति पदद्वयं क्रियायाः सुदूरं स्थितम् मत्कृतच्छायायां तु न तादृशः क्लेशः।

'सखीभिर्दृढमानाय भृशं प्रतिबोधितापि किमिति विनैवानुनयं मानममुचः' इति पृष्टा काचिच्चतुरा सपरिहासमाह–

**कथमपि सखीभिरिह यश्छिद्रं लब्ध्वा प्रवेशितो हृदि मे।**
**दृष्टे प्रेयसि नष्टः स हि मानश्चौरकामीव॥४४॥**[२]

१. **हरिहिइ पिअस्स णवचूअपल्लवो पढममञ्जरिसणाहो।**
**मा रुवसु पुत्ति पत्थाणकलसमुहसंठिओ गमणम्॥४३॥**
[हरिष्यति प्रियस्य गवचूतपल्ल्वः प्रथममञ्जरीसनाथः।
मा रोदीः पुत्रि प्रस्थानकलशमुखसंस्थितो गमनम्॥]

२. **जो कहँ वि मह सहीहिं छिद्दं लहिऊण पेसिओ हिअए।**
**सो माणो चोरिअकामुअ व्व दिट्ठे पिए णट्ठो॥४४॥**
[यः कथमपि मम सखीभिश्छिद्रं लब्ध्वा प्रवेशितो हृदये।
स मानश्चोरकामुक इव दृष्टे प्रिये नष्टः॥]

प्रणयकलहरूपं छिद्रम् अवसरं लब्ध्वा यो मानः सखीभिर्मम हृदये बलात्सञ्चारितः न तु मया स्वीकृत इति भावः। स मानश्चौर्येणागतो जार इव प्रिये दृष्टे सति नष्टः पलायितः। प्रियदर्शनाभावदशायामेव मानो हृदयेऽवकाशं लभते, सति तु प्रियदर्शने स स्वत एवापसरतीति कुत्रानुनयावसरः इति प्रियेऽनुरागातिशयः सूचितः। 'अनुनयार्थमागतं कान्तं दृष्ट्वा कलहान्तरितात्मनोऽनुरागं सूचयन्त्याह' इति गङ्गाधरावतरणम्। अनुनयात्पूर्वमेव मानपलायने कथं कलहान्तरितात्वमिति विचारणीयमेव।

कुसुम्भावचयव्याजेन गतायाः सपत्न्याः शीलखण्डनं जातमिति सूचयितुं काचित्सपत्नी सोत्प्रासमाह–

**आलीभिरुच्यमाना स्तने विलग्नं कुसुम्भपुष्पमिति।**

**नखरपदान्यपनुदती मुग्धवधूर्हस्यते नाम।।४५।।**[१]

कामशास्त्रचतुरेण नायकेन स्तनकुड्मलाग्रे निहितं 'शशप्लुतम्' दृष्ट्वा स्तने कुसुम्भपुष्पं लग्नमिति आलिभिरुच्यमाना मुग्धवधूः नखपदानि अपनुदती अपनयन्ती हस्यते। मुग्धवधूरिति सोल्लुण्ठनमुपालम्भवचनम्। 'ईदृशी सेयं मुग्धा या किल प्रियदत्तं नखक्षतमपि न परिजानाति। अवश्यमियं मुग्धा या किल कुसुम्भवाटिकायां नायकस्य कामशास्त्रप्रयोगपट्टिकाऽभूदिति' सापत्न्यमभिव्यज्यते। 'शशप्लुतं पञ्च नखव्रणानि सान्द्राणि तच्चूचुकचिह्नमाहुः' इति कामशास्त्रम्।

काप्यात्मनः सुदृढानुरागं प्रदर्श्य मन्दस्नेहं नायकमभिमुखीकर्तुं मरणभयमभिव्यञ्जयन्त्याह–

**उन्मथयन्तीवान्तरमिमानि रे तव विरज्यमानस्य।**

**अवधीरणसुविसंष्ठुलविवलन्नयनार्द्धदृष्टानि।।४६।।**[२]

---

१. **सहिआहिँ भण्णमाणा थणए लग्गं कुसुम्भपुप्फं त्ति।**
**मुद्धबहुआ हसिज्जइ पप्फोडन्ती णहवआइं।।४५।।**
[सखीभिर्भण्यमाना स्तने लग्नं कुसुम्भपुष्पमिति।
मुग्धवधूर्हस्यते प्रस्फोटयन्ती नखपदानि।।]

२. **उम्मूलेन्ति व हिअअं इमाइँ रे तुह विरज्जमाणस्स।**
**अवहीरणवसविसंठुलवलन्तणअणद्धदिट्ठाइं।।४६।।**
[उन्मूलयन्तीव हृदयं इमानि रे तव विरज्यमानस्य।
अवधीरणवशविसंष्ठुलवलन्नयनार्धदृष्टानि।।]

रेशब्दः साक्षेपसम्बोधने। सुदृढानुरागायां मयि विरज्यमानस्य तव अवधीरणवशेन सुविसंष्ठुलम् अत्यन्तमबद्धलक्ष्यं यथा भवति तथा विवलत् परावर्तमानं नयनार्धं येषु, एतादृशानि इमानि प्रत्यक्षमनुभूयमानानि दृष्टानि अवलोकनानि मम अन्तरं हृदयमुन्मूलयन्तीव। विरागस्तु तव दूरे, विरागसूचकेनावलोकनेनाप्युन्मूलितहृदयाऽहं मरणोन्मुखी भवामीति गूढं सूचितम्। इमानीत्युक्त्या 'पश्य! प्रत्यक्षमेव मयि त्वं विरागं प्रकाशयसि, अहं च तव तादृशमवलोकन-मात्रमपि न सोढुं क्षमा' इत्यनुरागातिशयोऽभिव्यञ्जितः। 'रे' इति सम्बोधनेन 'त्वत्प्रेमाधीन-जीवितामपि मां न सम्यक्परिचिनोषि' इतीर्ष्याभिव्यज्यते।

बहुवल्लभतया विरलदर्शनं नायकं काचिदात्मनो विरहविकलतामेवमाह–

**न रुदन्ति हन्त न कृशा भवन्ति नोज्झन्ति दीर्घनिःश्वासान्।**
**धन्यास्ताः किल यासां बहुवल्लभ! वल्लभो न त्वम्।।४७।।**[१]

वह्वयो वल्लभा यस्य तत्सम्बोधनम्। यासां किल त्वं वल्लभो न, [केवलं त्वमेवानुरागं प्रकाशयसि न ता इत्यर्थः] रोदनादिदुःखानभिज्ञतया ता एव धन्याः। अस्माभिस्तु त्वयि निहितानुरागाभिः सर्वमिदमनुभूयत इति भावः। तथा च 'बहुवल्लभोऽपि त्वमेव विचारय, बह्वीषु वल्लभासु कास्त्वय्यनुरज्यन्ति? मादृशीषु च तव विरहरौक्ष्यं कियदुचितम्' इति निपुणमभिव्यज्यते। कामबाधया वाच्याऽप्रस्तुतप्रशंसायां माने विरुद्धमित्यत्र चोदाहृता सेयं गाथा सरस्वतीकण्ठाभरणे।

प्रातः शयनागारतो निर्गच्छन्त्याः प्रियायाः परिवृत्त्याऽवलोकनवर्णनेन स्वसौभाग्यं प्रथयन्नायक आह–

**निद्रालसपरिघूर्णत्तिर्यग्वलदर्द्धतारकालोकाः।**
**दुर्विषहाः शशिमुख्या दृष्टिनिपाताः स्मरस्यापि।।४८।।**[२]

---

१. **ण मुअन्ति दीहसासं ण रुअन्ति चिरं ण होन्ति किसिआओ।**
**धण्णाओं ताओं जाणं बहुवल्लह वल्लहो ण तुमम्।।४७।।**
[न मुञ्चन्ति दीर्घश्वासान्न रुदन्ति चिरं न भवन्ति कृशाः।
धन्यास्ता यासां बहुवल्लभ वल्लभो न त्वम्।।]

२. **णिद्दालसपरिघुम्मिरतंसवलन्तद्धतारआलोआ।**
**कामस्स वि दुव्विसहा दिट्ठिणिवाआ ससिमुहीए।।४८।।**
[निद्रालसपरिघूर्णनशीलतिर्यग्वलदर्धतारकालोकाः।
कामस्यापि दुर्विषहा दृष्टिनिपाताः शशिमुख्याः।।]

सुरतजारगान्निद्रालसः, अत एव परिघूर्णन् परिभ्राम्यन्, अनुरागातिशयात्तिर्यग्वलन् अर्द्धतारकाऽऽलोको येषु तादृशाः शशिवदनाया दृष्टिप्रपञ्चाः कामस्यापि दुर्विषहा धैर्यच्युतिं कुर्वन्ति, किं पुनरस्मादृशानां कामातुराणामिति भावः। स्मरः सर्वान्मोहयति परं तद्दृष्टिस्तमपि वशीकरोतीत्यतिशयो व्यज्यते। रात्रिं साधु रममाणे मयि सा विधुवदना प्रातस्तथाविधमनुरागमनोहरं दृष्टिनिपातबहुमानां प्रादादिति स्वसौभाग्यसूचनं चरमं व्यङ्ग्यम्। निद्राव्यभिचारिण उदाहरणे परिगृहीता सेयं गाथा सरस्वतीकण्ठाभरणे भोजेन। (५ परि.)।

चिरप्रोषितनिजप्रियागमने निराशतां प्रदर्शयन्ती काचित् शृण्वन्तं जारं प्रत्यनुरागं हृदयोपालम्भव्याजेनाभिसूचयति–

**प्रेम्णो मया कथञ्चिद्दुर्दोली जीवशेषया गमिता।**
**रे दग्धहृदया विरमेदानीं मा रज्य कुत्रापि।।४९।।**[१]

प्रियविदेशगमने चिरकालद्विरहक्षीणतया जीवितशेषया प्राणमात्रावशेषया मया प्रेम्णो दुर्दोली तस्य (प्रियस्य) मम च प्रणयस्य परस्परानुबन्धेनातिदुर्मोच्यो ग्रन्थिः कथञ्चित् कथं कथमपि [इदानीमागमिष्यतीति प्रत्याशया, सखीजनसान्त्वनेन, आत्मवधपातकभयाद्वा] गमिता निर्वाहिता। पाशानामन्योऽन्यबन्धेन दृढीकृतो दुर्मोच्यो ग्रन्थिर्दुर्दोलीत्युच्यते। 'गमिता' इति भूतकालिक- 'क्तेन' एतावत्कालं प्रेमबन्धो निर्वाह्य समापितः, नाधुना निर्वोढुं शक्यत इति प्रियागमने नैराश्यं सौभाग्यं दृढानुरागिता चात्मनोऽभिव्यज्यते। प्रेमबन्धे तादृशविरहदाहमनुभूयापि पुरन्यत्रानुरत्यसीति सनिर्वेदमाह- 'रे' दग्धहृदय! पुनः पुनर्विरहवेदनाभिमुखगामित्वादभिक्रोशनीय! इदानीं विरम। प्रेमबन्धादुपरमस्व, कुत्रापि मा रज्य।' अननुरक्तस्य निषेधायोगात् शृण्वन्तं जारं प्रत्यनुरागः प्रेमबन्धे मम कीदृग्दार्ढ्यमिति प्ररोचना च सूच्यते।

काञ्चिन्नायिकां प्रति नायकमभिमुखीकर्तुं चतुरा दूती तस्या नखक्षतावलोकनकौतुकमाह–

**आर्याया नवनखपदनिरीक्षणे गुरुकयौवनोत्तुङ्गम्।**
**प्रतिमागतनिजनयनोत्पलार्चितं भवति कुचपृष्ठम्।।५०।।**[२]

---

१. **जीविअसेसाइ मए गमिहा कहँ कहँ वि पेम्मदुद्दोली।**
**एह्निं विरमसु रे डड्ढहिअअ मा रज्जसु कहिं पि।।४९।।**
[जीवितशेषया मया गमिता कथं कथमपि प्रेमदुर्दोली।
इदानीं विरम रे दग्धहृदय मा रज्यस्व कुत्रापि।।]

२. **अज्जाएँ णवणहक्खअणिरीक्खणे गरुअजोव्वणुत्तुङ्गम्।**
**पडिमागअणिअणअणुप्पलच्चिअं होइ थणवट्ठम्।।५०।।**
[आर्याया नवनखक्षतनिरीक्षणे गुरुकयौवनोत्तुङ्गम्।
प्रतिमागतनिजनयनोत्पलार्चितं भवति स्तनपृष्ठम्।।]

गुरुकं च यौवनेनोत्तुङ्ग च आर्याया वरस्त्रियाः स्तनपृष्ठं स्तनोपरितनो भागः। वदन-मण्डलमवनाम्य नवनखक्षतनिरीक्षणसमये। प्रतिमया प्रतिबिम्बरूपेण गते ये नयनोत्पले ताभ्याम-र्चितमिव भवति। पूर्णयौवनामेतादृशीं सुन्दरीमन्यैरुपभुज्यमानां सहस इति कामुकं प्रत्याकूतम्। प्रथमानुरागानन्तरं नखक्षतमित्युदाहृता सेयं गाथा कण्ठाभरणे (५ परि.)।

स्त्रीषु नाधिकमनुरज्यन्तं नायकमभिमुखयितुं विपरीतरतानभिज्ञां नायिकां च तत्र शिक्षयितुं काचिद्दूती भगवतः श्रीकृष्णस्य लक्ष्म्याश्च कामकलासेवनपाटवं नमस्कारव्याजेनाह-

**तं नमत यस्य वक्षसि लक्ष्मीमुखं कौस्तुभेऽभिसङ्क्रान्तम्।**
**मृगहीनं शशिबिम्बं विलोक्यते सूर्यबिम्ब इव।।५१।।**[1]

विपरीतरतावस्थायां यस्य वक्षसि कौस्तुभे मणौ अभिसङ्क्रान्तं प्रतिबिम्बितं लक्ष्मीमुखं सूर्यबिम्बेऽनुसङ्क्रान्तं मृगपरिहीनं निष्कलङ्कं शशिबिम्बमिव दृश्यते, तं नमतेत्यर्थः। भगवन्तौ लक्ष्मीनारायणावपि परस्परप्रेमानुबन्धसुन्दरं बन्धविशेषबन्धुरं च सुरतसुखमुपभुञ्जाते, किमन्ये संसारिण इति नायकौ प्रति स्वाकूतमभिसूच्यते।

प्रियतमानुनयपराङ्मुखीं कलहान्तरितां प्रौढा दूती प्रियानुनयार्थमाह-

**मा प्रतिपक्षसुखं कुरु दयितमनुनय प्रसादलोभयुतम्।**
**अतिनीतगुरुकमानाद्राशिरिव क्षीयसे पुत्रि।।५२।।**[2]

वात्सल्यभाजनत्वेन हे पुत्रि! प्रतिपक्षस्य सपत्नीजनस्य अवसरदानेन सुखं मा कुरु। किं वा युवयोः कलहदर्शनेन ईर्ष्याशीलः प्रतिपक्षजनो मोदते, अत एव तस्य मनोऽनुकूलं मा कुरु। प्रसादलोलुपं प्रियमनुनय। त्वत्कृतानुनयप्रतीक्षी सोऽयं त्वदनुनयेन भृशं वशंवदः स्यादिति भावः। अतिनीतात् अतिगृहीतात् गुरुकान्मानाद् राशिरिव क्षीयसे। अतिभूमिं नीतेन मानेन हृदयदा-हात्साम्प्रतमेव क्षीणा भवसि, भविष्यति तु का कथेति भावः। मूलानुरोधेन भविष्यदर्थ एव

१. **तं णमह जस्स वच्छे लच्छिमुहं कोत्थहम्मि संकन्तम्।**
**दीसइ मअपरिहीणं ससिबिम्बं सूरबिम्ब व्व।।५१।।**
[तं नमत यस्य वक्षसि लक्ष्मीमुखं कौस्तुभे सङ्क्रान्तम्।
दृश्यते मृगपरिहीनं शशिबिम्बं सूर्यबिम्ब इव।।]

२. **मा कुण पडिवक्खसुहं अणुणेहि पिअं पसाअलोहिल्लम्।**
**अइगहिअगरुअमाणेण पुत्ति रासि व्व छिज्झिहिसि।।५२।।**
[मा कुरु प्रतिपक्षसुखमनुनय प्रियं प्रसादलोभयुतम्।
अतिगृहीतगुरुकमानेन पुत्रि राशिरिव क्षीणा भविष्यसि।।]

चेदिष्टस्तर्हि 'क्षेप्यसि हे पुत्रि राशिरिव' पाठः कार्यः। मानपदं श्लिष्टम्। तथा च गृहीतेन अतिगुरुणा मानेन द्रोणाढकादिपरिमाणेन यथा मााषादिराशिः क्षीयते, तोलने सति न्यूनीभवति तथेत्यर्थः। यदि परिमाणं [परिमीयते अनेन, लोहनिर्मितं परिमाणसाधनम् 'बाट'] गुरु (अधिकं महत्) भवेत्तर्हि राशेर्मानं न्यूनं भवत्येवेति भावः। "माषादिराशिरुपरि पाषाणादिना नियन्त्रितो यथा क्षीयते" इति त्वस्फुटार्थेव गङ्गाधरटीका। एष मानी त्वत्कृतानुनयलुब्धो न त्वामनुनेष्यति, तदेतद्विचारयस्वेति तां प्रति सूच्यते।

नायिकाया विरहवेदनामावेद्य तत्सङ्गमाय त्वरयन्ती दूती तत्कान्तमाह–

**तस्या हृदये दुःसहवियोगकरपत्त्रपाट्यमाने हि।**
**प्रतिभाति वाष्पसलिलं कज्जलमलिनं प्रमाणसूत्रमिव।।५३।।**[१]

दुःसहविरहरूपेण करपत्त्रेण क्रकचेन विदार्यमाणे तस्या हृदये कज्जलेन श्यामं प्रवहत् नयनसलिलं विपाटनधारायाः सामञ्जस्यार्थं कृतं प्रमाणसूत्रमिव प्रतिभाति। वृक्षस्कन्धावपाटकाः क्रकचधारासारल्यार्थं कृष्णं मानसूत्रं पूर्वं विन्यस्यन्तीति व्यवहारः। प्राकृते पूर्वनिपातानियमाद्दुःसहपदं विरहकरपत्त्रादुत्तरं प्रयुक्तम्, मत्कृतच्छायायां तु न तथा नियमभङ्गः। विरहिण्याः कञ्जलसमासञ्जनं तु नायकानुरागदार्ढ्येन 'इदानीमायात एव' इति विश्रम्भमूलकमुत्कण्ठातिशयमभिव्यनक्तीति बोद्धव्यम्। तथा च भवदागमनदृढविश्वासेन सज्जा सेयं चिराद्विरहवेदनाव्याकुलिता सम्प्रति सत्वरमेवानुकम्पनीयेति ध्वन्यते।

कस्याश्चन विदग्धनायिकायाः कृते परमोत्कण्ठितं नायकं निषेधमुखेनाधिकं प्ररोचयन्ती वयःप्रौढा दूती सचातुर्यमाह–

**दुर्निक्षेपकमेतत्पुत्रक मा साहसं कार्षीः।**
**अत्र निहितानि मन्ये हृदयानि पुनर्न लभ्यन्ते।।५४।।**[२]

---

१. **विरहकरवत्तदूसहफालिज्जन्तम्मि तीअ हिअअम्मि।**
**अंसू कज्जलमइलं पमाणसुत्तं व्व पडिहाइ।।५३।।**
[विरहकरपत्त्रदुःसहपाट्यमाने तस्या हृदये।
अश्रु कज्जलमलिनं प्रमाणसूत्रमिव प्रतिभाति।।]

२. **दुण्णिक्खेवअमेअं पुत्तअ मा साहसं करिज्जासु।**
**एत्थ णिहिताइँ मण्णे हिअआइँ पुणो ण लब्भन्ति।।५४।।**
[दुर्निक्षेपकमेतत्पुत्रक मा साहसं करिष्यसि।
अत्र निहितानि मन्ये हृदयानि पुनर्न लभ्यन्ते।।]

आत्मनो वचने विश्वासार्थं स्नेहतः सम्बोधयति- हे पुत्रक। तस्याः सविधे हृदयनिक्षेप-रूपमेतत्साहसं मा कार्षीः मा करिष्यसि। प्राकृते माङ्योगे लुङ्लकारनियमाभावेन 'करिज्जासु' प्रयुक्तम्। यतः एतद्दुर्निक्षेपकम्, यो निक्षेपः (न्यासः) पुनर्न लभ्यते, लोके स दुर्निक्षेप इति व्यवह्रियते। अत्र अस्यां रूपचातुर्यादिशालिन्यां नायिकायां न्यासीकृतानि हृदयानि पुनर्न लभ्यन्ते। अन्यासु नायिकासु दत्तं हृदयं कदाचन प्रेमरूपद्रव्यस्य परावर्तने परावर्ततेऽपि। विदग्धायामस्यां तु न तदाशेति वैदग्ध्यं सुदृढप्रेमत्वं च ध्वन्यते। हृदयानीति बहुवचनेन 'परमविदग्धा बहवोऽपि यदि मानसान्यात्मनः समर्पयेयुस्तर्हि तेऽपि वशंवदा भवेयुः, किं पुनस्त्वमेव' इति आकर्षकता-तिशयो ध्वन्यते। साहसपदेन 'एवंविधया दुर्लभया वामया प्रेमकल्पना साहसमात्रम्' इति प्ररोचनातिशयो व्यज्यते। तथाच 'रूपलावण्यवैदग्ध्यादिभिः परममनोहरा सेयमवश्यमनुसर्तव्या इति वाच्येऽपि निषेधे विधिरूपेण व्यज्यते।

रतावसाने मौग्ध्येन शून्यं स्थिताया नायिकायाः सुरतादपरितोषमाकलय्य विलक्षणं नायकं तस्याश्चिररततादोषनिवृत्त्यर्थं दूती बोधयति-

**निर्वृत्तरतापि वधूः सुरतविरामस्थितिं न जानन्ती।**
**अविरतहृदयाऽन्यदपि च किञ्चिदिहास्तीति चिन्तयति।।५५।।**[1]

सञ्जातसुरतसुखापि मुग्धतया सुरतविरतौ या स्थितिस्तां न जानन्ती वधूस्त्वदनुरागवशेन अविरतं अविश्रान्तं हृदयं यस्या ईदृशी सती, इह अस्मिन्समारम्भे अन्यदपि किञ्चिदस्तीति चिन्तयतीत्यर्थः। तथा च सेयं त्वत्प्रेमवशंवदा मौग्ध्यादेव तवान्यविधसुखलालसया निभृतं स्थिता, नाऽपरितोषेणेति भावः। एतेन तवेच्छानुपालनतत्परा मुग्धा त्वत्समागमसुखिता च सेयमिति दूत्या द्योत्यते।।

विटजनं प्रोत्साहयितुं कुट्टनी वेश्याप्रेमप्रशंसामवतारयति-

**नन्दन्तु सुरतसुखरसतृष्णाऽपहराणि सकललोकस्य।**
**वेश्यानां प्रेमाणि हि बहुकैतवमार्गरचितानि।।५६।।**[2]

---

१. **णिव्वुत्तरआ वि वहू सुरअविरामट्ठिइं अआणन्ती।**
**अविरअहिअआ अण्णं पि किं पि अत्थि त्ति चिन्तेइ।।५५।।**
[निर्वृत्तरतापि वधूः सुरतविरामस्थितिमजानती।
अविरतहृदयान्यदपि किमप्यस्तीति चिन्तयति।।]

२. **णन्दन्तु सुरअसुहरसतह्णावहराइँ सअललोअस्स।**
**बहुकैअवमग्गविणिम्मिआइँ वेसाणँ पेम्माइं।।५६।।**
[नन्दन्तु सुरतसुखरसतृष्णापहराणि सकललोकस्य।
बहुकैतवमार्गविनिर्मितानि वेश्यानां प्रेमाणि।।]

नानाविधस्वभावस्य उत्तममध्यमाधमरूपस्य वा सकललोकस्य सुरते यः सुखरसस्तत्र या तृष्णा अपरितृप्तिः तदपहारकाणि। गृहस्त्रीषु यद्विधसुरतवितृष्णा न परिशाम्यति साप्यत्र निवर्तत इति विशेषः सूच्यते। तथा च यथाभिलषितसम्पादकानीति फलितम्। तथा बहुभिः कैतवमार्गैः हसितशुष्करुदितचाटुप्रभृतिभिविनिर्मितानि। प्रेममार्गे एवंविधैर्हावविशेषैः परमरोचकता भवतीति सूचितम्। एवंविधानि वेश्यानां प्रेमाणि नन्दन्तु, लाभसत्कारादिभि रसिकानामभिनन्दनीयानि भवन्त्वित्यर्थः। क्वचित् 'सुरतसरभसतृष्णापहराणि' इति पाठो दृश्यते। तत्र सुरते सरभसानि च तानि तृष्णापहाराणि चेति कर्मधारयः। गृहयोषासु लज्जापारतन्त्र्येण सरभसता दुर्लभेति तत्र विशेषः। कुट्टनीविटादिवक्तृबोद्धव्यवशात्प्रशंसापरापि सेयं सूक्तिः- 'सुरतमुखतृष्णायाः अस्वाभाविकमार्गैर्बलक्षयात् अपहारकाणि, बहुकपटमार्गनिचितत्वाद्वैमुख्य-सम्पादकानि वेश्याप्रेमाणि तादृशानामेव कृते नन्दन्तु' इति तत्त्वतो विचारे निन्दामपि सूचयतीति गाथाग्रन्थितुश्चातुर्यं समीक्षणीयं सहृदयैः।

किमिति कृशासीति नायकेन सहासं पृष्टा विरहोत्कण्ठिता रुचिरं तमुत्तरयति-

**अप्राप्तमन्युदुःखः कृशेति पृच्छसि हसन्किं माम्।**

**प्राप्स्यसि यदि चलचित्तं प्रियं जनं तव तदा वदिष्यामि।।५७।।**[१]

न प्राप्तं मन्युकृतं दुःखं येन तादृशस्त्वम्। प्रियापराधजनितश्चित्तक्षोभो मन्युः। 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः। परदुःखानभिज्ञतया हसन् सन् कृशेति मां किं पृच्छसि। हसन्नित्यनेन 'तव प्रेम वेदनानभिज्ञत्वान्न हार्दिकम्' इति सूच्यते। यदि चलचित्तं प्रियं जनं प्राप्स्यसि तदा तव वदिष्यामि, एतस्योत्तरं दास्यामीत्यर्थः। इदानीं कथितेऽपि न ते प्रत्ययो भविष्यति। तवास्थिरस्नेहत्वादेव ममेयं दशा। तथापि मामेव निरनुक्रोशो हसन्पृच्छसि, अहो ते हार्दिकं प्रेमेति सोपालम्भमभिव्यनक्ति।

चिरादुपगतं जारं तत्प्रेमणि सोढबहुसङ्कटा विरहोत्कण्ठिता सनिर्वेदमाह-

---

१. **अप्पत्तमण्णुदुक्खो किं मं किसिअत्ति पुच्छसि हसन्तो।**

**पावसि जइ चलचित्तं पिअं जणं ता तुह कहिस्सम्।।५७।।**

[अप्राप्तमन्युदुःखः किं मां कृशेति पृच्छसि हसन्।

प्राप्स्यसि यदि चलचित्तं प्रियं जनं तदा तव कथयिष्यामि।।]

**येषां कृतेन रमितोऽस्यपहस्त्य सखीजनस्य गदितानि।**
**एतानि तानि सौख्यानि संशयो यैर्हि जीवस्य।।५८।।**[१]

हस्ताभ्यां निरस्यतीति हस्तयते 'णिङ्ङ्गान्निरसने' इति णिङ्। अपपूर्वात्ततो-ल्यप्। सखीजनजल्पितानि अपहस्त्य बलान्निरस्येत्यर्थः। येषां सङ्गमसौख्यानां कृतेन त्वं रमितोऽसि, एतानि तानि सौख्यानि सन्ति, यैर्हि जीवितस्य संशय उपस्थित इत्यर्थः। त्वं नावधत्से परं त्वद्विरहेण मम जीवितमेव सन्दिग्धं सुखं तु तावद्दूरे। तथा च समागमसुखाशावलम्बनाहं त्वद्विरहं सोढुमक्षमेति स्पष्टमभिव्यज्यते। 'अपहस्तयित्वा' इति गङ्गाधरटीकापाठस्तु च्युतसंस्कृतिः। 'कृते न' इति पदविच्छेदोऽपि कैश्चन कृतः प्रकृतार्थविरोधी। रमणाभावे निर्वेदस्यानुदयात्।

मधूकनिकुञ्जे दत्तसङ्केतं जारं प्रतिवेशिन्यालापव्याजेन दूती संकेतस्थानान्तरं सूचयितु-माह-

**ईर्ष्यालुः पतिरस्या दत्ते निशि नो मधूकमुच्चेतुम्।**
**उच्चिनुते स्वयमेव हि मातर्ऋजुकस्वभावोऽयम्।।५९।।**[२]

रात्रौ तां मधूकमुच्चेतुं न ददाति। हे मातः! सरलस्वभावः अयं स्वयमेव उच्चिनुते इति योजना। गृहे जायमानस्य जारसमागमस्याज्ञानादृजुस्वभावत्वम्। तथा च 'मधूकानिकुञ्जे न गन्तव्यं किन्तु तस्या गृहमेव विश्रब्धं गच्छ' इति जारं प्रति ध्वन्यते। 'स्वयमेव' इत्येवकारेण 'अन्यस्य सहायकस्य सहाऽनुपादानान्मधूकावचयकार्यान्न शीघ्रं गृहे प्रत्यागमनम्।' अत एव विश्रब्धतापि जारं प्रति व्यज्यते।

---

१. **अवहत्थिऊण सहिजम्पिआइँ जाणं कएण रमिओसि।**
**एआइँ ताइँ सोक्खाइँ संसओ जेहिँ जीअस्स।।५८।।**
[अपहस्तयित्वा सखीजल्पितानि येषां कृते न रमितोऽसि।
एतानि तानि सौख्यानि संशयो यैर्जीवस्य।।]

२. **ईसालुओ पई से रत्तिं महुअं ण देइ उच्चेउम्।**
**उच्चेइ अप्पण च्चिअ माए अइउज्जुअसुहाओ।।५९।।**
[ईर्ष्याशीलः पतिस्तस्या रात्रौ मधूकं न ददात्युच्चेतुम्।
उच्चिनोत्यात्मनैव मातरतिऋजुकस्वभावः।।]

अनुनयमगृहीत्वा घृतं च वस्त्राञ्चलं बलादाकृष्य साभिमानं गच्छन्तीं नायिकां नायकश्चाटुपुरस्सरमाह–

**रभसावकृष्टवसनार्द्धान्तप्रसृते! व्रज त्वमामन्दम्।**
**मध्यस्यापि न भङ्गं स्तनभारायासितस्य चिन्तयसि।।६०।।**[१]

रभसात् बलादाकृष्टं वसनार्द्धान्तं वस्त्राञ्चलो यया सा चासौ प्रसृता (प्रस्थिता) चेति कर्मधारयः तत्सम्बुद्धौ। अनुनयाऽस्वीकारान्ममाऽनुरोधभङ्गस्तु तावदास्तां दूरे, परं क्षिप्रगमनेन स्तनभारायासितस्य मध्यस्यापि भङ्गं न विचारयसि। अहो मुग्धतया ते परिणामानभिज्ञतेति भावः। अनेन मध्ययातिलघुत्वं नायिकायाश्च सौकुमार्यमभिव्यज्य चाटुद्वारा मानमोचनचेष्टाचातुर्यं व्यज्यते।।

द्वयोर्युगपदनुरागाङ्कुरणेन मनोभवविजृम्भितं शोभत इति पथिकप्रपापालिकयोर्वृत्तान्तमवतारयति नागरिकः–

**चिरमूर्ध्वाक्षोऽम्बु पिबति यथा यथा हि विरलाङ्गुलिः पथिकः।**
**तनुमपि तनयति धारां तथा तथा सा प्रपापाली।।६१।।**[२]

पिपासापगमेऽपि जलपानव्याजेन प्रपापालिकामुखावलोकनकौतुकादूर्ध्वाक्षः पथिको यथा यथा जलनिर्गलनाय विरलाङ्गुलिः सच्छिद्राङ्गुलिः सन् चिरम् अम्बु जलं पिबति तथा तथा तन्मुखावलोकनार्थं तनुं सूक्ष्मामपि धारां सा प्रपापाली तनयति तनूकरोति। 'तत्करोति तदाचष्टे' इति तनुशब्दाण्णिच्। यथा स मुखावलोकनार्थं जलपानं केवलमभिनयति, न तु

---

१. **अच्छोडिअवत्थद्धन्तपत्थिए मन्थरं तुमं वच्च।**
**चिन्तेसि थणहराआसिअस्स मज्झस्स वि ण भङ्गम्।।६०।।**
[बलादाकृष्टवस्त्रार्धान्तप्रस्थिते मन्थरं त्वं व्रज।
चिन्तयसि स्तनभरायासितस्य मध्यस्यापि न भङ्गम्।।]

२. **उद्धच्छो पिअइ जलं जह जह विरलङ्गुली चिरं पहिओ।**
**पावालिआ वि तह तह धारं तणुइं पि तणुएइ।।६१।।**
[ऊर्ध्वाक्षः पिबति जलं यथा यथा विरलाङ्गुलिश्चिरं पथिकः।
प्रपापालिकापि तथा तथा धारां तनुकामपि तनूकरोति।।]

जलं पिबति, तथा सापि तदनुरोधं मन्वाना तन्मुखावलोकनकौतुकेन तनुमपि धारां पुनस्तनूकरोति न तु यथावज्जलं पाययति। तथा च द्वयोरेव कालविलम्बनेन परस्परमुखावलोकने तात्पर्यमवगम्यते। एवं च द्वयोरेव परस्परमनुरागोऽभिव्यज्यते। यद्यस्मिन्पद्ये विरलाङ्गुलिताधारातनूकरणादिना कालविलम्बो व्यङ्ग्य एवाभविष्यन्न तु 'चिरम्' इति शब्दोपात्तस्तर्हि रुचिरमभविष्यत्। यथा अप्पयदीक्षितदत्तोदाहरणे-

**'यथोर्ध्वाक्षः पिबत्यम्बु पथिको विरलाङ्गुलिः।**

**तथा प्रपापालिकापि धारां वितनुते तनुम्।।'**

यत्तु विरलाङ्गुलिकरणेन, मुखावलोकनमिच्छन्त्याः प्रपापालिकायाः पथिकेनोपकारः कृतः, एवं धारातनूकरणेन मुखावलोकनकौतुकिनःपथिकस्य प्रपापालिकयोपकारः कृत इत्यन्योन्यालङ्कारः साधयितुं वाञ्छितस्तदेतन्न सुन्दरम्। द्वयोरेव व्यापारे अन्यकर्तृकमुखावलोकनसाहाय्यसम्पादनरूपोपकारस्थापनेन शृङ्गारापरिपोषात्। स्वेच्छया मुखावलोकनविलम्बनमेव चमत्कारि, न तु स्वमुखावलोकनार्थमन्यस्य व्यापारे साहाय्यमित्यादि रसगङ्गाधरतोऽवगन्तव्यम्। प्रतीयमानाऽन्योन्यालङ्कारे सेयमुदाहृता गाथा कण्ठाभरणे भोजेन। (३ परि. २०)

श्वश्रूप्रभृतिभिः सुभृशमवेक्षितां कामपि नायिकामुपायान्तरेण प्राप्तुमसमर्थः कोऽपि कामुको भिक्षाटनमिषेण तदीयगृहं प्रविष्टः। सा च तमवलोक्य स्वयमेव भिक्षां दातुं गता। तदनन्तरं 'भिक्षादानाय गता वधूः किमिति चिरयति' इति पृच्छन्तीं श्वश्रूं प्रति सपत्नी भिक्षाचरभिक्षादात्रोरनुरागचेष्टिमेवं वक्ति-

**भिक्षाचरोऽनुपश्यति नाभितटं सापि तस्य मुखचन्द्रम्।**

**तच्चटुकं च करङ्कं द्वावपि काका विलुम्पन्ति।।६२।।**[1]

अन्यजनावगमसाध्वसेन नीचीकृतनयनो भिक्षादातुर्नाभिमण्डलं शिथिलितवसनसन्धिदृश्यमानमनुपश्यति प्रेक्षते। तथा च नायकदर्शनेन वसनश्लथीभावसूचितो भावोदयो व्यज्यते। तस्याः चटुकं भिक्षादानपात्रं दर्वीमिति यावत्। करङ्कं भिक्षाग्रहणपात्रं च। करङ्कपदं वंशादिनिर्मितपात्रविशेषे प्रयुज्यते, यथा 'ताम्बूलकरङ्कवाहिनी' इति बाणः। द्वावपि चटुककरङ्कौ काका विलुम्पन्ति तद्गतमन्नं खादन्तीति भावः। परस्परदर्शनेन द्वयोरपि स्तम्भाख्यसात्त्विकोदयात् काकानां निर्भयत्वमिति भावः।

---

१. **भिच्छाअरो पेच्छइ णाहिमण्डलं सावि तस्स मुहअन्दम्।**
**तं चटुअं अ करङ्कं दोह्न वि काआ विलुम्पन्ति।।६२।।**
[भिक्षाचारः प्रेक्षते नाभिमण्डलं सापि तस्य मुखचन्द्रम्।
तच्चटुकं च करङ्कं द्वयोरपि काका विलुम्पन्ति।।]

पुनः पुनः कृतापराधं प्रियमनुनेतुं विप्रतिपद्यमानां कलहान्तरितां सखी समवबोधयति–

**यं जीव्यते विना नोऽनुनीयते स हि कृतापराधोऽपि।**

**प्राप्तेऽपि नगरदाहे भण कस्य न वल्लभो वह्निः।।६३।।**[1]

नगरदाहेन कृतापराधोऽपि वह्निः कस्य न प्रियः, अपि तु सर्वस्येत्यर्थः। पाकाद्यर्थं तस्य सर्वैरेवोपादानात्। तथा च क्रुधोपशमे सति दयितं विना त्वज्जीवितं संशयापन्नं स्यादिति नायकानुरागोऽभिव्यज्यते।

शृण्वन्तं विदग्धनायकं प्रत्यात्मनो वैदग्ध्यं सूचयितुं काचिद् ग्रामनिन्दाच्छलेनाह–

**कस्य मुखमीक्ष्यतां वा कस्य सुखं कथ्यतां च दुःखं च।**

**केन समं वा पामरबहुले परिहस्यतां हतग्रामे।।६४।।**[2]

पामरभूयिष्ठेऽस्मिन्ग्रामहतके केन सह वा हासपरिहासौ स्यातामित्यर्थः। इङ्गितज्ञाभावेन मुखदर्शनादौ कटाक्षादेर्निष्फलत्वादिति भावः। एवं च विदग्धस्त्वं यदि वैदग्ध्यमङ्गनासु मृगयसे तर्हि तदिहावलोकयेत्यत्माभिमुखीकरणमभिव्यज्यते।

भाविनीं मनोरथसिद्धिमनुचिन्त्यापि पराभिसारसंलग्नमानसाः सरोजदृशः प्रसीदन्तीति साधयितुं कृषकवध्वा रहस्यवेदी कश्चन नागरिकः सहचरमाह–

---

१. **जेण विणा ण जिविज्जइ अणुणिज्जइ सो कआवराहो वि।**
**पत्ते वि णअरदाहे भण कस्स ण वल्लहो अग्गी।।६३।।**
[येन विना न जीव्यतेऽनुनीयते स कृतापराधोऽपि।
प्राप्तेऽपि नगरदाहे भण कस्य न वल्लभोऽग्निः।।]

२. **वक्कं को पुलइज्जउ कस्स कहिज्जउ सुहं व दुक्खं वा।**
**केण समं व हसिज्जउ पामरपउरे हअग्गामे।।६४।।**
[वक्त्रं कः प्रलोक्यतां कस्य कथ्यतां सुख वा दुःखं वा।
केन समं वा हस्यतां पामरप्रचुरे हतग्रामे।।]

**कार्पासवप्रकर्षणदिनमङ्गलमधिहलं प्रकुर्वन्त्याः।**
**हृदि धृतमनोरथायाः करावसत्या हि थरथरायेते।।६५।।**[1]

फलहीवाहणं कार्पासक्षेत्रकर्षणम्। कार्पासक्षेत्रकर्षणस्य शुभदिने यन्मङ्गलम् आलेपना-दिदानं तत् अधिहलं हलोपरि प्रकुर्वत्याः, हृदि धृतमनोरथायाः 'कार्पासगुल्मेषूत्पन्नेषु मयाऽस्मिन् क्षेत्रे रन्तव्यम्' इति मनोरथं धारयन्त्याः असत्याः (कुलटायाः) कृषकवध्वाः हस्तौ थरथरायेते कम्पं प्राप्नुतः। 'पुंनपुंसकयोर्वप्रः केदारः क्षेत्रमस्त्रियाम्।' इत्यमरः। सुरतसुखविचिन्त्या स्मरोदयात्कम्पोदय इति भावः।

मायाविनो युक्त्या निजकार्यं साधयन्तीति सखीं शिक्षयन्तीं सखी धूर्तविचेष्टितमाह-

**बहलतिमिरस्य पथिकच्छेदनशङ्काकुलाभिरसतीभिः।**
**आलेपनेन निभृतं वटस्य सिक्तानि पत्राणि।।६६।।**[2]

घनपल्लवतया बहलतिमिरस्य अन्धकारबहलस्य अत एव सङ्केतस्थानभूतस्य वटस्य पत्राणि। भोजनकार्याद्युपयोगार्थम्, अन्धकारनिरासार्थं वा पथिकाश्छेत्स्यन्तीति शङ्कया आकुलाभिः कुलटाभिः, आलेपनेन पिष्टतण्डुलद्रवेण ('ऐपन' इति व्रजभाषया) निभृतं सिक्तानि। अन्धकारप्रायेऽस्मिन् काकविष्ठाशङ्कया पान्थाः पत्राणि न स्प्रक्ष्यन्तीति भावः।

सङ्केतस्थानभूतस्य करञ्जस्य शाखा दन्तधावनार्थं भञ्जन्तं धार्मिकं सोपालम्भमाह-

**स्वर्गामिनो नदीतटकरञ्जशाखा विभञ्जतोऽपि तव।**
**स्पृशतोऽद्यापि च पादौ तवधार्मिक धरणिमेव कथम्।।६७।।**[3]

---

१. **फलहीवाहणपुण्णाहमङ्गलं लङ्गले कुणन्तीए।**
**असईअ मणोरहगब्भिणीअ हत्था थरहरन्ति।।६५।।**
[कार्पासीक्षेत्रकर्षणपुण्याहमङ्गलं लाङ्गले कुर्वत्याः।
असत्या मनोरथगर्भिण्या हस्तौ थरथरायेते।।]

२. **पहिउल्लूरणसङ्काउलाहिँ असईहिँ बहलतिमिरस्स।**
**आइप्पणेण णिहुअं वडस्स सित्ताइँ पत्ताइं।।६६।।**
[पथिकच्छेदनशङ्काकुलाभिरसतीभिर्बहलतिमिरस्य।
आलेपनेन निभृतं वटस्य सिक्तानि पत्राणि।।]

३. **भञ्जन्तस्स वि तुह सग्गगामिणो णइकरञ्जसाहाओ।**
**पाआ अज्ज वि धम्मिअ तुह कहँ धरणिं विह छिवन्ति।।६७।।**
[भञ्जतोऽपि तव स्वर्गगामिनो नदीकरञ्जशाखाः।
पादावद्यापि धार्मिक तव कथं धरणीमेव स्पृशतः।।]

अग्रपादिकयाऽवस्थितो दूरस्थितशाखाभङ्गं कुर्वन् नूनं क्रान्त्वैव स्वर्गं जिगमिषुरिव त्वं कथमद्यापि स्वर्गं न गतोऽसीति भावः। एवंविधस्य ते स्वर्गप्रयाणमेव साधीय इति शब्दशक्त्युत्थापित आक्रोशोऽपि रसज्ञेभ्यो ध्वन्यत इत्यतिरोहितम्।

शृण्वन्तीं काञ्चिदन्यां नायिकां प्ररोचयितुमात्मनः सुदृढानुरागितां कामुकतां च प्रथयन्नागरिकः सहचरमाह–

**प्रेयस्या मुखदर्शनमतिसुमहार्घं मनोहरं चास्तु।**

**दृष्टा झटिति सुखयते तद्ग्रामक्षेत्रसीमापि।।६८।।**[१]

असहजलभ्यतया अतिसुमहार्घम्, यद्धि चेतः समर्पणेन लभ्यते, अत एव मनोहरं च प्रियाया दर्शनमस्तु तावत्। तत्तु दूरे इति भावः। सा यत्र ग्रामे वसति तस्य ग्रामस्य यत्क्षेत्रं तस्य सीमापि दृष्टा सती झटिति सुखयतीत्यर्थः। तथा चैवंविधसुदृढप्रेमाणं मां चेत्कामयसे तर्हि कथं न धन्यासीति नायिकां प्रत्यभिव्यज्यते।

प्रतिवेशिनो हलिकस्य मृतायामपि जायायां प्रेमातिशयं प्रशंसन्ती काचिन्मन्दस्नेहं नायकमभिमुखीकर्तुं सोत्प्रासमाह–

**निष्कर्मणोऽपि शून्यात्क्षेत्राद्वसतिं न पामरो व्रजति।**

**मृतदयिताशून्यीकृत्गृहदुःखं परिहरन् हन्त।।६९।।**[२]

मृता या दयिता प्रियजाया तया शून्यीकृतं यद् गृहं तत्र यत्प्रियाप्रणयस्मरणजं दुःखं तत्परिहरन् पामरो हलिकः। 'पामर' पदेन पांसुलपादोऽपि प्रियाप्रेमानुवृत्तिमेवं निर्वहति त्वं तु चतुराभिमानीत्याक्षेपः सूच्यते। निष्कर्मणः कार्यरहितात् अत एव जनशून्यात्क्षेत्राद् वसतिं निजावासं गृहमिति यावत्, हन्त न व्रजति। 'वसति' पदेन गृहमेव किं जनावासमेव स न

---

१. **अच्छउ दाव मणहरं पिआइ मुहदंसणं अइमहग्घम्।**
**तग्गामछेत्तसीमा वि झत्ति दिट्ठा सुहावेइ।।६८।।**
[अस्तु तावन्मनोहरं प्रियाया मुखदर्शनमतिमहार्घम्।
तद्ग्रामक्षेत्रसीमापि झटिति दृष्टा सुखयति।।]

२. **णिक्कमाहिँ वि छेत्ताहिँ पामरो णेअ वच्चए वसइं।**
**मुअपिअजाआसुण्णइअगेहदुःक्खं परिहरन्तो।।६९।।**
[निष्कर्मणोऽपि क्षेत्रात्पामरो नैव व्रजति वसतिम्।
मृतप्रियजायाशून्यीकृतगेहदुःखं परिहरन्।।]

वाञ्छति, यतस्तत्र स्त्रीणामवलोकनेन जायायाः स्मरणं तस्य भवतीत्यर्थः सूच्यते। तथा च 'हालिकोऽपि प्रेमानुवृत्तिं निर्वहन् मृतभार्याप्रणयानुरोधेन गृहवासादरण्यनिवासमेव बहु मन्यते, त्वं तु विदग्धाभिमानी जीवितायामपि त्वच्छन्दानुवर्तिन्यां मयि मन्दस्नेहः' इत्युपालम्भोऽभि-व्यज्यते।

प्रोषितपतिकायाः सखी सत्कान्तसमीपगामिनं पथिकमेवं सन्दिशिति-

**झञ्झानिलोत्तृणीकृतगृहविवरप्रपतदम्बुधाराभ्यः।**

**कुड्यलिखितावधिदिनं रक्षत्यार्या करतलाभ्याम्।।७०।।**[१]

आर्या साध्वी एषा झञ्झावातेन उत्तृणीकृतम् (उड्डायितान्याच्छादनतृणानि यस्य) यद् गृहं तस्य विवरात् प्रपतन्त्यो याः सलिलधारास्ताभ्यः। कुड्ये लिखितं यत्प्रवासस्यावधिदिनं तत्करतलाभ्यां रक्षति, करतलाभ्यामाच्छाद्य तं लेखं रक्षतीत्यर्थः। जलधारातोनिजरक्षणापेक्षयाऽपि प्रियलिखितावधिदिनरक्षणं बहुमतमिति प्रेमोत्कर्षो ध्वन्यते। 'आर्या' पदेन तन्नामाङ्कितं छन्दोऽपि सूचितमिति मुद्रालङ्कारोऽपि करतलोपनतः। तथा च 'भवल्लिखितमवधिदिवसं प्रतीक्षमाणैव एषा दीना कथञ्चित्कालं यापयति, तद्दिनातिक्रमे तु सुदुष्करं तस्या जीवनमिति' प्रियं प्रत्यभिव्यज्यते। अत्र 'अम्बुधाराभिः' इति तृतीया, करतलैरिति बहुवचनं च छायायामुपलभ्यमानं प्रमाद एव।

'संकेतस्थाने नायकस्त्वत्प्रतीक्षया कामपीडामनुभवन्नुत्ताम्यति' इति नायिकाम् अन्यान् प्रति च तत्र गमने भयं सूचयन्ती दूती तावदन्यापदेशेनाह-

**पत्राणि राजिकायाश्चर्वन् गोदानदीतीरे।**

**कपिरुत्पतति च कुरुते खोक्खरवं चोदरं च ताडयति।।७१।।**[२]

---

१. **झञ्झावाउत्तिण्णिअघरविवरपलोट्टसलिलधाराहिं।**
**कुड्डुलिहिओहिदिअहं रक्खइ अज्जा करअलेहिं।।७०।।**
[झञ्झावातोत्तृणीकृतगृहविवरप्रपतत्सलिलधाराभिः।
कुड्यलिखितावधिदिवसं रक्षत्यार्या करतलैः।।]

२. **गोलाणइए कच्छे चक्खन्तो राइआइ पत्ताइं।**
**उप्पडइ मक्कडो खोक्खएइ पोट्टं अ पिट्टेइ।।७१।।**
[गोदावरीनद्याः कच्छे चर्वयन्राजिकायाः पत्राणि।
उत्पतति मर्कटः खोक्खशब्दं करोत्युदरं च ताडयति।।]

राजिकायाः 'राई' इति ख्यातायाः। तत्पत्राणां तीव्रतया वदनदाहमनुभवन्वेदनया उत्पतति, तत्प्रतिचिकीर्षन्निव 'खोक्खो' इति शब्दं करोति, अवशश्चाप्रभवन्नुदरं ताडयतीति कपिस्वभावोक्तिः। एतेन च 'भवत्प्रतीक्षया इतस्ततः पर्यटन् मुहुर्मुहुरुद्ग्रीविकया त्वां विलोकयँश्चपलस्वभावोऽसौ विलम्बेन वेदनातिशयमनुभवति' इति कुलटां प्रति, 'क्रोधान्धो मर्कटस्तिष्ठतीत्यनुपसर्पणीयं गोदावरीतटम्' इति चान्यान्प्रत्यभिव्यज्यते।

सुभगायाः पूर्वपत्न्याः अलङ्कारेण तदसमानामन्यां मण्डयितुमिच्छोर्नायकस्यावधीरणार्थं पूर्वपत्न्याः सखी स्वभर्तुः प्रणयौचित्यमेव वर्णयति–

**गृहपतिना मृतसैरिभसुबृहद्घण्टास्त्रजं सुचिरमूढ्वा।**
**वर्गशतान्यपि नीत्वाऽनन्तरमार्यागृहे बद्धा।।७२।।**[१]

गृहपतिना मृतमहिषस्य बृहद्घण्टायुक्तां स्त्रजं (दाम) तत्सदृशस्य इतरमहिषस्य प्रतीक्षया सुचिरमूढ्वा, पुनस्तादृशमहिषप्राप्तिकामनया महिषाणां वर्गशतान्यापि नीत्वा (क्रीत्वा) तत्सदृशाऽपरमहिषाप्राप्तया सा स्त्रक् पर्यन्ते आर्यागृहे चण्डिकायतने बद्धा, न त्वयोग्यस्य अन्यमहिषस्य कण्ठे इत्यर्थः। मम स्वामिना मृतस्य पशोरपि स्नेहमनुरुन्धानेन एवं कृतम्, त्वं तु जीवन्त्यामेव प्रियदयितायां तन्मण्डनेन तदननुरूपामन्यामलङ्कर्तुमिच्छसीत्यहो ते प्रणयवैमुख्यमिति नायकं प्रत्यभिव्यज्यते। 'गृहपति' पदेन गृहाधिष्ठातृत्वेन स्वतन्त्रोऽपि स नैवं कृतवानिति सूच्यते। 'सुचिरमूढ्वा' इत्यने योग्यप्राप्तये तेन बहुतरं प्रतीक्षा कृता, त्वं तु तिष्ठन्त्यामेव तस्यां न तामाद्रियसे इत्युपालम्भो ध्वन्यते। 'डुण्डुभ' शब्दो बृहद्घण्टायां वर्तते।

सपत्नीनां विभवातिशयमालोक्यापमानेन म्लायन्तीं सुभगामभिनववधूं 'विभवादपि प्रियप्रणयो गरीयान्' इति ससान्त्वनं बोध्यन्ती तत्सखी निदर्शयति–

**शिखिपिच्छकावतंसा व्याधवधूर्गर्विता भ्रमति।**
**गजमौक्तिकपरिरचितप्रसाधनानां पुरः सपत्नीनाम्।।७३।।**[२]

---

१. **गहवइणा मुअसेरिहडुण्डुअदामं चिरं वहेऊण।**
**वग्गसआइं णेउण णवरिअ अज्जाघरे बद्धं।।७२।।**
[गृहपतिना मृतसैरिभबृहद्घण्टादाम चिरमूढ्वा।
वर्गशतानि नीत्वानन्तरमार्यागृहे बद्धम्।।]

२. **सिहिपेहुणावअंसा बहुआ वाहस्स गव्विरी भमइ।**
**गअमोत्तिअरइअपसाहणाणँ मज्झे सवत्तीणं।।७३।।**
[शिखिपिच्छवतंसा वधूर्व्याधस्य गर्विता भ्रमति।
गजमौक्तिकरचितप्रसाधनानां मध्ये सपत्नीनाम्।।]

गजमौक्तिकैः परिरचितं सम्यक्तया कलितं प्रसाधनं याभिस्तादृशीनाम्। 'परि'णा स्वसौन्दर्यसमुज्जृम्भणार्थं प्रसाधने यत्नातिशयः स्फोट्यते। एवंविधानां सपत्नीनां पुरः शिखिपिच्छकमवतंसो यस्याः।'पिच्छक' इति लाघवद्योतकेन केन तदवतंसनेप्ययत्नः प्रतीयते। तथा च 'येन महाबलिनः कुञ्जरान् हत्वा तत्कुम्भमुक्ताफलैर्भवत्यः प्रसाधिताः, स एव व्याधकुलपति-र्मत्सम्भोगात्यन्तप्रसङ्गेन सम्प्रति तथा क्षीणो यथा मयूरमात्रमारणे प्रभुः संवृत्तः' इति प्रियतमसौभाग्येन गर्विता तदभिप्रायप्रकटनाय तासां पुरो भ्रमतीति भावः। 'वनवासिन्योऽपि सम्पदपेक्षया सौभाग्यमेव बहु मन्यन्ते, त्वं तु विदग्धापि किमिति नैतत्परीक्षसे' इति नायिकां प्रति ध्वन्यते। 'याति' इत्याद्यनुक्त्वा 'भ्रमति' पदेन 'कस्याश्चन सपत्नया दृष्टौ पिच्छभूषणं पतेन्न वा' इति समन्ततः स्वप्रसाधनप्रदर्शनचेष्टा सूच्यते। ततश्च भ्रमणरूपेणानुभावेन गर्वाख्यसञ्चारिणः परिपोषो ध्वन्यते।

भुजङ्गप्रोत्साहनार्थं कुट्टनी वेशवामानां वक्रिमाणमेवमाह-

**वक्राक्षिवीक्षितानां वक्रगतीनां व वक्रलपितानाम्।**
**वक्रपरिहासिनीनां पुत्रक पुण्यैर्जनः प्रियो भवति।।७४।।**[१]

वक्रता स्वाभाव्यान्मूर्तद्रव्यधर्मोऽपि लक्षणया वीक्षणादिविशेषे सङ्क्राम्यति। तथा च क्रमेण अक्षिवीक्षित-गत्यादीनां कटाक्षनिरीक्षणम्, विभ्रमभङ्गुरा गतिः, सव्यङ्ग्यवचनप्रयोगः, साकूतं हसितं चार्थः। जनः एवंविधानां वेशवधूनां प्रियः पुण्यैर्भवति। पुत्रकेत्यनेन विश्रम्भात्त्वयि सत्यमाख्यायत इति सूचितम्। तथा च 'त्वं धन्योऽसि, येनैवंविधशीलापि मद्दुहिता त्वयि नितान्तमनुरक्ता' इति भुजङ्गं प्रत्यभिव्यज्यते। 'त्वमपि दानबहुमानादिभिरेनां निरन्तरं सन्तोषय' इति कुट्टन्यास्तं प्रति चरमं व्यङ्ग्यम्।

गोदावरीतीस्थिलताभवने कृतसङ्केता काचित्-एकान्तस्थानमिति ध्यानाद्यवस्थित्या तत्र विघ्नकारिणं धार्मिकं भीषयितुमाह-

**भ्रम धार्मिक विश्रब्धः शुनकोऽद्य स मारितस्तेन।**
**गोदातटविकटोद्भटनिकुञ्जवासेन दृप्तसिंहेन।।७५।।**[२]

---

१. **वङ्कच्छिपेच्छिरीणं वङ्कुल्लविरीणँ वङ्कभमिरीणम्।**
**वङ्कहसिरीणँ पुत्तअ पुण्णेहिँ जणो पिओ होइ।।७४।।**
[वक्राक्षिप्रेक्षणशीलानां वक्रोल्लपनशीलानां वक्रभ्रमणशीलानाम्।
वक्रहासशीलानां पुत्रक पुण्यैर्जनः प्रियो भवति।।]

२. **भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ तेण।**
**गोलाअडविअडकुडङ्गवासिणा दरिअसीहेण।।७५।।**
[भ्रम धार्मिक विस्रब्धः स शुनकोऽद्य मारितस्तेन।
गोदातटविकटकुञ्जवासिना दृप्तसिंहेन।।]

धार्मिकेति साक्षेपबोधनम्, परस्य कार्यविघातकस्त्वमवश्यं धार्मिकोऽसीति। त्वं विश्रब्धः सन् भ्रम, नगररथ्यास्विति भावः। स शुनकः श्वा स इत्यनेन यद्भयात्त्वया ग्रामे भ्रमणं त्यक्तमासीदिति सूच्यते। गोदातटस्य विकटश्च उद्भटश्च यो निकुञ्जः स वासस्थानं यस्य तेन। उच्चावचभूमितयाऽपरिज्ञेयविन्यास इत्युद्भट उक्तः। अत एव च सिंहाधिष्ठिततया विकटः सः। दृप्तसिंहेन अद्य मारितः। नगरमागत्य हननात्सिंहस्य दृप्तता ज्ञायते। अद्येत्यनेन मया न श्रुतमिति विश्वासे न स्थातव्यम्, यतोऽद्यतनी घटनेति पूर्वं श्रवणासम्भवादिति निश्चयः सूच्यते। 'लब्धभोजनो नाऽद्य मनुष्यमाक्रमिष्यति' इत्यपि न विश्वसनीयम्, यतः स न केवलं भोजनापेक्ष एवाक्रामति, अपि तु स बलगर्विष्ठ इति दृप्तपदेनाभिव्यज्यते। तथा च गोदावरीतीरे सिंहसद्भावेन तत्र गमननिषेधः, रथ्यासु च श्वनिवृत्त्या भ्रमणमभिव्यज्यते। यत्तु शुष्कतार्किकेण महिमभट्टेन 'यद् यद् भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकम्' इति व्याप्त्या गोदावरीतीरे सिंहोपलब्धिरूपभयकारणसत्त्वात् 'गोदावरीतीरं भीरुभ्रमणायोग्यं सिंहवत्त्वात्' इत्यनुमानेनैव गोदातटे निषेधो ज्ञायते न व्यञ्जनयेति साधितुम्। तत्तु ध्वनिस्थापकैः श्रीमम्मटभट्टैः 'भीरुरपि गुरोः प्रभोर्वा आज्ञया निधिलाभाद्याशया च भयकारणसत्त्वेऽपि परिभ्रमतीति व्यतिरेकव्याप्तिरेव न सिध्यति। किं च सिंहवत्त्वमिति हेतुर्विरुद्धोऽपि। यतो हि वास्तवे वीरः स्पर्शदोषात् शुनो बिभ्यदपि सिंहान्न बिभेतीति सिंहवत्त्वं हेतुरभ्रमणमनुमापयितुमप्रभुः, इत्यादिसमुचिताभिरुपपत्तिभिः सुदूरं तिरस्कृतमित्यादि काव्यप्रकाशादिभ्योऽवगन्तव्यम्।

कयाचन नायिकाया सह दाक्षिण्येन निजाभिलाषं पूरयन्तं कमपि युवानं परिहासकुशलः कश्चिदाह–

**कर्णावतंससरसिजरजसा वातेरितेन भृतमक्षि।**
**फूत्कुर्वन्नवितृष्णं चुम्बन्नयि कोऽसि देवानाम्।।७६।।**[१]

पवनाक्षिप्तेन कर्णावतंसीकृतस्य उत्पलस्य रजसा भृतं नायिकाया नयनं तद्रजोपनयनार्थं फूत्कुर्वन्। नेत्रपीडने सति मुखोष्मणा तत्सुखयन्तीति प्रसिद्धिः। फूत्कारमिषेण च अपूरिताभिलाषं चुम्बन् अयि! त्वं देवानां मध्ये कतमोऽसि। नायिकावलोकनकौतुकेन अनिमिषनयनत्वात्त्वं देवानां मध्ये कोऽप्यसीति भावः। देवानां कोऽसीत्यनेन प्रसिद्धदेवा अप्येवंविधपुण्यफलभाजो न सन्ति किं पुनर्मनुष्या इति नायिकायाः सौन्दर्यातिशयः समभिव्यज्यते।

---

१. **वाएरिएण भरिअं अच्छिं कणऊरउप्पलरएण।**
**फुक्कन्तो अविइह्णं चुम्बन्तो को सि देवाणम्।।७६।।**
[वातेरितेन भृतमक्षि कर्णपूरोत्पलरजसा।
फूत्कुर्वन्नवितृष्णं चुम्बन्कोऽसि देवानाम्।।]

दयितविरहेण भृशं पीडिता प्रोषितभर्तृका दयितसमागमाय त्वरयन्ती सखीमाह–

**नान्यकुसुमानि सखि मां व्यथयन्ति तथा यथा कदम्बानि।**
**वहति हि कामो नूनं गुटिकाधनुरेषु दिवसेषु।।७७।।**[1]

एषु प्रावृड्दिवसेषु। गुटिकाक्षेपकं धनुर्गुटिकाधनुः ('गुलेल' इति भाषायाम्)। गुटिकाकारेण कदम्बकुसुमेन कलितास्त्रः कुसुमशरो मां व्यथयतीति भावः। तथा च वसन्ते यथा कथञ्चिद् गमितेऽपि सम्प्रति वर्षाकालं यापयितुं नाहं प्रभवामीति विरहे वसन्तापेक्षयापि वर्षाकालस्य दुःसहता ध्वन्यते।

काचिद्दूती विरहोत्कण्ठितायाः सुविषया विरहवेदनाया मरणभयं प्रदर्श्य तदुपगमार्थं त्वरयन्ती तत्कान्तमाह–

**नाहं दूती न त्वं प्रिय इति किं वात्र कार्यमस्माकम्।**
**सा म्रियते ह्ययशस्तव तेन च धर्माक्षरं भणामोऽङ्ग।।७८।।**[2]

त्वदाह्वाने प्रयत्नभावान्नाहं दूती। तस्यामेवंनिरनुक्रोशत्वान्न त्वं प्रियः। यदि त्वं प्रियोऽभविष्यस्तर्हि विरहेण पीड्यमानामिमां नैवमुपैक्षिष्यथा इति भावः। अत एवात्रास्माकं को वा व्यापारः। तन्मरणं तव चापयशः प्रसमीक्ष्य। अङ्गेति सम्बोधने, हे विवेचकेति भावः। धर्माक्षरं धर्म्यां वार्तां वयं ब्रूमः। यद्यपि तस्यां तव नानुरागस्तथापि स्त्रीवधपातकभयेनैव साऽनुकम्पनीयेति भावः। प्रियानयनार्थमागताया दूत्या निजदूतीत्वं प्रिये प्रियत्वं च निषिध्यन्त्या निषेधाभासभूतेनानेनाक्षेपालङ्कारेण ''त्वदुपेक्षया म्रियमाणा सा यावन्नोपैति पञ्चत्वं तावदेव सा सत्वरमुपगन्तव्या'' इति दयितं प्रत्यभिव्यज्यते। 'निषेधाभासमाक्षेपं बुधाः केचन मन्वते'

---

१. **सहि दुम्मेन्ति कलम्बाइं जह मं तह ण सेसकुसुमाइं।**
**णूणं इमेसु दिअहेसु वहइ गुडिआधणुं कामो।।७७।।**
[सखि व्यथयन्ति कदम्बानि यथा मां तथा न शेषकुसुमानि।
नूनमेषु दिवसेषु वहति गुटिकाधनुः कामः।।]

२. **णाहं दूई ण तुमं पिओ त्ति को अह्म एत्थ वावारो।**
**सा मरइ तुज्झ अअसो तेण अ धम्मक्खरं भणिमो।।७८।।**
[नाहं दूती न त्वं प्रिय इति कोऽस्माकमत्र व्यापारः।
सा म्रियते तवायशस्तेन च धर्माक्षरं भणामः।।]

इत्यप्पयदीक्षितः। गङ्गाधरटीकावतरणे तु 'विरहोत्कण्ठितायाः सखी तत्कान्तमाह' इति सख्युक्तिः स्वीकृता। तारतम्यं सहृदयैरवगन्तव्यम्।

चरणयोः प्रणिपातेनानुनयन्तं कान्तमन्यस्त्रीसङ्गचिह्नं नैपुण्येन प्रदर्शयन्ती खण्डिता सोपालम्भमाह–

**तस्या मुखात्तव मुखं मुखाच्च तव मम ततश्चरणे।**
**हस्ताहस्तिकयाऽगादतिदुष्करकारकस्तिलकः।।७९।।**[१]

रात्रौ रमितायास्तस्या युवत्या मुखात् ललाटिकाख्योपगूहनविशेषसमये तव मुखम्, ततस्तव मुखाच्च प्रणिपातसमये मम चरणे, एवमेकस्मात्स्थानादन्यत्र सङ्क्रामकत्वादतिदुष्कर-कार्यकारकस्तिलकः। हस्ताहस्तिकया हस्तपरम्परया अगात् गतः। उपालम्भविधया तिलकं निन्दन्त्या खण्डितयाऽन्यरतिलम्पटस्य नायकस्य निन्दा सूचिता। तथा च 'निन्दाया निन्दया व्यक्तिर्व्याजनिन्देति गीयते' इति लक्षितो व्याजनिन्दालङ्कारः। अनेन च 'युवत्यन्तरसङ्गचिह्नं प्रत्यक्षं ललाटे वहन्नपि मुधैवानुनयेन व्यामोहयसि' इत्युपालम्भः प्रियं प्रत्यभिव्यज्यते। ललाटिकालक्षणं तु– 'मुखे मुखमासज्ज्याक्षिणी अक्ष्णोर्ललाटेन ललाटमाहन्यात्सा ललाटिका' इति वात्स्यायनः।

कस्याश्चन हलिकपुत्रेऽनुरागं सूचयन्नागरिकः सहचरमाह–

**श्यामाया मुखशोभा श्यामति नयनार्द्धसमवलोकिन्याः।**
**जम्बूदलकृतकर्णवतंसे हलिकात्मजे भ्रमति।।८०।।**[२]

अहं सङ्केतस्थले स्थित्वाऽऽगत इति सूचकेन जम्बूकिसलयेन कृतः कर्णावतंसो येन एतादृशे हलिकपुत्रे भ्रमति सति। हलिकेति प्राकृतानुरोधात्। जनेभ्योऽनुरागगोपनार्थमर्द्धाक्षि-विलोकनशीलायाः श्यामलाया उत्तमस्त्रियाः षोडशवार्षिक्या वा मुखशोभा सङ्केतकालविलङ्घन-वैलक्ष्येण विरहखेदेन च श्यामति अश्यामापि श्यामायते। आचारार्थे क्विप्। जम्बूदलकृतकर्णपूरं

---

१. **तीअ मुहाहिं तुह मुहँ तुज्झ मुहाओ अ मज्झ चलणम्मि।**
**हत्थाहत्थीअ गओ अइदुक्करआरओ तिलओ।।७९।।**
[तस्या मुखात्तव मुखं तव मुखाच्च मम चरणे।
हस्ताहस्तिकया गतोऽतिदुष्करकारकस्तिलकः।।]

२. **सामाइ सामलिज्जइ अद्धच्छिपलोइरीअ मुहसोहा।**
**जम्बूदलकअकण्णावअंसभरिए हलिअपुत्ते।।८०।।**
[श्यामायाः श्यामलायतेऽर्धाक्षिप्रलोकनशीलाया मुखशोभा।
जम्बूदलकृतकर्णावतंसभ्रमणशीले हलिकपुत्रे।।]

हलिकसुतं वीक्ष्य स्वयमेव मलिना भवतीत्यर्थः। तथा च मुखमालिन्यरूपेणानुभावेन नायिकानिष्ठो विप्रलम्भः पोष्यत इति ध्वनित्वं प्रस्फुटम्। विप्रलम्भापोषकतयाऽधिकशोभाकारकं वाच्यं मुखमालिन्यं प्रति सङ्केतभङ्गरूपस्य व्यङ्ग्यस्य गुणीभूततया तु मध्यमकाव्यत्वम्। एतद्गाथानुहारी रुद्रटालङ्कारे उदाहृतं पद्यम्- 'ग्रामतरुणं तरुण्या नव.।'

अनुनयाऽग्रहणवैलक्ष्येण कोपकलुषं नायकमनुनेतुं कलहान्तरिता दूतीमाह-

**दूति त्वमेव कुशला वक्तुं जानासि कर्कशमृदूनि।**
**तं किल तथा करिष्यसि कण्डूयितपाण्डुरं यथा न स्यात्।।८१।।**[1]

कण्डूयनेन कण्डूर्यथा शाम्यति पाण्डूरतया चर्मवैरूप्यं च न भवति तथा किल तं नायकं करिष्यसि। कटुतर्जनैर्यथा नोद्विजते मृदुभाषितैर्यथा मां भजते त्वमपि तथा वक्ष्यसीत्या-कूतम्।

बहुवल्लभं नायकं प्रति चतुरा दूती कस्याश्चिदनुरागमेवं सूचयति।

**महिलासहस्रभरिते तव हृदये सुभग सा किलाऽमान्ती।**
**अनुदिनमनन्यकर्मा ह्यङ्ग तन्वपि तनूकुरुते।।८२।।**[2]

महिलासहस्रेण भरिते व्याप्ते तव हृदये अमान्ती अवकाशमलभमाना सा मत्सखी। महिलासहस्रेत्यनेन 'त्वमेव तास्वनुरज्यसि न ता धूर्ताः' इति सूच्यत। अनुदिनं समग्रमपि दिवसं व्याप्य अनन्यकर्मा त्यक्तान्यकार्या सती। तनु स्वतः कृशमपि अङ्गं तनूकुरुते हृदयेऽ-वकाशलाभार्थं कृशमपि कृशतरं करोतीत्यर्थः। अनन्यकर्मेत्यनेन त्वत्समागमोपायचिन्तां विहाय नान्यत्किमपि कार्यमिति गृहकार्यविरत्या अनुरागातिशयो द्योत्यते। महिलासहस्रभरितमत एव अमान्ती, एवं तव हृदये अमान्ती अत एव अङ्ग तनूकरोतीत्युभयत्र काव्यलिङ्गालङ्कारः।

---

१. **दूइ तुमं विअ कुसला कक्खडमउआइँ जाणसे वोल्लुम्।**
**कण्डूइअमण्डुरँ जह ण होइ तह तं करेज्जासु।।८१।।**
[दूति त्वमेव कुशला कर्कशमृदुकानि जानासि वक्तुम्।
कण्डूयितपाण्डुरं यथा न भवति तथा तं करिष्यसि।।]

२. **महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती।**
**दिअहं अणण्णकम्मा अङ्गं तणुअं पि तणुएइ।।८२।।**
[महिलासहस्रभृते तव हृदये सुभग सा अमान्ती।
दिवसमनन्यकर्मा अङ्ग तनुकमपि तनूकरोति।।]

आभ्यां काव्यलिङ्गाभ्यां 'कृशस्य कृशतरकरणेऽपि तव हृदये सा स्थानं नासादयति' इति विशेषेक्तिर्व्यज्यते। ततश्चात्र अर्थशक्तिसमुत्थेनालङ्कारेणालङ्कारध्वनिः।

कश्चित्कस्याञ्चिन्निजानुरागं सहचरं प्रत्येवमाह–

**क्षणमपि नापसरति पुनरनुदिवसवितीर्णगुरुकसन्तापा।**
**श्यामा मम हृदयादयि नूनं प्रच्छन्नपापशङ्केव।।८३।।**[१]

प्रतिदिनं वितीर्णो गुरुकः सन्तापो विरहजनिता पीडा ययेति श्यामापक्षे। पापशङ्कापक्षे सन्तापस्तत्पापानुस्मरणजन्यः। यथा प्रच्छन्नपापस्य लोकेषु प्रकाशनशङ्का सुभृशमनुतापयन्त्यपि न क्षणमात्रमप्यपयाति, तथा श्यामा सा उत्तमस्त्री मम हृदयान्नापैतीत्यर्थः। प्रच्छन्नपापशङ्केत्यनेन पापशङ्का विश्वस्तायापि यथा न प्रकाश्यते तथा दृढप्रणया कुलरमणी सापि न कस्मैचिदपि प्रकाशनीया, तथापि तुभ्यं मया साऽऽवेदितेति सुहृदं प्रति विश्वासातिशयः सूचितः।

कृतापराधतायामपि परिरम्भणादिद्वाराऽनुनयन्तं कान्तं प्रणयरोषकलुषा काचित्प्रगल्भा वक्रया सरण्या समभिधत्ते–

**ऋजुकाऽहं नहि कुपितास्म्युपगूह नु किं मुधा प्रसादयसि।**
**मानेनापि न कार्यं तव मन्युविधायकेन मम।।८४।।**[२]

हे ऋजुक! कृतापराधोऽपि सारल्येन प्रसन्नामिव मां मन्वानः परिरम्भणकपटेन मां प्रसादयितुमिच्छसीत्यहो ते सारल्यमिति विपरीतलक्षणया सूचितम्। अहं कुपिता नास्मि, त्वं निरपराध इति नाहं कुपिता। उपगूह परिरभस्व। प्रसादनकपटेन मुधा किम्? तव मन्युसमुत्पादकेन मम मानेनापि न कार्यम्। त्वं यथेच्छमन्यमहिलासु रमसे, मम तु तव वेदनादायकतया मानं कर्तुमपि नाधिकार इति सर्वं वक्रया सरण्या समुदीर्यते। मानापनोदन–

---

१. **खणमेत्तं पि ण फिट्टइ अणुदिअहविइण्णगरुअसंतावा।**
**पच्छण्णपावसङ्के व्व सामली मज्झ हिअआओ।।८३।।**
[क्षणमात्रमपि नापयात्यनुदिवसवितीर्णगुरुकसन्तापा।
प्रच्छन्नपापशङ्केव श्यामला मम हृदयात्।।]

२. **अज्जअ णाहं कुविआ अवऊहसु किं सुहा पसाएसि।**
**तुह मण्णुसमुप्पाअऍण मज्झ माणेण वि ण कज्जम्।।८४।।**
[अज्ञ नाहं कुपिता उपगूह किं मुधा प्रसादयसि।
तव मन्युसमुत्पादकेन मम मानेनापि न कार्यम्।।]

मन्तैरैवालिङ्गनमङ्गीकुर्वन् कपटेन मां प्रतारयितुमिच्छसि। अहं चैतदभिज्ञेति निपुणमभिव्यज्यते। गङ्गाधरभट्टस्तु 'सुशीला नायिका कृतापराधमनुनयन्तं कान्तं सप्रणयरोषमाह' इत्यवतारयन् 'अनभिज्ञे स्वामिनि मानो निष्फलः' इति समर्थयते। तत्र सुशीलाया अपि स्वामिन्यनभिज्ञ-तासमर्थनं रोषोक्तौ 'उपगूह' इति कथनं च कियत्स्वारस्यावहमिति विचारणीयमेव। अत एव 'व्यलीकविप्रिययोगादिभिरालिङ्गनादीनां निराकरणमयथावत्प्रदानत्वात्, विसंवादनमेवोच्यते' इति प्रसङ्गे उदाहृता सेयं सरस्तीकण्ठाभरणे (५ परि.)।

विरहिण्याः सखी सङ्गमाय त्वरामुत्पादयितुं तत्कान्तमाह-

**वाष्पसलिलपरिषिक्तस्तप्तो दीर्घोष्णबहुलनिःश्वासैः।**
**श्यामशबलमिव तस्या अधरः साधयति तव विरहे।।८५।।**[१]

दीर्घैरुष्णैः प्रचुरैश्च निःश्वासैस्तापितः, पुनर्नयनसलिलेन सम्यक् स्नानः अधरः। श्यामशबलं व्रतविशेषं साधयतीव। तत्र हि पूर्वमग्नौ प्रविश्य जले प्रविश्यते। तथा च 'तदधर-व्रतस्य पारणं त्वदधरसमागमरूपं त्वदायत्तमेव' इति नायकं प्रत्यभिव्यज्यते।

कोपमनुमाय नायकसमागमे सङ्कुचन्तीं नायिकां 'गम्भीराशयानां नान्तरे कोपः, केवल-मुपरित एव तेषां तथा प्रतीतिः' इति तदनुनयाय प्रेरयन्ती दूती जनसमक्षं शरत्सरोवर्णन-व्याजेनाह-

**शरदि हि महाह्रदानामन्तः शिशिराणि बहिरथोष्णानि।**
**जातानि कुपितसज्जनहृदयसदृक्षाणि सलिलानि।।८६।।**[२]

नातिप्रखरतापायां शरदि गभीरावकाशतया अन्तःशीतलानि, अथ बहिः (उपरितः) उष्णानि। कापि मध्याह्नाभिसारिका 'सङ्केतितह्रदतीरलतागृहमहं गता, त्वं तु न गतः' इति जारं प्रति प्रतिपादयन्ती सत्यपि हृदयस्य स्थिरस्नेहतां सज्जनहृदयप्रशंसाछलेनाह' इति गङ्गाधराव-तरणम्।

प्रथमाभिसारे साध्वसमुत्पद्यत एवेति सान्त्वयन्ती दूती कस्याश्चिन्मौग्ध्यवर्णनप्रस्तावे प्रथमाभिसारिकामाह-

---

१. **दीहुह्णपउरणीसासपआविओँ वाहसलिलपरिसित्तो।**
**साहेइ सामसवलं व तीएँ अहरो तुह विओए।।८५।।**
[दीर्घोष्णप्रचुरनिःश्वासप्रतप्तो वाष्पसलिलपरिसिक्तः।
साधयति श्यामशबलमिव तस्या अधरस्तव वियोगे।।]

२. **सरए महद्धदाणं अन्ते सिसिराइँ वाहिरुह्णाइं।**
**जाआइँ कुविअसज्जणहिअअसरिच्छाइँ सलिलाइं।।८६।।**
[शरदि महाह्रदानामन्तः शिशिराणि बहिरुष्णानि।
जातानि कुपितसज्जनहृदयसदृक्षाणि सलिलानि।।]

**किं वाऽऽगतस्य किं नु करिष्ये कथं नु भवितेदम्।**
**प्रथमोद्गतनवसाहसकारिण्यास्थरथरायते हृदयम्।।८७।।**[१]

आगतस्य नायकस्य किं वक्ष्यामि किं नु करिष्यामि। इदमभिसरणसाहसं कथं नु भविता, कथं सिद्धिमागन्ता नु? साहससिद्धौ संशयेन मौग्ध्यमभिद्योत्यते। प्रथमोद्भूतमत एव नवं साहसं कर्तुमग्रेसर्याः हृदयं थरथरायते साहसोत्कण्ठाभ्यां कम्पत इत्यर्थः। 'थरथरायते' इत्यनुकरणनिष्पन्नो नामधातुः।

अनुनयाऽग्रहणवैलक्ष्येण कलहान्तरिताया नायिकाया ग्रहिलत्वदोषं साधयन्तं कान्तं प्रति तत्परिहरन्ती दूती तस्या वैदग्ध्यमेवमाह-

**नुपुरकोटिविलग्नं चिकुरं दयितस्य पादपतितस्य।**
**हृदयं प्रोषितमानं कथयत्युन्मोचयन्त्येव।।८८।।**[२]

मानापनोदनार्थं पादपतितस्य दयितस्य परमप्रेष्ठस्य न तु स्वामिसामान्यस्य, तवेत्यर्थः। नुपुरशिखरावसक्तं केशं 'तदवकर्षणेन तव पीडा मा भूत्' इति नुपुरतोऽवमोचयन्त्येव सा हृदयं प्रोषितमानं (गतमानम्) कथयति। निरवधिप्रणया हि विदग्धमानिन्यो मुखतो मुखरागतो वा न प्रसादमाविष्कुर्वन्ति, किं तु चेष्टाविशेषेण तं निभृतमभिव्यञ्जन्ति। तथा च तया तव पीडानुमानेन निजनुपुरविलग्नं त्वत्केशमवमोचयन्त्या चातुर्येण प्रसन्नमात्महृदयमाविष्कृतमेव। परं ततः परावर्तमानेन, न त्वयानुरूपमाचरितम्। अतः परमविदग्धायास्तत्या न ग्रहिलत्वदोषः, किन्तु तवैव तावदवैदग्ध्यमिति चतुरं सूच्यते।

कस्याश्चिदनुरागातिशयं प्रतिपाद्य तत्सङ्गमाय नायकमुत्कण्ठयन्ती दूती आह-

---

१. **आअस्स किं णु करिहिम्मि किँ बोलिस्सं कहं णु होइहि [ इमि ]ति**
**पढमुग्गअसाहसआरिआइ हिअअं थरहरेइ।।८७।।**
[आगतस्य किं नु करिष्यामि किं वक्ष्यामि कथं नु भविष्यति [इदम्] इति।
प्रथमोद्गतसाहसकारिकाया हृदयं थरथरायते।।]

२. **णेउरकोडिविलग्गं चिउरं दइअस्स पाअपडिअस्स।**
**हिअअं पउत्थमाणं उम्मोअन्ती व्विअ कहेइ।।८८।**
[नुपुरकोटिविलग्नं चिकुरं दयितस्य पादपतितस्य।
हृदयं प्रोषितमानमुन्मोचयन्त्येव कथयति।।]

**श्यामा सुकुमारा तव तथा खरेणाङ्गरागशेषेण।**
**सा किल गोदाकूले स्नाता जम्बूकषायेण।।८९।।**[1]

कृतगात्रोद्वर्तनस्य तवाङ्गरागशेषेण तीक्ष्णतया मलापनोदकेन जम्बूकषायेण, सुकुमारतया तथातीक्ष्णजम्बूकषायानर्हापि स वरवर्णिनी स्नातेत्याशयाः। किलेत्यरुचौ। तथा च मलिनतीक्ष्णता-दृशकषायमनभिरोचयन्त्यपि त्वत्प्रेम्णा स्नातेति द्योत्यते। एवं च भवदङ्गसङ्गाभिलाषेण तवाङ्गरागोच्छिष्टग्रहणं स्नानच्छद्मना कुर्वन्त्या तया स्पष्टं त्वय्यनुरागः प्रकाशितः, तथा चैतादृशीं किमिति नोपसेवसे इति ध्वनिः।

निजदयितस्य सकलग्रामजनगोष्ठीमण्डनतां सूचयन्ती प्रोषितभर्तृका सखीजनमाह-

**प्रोषित एषोऽद्यैव च शून्यान्यद्यैव जातानि।**
**रथ्यामुखसुरमन्दिरचत्वरकाणि च मनांसि चास्माकम्।।९०।।**[2]

अद्यैव गतः अद्यैव च रथ्यामुख-देवमन्दिर-प्राङ्गणानि अस्माकं मनांसि च शून्यानि जातानि। 'अङ्गणं चत्वराजिरे' इत्यमरः।

गुणवतोऽवरायाः कस्याश्चन गणिकाया भुजङ्गगणेन क्रियमाणां प्रशंसामसहमाना गुणगर्विता गणिका काचिदाह-

**वर्णानप्यविदन्तो लोका लोकैर्हि गौरवाभ्यधिकाः।**
**स्कन्धैर्निरक्षरा अपि सुवर्णकारकतुला इवोह्यन्ते।।९१।।**[3]

---

१. **तुज्झङ्गराअसेसेण सामली तह खरेण सोमारा।**
**सा किर गोलाऊले ह्णाआ जम्बूकसाएण।८९।।**
[तवाङ्गरागशेषेण श्यामला तथा खरेण सुकुमारा।
सा किल गोदाकूले स्नाता जम्बूकषायेण।।]

२. **अज्ज व्वेअ पउत्थो अज्ज व्विअ सुण्णआइँ जाआइं।**
**रत्थामुहदेउलचत्तराइँ अह्मं च हिअआइं।।९०।।**
[अद्यैव प्रोषितोऽद्यैव शून्यकानि जातानि।
रथ्यामुखदेवकुलचत्वराण्यस्माकं च हृदयानि।।]

३. **चिरडिं पि अआणन्तो लोआ लोएहिँ गोरवब्भहिआ।**
**सोणारतुले व्व णिरक्खरा वि खन्धेहिँ उब्भन्ति।।९१।।**
[सिद्धिरस्तु इत्यादि]वर्णावलीमप्यजानन्तो लोका लोकैर्गौरवाभ्यधिकाः।
सुवर्णकारतुला इव निरक्षरा अपि स्कन्धैरुह्यन्ते।।]

जनैः, 'ॐ नमः सिद्धम् सिद्धिरस्तु' इत्यारभ्यां वर्णमालामप्यजानन्तो लोकाः गौरवाभ्याधिकाः परमादरणीया इतिकृत्वा निरक्षरा अपि निर्विद्या अपि सुवर्णकारतुला इव स्कन्धैरुह्यन्ते सादरं नीयन्त इत्यर्थः। सुवर्णकारतुला अक्षतोऽधिकमतोलयन्त्यः [निरक्षं रान्तीति निरक्षराः] अपि गौरवाभ्याधिकाः दत्ताधिकगौरवाः स्कन्धैर्नीयन्ते सावधानं नीयन्ते। षोडशमाषकैरक्ष इत्यमरः। वैद्यकमते तु तोलकद्वयमितः। एवं च ममाग्रतः प्रशस्यमानासौ वर्णपट्टिकामजानतीवेति सुभृशमात्मनो गुणगर्वोऽभिव्यज्यते। अत्र तुलापक्षे अक्षरेखारहिता इति गङ्गाधरभट्टः। अङ्करेखारहिता इति कुलबालदेवः। चिरडीति वर्णमालापर्यायो देशीशब्दः।

कलहान्तरितायाः स्मरणेन समयविनोदमिच्छन् तत्कान्तः सहचरमाह–

**अन्तस्ताम्रकपोलां स्फुरदोष्ठीं स्खलितवर्णविन्यासाम्।**
**मा मा स्पृशेति सक्रुधमपसर्पन्तीं प्रियां स्मरामोऽङ्ग।।९२।।**[1]

कोपवशतया स्खलिताक्षरं जल्पन्तीम्। अङ्गेति सुहृत्सम्बोधने।

गोदावरीमुत्तरतोरनयोरस्ति परस्परं प्रीतिरित्यात्मनोऽभिज्ञतां सूचयन्नागरिकः सहचरमाह–

**आत्मा तदुरसि मुक्तो गोदाविषमावतारकैतवतः।**
**अनुकम्पानिर्दोषं तेनापि च सा प्रगाढमुपगूढा।।९३।।**[2]

गोदावर्या अवतरणस्थलमिदमुच्चावचमिति च्छलेन नायकोरसि, अनया स्वशरीरमवरोपितम्। 'भीरु! मा भूत्पतनभयम्' इति सान्त्वनदयां प्रदर्शयतेव तेन। गाढालिङ्गने भयनिवारणानुकम्पा मिष इति भावः। प्रतीयमानोऽयमन्योऽन्यालङ्कार इत्यत्र प्रत्यभियोगतः प्रेमपरीक्षायां चोदाहृता सरस्वतीकण्ठाभरणे।

नायिकानुरागप्रदर्शनेन मन्दानुरागं नायकमनुकूलयितुं दूती आह–

---

१. **आअम्बन्तकवोलं खलिअक्खरजम्पिरिं फुरन्तोट्ठिम्।**
**मा छिवसु त्ति सरोसं समोसरन्तिं पिअं भरिमो।।९२।।**
[आताम्रान्तःकपोलां स्खलिताक्षरजल्पनशीलां स्फुरदोष्ठीम्।
मा स्पृशेति सरोषं समपसर्पन्तीं प्रियां स्मरामः।।]

२. **गोलाविसमोआरच्छेलण अप्पा उरम्मि से मुक्को।**
**अणुअम्पाणिद्दोसं तेण वि सा आढमुवऊढा।।९३।।**
[गोदावरीविषमावतारच्छलेनात्मा उरसि तस्य मुक्तः।
अनुकम्पानिर्दोषं तेनापि सा गाढमुपगूढा।।]

**भवता स्वहस्तदत्तां निर्गन्धामपि हि सुभग साऽद्यापि।**
**अवमालिकां विसर्जितनगरीगृहदेवतेव बत वहति।।९४।।**[१]

हे सुभग! गन्धरहितामपि अवमोचनयोग्यां मलिकां त्वया स्वोपभोगमङ्गलीकृता प्रेमप्रसादबुद्ध्या स्वहस्तेन दत्तेति भवत्करस्पर्शबहुमानात् उद्वासितनगरगृहदेवतेव सा अद्यापि धारयति। उद्वासिता हि नगरदेवता पूर्वं जनैरारोपितां कालानन्तरं शुष्कामेव कुसुममालिकां धारयति, तथा त्वद्विरहवेदनयाऽन्यविधमण्डनमनभिरोचयन्ती दिव्यसौन्दर्यसुभगा सापि विसर्जनयोग्यामपि निर्गन्धमालिकां त्वत्करसम्बन्धसौख्यप्रदेति सबहुमानं धत्त इत्याशयः। तथा च त्वयि निर्मायमनुरज्यन्तीं त्वद्विरहवेदनाया निर्जीवालेख्यपुत्रिकामिव शोच्यां दशामुपगतां तां किमिति नानुकम्पस इति बतशब्दसहकारेण सूचितम्। सुभगेत्यनेन एतादृशं तव सौभाग्यमतस्तन्मा वृथा कृथा इत्यपि ध्वन्यते। नगरगृहदेवतेत्यत्र नगरपदेन सर्वेऽपि नागरिकास्तां सौन्दर्यादिबहुमान-कारणात्स्पृहयन्ति, अतस्तेषामवमर्शनं यावन्न स्यात्तावदेनामनुसरेत्यपि गूढमभिव्यज्यते। धारणेन पर्युषितत्वेन च अवमर्दिता माला अवमालिका।

'केलिभवनमागते तस्मिन्मानवलम्ब्य निजसमीहितं साधय' इति कस्मैचित् कार्याय मानग्रहणं शिक्षयन्तीं बन्धुपुरन्ध्रीं काचिदाह–

**तस्मिंश्च्युतविनये किल रोषितुमिह शक्यते न केल्यापि।**
**एभिर्याचितकैरिव मातर्विवशासहैरङ्गैः।।९५।।**[२]

च्युतविनये रतिलौल्यलङ्घितलज्जतया विनयमवधीरयमाणे तस्मिन् (प्रेयसी) याचितकैरिव अभ्यर्थ्यानीतैरिव अवशैरत एव अनभिरुचितविषये ममाधीनतामसहमानैरेभिरङ्गैर्हे मातः! केल्यापि परिहासेनापि किल रोषः कर्तुं न शक्यते। मातरित्यनेन अप्रतारणीयतया निजवचसि प्रत्येयता सूच्यते। एवं च परिहास एव यदाहं मानमवलम्बितुमवशा तर्हि प्रणयचर्यातः सुतरां विप्रकृष्टं स्वार्थमुद्दिश्य कथङ्कारं कोपः कर्तुं शक्य इति 'अपि' शब्दस्वारस्येन प्रियप्रणय-पारवश्यमभिव्यज्यते। याचितकं वस्तु यथा न स्वीयं भवति नापि यथेच्छं बलकार्येषूपयुज्यते,

---

१. **सा तुइ सहत्थदिण्णं अज्ज वि रे सुहअ गन्धरहिअं पि।**
**उव्वसिअणअरघरदेवदे व्व ओमालिअं वहइ।।९४।।**
[सा त्वया स्वहस्तदत्तामद्यापि रे सुभग गन्धरहितामपि।
उद्वसितनगरगृहदेवतेव अवमालिकां वहति।।]

२. **केलीअ वि रूसेउं तीरए तम्मि चुक्कविणअम्मि।**
**जाइअएहिँ व माए इमेहिँ अवसेहिँ अङ्गेहिं।।९५।।**
[केल्यापि रुषितुं न शक्यते तस्मिंश्च्युतविनये।
याचितकैरिव मातरेभिरवशैरङ्गैः।।]

तथैव ममाङ्गान्यपि तस्मिन्समये प्रियतमसाद्भवन्तीति बलतः कार्यक्षमाणि नेति पारतन्त्र्यातिशयो ध्वन्यते। गङ्गाधरटीकावतरणे 'अपि' पदस्वरस्यं न भाति।

उत्फुल्लिकया क्रीडन्तीं बालिकामपवारयन्तीं सखीं कामुकजनमनः समाकार्षणार्थमात्मनो विपरीतरतपाटवमभिसूचयितुं काचिदाह–

**उत्फुल्लिकाया खेलतु मैनां वारयत जायतां क्षामा।**
**मा जघनभारगुर्वी दधती पुरुषायितं क्लमिष्यति यत्।।९६।।**[१]

उत्तानं शयानस्य पादयोरुपविष्टानां बालानां मुहुः पतनोत्पतनरूपा क्रीडा उत्फुल्लिकेत्याख्यायते। एनां मा निवारयत। क्षामा श्रमेण जितश्वासा कृशमध्या च भवत्वित्यर्थः। यतः पुरुषायितं कुर्वति यौवने जघनभारगौरवेण न क्लान्तिमेष्यतीति भावः। अत्र सखीमुद्दिश्य सपरिहासमुक्तावपि शिशुविषये एवमुदीरणया रसाभासता कष्टं समाधेया।

शीलखण्डनविलक्षां काञ्चन कुलवधूं तच्चित्तसमाधानेन समाश्वासयन्ती तत्पक्षपातिनी काचिद्विरोधिजनवचननिरोधार्थमाह–

**प्रचुरयुवासौ ग्रामो मधुमासो यौवनं पतिः स्थविरः।**
**जीर्णसुरा स्वाधीना ह्यसती मा भवतु किं म्रियताम्।।९७।।**[२]

प्रचुरा युवानो यस्मिन्। प्रचुरतया कस्मात्कस्माद्वा शीलरक्षणेऽवधीयेतेति सूच्यते। जीर्णसुरा प्राचीनमद्यम्। पुरातनं हि तत्प्रीतिकरं भूरिमादकं च। स्वाधीनेत्यनेन यथेच्छपानसौकर्यान्मनसो भूयस्तरामवशता द्योत्यते। एकैकमपि शीलखण्डसमर्थेष्वेषु सर्वेष्वेकत्र मिलितेषु चरित्रभ्रंशोऽस्या नापराधायेत्यर्थः। अत्र 'असती मा भवतु' इति निषेधस्य प्रचुरयुवा ग्राम इत्यादि कारणमुक्त्वा 'ततः किं म्रियताम्' इत्यनेन रोधः क्रियते। सातूयप्रश्नार्थकस्य किमः काक्वा निषेधार्थत्वं गम्यत इति सोऽयं युक्त्या रोध इति सरस्वतीकण्ठाभरणानुसारं निषेधे प्रतिकूलो रोधालङ्कारः। 'प्रतिकूलोऽनुकूलश्च विधौ रोधोऽभिधीयते। निषेधेऽप्युक्तियुक्तिभ्यां द्विप्रकारः स कथ्यते।।' तथा चैवंविधघटनापारवश्येन खण्डितशीलासौ न वचनीयभाजनमिति विरोधिनि–रोधोऽभिव्यज्यते।

---

१. **उप्फुल्लिआइ खेल्लउ मा णं वारेहि होउ परिऊढा।**
**मा जहणभारगरुई पुरिसाअन्ती किलिम्मिहिइ।।९६।।**
[उत्फुल्लिकया खेलतु मैनां वारयत भवतु परिक्षामा।
मा जघनभारगुर्वी पुरुषायितं कुर्वती क्लमिष्यति।।]

२. **पउरजुवाणो गामो महुमासो जोअणं पई ठेरो।**
**जुण्णसुरा साहीणा असई मा होउ किं मरउ।।९७।।**
[प्रचुरयुवा ग्रामो मधुमासो यौवनं पतिः स्थविरः।
जीर्णसुरा स्वाधीना असती मा भवतु किं म्रियताम्।।]

प्रणयिनो मनोहरणार्थं नायिकायामासक्तिदृढीकरणार्थं च दूती तस्या अनुरागातिशयमाह–

**बहुशोऽपि कथ्यमानं तव वचनं मम हि हस्तसन्दिष्टम्।**
**न श्रुतमिति जल्पन्ती पुनरुक्तशतं करोत्यार्या।।९८।।**[१]

मम हस्तेन सन्दिष्टं मद्द्वारा तवाभिमुखमुपस्थापितम्। वाचा सन्दिष्टमपि शैलीसिद्धत्वेन हस्तसन्दिष्टमित्युक्तम्। वारंवारं कथनेन पुनरुक्तशतं यद्यपि दूत्येव करोति, परं निभृततरमुक्ता एवंविधवर्णसङ्घटना कदाचन न श्रुता स्यादिति श्रवणसौकर्यार्थं प्रत्येककथनावृत्तौ शब्दशय्या-परिवर्तनेन दूतीवचने न पौनरुक्त्यं किन्तु 'न श्रुतं न श्रुतं' इति तमेव शब्दं वारं वारमावर्तयन्ती नायिकैव पुनरुक्तशतं करोतीति गाथाकर्तुराकूतम्। बहुश इत्यत्र शस्प्रत्ययेन बहुवारं बहुप्रकारं चेति कथ्यमाने पौनः पुन्येन प्रकारभेदेन चातिशयो द्योत्यते। तथा च सम्यक्श्रवणनिमित्तं मुहुः शब्दशैलीपरिवर्तनेऽपि मुहुर्मुहुराकर्णनानुरागादश्रवणसूचितोऽ–नुरागातिशयो ध्वन्यते। एवमनुरक्ता सेयं भवतापि सबहुमानमनुवर्तनीयेति दूत्याः प्रेमदृढीकरणे तात्पर्यम्। 'मुद्रा' हस्तगता।

कस्याञ्चन कुलजायामनुरक्तं नायकं प्रति तस्या अनुरागं चान्यजनदृष्टिभ्यस्तद्गोपन-दाक्षिण्यं च दूती नायकप्रोत्साहनार्थमाह–

**त्वं किल तया प्रकटितानुरागसद्भावनिर्भरं हि यथा।**
**संवरणव्यापृतया तथैव दृष्टो जनोऽन्योऽपि।।९९।।**[२]

प्रकटितः स्नेहसद्भावो यस्मिन्कर्मणि यथा भवति तथा। प्रकटितस्नेहसद्भावं च निर्भरं चेति ततः कर्मधारयः। अथवा प्रकटितस्नेहं च सद्भावनिर्भरं चेति। संवरणे परस्परप्रेमबन्धस्य गोपने व्यापृतया प्रवृत्तया। प्रकटितप्रेम सरसं निभृतनिर्भरतया यथा त्वं दृष्टः, 'एतस्मिन्नियमनुरक्ता' इति कश्चिन्मा ज्ञासीदिति गोपनव्यापृतया तया अन्योऽपि जनस्तथैव दृष्ट इत्याशयाः। लोकेभ्यो गोपनार्थं सर्वत्र समानदृष्टिनिपातेन नायके प्रेमदृष्टिस्तिरोहितेति सरस्वतीकण्ठाभरणकारमतेन पिहिताख्यो मीलितभेदः। 'वस्त्वन्तरतिरस्कारो वस्तुना मीलितं स्मृतम्। पिहितापिहिते चैव तद्गुणातद्गुणौ च तत्।।' अनेन च मीलितेन त्वयि प्रेमविवशापि सा कियच्चतुरेति नायिका-

---

१. **बहुसो वि कहिज्जन्तं तुह वअण मज्झ हत्थसंदिट्ठम्।**
**ण सुअं त्ति जम्पमाणा पुणरुत्तसअं कुणइ अज्जा।।९८।।**
[बहुशोऽपि कथ्यमानं तव वचनं मम हस्तसन्दिष्टम्।
न श्रुतमिति जल्पन्ती पुररुक्तशतं करोत्यार्या।।]

२. **पाअडिअणेहसब्भावणिब्भरं तीअ जह तुमं दिट्ठो।।**
**संवरणवावडाए अण्णो वि जणो तह व्वेअ।।९९।।**
[प्रकटिस्नेहसद्भावनिर्भरं तया यथा त्वं दृष्टः।
संवरणव्यापृतया अन्योऽपि जनस्तथैव।।]

दाक्षिण्यमुन्मीलितम्। तथा चैवंविधा निर्भरप्रेमसरसहृदयापि परमकुशला सेयं त्वय्यनुरक्तेति पश्य ते सौभाग्यमिति दूतीकर्तव्यान्तर्भूतं नायकमनोहरणमभिव्यज्यते।

प्रसवानन्तरं रमणेन रमणे न परिगृहीता काचित्पुत्रस्य दन्तोद्गमकथनव्याजेन सम्प्रति सम्भोगसुखानुभवयोग्यतामात्मन एवमाह–

**गृह्णीत पश्यतेदं प्रहसितवदना हि पत्युरर्पयति।**
**जाया तनयनवोद्गतदन्तयुगेनाङ्कितं बदरम्।।१००।।**[1]

स्मेरमुखी जाया 'इदं गृह्णीत प्रलोकयत' इति सुतस्य प्रथमोद्भिन्नदन्तयुगलेनाङ्कितं बदरं प्रियस्यार्पयतीत्यर्थः। तनयदन्तदष्टस्य बदरस्य दूरतो दर्शनसम्भवेऽपि 'गृह्णीत पश्यतेति प्रियकरसमर्पणेन तद्दन्तक्षतस्य सूक्ष्मदृष्टिदानदर्शनीयतया दन्तयोरङ्कुरावस्था ध्वन्यते। अत एवोत्तरार्द्धे नवोद्गतदन्तयुगेनेत्युच्यते। एवं च तनयस्य दन्तजननेन प्रसवोत्तरजायमानसरससम्भोग–सुखानुभवसमयोऽयं प्राप्त इति प्रियनिवेदनौत्कण्ठ्यं प्रहसितवदनेति पदेनाभिव्यज्यते। सरस्वतीकण्ठाभरणकारस्तु– ''निजस्योपभोगयोग्यताप्रकाशनाभिप्रायेण सहासं बदरदर्शन–प्रवृत्तिः।'' इति स्वकल्पितं भावाख्यमलङ्कारमाह– 'अभिप्रायनुकूल्येन प्रवृत्तिर्भाव उच्यते।' कण्ठाभरणानुमतः 'विकसितनयना' इति पाठः। प्रशस्तश्चायमत्रत्यपाठापेक्षया। गाथायामस्यां गङ्गाधरस्तु 'स्वयमेव क्षतं सम्पाद्य पुत्रेण क्षतमिति मिथ्यैव दर्शयतीति प्रहसितवदनेति पदेन ध्वन्यते' इत्याह। इदं कुलवध्वाः सम्भोगभूरितृष्णासूचकतया न तथा रसानुकूलं स्यादिति मे मतिः। कण्ठाभरणपाठस्तु तनयदन्तजननरूपप्रियदर्शनेन विकसितनयनतया निष्कपटमात्मगत एव हर्षातिशयः प्रतीयत इति सोऽस्मदनुकूलः।

**रसिकजनहृदयदयिते कविवत्सलकुशलसुकविपरिरचिते।**
**सप्तशतके समाप्तं गाथाशतकं द्वितीयमिदम्।।१०१।।**[2]

कविवत्सलो हालः कुशलः प्रमुखो येषु तैः सुकविभिर्निर्मिते।

---

१. **गेह्णह पलोअह इमं पहसिअवअणा पइस्स अप्पेइ।**
**जाआ सुअपढमुब्भिण्णदन्तजुअलङ्किअं बोरम्।।१००।।**
[गृह्णीत प्रालोकयतेदं प्रहसितवदना पत्युरर्पयति।
जाया सुतप्रथामोद्भिन्नदन्तयुगलाङ्कितं बदरम्।।]

२. **रसिअजणहिअअदइए कइवच्छलपमुहसुकइणिम्मइए।**
**सत्तसअम्मि समत्तं वीअं गाहासअं एअम्।।१०१।।**
[रसिकजनहृदयदयिते कविवत्सलप्रमुखसुकविनिर्मिते।
सप्तशतके समाप्तं द्वितीयं गाथाशतकमेतत्।।]

-----

# तृतीयशतकम्

'न मेऽन्यत्रासक्तिः, जनस्तु मिथ्या तथोद्घोषयति' इत्यनुनयन्तं कान्तं मानिनी सप्रणय-रोषमाह-

**आस्तां वा जनवादस्तव प्रमाणं स्वयं हृदयमेव।**
**मन्दस्नेहोऽसि तथा न यथोपालम्भयोग्योऽसि।।१।।**[1]

अयं साम्प्रतमस्यां मन्दस्नेह इति जनप्रवादः अस्तु तावत्, दूरे तिष्ठत्वित्यर्थः। तव हृदयमेव स्वयं प्रमाणम्। मां प्रति शिथिलानुरागतायामहं तवैव हृदयं प्रमाणीकरोमीति भावः। तथा मन्दस्नेहोऽसि यथा उपालम्भप्रदानस्यापि योग्यो नासीत्यर्थः। स्नेहशालिन एव प्रणयिने दीयते किलोपालम्भः। स एव च दाक्षिण्येन तमुपालम्भं सहते। त्वं तूदासीन इति नोपालम्भ-मर्हसीत्याशयः। उपालम्भं प्रददत्या अपि नोपालम्भयोग्य इति विशेषार्थसूचको निषेधोऽत्राभा-सरूपस्तथा च अलङ्कारसर्वस्वकारादीनां मतेनाक्षेपालङ्कारः, 'निषेधाभासमाक्षेपं बुधाः केचन मन्वते।' अनेन च मुहुर्मुहुस्तव व्यलीकशतैरनुमितादनुरागशैथिल्यात्तवोपालम्भप्रदानमपि नाभिरोचयामि, किं पुनरन्यत्, इति मानिन्याः प्रणयकोपविजृम्भितमभिव्यज्यते।

शृण्वन्तं कञ्चन युवानं वशीकर्तुं यथाभिमतवल्लभाऽप्राप्तिं सूचयन्ती काचित्कुलटा हृदयोपालम्भच्छलेनाह-

**आत्मच्छन्दभ्रामक दुर्लभलम्भं जनं मृगयमाण।**
**आकाशपथैर्भ्राम्यत्कदापि हृदयायि भंक्ष्यसे तात।।२।।**[2]

---

१. **अच्छउ ता जणवाओ हिअअं विअ अत्तणो तुह पमाणम्।**
**तह तं सि मन्दणेहो जह ण उवालम्भजोग्गो सि।।१।।**
[अस्तु तावज्जनवादो हृदयमेवात्मनस्तव प्रमाणम्।
तथा त्वमसि मन्दस्नेहो यथा नेपालम्भयोग्योऽसि।।]

२. **अप्पच्छन्दपहाविर दुल्लहलम्भं जणं वि मग्गन्त।**
**आआसपहेहिँ भमन्त हिअअ कइआवि भज्जिहिसि।।२।।**
[आत्मच्छन्दप्रधावनशील दुर्लभलम्भं जनमपि मृगयमाण।
आकाशपथैर्भ्रमद्धृदय कदापि भंक्ष्यसे।।]

आत्मच्छन्देन धावनशील! अनेन हि हृदयस्य स्वच्छाचारितां सूचयन्त्यपि सङ्गमादिषु गुरुजनपारतन्त्र्यं व्यनक्ति। दुर्लभो लम्भः प्राप्तिर्यस्य, सहजमेवाऽसुलभमित्यर्थः, ईदृशं जनं मृगयमाण अन्विष्यत्! अनेनात्मन उच्चाभिलाषितया रसिकाभिलषणीयत्वमभिव्यज्यते। निरवलम्बनमार्गैर्भ्राम्यत्! रहस्यमेदभिया दूतीप्रमुखोपायपरिहारात् निरवलम्बनं भ्राम्यदित्यर्थः। नाहं दूत्यादिष्वपि रहस्यं विश्वसिमि। स्वयं हृदयमेव मे तावदान्तरसन्तर्पकं कान्तमन्वेक्ष्यतीति आत्मनो रहस्यगोपनयोग्यतया विश्वसनीयतां सूचयति। अयि हृदय! एवं कुर्वत् कदापि भग्निसे भग्नं भविष्यसि। कदापीत्यपिशब्दः सम्भावनायाम्। सहसैवासुलभं कान्तजनमनन्यसाहाय्येनान्विच्छत् पदप्राप्तिदुःखेन निरस्तं भविष्यसीति भूयसी सम्भावनास्तीति भावः। तथा चैवंविधविश्वसनीयामुन्नतहृदयां मां चेदनुरज्यसि तर्हि ते परं सौभाग्यमिति शृण्वन्तं प्रति ध्वन्यते। ''दुर्लभलम्भं दुर्लभस्य सुरतसुखस्य लम्भः प्राप्तिर्यस्मात्तम्। आकाशपथैर्भ्रमत्, दूतीप्रमुखोपायादिति भावः। कदापीत्यपिशब्दः सम्भावनायाम्। कः खलु सुभगो यस्तव भ्रमणं शमयिष्यतीति भावः'' इति गङ्गाधरटीका।

गुणगर्विता काचिद् स्वल्पेनैव कालेन विरज्यन्तं विटं निन्दन्ती दूतीमाह–

**सुगुणा एव नु लघवोऽथवा गुणज्ञोस्ति न स लोकः।**
**अथवास्मि निर्गुणा वा बहुगुणवान्वा जनस्तस्य।।३।।**[१]

अपि किं गुणा अनादरणीया जाता इत्यर्थः। अथवाहं निर्गुणास्मि, यथा मेऽभिमानस्तथा मयि गुणा एव न सन्तीत्यर्थः। तस्य भुजङ्गस्य जनो गृहिणीरूपो बहुगुणवान् मदपेक्षयाऽधिकगुणशाली वा, येन न तस्य मयि बहुमानः। एवंविधगुणशालिनीं मां नाद्रियत इति दयित एव गुणपरीक्षणदाक्षिण्यशून्य इत्याशयः।

'आत्मनो हृदयवेदनामावेद्य अन्यासक्तं प्रियतममभिमुखीकुरु' इति शिक्षयन्तीं मातुलानीं प्रति काचित्प्रियतमस्यास्निग्धतामेवमुदीरयति–

---

१. **अहव गुणव्विअ लहुआ अहवा गुणअणुओँ ण सों लोओ।**
**अहव ह्मि णिग्गुणा वा बहुगुणवन्तो जणो तस्स।।३।।**
[अथवा गुणा लघवोऽथवा गुणज्ञो न स लोका:।
अथवास्मि निर्गुणा वा बहुगुणवाञ्जनस्तस्य।।]

**हृदयेन स्फुटतापि च मातुलि तस्मिन्नवेद्यते नु कथम्।**
**प्रतिबिम्बमिवादर्शे यस्मिन्सङ्क्राम्यति न दुःखम्।।४।।**[1]

सपत्नीजनवश्यतामवगत्य स्फुटता, दुःखेन वशीर्यतापि। अनेन चिरात्क्लेशं सहमानस्य हृदयस्य दुःखभरैरापूर्णता द्योत्यते। दर्पणे प्रतिबिम्बो यथा उपर्येव तिष्ठन्ति नान्तः प्रविशति तथा तस्मिन्प्रियतमेऽपि निवेद्यमानं निजदुःखं न तस्य हृदये स्थानं लभत इत्याशयः। आदर्शदृष्टान्तेन प्रियहृदयस्य बहिश्चाकचक्यशालिता काठिन्यं चाभिव्यज्यतेतथा दूरत एव स स्निग्ध इव प्रतीयते नान्तस्तस्यानुरागः। दुःखं च द्वितीयहृदयान्तःसङ्क्रमणं विना न कारुण्यमुत्पादयेदिति ध्वनितम्।

प्रवासाय कृतोद्यमं नायकं निजसंख्या भाविनीं विरहवेदनामन्यवृत्तान्तप्रदर्शननैपुणेन सूचयन्तीं सखी पथिकगृहिणीवृत्तान्तमवतारयति–

**पाशाशङ्की काको नेच्छति दत्तमपि पथिकगेहिन्या।**
**अवनतकरतलविगलितवलयकमध्यस्थितं पिण्डम्।।५।।**[2]

पथिकगृहिण्या दत्तमपि, पिण्डाऽऽवर्जनार्थमवनतात् अधोमुखीकृतात्करतलाद्विगलितस्य वलयस्य मध्यस्थितम्। विरहवेदनया एतावत्कार्श्यं यत्कङ्कणोऽपि कराद्विगलतीति भावः। ओदनपिण्डं काकः पाशशङ्कया नेच्छतीत्यर्थः। अत्र गेहिनीपदेन प्रियतमचिन्तया सहैव गृहभार–सञ्चालनक्लिष्टतया विरहस्य सुभृशोत्पीडकत्वं सूच्यते। तथा च विरहकृशायाः शकुनलाभाशया काकाय बलिमुपहरन्त्याः सेयं पथिकगेहिन्या दशा, तादृशीं मा मे प्रियसख्याः करिष्यसीति नायकं प्रत्यभिव्यज्यते। ''प्रयत्नसाधितामपि युवतिं विमृश्यकारितया नोपगच्छन्तं नायकमुत्साह–यितुं दूती सोपालम्भमयापदेशेनाह– इत्यवतार्य पाशशङ्कया पिण्डं यथा काको नेच्छति तथा त्वमपि दीयमानामप्येनां भयशङ्कया परिहरसि'' इति गङ्गाधरटीका।

---

१. **फुट्टन्तेण वि हिअएण मामि कह णिव्वरिज्जए तम्मि।**
**आदंसे पडिबिम्बं व्व ज्जम्मि दुःखं ण संकमइ।।४।।**
[स्फुटतापि हृदयेन मातुलानि कथं निवेद्यते तस्मिन्।
आदर्शे प्रतिबिम्बमिव यस्मिन्दुःखं न सङ्क्रामति।।]

२. **पासासङ्की काओ णेच्छदि दिण्णं पि पहिअघरणीए।**
**ओअन्तकरअलोगलिअवलअमज्झट्ठिअं पिण्डम्।।५।।**
[पाशाशाङ्की काको नेच्छति दत्तमपि पथिकगृहिण्या।
अवनतकरतलावगलितवलयमध्यस्थितं पिण्डम्।।]

प्रोषितपतिकायाः सखी तत्प्रियतमाय त्वरितमागमनमभिसूचयन्ती तदन्तिकगामिनं पथिकमाह–

**अवधिदिनागमशङ्काकुलाभिरिह कुड्यविलिखिता रेखाः।**

**आलीभिः प्रोञ्छ्यन्ते द्वित्रास्तत्रैव चोरिकाया।।६।।**[१]

प्रियतमाऽऽगमनस्यावधिदिनं मागच्छतु इति शङ्कायुक्ताभिः सखीभिर्भित्तिलिखिता दिनगणनारेखाः चोरिकाया चौर्येण तत्प्रच्छन्नमिति यावत्। द्वित्राः प्रोञ्छ्यन्ते उन्मार्ज्यन्ते अपनीयन्ते। अवधिदिनगणनार्थं नायिकाया प्रत्यहं भित्तौ रेखाः कृताः। अवधिदिनपूरणेऽपि तस्मिन्ननागच्छति इयं प्राणान् जह्यादिति शङ्कया अवधिदिनानागमनार्थं सखीभिर्द्वित्रा रेखा अलक्षितं प्रोञ्छ्यन्ते। यदि तु नियतसमये आगच्छेत्तर्हि एतस्या दृष्टौ अवधिदिनात्पूर्वमेवागमनात्सविशेषानन्द इत्याशयः। अवधिदिनं सम्प्रति कियत्सन्निहितमेतद्धि प्रतिक्षणं सम्मुखे तिष्ठेदित्युत्कण्ठाविनोदः 'कुड्यविलिखित' पदेन सूच्यते। एतेन नायिकायाः समधिकौत्कण्ठ्यमभिव्यञ्जितम्। एवं चावधिदिनपूरणे सति न यावदियं प्राणान् जह्यात्तावत्त्वरितमेव भवता सेयं सम्भावनीयेति तद्वल्लभयाभिव्यज्यते।

चाटूक्तिभिः प्रियापरितोषणेन निजाभिलाषं साधयितुकामः कामुकश्चन्द्रमालोक्यैवमाह–

**तव मुखसादृश्यं नो लभत इति हि पूर्णमण्डलो विधिना।**

**घटयितुमिहान्यमयमिव पुनरपि परिखण्ड्यते शशभृत्।।७।।**[२]

अन्यमयम् अन्यप्रकारं घटयितुमिव निर्मातुमिव। शशभृत् चन्द्रो विधिना विधात्रा पुनरपि पूर्णमण्डलत्वेऽपि परिखण्ड्यते एकद्व्यादिकलाक्रमेण हीनः क्रियते। अन्यप्रकाररचनार्थम्

---

१. **ओहिदिअहागमासंकिरीहिँ सहिआहिँ कुड्डलिहिआओ।**
**दोतिण्णि तहिं विअ चोरिआएँ रेहा पुसिज्जन्ति।।६।।**
[अवधिदिवसागमाशङ्किनीभिः सखीभिः कुड्यलिखिताः।
द्वित्रास्तत्रैव चोरिकया रेखाः प्रोञ्छ्यन्ते।।]

२. **तुह मुहसारिच्छं ण लहइ त्ति संपुण्णमण्डलो विहिणा।**
**अण्णमअं व्व घडइउं पुणो वि खण्डिज्जइ मिअङ्को।।७।।**
[तव मुखसादृश्यं न लभत इति सम्पूर्णमण्डलो विधिना।
अन्यमयमिव घटयितुं पुनरपि खण्ड्यते मृगाङ्कः।।]

एकामेकां कलां न्यूनीकृत्य 'मुखसदृशं जातं न वा' इति मुहुर्मुहुर्निजनिर्माणनिरीक्षणसंरम्भं विधेर्व्यञ्जयत्–परित एकैककलाखण्डनक्रमसूचकं परिखण्ड्यत इति परिपदं मत्कृतच्छायाया–मुपात्तम्। अनया हेतूत्प्रेक्षया चन्द्रमसो मुहुर्मण्डलपूरणं मुहुः खण्डनं चेति व्यतिकरस्य कल्पान्तं यावदसमाप्त्या 'तव मुखसादृश्यं चन्द्रः कल्पान्तपर्यन्तमपि न लप्स्यते' इति मुखशोभातिशयो मधुरमभिव्यज्यते।

देशान्तरप्रवासाय कृतप्रस्थानस्य गेहान्तरे स्थितस्य नायकस्य 'त्वद्गमने मत्सख्याः का दशा भाविनी' इति प्रदर्शनेन गमनं निरुन्धती नायिकासखी तद्वृत्तान्तमाह–

**अद्य गतोऽद्य गतो बत सोऽद्य गतश्चेति गणयन्त्या।**
**प्रथमे दिनार्द्धे एव हि रेखाभिश्चित्रितं कुड्यम्।।८।।**[१]

सः 'अद्य गतः, अद्य गतः' इति कृत्वा, एकदिनार्थमेकां रेखां विलिख्य गणयन्त्या अनया प्रथमे दिनार्द्धे रेखाभिर्गृहभित्तिश्चित्रितेति भावः। अत्र 'गणयन्त्या' इति वर्तमानार्थाभिधायिना शतृप्रत्ययेन 'चित्रितम्' इति भूतार्थवाचकेन क्तप्रत्ययेन च 'गणनायाः पूरणं तु न जातं परं भित्तिः सर्वापि रेखाभिः पूरिता' इति नायिकाचेष्टितसूचनेन प्रियवरहे क्षणक्षणस्य बहुदिवस–गमनवत् समधिकवेदनादायित्वमभिव्यज्यते। प्रतिदिनमेकां रेखां प्रदाय गणयन्त्या तया दिनार्द्धे एव बहुदिनव्यत्यये सत्यनुभवनीयं विरहदुःखमनुभूतमित्येवकारसहकारेणातिशयोक्तिर्ध्वन्यते। तथा च दिनार्द्धे एव एतावद्विरहवैक्लव्यमनुभवन्त्या अस्याः का वाऽग्रे दशा भवेदिति त्वयैव विचारणीयमिति नायकं प्रत्यभिव्यज्यते। 'कुड्यं रेखाभिः पूरितम्' इति वक्तव्ये चित्रितमित्युक्त्या सरणिबद्धा रेखाः प्रदाय भित्ति पूरणे सति पुनरवकाशनुसारं नीचैरूपरि वा रेखाप्रदानेन चित्राकारता सूच्यते, एतेन भित्तौ बहुरेखाविलेखनेन विरहक्लेशातिशयो ध्वनितः। एकस्मिन्दिन एव 'अद्य गतः अद्य गतः' बहुदिवसज्ञानेन नायिकायाः प्रियानुस्मरणजन्यो मोहातिशयोऽपि न विस्मार्यः पाठकैः। रेखाभिश्चत्रितंकुड्यमित्यनेन सा कुड्याभिमुखं मुखं विधाय स्थितेति कार्यान्तरपरिहारेण प्रियचिन्तैकतानतया प्रियप्रेमातिशयो ध्वन्यत इत्यहो गाथाकर्तुरनन्यसाधारणो निःसीमार्थगुम्फन–महिमा।

प्रथमसमागमे समुपलब्धात्सुरतसुखादपि समधिकसुखकरं भवति व्यतीतप्रथमदिन–घटनास्मरणेन परस्मिन्दिवसे नायिकायाः सलज्जमधुरमवलोकितमित्यात्मनः सहृदयतां सूचयन्नायकः प्रियसुहृदमाह–

---

१. **अज्जं गओत्ति अज्जं गओत्ति अज्जं गोओत्ति गणरीए।**
**पढम व्विअ दिअहद्धे कुड्डो रेहाहिँ चित्तलिओ।।८।।**

[अद्य गत इत्यद्य गत इत्यद्य गत इति गणनशीलया।
प्रथम एव दिवसार्धे कुड्यं रेखाभिश्चित्रितम्।।]

**न तथा प्रथमसमागमसुरतसुखाऽऽसादनेऽपि परितोषः।**
**वदने द्वितीयवासरसविलक्षनिरीक्षिते हि यथा॥९॥**[1]

प्रथमसमागमे यत्सुरतसुखं तस्य प्राप्तावपि तादृक् परितोषो न, यादृक् द्वितीयदिवसे सविलक्षं (रात्रिघटनास्मरणेन सलज्जम्) लक्षितम् अवलोकनं यस्मिन्नीदृशे वदनकमले भवति। तादृशवदनकमलस्य विषय इति वैषयिकसप्तमी सेयम्। यदि तु प्राकृतपदाङ्कानुसरणाग्रहस्तर्हि– ''सुरतसुखे प्रापितेऽपि परितोषः'' इति रामो राज्यमचीकरदितिवत्स्वार्थणिजन्तघटितं पठनीयम्। एवं सति 'सुरतसुखे प्राप्तेऽपि तथा न परितोषो यथा सलज्जविलोकिते वदने प्राप्त इत्यर्थः स्यात्। प्रथमसमागमे लज्जासाध्वसौकुमार्यादिभिर्न सुकरः सुरतसुखलाभ इति दुर्लभतमे प्रथमसमागमसुरतसुखे प्राप्तेऽपीत्यत्र अपिपदेन ध्वन्यते। तथा च प्रथमसमागमे सुचिरयत्नशतैः प्राप्तं स्याद्यथाकथञ्चित्सुरतं केनचिन्न तु अवधीरण–जघनाकुञ्चनादिकाठिन्येन सुरतसुखमुपलब्धं भवेत्, परं मया निजदाक्षिण्यगुणेन प्रथमसमागम एव सुरतसुखमुपलब्धमित्यात्मनः सौभाग्यं ध्वनयन् 'तादृशसुखादपि परितोषकरं तस्याः सलज्जावलोकितम्' इति मार्मिकतां सूचयति। स्वकीयैव चात्र नायिका। गङ्गाधरटीकायां तु– ''पूर्वमकृतस्वीकारायाः पश्चाच्चिरप्रार्थनया स्वीकारं कृतवत्याः प्रथमसमागम एव नायकगुणरञ्जितायाः प्रथमाऽस्वीकारजनितविलक्षं वदनमालोक्य निजगुणगर्वितो नायकः सहचरमाह'' इत्यवतरणम्।

काचिदनुशयाना मदनशरान्प्रस्तुवतीं सखीमनुनयावधीरणात्परावृत्तस्य प्रियतमस्य साभिलाषमवलोकितमेवमाह–

**येऽभिमुखागतविचलद्वलितप्रिययोजिताक्षिविक्षोभाः।**
**तेऽस्माकं स्मरविशिखा जनस्य ये सन्ति ते सन्तु॥१०॥**[2]

अनुनयार्थं सम्मुखागतेन पुनस्तदवधीरणया व्यतिक्रम्य चलता। मम विमुखनिवर्तनेन कदाचिद्विगतमाना स्यादित्युत्कण्ठावशाद्विवलितेन परिवृत्तेन प्रियेण योजिताः प्रेषिता ये

---

१. **ण वि तह पढमसमागमसुरअसुहे पाविएवि परिओसो।**
**जह वीअदिअहसविलक्खलक्खिए वअणकमलम्मि॥९॥**
[नापि तथा प्रथमसमागमसुरतसुखे प्राप्तेऽपि परितोषः।
यथा द्वितीयदिवससविलक्षलक्षिते वदनकमले॥]

२. **जे सँमुहागअबोलन्तवलिअपि अपेसिअच्छिविच्छोहा।**
**अम्हं ते मअणसरा जणस्स जे होन्ति ते होन्तु॥१०॥**
[ये सम्मुखागतव्यतिक्रान्तवलितप्रियप्रेषिताक्षिविक्षोभाः।
अस्माकं ते मदनशरा जनस्य ये भवन्ति ते भवन्तु॥]

अक्षिविक्षोभाः, त एवास्माकं मदनशराः। जनस्य अन्यजनस्य ये भवन्ति ते भवन्तु। मन्मथशरा यथा मानसमुन्मथयन्ति तथा तादृगवस्थप्रियतमावलोकितान्यपि मे मनसि उत्कण्ठामुत्पादयन्तीत्याशयः। 'अपि सत्यं कुसुममया बाणा मन्मथस्येति सख्या पृष्टा सखी सवैदग्ध्यमाह' इति गङ्गाधरावतरणम्। 'बोलन्त' इति शत्रन्तस्य व्यतिक्रान्तेतिच्छाया तु न मनोरमा।

श्रोणितटलम्बितकनकदामशालिनीं काञ्चन नितम्बिनीमवलोक्य कनकसूत्रवर्णनच्छलेन निजाभिलाषमेवमाह कश्चित्सहृदयः-

**इतरो जनो न लभते तव जघनारोहसङ्गसुखकेलिम्।**

**अनुभवति कनकदोरो वह्निवरुणयोर्हि माहात्म्यम्।।११।।[1]**

तव जघनारोहणपूर्वकेण सङ्गमेन या सुखसरसा केलिस्ताम् इतरो देवताप्रसादशून्यः अग्निपानीयाख्य- (श्यामशबलाख्य) व्रतरहितो वा जनो न प्राप्नोति। यत्र पूर्वमग्नौ कठिनं सन्तप्य जले प्रविश्यत एवंविधकठिनव्रतधारिणमन्तरा तव जघनारोहपूर्वकं सुरतसुखं न कस्यचित्सुलभमिति भावः। हुतवहवरुणयोर्देवयोर्महिमानं कनकसूत्रमनु भवति। काञ्चीनिर्माणसमये मुहुरग्नौ मुहुर्जले प्रवेशस्य फलं कनकदोरकोऽनुभवतीत्यर्थः। किमहमप्येवंविधसौभाग्यभाक्कदाचन भविष्यामीत्यात्माभिलाषस्तां प्रति ध्वन्यते।

शृण्वन्तं कामुकं प्ररोचयितुं दूती नायिकायाः सौभाग्यातिशयमाह-

**यो यस्य विभवसारस्तं स ददातीति किं न्विहाश्चर्यम्।**

**चित्रमभवदपि दत्तं दौर्भाग्यं तु त्वया सपत्नीनाम्।।१२।।[2]**

विभवसारो धनसङ्ग्रहः। प्रियप्रेमातिशयसौभाग्यशालिन्या, त्वया अभवदपि अवर्तमानमपि दौर्भाग्यं (प्रियप्रणयवञ्चितता) सपत्नीनां दत्तमिति तु सत्यमाश्चर्यम्। प्रियप्राण-

---

१. **इअरो जणो ण पावइ तुह जघणारुहणसंगमसुहेल्लिम्।**
**अणुहवइ कणअडोरो हुअवहवरुणाणँ माहप्पम्।।११।।**
[इतरो जनो न प्राप्नोति तव जघनारोहणसङ्गमसुखकेलिम्।
अनुभवति कनकदोरो हुतवहवरुणयोर्माहात्म्यम्।।]

२. **जो जस्स विहवसारो तं सो देइ त्ति किं त्थ अच्छेरम्।**
**अणहोन्तं पि खु दिण्णं दोहग्गं तइ सवत्तीणम्।।१२।।**
[यो यस्य विभवसारस्तं स ददातीति किमत्राश्चर्यम्।
अभवदपि खलु दत्तं दौर्भाग्यं त्वया सपत्नीनाम्।।]

वल्लभायास्तव सविधदेशमपि दौर्भाग्यं न स्पृशति पुनस्त्वया तत्कथं सपत्नीभ्यो दत्तमिति भावः। अनेन विरोधालङ्कारेण 'यासां सपत्नीनां पूर्वं समधिकप्रियप्रणयशालितासीत्प्रियतमं निजवशमानयन्त्या त्वयैव तासां विरुद्धमपि दौर्भाग्यं घटितमित्यहो ते गुणलावण्यादिमहिमा' इति वस्तु ध्वन्यते। अभवदपि दौर्भाग्यं त्वया दत्तमित्यक्षरैः 'बहुवल्लभस्य दयितस्य नवागतया कयाचिदपि वल्लभया रूपगुणशालिनीनां पूर्वसपत्नीनां दौर्भाग्यं न जनितं त्वया तत् अभवदपि अजायमानमपि सम्पादितम्' इत्यर्थोऽपि स्फुटीभवति। अनेन सर्वेण 'एवंविधसौभाग्यशालिन्यपि सुन्दरी भवदर्थे मया संसाध्यते, पश्य ते सौभाग्यम्।' इति शृण्वन्तं कामुकं प्रति प्ररोचना ध्वन्यते।

प्रवासे तिष्ठन्कश्चित्प्रियतमासमागमसुखानुस्मरणेनोत्कण्ठां विनोदयितुमात्मसुहृदमाह–

**चन्द्रसमं तद्वदनं सदृशो ह्यमृतस्य मुखरसस्तस्याः।**
**सकचग्रहरभसोज्ज्वलचुम्बनमिह कस्य सन्निभं तस्याः।।१३।।**[१]

मुखरसः अधररसः। निधुवनसमये सकचग्रहं रभसोज्ज्वलं च यच्चुम्बनम्, सप्रेम केशग्रहणपूर्वकं कामवेगसरभसतया कमनीयतमं च यत्तस्याश्रुम्बनं तत्कस्य सदृशं, न कस्या–पीत्यर्थः। सुरतसामयिकं यत्तस्याश्चुम्बनं तदनुपममित्याशयः। तन्मुखस्याधररसस्य चास्मिंल्लोके तुलामलभमाना दिव्याभ्यां चन्द्रामृताभ्यां तौ तुलयामः कथञ्चित्, परं सुरतसमयसंघटितस्य तत्प्रणयचुम्बनस्य तु त्रिषु लोकेष्वपि साम्यं न प्राप्नुम इत्यनुपममेवेति गाथाकर्तुराकूतम्।

प्रयत्नशतानुमतामपि काञ्चन नायिकां विमृश्यकारितया नानुपगच्छन्तं नायकमुत्तेजयितुं दूत्याह–

**उत्पन्नार्थे कार्ये गुणागुणावतिविचिन्तयंस्तस्मिन्।**
**पुरुषो विहन्ति कार्यं चिरकालसुमन्दवीक्षितया।।१४।।**[२]

---

१. **चन्दसरिसं मुहं से सरिसो अमअस्स मुहरसो तिस्सा।**
**सकअग्गहरहसुज्जलचुम्बणअं कस्स सरिसं से।।१३।।**
[चन्द्रसदृशं मुखं तस्याः सदृशोऽमृतस्य मुखरसस्तस्याः।
सकचग्रहरभसोज्ज्वलचुम्बनकं कस्य सदृशं तस्याः।।]

२. **उप्पण्णत्थे कज्जे अइचिन्तन्तो गुणागुणौतसम्मि।**
**चिरआलमन्दपेच्छित्तणेण पुरिसो हणइ कज्जम्।।१४।।**
[उत्पन्नार्थे कार्येऽतिचिन्तयन्गुणागुणौ तस्मिन्।
चिरकालमन्दप्रेक्षित्वेन पुरुषो हन्ति कार्यम्।।]

कार्ये उत्पन्नार्थे सति। उत्पन्नः सिद्धः अर्थः अभिलषितपदार्थो यत्र तस्मिन्, कार्ये फलाभिमुखे सतीति यावत्। तस्मिन्कार्ये गुणदोषयोरावश्यकतोऽधिकं विचारं कुर्वन्पुरुषः चिरकालं मन्दप्रेक्षितया नीतिमार्गेण प्रतिक्षणमपायशङ्कित्वेन निजकार्यं विहन्तीत्यर्थः। त्वत्प्रार्थनया तामनुकूलयन्त्या मया कार्यं साधितमिदानीं त्वं स्वयमेव विलम्बनेन विहंसि। तत्कृतं विचारेण। साधय समीहितमिति दूतीकृतं नायकप्रोत्साहनमभिव्यज्यते।

निजगाढानुरागप्रदर्शनेन प्रणयकुपितं नायकमनुनयन्ती काचित्सचातुर्यमाह–

**बालक भवतोऽप्यधिकं मम जीवितमेव वल्लभं निजकम्।**
**तत्त्वां विना न भवतीति तेन कुपितं प्रसादयामि त्वाम्।।१५।।**[1]

प्रणयपरिणामानभिज्ञत्वेन बालकेति व्यपदेशार्हः। त्वत्तोऽप्यधिकं मम स्वीयं जीवनमेव प्रियम्। तज्जीवितं त्वया विना न भवतीति कारणेन कुपितं त्वां प्रसादयामि। त्वां विना जीवितुमेव न शक्नोमीति व्यङ्ग्यस्य अनया भङ्ग्या कथनेन पर्यायोक्तमलङ्कारः। अनेन च 'त्वया सह निबद्ध्यमानप्राणायाः कीदृशो मे प्रेमबन्धस्त्वं तु तमपि यथावन्न वेत्सि' इति बालकपदसहकारेण द्योत्यते।

प्रथमं कुपितां ततश्चाटूक्ति– चरणप्रणामादिभिः प्रसन्नां ससान्त्वनदाक्षिण्येन च व्यपगमितपूर्वं संशयाम् अत एव 'मिथ्या खलवचनदूषितचित्तया मया खेदितोऽसि' इति वदन्तीं प्रियां सशिरश्चालनकाकूक्तया भूयः खलवचने प्रतीहीति विधिमुखेन युक्त्या निषेधयन्नायक आह–

**न प्रतियती प्रतीहि प्ररुदत्या वाष्पबिन्दवो यदि ते।**
**एते हि भिद्यमाना न पृष्ठपुलकोद्गमेन मम।।१६।।**[2]

---

१. **वालअ तुमाहि अहिअं णिअअं विअ वल्लहं महं जीअम्।**
**तं तइ विणा ण होइ त्ति तेण कुविअं पसाएमि।।१५।।**
[बालक त्वतोऽधिकं निजकमेव वल्लभं मम जीवितम्।
तत्त्वया विना न भवतीति तेन कुपितं प्रसादयामि।।]

२. **पत्तिअ ण पत्तिअन्ती जइ तुज्झ इमे ण मज्झ रुअईए।**
**पुट्ठीअ बाहबिन्दू पुलउब्भेएण भिज्जन्ता।।१६।।**
[प्रतीहि न प्रतीयन्ती यदि तवेमे न मम रोदनशीलायाः।
पृष्ठस्य वाष्पबिन्दवः पुलकोद्भेदेन भिद्यमानाः।।]

खलवचनप्रत्ययेन मय्यविश्वासाद् रुदत्याः तव एते वाष्पबिन्दवः। एते इत्यनेन स्पृष्टे प्रत्यक्षं वाष्पबिन्दुप्रदर्शनं सूचितम्। तथा च नाहं त्वां मद्वचनादेव विश्वासं कर्तुमनुरुन्धे, प्रत्यक्षं ते मम प्रणयप्रमाणमिति ध्वन्यते। मम पृष्ठस्य पुलकाद्गमेन रोमाञ्चोद्गमेन यदि न भिद्यमाना न चूर्णीक्रियमाणा भवेयुस्तर्हि न प्रतियती शपथशतैः शोधितापराधेऽपि मयि प्रत्ययं न कुर्वन्ती त्वं खलवचने प्रतीहि पुनर्विश्वासं कुरु। 'पुनः प्रतीहि' इति सशिरश्चालनं काकूक्त्या प्रोच्यते, तथा च सरलोक्तौ अग्रे खलवचसि न विश्वासः कर्तव्य इत्यर्थः। अयमाशयः- तवाश्रुबिन्दुभिरपि मम पृष्ठे पुलकोद्गमो जातः। प्रत्यक्षं ममैतत्प्रेमनिदर्शनं पश्यन्त्यपि मयि प्रत्ययमकुर्वाणा त्वं खलवचने प्रत्ययं कुरु। (काकूक्तिः)। अर्थात् एवं प्रणयशालिनि मयि अविश्वासं कृत्वा खलवचसि न भूयो विश्वासः कर्तव्य इति। पततां वाष्पबिन्दूनां पृष्ठपुलकेन चूर्णनोक्त्या रोमाञ्चस्य सुदृढता सूच्यते। तेनाश्रुबिन्दुभिरप्येवं घनः पुलकोद्गमो भवति किं पुनस्त्वत्स्पर्शादिनेति प्रेमातिशयो द्योत्यते। 'भिद्यमाना न भवेयुः' इति वर्तमानार्थं सूचयता शानचा 'अधुनापि वाष्पबिन्दवो मम पुलकोद्गमेन भिद्यमानाः सन्ति' इति प्रत्यक्षप्रदर्शनसंरम्भेण नायकस्य प्रेमाध्यवसायातिशयः प्रतीयते।

अत्र गङ्गाधरस्तु 'रोदनशीलायास्तव वाष्पबिन्दवो मम पृष्ठपुलकोद्गमेन भिद्यमानाभिन्ना यदि नाभविष्यन्, तदा त्वं न प्रतीयन्ती प्रत्ययं नाकरिष्य एवेत्यर्थः' इत्याह। 'पत्तिअ ण पत्तिअन्ती' इत्यनेन कथमयमर्थः ? प्रतीयन्तीतिपदस्य प्रत्ययं नाकरिष्य एवेति कथमर्थो जात इति तु विचारणीयमेव। किञ्च प्रतीयन्तीत्यपि च्युतसंस्कृति। एवमनक्षरं जल्पन् गङ्गाधरोऽत्रोपेक्षणीय एव। यदि तु स्यात्तत्रापि किञ्चिनमूलमित्याग्रहस्तर्हि तत्पदाङ्कानुसारं व्याकरणस्खलितं परिहृत्यैवं छाया व्याख्यानं च स्यात्-

**भूयः प्रतीहि भामिनि न प्रत्यैष्यस्त्वमश्रुपृषतास्ते।**

**यद्यभविष्यन् भिन्ना न पृष्ठपुलकोद्गमेन मम।।१६।।**

हे प्रणयकोपशीले! पुनः प्रतीहि! सशिरश्चालनं काकूक्त्या 'खलवचने पुनः प्रत्ययं कुरु!' सरलोक्तौ 'प्रत्ययो न कर्तव्यः' इत्यर्थः! रुदत्यास्तव वाष्पबिन्दवो यदि मत्पृष्ठस्य पुलकोद्भेदेन रोमाञ्चोद्गमेन न भिन्ना अभविष्यन् तदा त्वं न प्रत्यैष्यः मयि प्रत्ययं नाकरिष्य एव। तवाश्रुजलस्पर्शादपि मम पृष्ठे रोमाञ्चो जातः, त्वत्स्पर्शे तु का कथा। त्वं तु खलवचने प्रत्ययं कुर्वती मुधैव मां व्यथयसीति भावः। तथा च अश्रुजलस्पर्शादपि रोमाञ्चं वहतो ममानुरागमनुसन्धाय न पुनरग्रे खलवचसि विश्वासं करिष्यसीति नायिकां प्रत्यभिव्यज्यते।

नायकस्य प्रेमदृढीकरणार्थं तस्मिन्नाकर्णयति काचिद्दूतीमाह-

**तन्मित्रं कर्तव्यं यद्व्यसने चापि देशकालेषु।**

**आलिखितभित्तिपुत्तलकमिव न तिष्ठति पराङ्मुखं जातु।।१७।।**[1]

यन्मित्रं व्यसने विपदि, देशेषु दूरदेशान्तरेषु, कालेषु बहुसमयान्तरालेषु यौवनाद्यपगमे इति यावत्। भित्तौ चित्रलिखितपुत्तलिकेव जातु कदाचिदपि स्वतो विमुखं न तिष्ठति, तादृङ्मित्रं कर्तव्यम्। 'वाउल्लअम्' पुत्तिलिकेति देशी। आलिखितेति कथनेन चेष्टारहितत्वेन प्रियपराधीनता सूच्यते। तथा च यः स्वेच्छया न किमप्याचेष्टितुं शक्नुयात् किन्तु प्रणयपरवशः प्रियजनेच्छयैव किमपि कुर्यादित्यर्थो ध्वन्यते। 'तन्मित्रं युज्यते' इति स्थाने 'कर्तव्यम्' इत्युक्त्या निजप्रयत्नेन मैत्री चेद्बध्यते तर्हि परीक्ष्य तादृशमेव मित्रं कर्तव्यमिति सूच्यते। एवं च मत्प्रयत्नेन सञ्जातसौहृदोऽयं मत्प्रेयान् न विश्वासं भङ्क्ष्यतीति प्रेमदृढीकरणमभिव्यज्यते।

अस्मिन्स्थाने जायमानं वृत्तं मया विदितमिति निजनैपुण्यं सूचयन्कश्चित्सहचरमाह–

**वध्वा नदीकुञ्जे प्रथमोद्गतशील खण्डन विलक्षणम्।**

**भणदिव हा हा पक्षैरूड्डीयत इह विहङ्गकुलम्।।१८।।**[2]

वध्वाः नवतरुण्याः प्रथममेव सञ्जातेन शीलखण्डनेन चारित्र्यभङ्गेन विलक्षणं सलज्जम्। अत एव पक्षैः 'हा हा' इति शब्दं कुर्वदिव इह नदीनिकुञ्जे पक्षिकुलम् उड्डीयते। स्वतो जायमानस्य हा हेत्याकारकपक्षरवस्य शीलखण्डनवैलक्ष्यं हेतुरुत्प्रेक्ष्यते। तथा च निभृतनदीनिकुञ्जे रहोविहितमपि वधूव्यवसितं पक्षिणोऽप्यविदन् किमहमिङ्गितवेदीत्यात्मनो विज्ञत्वं द्योत्यते। वधूपदेन गुरुजनसत्तास्मरणात् गुरुजनपरवशाया अपि तादृक्साहसं कठिनमिति व्यज्यते।

---

१. **तं मित्तं काअव्वं जं किर वसणम्मि देसआलम्मि।**
**आलिहिअभित्तिवाउल्लअं व ण परम्मुहं ठाइ।।१७।।**
[तन्मित्रं कर्तव्यं यत्किल व्यसने देशकालेषु।
आलिखितभित्तिपुत्तलकमिव न पराङ्मुखं तिष्ठति।।]

२. **बहुआइ णइणिउञ्जे पढमुग्गअसीलखण्डणविलक्खम्।**
**उड्डेइ विहंगउलं हा हा पक्खेहिँ व भणन्तम्।।१८।।**
[वध्वा नदीनिकुञ्जे प्रथमोद्गतशीलखण्डनविलक्षम्।
उड्डीयते विहङ्गकुलं हा हा पक्षैरिव भणत्।।]

प्रोषितपतिकायाः सखी तत्कान्तागमनत्वरार्थं पथिकद्वारा सन्दिशति–

**सत्यं भणामि बालक न चास्त्यशक्यं वसन्तमासस्य।**

**गन्धेन कुरबकाणामसतीत्वं न हि गता मनागपि सा।।१९।।**[1]

विरहचरित्रानभिज्ञत्वाद् बालकेति सम्बोधनीय! अहं सत्यं भणामि। सम्बोध्यमुद्दिश्य वक्तव्यविषयकथनेनैव सिद्धे पुनः 'सत्यं भणामि' इत्युक्त्या अहं बोधनीयं त्वां सत्यं बोधयामि इति लक्ष्यते। तेन च 'अहं तव हितैषिणी अस्मि' इति निजवचनस्य विश्वसनीयत्वं ध्वन्यते। वसन्तमासस्य अशक्यं नास्ति, मनउन्मादकतया शीलखण्डनादिकं वसन्तमासस्य दुष्करं नास्तीत्यर्थः। परं सा कुरबकाणां परिमलेन ईषदपि असतीत्वं न गता। अनेन 'सा त्वय्येव धृतव्रता वर्तते, आश्वसिहि' इति द्योत्यते। परमेतेन सहैव 'नास्त्यशक्यं वसन्तमासस्य' इत्यनेन नायकहृदयेऽधैर्यमप्युत्पाद्यते। तथा च 'विरहे नारीणां हृदयवेदना न ते विदिता, अत एव यावदियं त्वदागमनबद्धलक्ष्या न खण्डितशीला भवति तावदेनामचिरमुपगच्छ' इति नायकं प्रत्यभिव्यज्यते।

नायकमुत्कण्ठयितुं दूती कस्याश्चिदनुरागातिशयमाह–

**एकैककवृतिवेष्टनविवरान्तरदत्ततरललोचनया।**

**व्युत्क्रामति बाल त्वयि पञ्जरशकुनायितं हि तया।।२०।।**[2]

अवसरे दृष्टिक्षेपानभिज्ञत्वाद् बालकल्प! तामतिक्रम्य त्वयि आगच्छति सति। एकैकस्मिन् वृतिवेष्टनस्य विवरान्तरे प्रहितं चञ्चलं नयनं यया एतादृश्या तया पञ्जरबद्धपक्षिवदाचरितम्। पञ्जरबद्धः पक्षी यथा प्रतिविवरं दत्तदृष्टिर्भ्रमति तथा त्वद्दर्शनलालसया तया

---

१. **सच्चं भणामि बालअ णत्थि असक्कं वसन्तमासस्स।**
**गन्धेण कुरवआणं मणं पि असइत्तणं ण गआ।।१९।।**
[सत्यं भणामि बालक नास्त्यशक्यं वसन्तमासस्य।
गन्धेन कुरबकाणां मनागप्यसतीत्वं न गता।।]

२. **एक्केक्कभवइवेठणविवरन्तरदिण्णतरलणअणाए।**
**तइ बोलन्ते बालअ पञ्जरसउणाइअं तीए।।२०।।**
[एकैकवृतिवेष्टनविवरान्तरदत्ततरलनयनया।
त्वयि व्यतिक्रान्ते बालक पञ्जरशकुनायितं तया।।]

भ्रान्तमित्यर्थः। एकैकस्मिन्नित्यनेन 'कदाचिदस्मिन्विवरान्तरे दर्शनसौकर्यं स्यादिति प्रत्येकच्छिद्रान्तरतो दर्शनेनोत्कण्ठातिशयो द्योत्यते। प्रेषितलोचनयेति वक्तव्ये दत्तपदेन नयनस्य दर्शने गाढसंसक्तत्वं लक्ष्यते। तथा च प्रियदर्शने परवशं नयनमित्युत्कण्ठातिशयः प्रतीयते। तरलविशेषणेनापि 'नयनमार्गात् प्रियः शीघ्रं नापक्रामेत्' इति दर्शनशीघ्रतया उत्कण्ठातिशयो द्योत्यते। शकुनिदृष्टान्तेन 'त्वद्दर्शनादुत्कण्ठिता सा त्वदन्तिके पक्षीवोड्डीयागच्छेत्, परं पक्षिणो यथा पञ्जरबन्धेन पारवश्यं तथा तस्या गृहबन्धने पराधीनता' इति नायिकानुरागातिशयो ध्वन्यते। तथा च 'एवं बद्धानुरागात्वद्दर्शनार्थमतिप्रयतमानापि सा आगमनसमये त्वया न दृष्टा' इति 'बालक' पदसहकारेण नायकस्योत्तेजनं ध्वन्यते।

तस्या गेहमार्गेण गतोऽप्यहं तया न दृष्ट इत्युपालभमानं नायकं नायिकादोषपरिहारार्थं दूती आह–

**तत्किं करोतु चेत्त्वं तया हि वृतिवेष्टनाहितस्तनया।**

**दृष्टोऽसि यन्न पादाङ्गुष्ठार्द्धक्षिप्तनिःसहाङ्ग्यापि॥२१॥**[१]

वृतिवेष्टनस्योच्चतया त्वद्दर्शनाय उच्चैर्नयनप्रेषणार्थं पादाङ्गुष्ठस्य (आद्ये) अर्धभागे क्षिप्तं समर्पितं निःसहम् अङ्गं यया। 'दर्शनोत्कण्ठावशाद्देहस्यापि नानुसन्धानमासीत्' इति देहस्याऽनादरसूचनार्थं साऽवहेलं पातनार्थकं 'क्षिप्तं' पदं प्रयुक्तम्। 'निःसहम्' इत्यनेन 'त्वदुत्कण्ठया पूर्वमेव शरीरमवशमासीदिदानीमङ्गुष्ठाग्रे सर्वशरीरभरसमर्पणस्य क्वासीत्सामर्थ्यम्' इत्युत्कण्ठातिशयो व्यज्यते। अत एव शरीराग्रसन्तोलनार्थं वृतिवेष्टने आहितौ स्तनौ यथा। अनेन स्तनयोस्तुङ्गता शरीराग्रस्य च गुरुता सूच्यते। एवं कृतप्रयत्नयापि तया यदि त्वं न दृष्टोऽसि, तर्हि सा किं करोतु? त्वद्दर्शनार्थमत्युत्कठिता कृतप्रयत्नापि सा न द्रष्टुमपारयदिति न तस्या दोष इति भावः।

कस्यचित्प्रवासिनो जायामभिलषन्तं कञ्चन कामुकं तस्या निजनायके दृढानुरागसूचनेनासाध्यतां प्रतिपादयन्ती दूती आह–

---

१. **ता किं करेउ जइ तं सि तीअ वइवेट्ठपेल्लिअथणीए।**
**पाअङ्गुट्ठद्धक्खित्तणीसहङ्गीअ वि ण दिट्ठो॥२१॥**
[तत्किं करोतु यदि त्वमसि तया वृतिवेष्टनप्रेरितस्तनया।
पादाङ्गुष्ठार्धक्षिप्तनिःसहाङ्ग्यापि न दृष्टः॥]

**प्रियसंस्मरणप्रलुठद्दृग्जलधारानिपातशङ्कितया।**

**आवक्रितकन्धरया पथिकगृहिण्या प्रदीयते दीपः।।२२।।**[1]

दीपप्रदानोत्तरं प्रियतमसन्निधानसुखं पूर्वमन्वभूवमिति प्रियसंस्मरणेन प्रलुठत् नेत्रयोर्मध्ये सर्वतः सञ्चरत् यत् दृग्जलमश्रु तस्य धारानिपातशङ्काशालिन्या। 'प्रलुठत्' पदेन दीपदानसमये वाष्पविसर्जनस्यामङ्गलतया तदवरोधनेन वाष्पस्य नेत्राद् बहिरनिष्क्रमणात् नेत्रमध्य एव इतस्ततः सञ्चरणं सूच्यते। 'धारा' पदेन 'बहोः कालादुपचितमश्रुजलमतो विवशतया तन्निपाते न बिन्दुरपि तु धारा स्यात्' इति स्मृतिभावविजृम्भणेन प्रियेऽनुरागातिशयो ध्वन्यते। एवं च अश्रुजलं दीपे मा पतदिति वक्रीकृतग्रीवया पथिकगृहिण्या दीपः प्रदीयते। 'गृहिणी' पदेन गृहसञ्चालनव्यग्रतया, अपवादेन गृहापकीर्त्या च परप्रेमवैमुख्यं ध्वन्यते। एवं प्रेयसि दृढबद्धभावा सा नान्यत्र रतिं कुर्यादिति तदसाध्यता उपनायकं प्रत्यभिव्यज्यते। प्रवासे स्त्रिया विप्रलम्भचेष्टासु सेयमुदाहृता सरस्वतीकण्ठाभरणे।

स्नेहदैन्यसूचकेन कस्याश्चित्परिवृत्त्यावलोकनेन कमपि कामुकयुवानमनुरञ्जयितुं दूती आह–

**व्यतिसरति त्वयि बालक वलितान्यङ्गानि किल तथा तस्याः।**

**मध्येपृष्ठं निपतद्वाष्पकधारा यथा हि दृश्यन्ते।।२३।।**[2]

परप्रेमानभिज्ञत्वाद्बालकल्प! त्वयि व्यतिक्रामति तामतिक्रम्य त्वयि आगच्छति सति तस्या अङ्गानि त्वद्दर्शनार्थं तथा किल वलितानि परिवृत्तानि, यथा भाविना तवाऽदर्शनदुःखेन उत्कठितायास्तस्या निपतन्त्यो बाष्पधाराः पृष्ठमध्ये विलोक्यन्ते। दृश्यन्त इति वर्तमानार्थकलटा

---

१. **पिअसंभरणपलोट्टन्तवाहधाराणिवाअभीआए।**

**दिज्जइ वङ्कग्गीवाएँ दीवओ पहिअजाआए।।२२।।**

[प्रियसंस्मरणप्रलुठद्बाष्पधारानिपातभीतया।

दीयते वक्रग्रीवया दीपकः पथिकजायया।।]

२. **इत बोलन्ते बालअ तिस्सा अङ्गाइँ तह णु वलिआइं।**

**जह पुट्ठिमज्झणिवतन्तवाहधाराओं दीसन्ति।।२३।।**

[त्वयि व्यतिक्रामति बालक तस्या अङ्गानि तथा नु वलितानि।

यथा पृष्ठमध्यनिपतद्बाष्पधारा दृश्यन्ते।।]

इदानीमप्यश्रुधाराः सन्तीति प्रदर्शनसम्रम्भातिशयेनोत्कण्ठातिशयो द्योत्यते। परिवृत्यावलोकन-समये अङ्गवलनेन तन्वङ्ग्यास्तस्या विरहदौर्बल्यं द्योत्यते। धारा इति बहुत्वेन तस्मिन्नेव समये तावद्बाष्पनिपतनाद् वेदनातिशयो व्यज्यते। तथा च 'त्वदर्थमेवमत्युत्कण्ठिता सा, त्वं तु तस्या अनुरागमविजानन्वराकीं तां क्लेशयसीति तामविलम्बितं किं न सम्भावयसि' इति बालकपद-सहकारेण सोपालम्भं नायकप्रोत्साहनमभिव्यज्यते।

कापि प्रियतमविरहस्य दुःसहत्वमन्यापदेशेनाह-

**मध्यम एव वरं तन्न हि कार्यं सुजनदुर्जनाभ्यां नः।**
**दृष्टस्तपति यथा किल खलस्तथाऽदृश्यमान इह सुजनः।।२४।।**[१]

यथा दुर्जनः दृष्टो दर्शनपथमायातस्तापयति तथा सुजनः अदृश्यमानो नेत्रयोरगोचरस्ता-पयति। तस्मात् सुजनदुर्जनाभ्यामस्माकं न कार्यम्। मध्यम एव साधारणजन एव श्रेष्ठ इत्या-शयः। दृष्ट इति भूतकालिकक्तप्रत्ययेन, अदृश्यमान इति वर्तमानार्थकशानचा च 'पूर्णदर्शनेऽपि दुर्जनो व्यथयति, सज्जनस्य पूर्णाऽदर्शनस्य का कथा वर्तमानमप्यदर्शनं तापयति' इति तापतार-तम्यमभिव्यज्यते। तपतीत्यन्तर्भावितण्यर्थः। यथा 'निर्घृणतपति बलीयः' इति शाकुन्तलम्। तस्य सौजन्यस्मरणेन दुःसहो मे विरह इति नायिकयाभिव्यज्यते।

निजवल्लभं साभिलाषमालोकयन्त्याः कस्याश्चित्कटाक्षनिरीक्षणेनेर्ष्यालुः काचिदाह-

**स्वाभाविकं प्रलोकय न कुरुष्वार्द्धाक्षिवीक्षितं सुभगे।**
**स सुदृष्टोऽपि भविष्यति मुग्धा कलयिष्यसे त्वमपि।।२५।।**[१]

अर्द्धाक्षिवीक्षितं कटाक्षनिरीक्षणम्। पूर्णोन्मीलितनेत्राभ्यां विलोकनात्प्रियदर्शने आधिक्येन सौविध्यमपि भविष्यति। कटाक्षनिरीक्षणं नाधुनापि जानातीति त्वमपि जनैर्मुग्धा

---

१. **ता मज्झिमो व्विअ वरं दुज्जणसुअणेहिँ दोहिँ वि ण कज्जम्।**
**जह दिट्ठो तवइ खलो तहेअ सुअणो अईसन्तो।।२४।।**
[तन्मध्यम एव वरं दुर्जनसुजनाभ्यां द्वाभ्यामपि न कार्यम्।
यथा दृष्टस्तापयति खलस्तथैव सुजनोऽदृश्यमानः।।]

२. **अद्धच्छिपेच्छिअं मा करेहि साहाविअं पलोएहि।**
**सो वि सुदिट्ठो होहिइ तुमं पि मुद्धा कलिज्जिहिसि।।२५।।**
[अर्धाक्षिप्रेक्षितं मा कुरु स्वाभाविकं प्रलोकय।
सोऽपि सुदृष्टो भविष्यति त्वमपि मुग्धा कलिष्यसे।।]

गणयिष्यसे। सुभगे! इति सम्बोधनेन 'प्रियसौभाग्यशालिनी त्वमसीति तु ज्ञातमेवास्माभिः' इति साकूतोक्त्या ईर्ष्याभिव्यज्यते। तदेतदधिकं मच्छायायाम्।

प्रवासे तिष्ठन्कश्चित्कुलशीलपालिकाया निजदयितायाश्चरितमनुस्मरन् विरहविनोद-नेच्छया वयस्यमाह-

**गृहकार्यं किल कृत्वा दिवसं तस्या हि रोषमूकायाः।**
**गुरुकेऽपि मन्युदुःखे स्मरामि पादान्तसुप्तस्य।।२६।।**[१]

समग्रं दिवसमभिव्याप्य गृहव्यापारं कृत्वा। रोषेण मूकायास्तस्याः ऋधजनितोपताप-दुःखे महत्यपि सति। मदनुरागवशाच्छय्यायां मत्पादान्तभागे शयनं स्मरामीत्यर्थः। पादान्तसुप्त-स्येति मातुः स्मरतीतिवत्कर्मणः शेषत्वविवक्षया षष्ठी। दिवसे गृहकार्यं कृत्वेति वक्तव्ये दिवसमित्यत्यन्तसंयोगेन अनावश्यकेनापि गृहकार्येण दिवससमापनं सूच्यते। तथा च कार्यव्यस्ततामिषात्समग्रदिवसपर्यन्तमभाषणेन कोपातिशयो ध्वनितः। मन्युदुःखमहत्त्वेऽपि पादान्तशयनेन प्रियं प्रत्युत्कण्ठासूचनाद्दयितेऽनुरागातिशयः, कौलीन्यं च ध्वन्यते। क्रोधवशादेक-त्राऽशयनात् 'शय्यान्तसुप्तस्य' इति वक्तव्ये 'पादान्तसुप्तस्य' इत्यनेन 'चरणेन मदङ्गस्पर्शे सति सञ्जातकामोदयः कान्तो मामनुनयेत्' इत्यभिप्रायादौत्सुक्यस्योदयः, कोपस्य च प्रशम इति भावसन्धिर्ध्वन्यते। स च अञ्जितस्य स्मृतिभावस्याङ्गमिति बोध्यम्। 'खुडक्किआ' रोषमूका।

अधमवनितासक्त इत्यनुरक्तमपि कञ्चन धनिकं परिहरन्तीं दुहितरं वेश्यामाता शिक्षा-निमित्तमाह-

**प्रज्वल्य पानकुट्यां हुतवहनो ज्वलति यज्ञवाटेऽपि।**
**न हि ते परिहर्तव्या विषमदशासंस्थिताः पुरुषाः।।२७।।**[२]

---

१. **दिअहं खुडक्किआए तीए काऊण गेहवावारम्।**
**गरुए वि मण्णुदुःखे भरिमो पाअन्तसुत्तस्स।।२६।।**
[दिवसं रोषमूकायास्तस्याः कृत्वा गेहव्यापारम्।
गुरुकेऽपि मन्युदुःखे स्मरामः पादान्तसुप्तस्य।।]

२. **पाणउडीअ वि जलिऊण हुअवहो जलइ जण्णवाडम्मि।**
**ण हु ते परिहरिअव्वा विसमदसासंठिआ पुरिसा।।२७।।**
[पानकुट्यामपि ज्वलित्वा हुतवहो ज्वलति यज्ञवाटेऽपि।
न खलु ते परिहर्तव्या विषमदशासंस्थिताः पुरुषाः।।]

पानकुट्यां मद्यपानस्थाने (शौण्डिककुट्याम्) ज्वलित्वा वह्निर्यज्ञस्थानेऽपि ज्वलति। पवित्रेऽप्यपवित्रे च स्थले लुगुप्सां परिहृत्य समं व्यवहरतीत्यर्थः। एवमेव विषमदशासंस्थिताः स्वानुचितदशामापन्नाः पुरुषा न परिहारमर्हन्ति। अत्र हुतवहदृष्टान्तेन वह्निं यत्र नयन्ति लोकास्तत्रैव स स्वकार्यं करोति, एवमेव यादृशोऽपि कामुक आयातु अस्माभिर्धनहरणं कर्तव्यमेवेति सूच्यते। तथा च अस्मत्प्रयोजनसाधकः स धनिको न त्वयाऽवधीरणीय इत्यभिव्यज्यते। 'पानकुटी चण्डालकुटी' इति गङ्गाधरः।

स्वस्य सम्मुखमेव सतीं निजभार्यां बहु मन्यमानमुपनायकं काचिदसती साधिक्षेपमाह–

**यत्तव जाया हि सती यच्च सुभग वयमसत्यः स्मः।**
**तत्किं बीजं स्फुटतु त्वया समानो युवा नास्ति।।२८।।**[१]

त्वयि अव्यभिचरितं प्रेम कुर्वाणा यत्तव जाया सती, स्वभर्तारमवधीर्य त्वयि प्रणयं विदधाना यच्च वयं कुलटाः स्मः, हे सुभग! तत्र बीजं कारणं किं स्फुटतु प्रकटीभवतु? एतदेव कारणं यत्त्वया समानोऽन्यो युवा नास्ति। हे सुभगेत्यामन्त्रणेन त्वमेवातदृश एव सौभाग्यशाली असि!! इति साकूतोक्त्या अधिक्षेपोऽभिव्यज्यते। सापि त्वय्यनुरक्ता वयमप्यन्य–परिहारपूर्वकं भवत्येवाऽऽसक्ता अत एव त्वसदृशो नान्यः कश्चन जगति युवेति सिध्यतीत्यर्थः। तथा च सर्वपरिहारपूर्वकं भवत्येव निहितप्रणयसर्वस्वां मा प्रत्यक्षमेवापमन्यमानस्य अहो ते यौवनगर्व इत्युपालम्भोऽभिव्यज्यते। 'वयमसत्यः स्मः' इति बहुवचनेन 'एका तव जायैव सती तदन्या वयं सर्वा अपि या भर्तुरतिचारेणापराद्धास्ताः केवलं त्वत्कारणादेव। अहो धन्यस्त्वं यत्समस्तकामिनीनां त्वमेवावलम्बनम्' इत्याक्षेपो द्योत्यते। गङ्गाधरस्तु– ''स्वभर्तरि विरागं सूचयन्ती कमप्यसती सतीं निजभार्यां बहुमन्यमानं युवानं सवैदग्ध्यानुरागमाह–'' इत्यवतरणं कुर्वन्निदं प्रणयवचनमेवाह।

कस्मिन्नपि प्रणयातिशयं प्रकटयन्ती काचिद्दूतीमाह–

**सर्वस्वेऽपि च दग्धे निर्वृतिरेव हि तथापि हृदयस्य।**
**हस्ताहस्तिकया यत्तेन गृहीतो घटो वसतिदाहे।।२९।।**[२]

---

१. **जं तुज्झ सई जाआ असईओ जं च सुहअ अह्मे वि।**
**ता किं फुट्टउ वीअं तुज्झ समाणो जुआ णत्थि।।२८।।**
[यत्तव सती जाया असत्यो यच्च सुभग वयमपि।
तत्किं स्फुटतु बीजं तव समानो युवा नास्ति।।]

२. **सव्वस्सम्मि वि दड्ढे तहवि हु हिअअस्स णिव्वुदि च्चेअ।**
**जं तेण गामडाहे हत्थाहत्थिं कुडो गहिओ।।२९।।**
[सर्वस्वेऽपि दग्धे तथापि खलु हृदयस्य निर्वृतिरेव।
यत्तेन ग्रामदाहे हस्ताहस्तिकया कुटो गृहीतः।।]

निर्वृतिरनुपमसुखम्। वसतिदाहे ग्रामदाहे यत्तेन मत्प्रेममात्रेण हस्ताहस्तिकया मम हस्तान्निजहस्तेन घटो गृहीतः एतावन्मात्रेणापि ममालौकिकं सुखमित्यर्थः। तत्करस्पर्शस्य कृते सर्वस्वनाशमपि न किञ्चिद्गणयन्त्या मे कियांस्तस्मिन्ननुराग इति त्वमेवानुमिनुहीति दूतीं सूचयन्त्यानिजप्रणयो ध्वनितः। हर्षाख्यः सञ्चारी द्योत्यत इति सरस्वतीकण्ठाभरणम्।

गुरुजनसविधे गृहकर्मव्यापृता काचिदसती दूतीसमानीतकामुकसमागमवृत्तमाकर्ण्य तत्रासमर्थतामन्यापदेशेनाह–

**कुब्जोपि जायतां किल निःशाखो गलितपल्लवो विपिने।**

**मा मानुषे तु लोके त्यागी रसिको दरिद्रश्च।।३०।।**[१]

वनोद्देशे पत्रशाखारहितः कुब्जो मध्यकुटिलो लघुवृक्षक एव कामं जायताम्, परं त्यागी दानशीलः, रसिकः सानुरागः शृङ्गारी च जनो दरिद्रो निर्धनः अवसररहितश्च लोके मा जायतामित्यर्थः। वने कदाचिदेवावश्यकतायां कुब्जवृक्षः काष्ठादिद्वारा निजोपयोगं समुन्नयेत्, परं जनसमाजे प्रतिक्षणव्यवहारापेक्षायां त्यागिनो रसिकजनस्य दरिद्रा वस्थायां को वा जीवनोपयोग इत्याकूतम्। तथा च तं प्रति सानुरागाया अपि अवसरदरिद्राया मे तदसमागमनिमित्तं महदुःखमिति दूतीं प्रत्यभिव्यज्यते। 'जाएज्ज' इत्यस्य जायतामिति छाया गङ्गाधरानुरोधेन। वस्तुतो 'जायेय' इत्येवोचिता प्रतीयते।

उपपतिं प्रति गाढानुरागं सूचयन्तीं काचितन्मित्रमाह–

**तस्य च सौभाग्यगुणं मम साहसमेतदमहिलासदृशम्।**

**बोधति गोदापूरो वर्षासमयोऽर्द्धरात्रश्च।।३१।।**[२]

---

१. **जाएज्ज वणुद्देसे कुज्जो वि हु णीसहो झडिअपत्तो।**
**मा माणुसम्मि लोए ताई रसिओ दरिद्दो अ।।३०।।**
[जायतां वनोद्देशे कुब्जोऽपि खलु निःशाखः शिथिलपत्रः।
मा मानुषे लोके त्यागी रसिको दरिद्रश्च।।]

२. **तस्स अ सोहग्गगुणं अमहिलसरिसं च साहसं मज्झ।**
**जाणइ गोलाऊरो वासारत्तोद्धरत्तो अ।।३१।।**
[तस्य च सौभाग्यगुणममहिलासदृशं च साहसं मम।
जानाति गोदापूरो वर्षारात्रार्धरात्रश्च।।]

अमहिलासदृशं स्वभावभीरुषु वनितास्वप्राप्यम्। मामन्तरा न काचिदपि रामा एतद्विधातुं समर्थेति भावः। एतदिति स्ववर्णितस्य विश्वासार्थमिति बोध्यम्। एतन्मम साहसं वर्षासमयार्द्धरात्रे गोदावरीतरणं कृत्वा तदभिसरणरूपम्। बोधति जानाति। तस्यैतावत्सौभाग्यं यत्तदर्थमहं वर्षासु वेगवाहिनीं गोदावरीमन्धकारितदिगन्तेऽर्द्धरात्रेप्युत्तरामीति भावः। तथा चावयोर्मिथोनुरागवृत्तं न कोऽपि मानुषो जानातीति निभृतमभिव्यज्यते। अत्र वर्षासमय इति निगुम्फनं पुनरुक्तिपरिहारार्थम्। यदि तु मूलानुरोधस्तर्हि– 'वर्षारात्रोऽर्द्धरात्रश्च' इति पाठ्यम्। वर्षारात्रोऽर्द्धरात्र इति द्विःपाठेन 'तदभिसरणे रात्र्यर्द्धं व्यतीतम्, कदाचित्कदाचित्समग्रा रात्रिरेव व्यतीतेति सूचनेन नायकेऽनुरागा–तिशयो ध्वन्यते।

कथमधुना प्रेमचर्या परित्यक्तेति केनचित्कामुकेन साकूतमुक कता कुलटा तं प्रति सखेदमाह–

**ते व्यतिगता वयस्याः कुञ्जास्ते स्थाणुमात्रपरिशेषाः।**
**बत वयमपि गतवयसो मूलोच्छेदं गतं प्रेम।।३२।।**[१]

यैः सह तादृशोऽनुराग आसीत्ते वयस्याः समानशीला व्यतिक्रान्ताः, अस्मानतीत्य दूरं गता इत्यर्थः। येषु तैः सह सुरतसुखमनुभूतं तेषां लताभवनानां स्थाणवोऽवशिष्टाः। अस्माकमपि तदनुकूलं वयो व्यतीतम्। अतो हन्ते प्रेम मूलोच्छेदं गतम्, मूलतो नाशं प्राप्तमित्यर्थः। 'ते वयस्याः' इति वयस्यपदेन 'अस्माकं समानवयसस्त एवासन्, नववयोगर्वितस्त्वं तु नास्माकं वयः परिपाककृतां प्रौढतां जानीया इति गूढमात्माभिप्रायो ध्वन्यते। मूलोच्छेद्यमिति तु गङ्गाधरानुमतः पाठः।

गतयौवनामपि सुरताद्यसक्तां काञ्चिदसतीं प्रति परिहासशीलः कश्चिदाह–

**गतवयसां वनितानां स्तनजघननितम्बरूढनखराङ्काः।**
**उद्वसितस्मरवसतेर्मूलविबन्धा इवावलोक्यन्ते।।३३।।**[२]

---

१. **ते वोलिआ वअस्सा ताण कुडङ्गाण थाणुआ सेसा।**
**अह्मे वि गअवआओ मूलुच्छेअं गअं पेम्मम्।।३२।।**
[ते व्यतिक्रान्ता वयस्यास्तेषां कुञ्जानां स्थाणवः शेषाः।
वयमपि गतवयस्का मूलोच्छेद्यं गतं प्रेम।।]

२. **थणजहणणिअम्बोवरि णहरङ्का गअवआणँ वणिआणम्।**
**उव्वसिआणङ्गणिवासमूलबन्ध व्व दीसन्ति।।३३।।**
[स्तनजघननितम्बोपरि नखराङ्का गतवयसां वनितानाम्।
उद्वसितानङ्गनिवासमूलबन्धा इव दृश्यन्ते।।]

स्तनजघननितम्बोपरि जातानि नखक्षातानि, उद्वसिता शून्यीकृता या स्मरवसतिरनङ्ग-निवासस्तस्या मूलबन्धा इव मूलबन्धनचिह्नानीव दृश्यन्त इत्यर्थः। कस्यचन पुरातनगृहस्योपरि-भागः कालान्नश्यति केवलं मूलबन्धनमात्रं यथा दृश्यते तथेति भावः। एवं च स्तनजघननितम्बानां कामकेलिसमुचिता श्रीस्तु गता तत्स्मृतिचिह्नमात्र मेवेदानीमवशिष्यत इति निपुणमभिव्यञ्जितम्।

सर्वेऽपि यूयं तां दृष्ट्वा आगताः। कथयत कीदृक्तस्या रूपमिति नायकेन पृष्टाः सहचरा आहुः-

**तस्या अङ्गे प्रथमं यत्रैव हि यस्य निपतिता दृष्टिः।**
**तत्रैव तस्य मग्ना, सर्वाङ्गं किल न केनचिद्दृष्टम्।।३४।।**[१]

'विनिहिता'दिस्थाने 'निपतिता' इति कथनेन यदृच्छयापि गता दृष्टिर्निबध्यते किं पुनरभिलाषपुरस्सरमित्यङ्गानां लावण्यातिशयो व्यज्यते। तस्मिन्नेवाङ्गे तस्य दृष्टिर्मग्नेत्यत्र 'मग्ना' इति पदेन अधिकालोचनबुध्द्या दृष्टेः स्थिरतया अवशत्वं लक्ष्यते। तेन च लावण्यसिन्धुरिव सा सौन्दर्येणाऽगाधेति ध्वन्यते तदेतन्मच्छायायामाधिक्यम्। सौन्दर्यसिन्धोस्तस्या एकैकाङ्गशो-भादर्शने निश्चलनिलीना दृष्टिर्न सर्वाङ्गशोभादर्शनसमर्थेत्याशयः। एवं चाऽनिर्वचनीयं तस्या लावण्यमिति ध्वनितम्।

प्रवासे विरहवेदनामत्यन्तमनुभूय गृहमागतः प्रियतमासमागमेन सन्तुष्टः कश्चिदाह-

**विरहे विषमिव विषमाऽप्यमृतमयी भवति सङ्गमेऽभ्यधिकम्।**
**किं विधिना सममेव द्वाभ्यामपि निर्मिता दयिता।।३५।।**[२]

वियोगे विषमिव विषमापि जीवितसंशयस्थानमपि संयोगे अत्यन्तममृतमयी जीवनौषधिर्भवति। अतः किं विधात्रा सममेव समभागाभ्यामेव द्वाभ्यां विषामृताभ्यां प्रिया

---

१. **जस्स जहं विअ पढमं तिस्सा अङ्गम्मि णिवडिआ दिट्ठी।**
**तस्स तहिं चेअ ठिआ सव्वङ्गं केण वि ण दिट्ठम्।।३४।।**
[यस्य यत्रैव प्रथमं तस्या अङ्गे निपतिता दृष्टिः।
तस्य तत्रैव स्थिता सर्वाङ्गं केनापि न दृष्टम्।।]

२. **विरहे विसं व विसमा अमअमआ होइ संगमे अहिअम्।**
**किं विहिणा समअं विअ दोहिं वि पिआ विणिम्मिअआ।।३५।।**
[विरहे विषमिव विषमामृतमया भवत सङ्गमेऽधिकम्।
किं विधिना सममेव द्वाभ्यामपि प्रिया विनिर्मिता।।]

निर्मिता? तथा च प्रियैव मे जीवनसर्वस्वम्, इमां विना नाहं जीवितुं समर्थ इति नायकेनाभिव्यज्यते।

नायिकेच्छानुसारं नायकस्य चिरप्रवासं युक्त्या निवारयन्ती वयोऽधिका काचिद्दूती आह–

**सुत चिरमददर्शनेन हि सुष्ठ्वपि रागानुबन्धघटितानि।**
**प्रेमाण्यञ्जलिसलिलानीव गलन्तीह कालेन।।३६।।**[1]

पुत्र! सुष्ठु सम्यक्प्रकारेण। स्नेहानुबन्धेन घटितानि परस्परमचलीकृतान्यपि प्रेमाणि, कालेन यथा हस्तपुटे नीतानि पानीयानि गलन्ति तथा चिरकालमदर्शनेन गलन्ति न्यूनीभवन्तीत्यर्थः। कालविलम्बे सति शनैः शनैः प्रस्रवणेन न्यूनीभवतामञ्जलिजलानां यथा न भवति प्रतीतिस्तथैव चिरकालं यावत्परस्परदर्शनाभावे शनैर्न्यूनीभवन्ति प्रेमाणि नप्रतीयन्त इति भावः। पुत्रेत्यनेन अवञ्चनीयतया हितोपदेश्यत्वं द्योत्यते। तथा च चिरप्रवासेन कदाचित्तस्याः प्रेमबन्धः शिथिलीभवेदिति भयं प्रदर्श्य प्रवासनिवारणं युक्त्या ध्वन्यते। ''चिरप्रवासागतेन भुजङ्गेनोपालब्धा वेश्यामाता भुजङ्गान्तरलग्नाया दुहितुर्दोषं परिहरन्ती आह'' इति गङ्गाधरटीकावतरणम्।

गृहजनसत्तायां कथं मत्समीहितं सेत्स्यतीति संशयानं कञ्चन युवानं प्रत्यायन्ती दूती स्त्रीणां बहुच्छलत्वमाह–

**पतिपुरत एव नीता वृश्चिकदष्टेति जारवैद्यगृहम्।**
**निपुणसखीकरविधृता भुजयुगलान्दोलिनी बाला।।३७।।**[2]

---

१. **अद्दंसणेण पुत्तअ सुट्ठु वि णेहाणुबन्धघडिआइं।**
**हत्थउडपाणिआइँ व कालेण गलन्ति पेम्माइं।।३६।।**
[अदर्शनेन पुत्रक सुष्ठ्वपि स्नेहानुबन्धघटितानि।
हस्तपुटपानीयानीव कालेन गलन्ति प्रेमाणि।।]

२. **पइपुरओ व्विअ णिज्जइ विच्छुअदट्ठेति जारवेज्जघरम्।**
**णिउणसहीकरधारिअ भुअजुअलन्दोलिणी बाला।।३७।।**
[पतिपुरत एव नीयते वृश्चिकदष्टेति जारवैद्यगृहम्।
निपुणसखीकरधृता भुजयुगलान्दोलनशीला बाला।।]

निपुणाभिः रहस्यगोपनचतुराभिः सखीभिः, पीडाविकला माऽसौ पथि खिद्यतामिति करे धृता। विषजनितवेदनाव्याजेन करयुगमितस्ततः प्रक्षिपन्ती बाला। वृश्चिकदष्टेति व्याजेन पत्युरग्रत एव जारवैद्यगृहं नीता। अत्र वर्तमानार्थेन नार्थविशेषपुष्टिरिति 'नीयते' इत्यस्य स्थाने 'नीता' इति भूतकालिकप्रयोगो बन्धानुरोधेन। बालापदेन 'बालाया एव एतावत्पाटवं प्रगल्भायास्तस्यास्तु तत्किं वक्तव्यमित्याकूतमभिव्यज्यते। ततश्च 'पत्युरग्रत एव चेदेवं भवेत्तर्हि अन्यपरिजनस्य का गणनेति मा तल्लाभे सन्दिह्यताम्' इति दूत्या नायकप्रोत्साहनमभिव्यज्यते।

क्षुद्रजनाः प्रयोजनैकमित्राणि भवन्तीति चातुर्येण सूचयन्ती पूर्वसुभगा नववधूसमर्पितप्रणयसर्वस्वं कान्तमन्यापदेशेनाह-

**विक्रीणीते माघे प्रावरणं पामरो हि बलदेन।**
**निर्धूममुर्मुरनिभौ नूनं श्यामास्तनौ पश्यन्।।३८।।**[१]

प्रावरणमुपर्यावरणपटम्। प्रावरणं प्रदाय बलीवर्दं क्रीणातीत्यर्थः। निर्धूममुर्मुरनिभौ सोष्मत्वेन शीतनिवारकत्वान्निर्धूमतुषाग्निसदृशौ। षोडशवार्षिक्याः नववध्वाः स्तनौ पश्यन्। पामरदृष्टौ शीतनिवारकयोः कुचयोर्मुर्मुरसादृश्यमिति ग्राम्यत्वं गुणो न दोषः। 'माघे' इत्यनेन शीतबाहुल्यं सूचितम्। तथा च पामरो यथा सम्प्रति शीतबाधानिवारकौ श्यामास्तनावुपलभ्य दुःसहशीतसङ्कटनिवर्तकतया पूर्वं बहुधा कृतोपकारमपि प्रावरणं परित्यजति, तथा लब्धाभिनववधूकस्य तव पूर्वं दत्तप्रेमसर्वस्वयापि मया किं कार्यम्। परं तदिदं क्षुद्रतासूचकमित्युपालम्भो व्यज्यते। अत्र हीनपात्रनिष्ठा रतिरिति रसाभास इति सरस्वतीकण्ठाभरणम्। परमेतत्प्रौढिवादमात्रम्। अनौचित्यमेव हि आभासताप्रयोजकम्। स्वस्वभावानुसारमापामरमपि सर्वेषां रत्यादिभावानुभावित्वादास्वादस्याऽबाधत्वेन स्यादेव रसः। को वा तत्रानौचित्यप्रसङ्गः? किं च हीनत्वं नाम सापेक्षम्। स्यादस्मद्वर्ण्यानामपि कस्यचिदुच्चपात्रस्यापेक्षया हीनत्वमित्यनवस्था। अतो यत्रानौचित्यं तत्रैव रसाभासता। अनौचित्यं च सहृदयव्यवहारतो ज्ञेयम्। यत्र तेषामनुचितमिति धीः प्रसज्यते तत्रैव तदिति कृतं प्रसक्तानुप्रसक्तेन।

स्वभावरक्तानां काल-वयो-व्यत्ययेऽपि न मानसा भावा विपरिवर्तन्त इति सूचयन्ती काचिदाह-

---

१. **विक्किणइ माहमासम्मि पामरो पाइडिं वइल्लेण।**
**णिद्धूममुम्मुर व्विअ सामलीँअ थणो पडिच्छन्तो।।३८।।**
[विक्रीणीते माघमासे पामरः प्रावरणं बलीवर्देन।
निर्धूममुर्मुरनिभौ श्यामल्याः स्तनौ पश्यन्।।]

**सत्यं भणामि मरणे स्थितास्मि पुण्ये तटे ताप्याः।**

**अद्यापि तत्र कुञ्जे निपतति दृष्टिस्तथैव मम।।३९।।**[१]

मरणे स्थितास्मि, मरणपथसन्निहिता जातास्मीति वार्द्धक्यं सूच्यते। सेयं लोकशैली। तापीनद्याः पवित्रे तटे च स्थितास्मीति देहलीदीपवदुभयत्र सम्बन्धः। अथवा पवित्रे तापीतटे अभिसारार्थं यः कुञ्जस्तत्रेत्यग्रतनेन सम्बन्धः। तत्र, यत्र बहुवारमभिसारो विहितस्तस्मिन्कुञ्जे। यथा पूर्वमनुरागोन्मादादभिसारोत्सुका पतति स्म, तथैव। कथयतो जनस्य भणामीत्युक्तेर्बाधितत्वेन 'सत्यं विश्वासं जनयामि' इति लक्ष्यते। तथा च त्वां सत्यमात्मानुभवं कथयामीत्यात्मनो विश्वसनीयवाक्यत्वं द्योत्यते। एवं चास्मिन् समयेऽपि बहुसमये व्यतीतेऽपि न मे पूर्वभावापमार्जनमिति मञ्जिष्ठारागशालिनां न कदाचिद्भावेषु परिवर्तनं भवतीति रसिकचेतः स्थेमता ध्वन्यते। "स्त्रीषु कदापि विश्वासो न कर्तव्य इति बन्धुजनशिक्षार्थं काचिदाह" इति गङ्गाधरावतरणम्।

कापि कुलयोषित्कुलटाजनप्रलोभितं भर्तारमुद्दिश्य सखीजनमाह–

**अन्धकरबदरभाजनमिव मम लुण्ठन्ति मातरो दयितम्।**

**ईर्ष्यन्ति मह्यमेव च लाङ्गूलेभ्यः फणो जातः।।४०।।**[२]

हे मातरः! एतेन सखीनां वयः प्रौढिरात्महितेच्छुकत्वं च सूच्यते। तेन च मामस्मात्सङ्कटात्परित्रास्यध्वे इति कारुण्यमभिव्यज्यते। अन्धकरस्थितं बदरफलपात्रमिव मम दयितं लुण्ठन्ति आच्छिन्दन्ति चौर्येणाभिसरन्तीत्यर्थः। अथ मह्यमेव च ईर्ष्यन्ति, मम प्रियतमोपाश्रयणान्मत्तो विनययोग्यतायामपि मया सहैव ईर्ष्यां कुर्वन्तीति भावः। अतो लाङ्गूलेभ्यः पुच्छेभ्यः

---

१. **सच्चं भणामि मरणे ट्ठिअह्मि पुण्णे तडम्मि तावीए।**
**अज्ज वि तत्थ कुडङ्गे णिवडइ दिट्ठी तह च्चेअ।।३९।।**
[सत्यं भणामि मरणे स्थितास्मि पुण्ये तटे ताप्याः।
अद्यापि तत्र निकुञ्जे निपतति दृष्टिस्तथैव।।]

२. **अन्धअरबोरपत्तं व माउआ मह पइं विलुम्पन्ति।**
**ईसाअन्ति महं विअ छेप्पाहिन्तो फणो जाओ।।४०।।**
[अन्धकरबदरपात्रमिव मातरो मम पतिं विलुम्पन्ति।
ईर्ष्यन्ति मह्यमेव लाङ्गूलेभ्यः फणो जातः।।]

फणो जातः। यद्धि पुच्छं पश्चाद्भावित्वेन निगूहनयोग्यं तदेव अग्रस्थानमासाद्य फणारूपेण दंशकमभवदित्यर्थः। लौकिकमाभाणकं चेदम्। अन्धकरे स्थितमित्यनेन सखीबुद्ध्या न ताभ्यो मया प्रियतमः पूर्वमवेक्षित इत्यात्मनो विश्वासवशादनवहितत्वं द्योत्यते। बदरपात्रमिवेत्युपमया 'अतिसमर्घं बदरपात्रं यथा हेलया लोका आच्छिन्दन्ति, तथा असतीनां कृते अतिसुलभोऽभून्मे भर्ता' इत्यभिव्यज्यते। बदरभाजनमिति 'भाजन' पदेन बदरफलानामुपरित्वचि सुमसृणतया उन्मुक्तपात्रस्थितानां तेषामन्धहस्तान्निभृतमपसारणे न भवति प्रतीतिरिति सूच्यते। तेन च सरलानुरक्तहृदयो मे प्रियतमः सहजमेव प्रलोभ्य इति ध्वन्यते। विलुम्पन्तीति मूलपदेन दयितस्यैकान्तवशीकरणं सूच्यते। तेन च 'मत्तः सर्वथा तमाच्छिन्दन्ति' इति द्योत्यते। संस्कृते तु तथाशैल्यभावालुण्ठन्तीति प्रायुज्यत। तथा च कृतविश्वासाया मम व्यलीकमनुष्ठायापि मयैव सहेर्ष्यां कुर्वतीनामासामसतीनां प्रलोभनाद्दयितं विमोच्याहं रक्षणीयेति सखीः प्रत्यभिव्यज्यते।

कस्याश्चित्स्वल्पद्रव्यसाध्यतां सूचयितुं क्षुद्राणामल्पलाभेन गर्वशालितां नायकं प्रति प्रतिपादयति दूती–

**हलिकस्नुषा हि लब्ध्वा नवनवरङ्गकमलभ्यलाभमिदम्।**
**पश्यत न माति बृहतीष्वपि तन्वी ग्रामरथ्यासु।।४१।।**[1]

न लभ्यो लाभो यस्य तत्, पूर्वं कदापि न प्राप्तमित्यर्थः। अप्राप्ता प्राप्तिर्यस्येति मूले। नवरङ्गकं कुसुम्भवस्त्रं नवं च तत् नवरङ्गकं च नवनवरङ्गकम् लब्ध्वा। स्वभावतस्तन्वी अपि विस्तीर्णास्वपि ग्रामरथ्यासु न माति इति पश्यत। इदमिति प्रत्यक्षप्रदर्शनेन स्ववचसो विश्वसनीयत्वं व्यज्यते। ग्रामरथ्यास्वित्यनेन हर्षातिशयाल्लोकानां पुरतो भ्रमणेन तत्प्रदर्शनोत्साहो ध्वन्यते। रथ्यास्विति बहुवचनेन ग्रामस्य सर्वरथ्यास्था लोकाः पश्यन्तित्वति बुद्ध्या बहुरथ्याभ्रमणेन तदतिशयो द्योत्यते। स्नुषापदेन नवयौवनचाञ्चल्यसुलभो हर्षप्रकाशनरभसो व्यज्यते। एवं च ग्रामरथ्यास्वपि न मातीत्यतिशयोक्त्या असाधारणहर्षातिशयसहकृतो गर्वोऽभिव्यज्यते।

प्रियप्रत्यक्षदृष्टमप्यपराधं वाक्चातुर्येणापनीतवतीं सखीं काचित्ससन्तोषबहुमानमाह–

---

१. **अप्पत्तपत्तअं पाविऊण णवरङ्गअं हलिअसोण्हा।**
**उअह तणुई ण माअइ रुन्दासु वि गामरच्छासु।।४१।।**
[अप्राप्तप्राप्तं प्राप्य नवरङ्गकं हलिकस्नुषा।
पश्यत तन्वी न माति विस्तीर्णास्वपि ग्रामरथ्यासु।।]

**वाक्क्षेपकाणि परहृन्निर्वृतिदानि प्रियाणि गदितानि।**
**विरलो जानाति जनो ह्युत्पन्ने जल्पितव्यानि।।४२।।**[१]

वाक्क्षेपकाणि प्रतिवादिवचनास्कन्दकानि। सम्प्रत्ययजननात्परहृदयस्य निर्वृतिदायकानि सन्तोषकराणि। उत्पन्ने अपराधादौ जल्पितव्यानि, प्रियाणि गदितानि (प्रियवचनानि) विरलो जनो जानातीत्यर्थः। प्रत्यक्षमुत्पन्नमपराधं वीक्ष्यं सन्दिहानस्य भर्तुर्वचनान्यभिभूय मधुरवचनकौशलेन त्वयैव तत्सन्तोष उत्पादित इति त्वमसाधारणासीत्याशयः।

नायकस्यानीप्सितामपि गृहीतमानां सखीं बोधयितुं सखी आह–

**ललितं प्रभोः प्रियाया मानो भाति क्षमा समर्थस्य।**
**भणितं च जानतः किल मौनं चाजानतो नूनम्।।४३।।**[२]

प्रभोः समर्थस्य स्वामिनो ललितं स्वेच्छाक्रीडितं भाति शोभते। प्रियाया मानः शोभते न तु अमनोनीततया अप्रियायाः। एवं भातीति सर्वत्र योज्यम्। अनेन च दीपकेन 'अप्रियायास्तव मानो दयितस्य कोपोद्दीपक एव भवेदतो न त्वया मानः कार्यः' इति सखीं प्रत्यभिव्यज्यते।

मदनलेखेन प्रियं प्रत्यात्मवेदनां सूचयेति सख्योक्त्या दर्शनश्रवणादिना प्रथममेव प्ररूढनायकरागा काचिदाह–

**कम्प्रस्विन्नकराङ्गुलिपरिग्रहस्खलितलेखनीमार्गे।**
**स्वस्त्येव पूर्यते नो प्रियसखि लेखे लिखामः किम्।।४४।।**[३]

---

१. **आक्खेवआइँ पिअजम्पिआइँ परहिअअणिव्वुदिअराइं।**
**विरलो खु जाणइ जणो उप्पण्णे जम्पिअव्वाइं।।४२।।**
[वाक्क्षेपकाणि प्रियजल्पितानि परहृदयनिर्वृतिकराणि।
विरलः खलु जानाति जन उत्पन्ने जल्पितव्यानि।।]

२. **छज्जइ पहुस्स ललिअं पिआइ माणो खमा समत्थस्स।**
**जाणन्तस्स अ भणिअं मोणं च अआणमाणस्स।।४३।।**
[शोभते प्रभोर्ललितं प्रियाया मानः क्षमा समर्थस्य।
जानतश्च भणितं मौनं चाजानतः।।]

३. **वेविरसिण्णकरङ्गुलिपरिग्गहक्खसिअलेहणीमग्गे।**
**सोत्थि व्विअ ण समप्पइ पिअसहि लेहम्मि किं लिहिमो।।४४।।**
[वेपनशीलस्विन्नकराङ्गुलिपरिग्रहस्खलितलेखनीमार्गे।
स्वस्त्येव न समाप्यते प्रियसखि लेखे किं लिखामः।।]

कम्पमानाः स्वेदयुक्ताश्च याः कराङ्गुलयस्ताभिः परिग्रहणेन स्खलिता विस्रस्ता या लेखनी तस्याः मार्गे। स्वस्तीति प्रारम्भिकवर्णद्वयमेव न समाप्यते, आत्मवेदानादिकमन्यत् लेखे किं लिखाम इत्यर्थः। प्रियस्मरणेनाङ्गुलीषु कम्पस्वेदोदयात्तथाविधाङ्गुलिमध्यान्मुहुर्विगलिताया लेखन्या लेखे स्वस्तिमात्रमपि लेखितुं न पारयामि किमन्यदिति भावः। स्मरणमात्रेण कम्पस्वेदादिसात्त्विकभावोदयान्नायकं प्रति निरतिशयः प्रणयोऽभिव्यज्यते। एतद्व्याख्याने 'स्विन्नाभिरङ्गुलिभिः परिग्रहेण स्खलिते लेखनीमार्गे स्वस्तीति न पूर्यते' इति गङ्गाधरोक्तिर्विचारणीयैव। स्विन्नाङ्गुलिद्वारा ग्रहणेन लेखनी स्खलति न पुनर्लेखनीमार्गः। किञ्च 'मदनलेखं लिखेति सख्योक्ता प्रोषितभर्तृका आह' इत्यवतरणमपि नवीनमेव। पूर्वानुराग एव अप्राप्तनायकसमागमाया नायिकायाः शाकुन्तलादौ मदनलेखो दृष्टो न पुनः शतशः प्रियोपभुक्तायाः प्रोषितभर्तृकायाः। अत एव 'विप्रलम्भपरीष्टिषु लेखविधानेन प्रेमपरीक्षा' इत्यादिना पूर्वानुरागे लेखद्वारा नायिकायाः प्रेमावेदनप्रसङ्ग एवोदाहृता सेयं गाथा सरस्वतीकण्ठाभरण इति दिक्।

कार्यस्यानिष्पत्तौ स्वदोषमपनयन्ती दूती नायिकामाह–

**दैवे प्रतीहि विमुखे घटितमपि च हन्त विघटते पुंसाम्।**
**कार्यं कथमपि बन्धं नैति यथा बालुकावरणः।।४५।।**[१]

दैवे पराङ्मुखे सति नराणां घटितमपि कार्यं हन्त विघटते नश्यति, इति प्रतीहि विश्वसिहि। तत्र निदर्शनमाह– यथा वालुकावरणः वालुकाभिः कृतः प्रकारः कथमपि बन्धं नैति, तथा कार्यं कथमपि बन्धं नैति, सिध्द्यनुकूलं मार्गं नानुगच्छतीत्याशयः। तथा च दैवप्रातिकूल्यादेव कार्यं विघटितं न पुनर्मम कौशले काचित्त्रुटिरिति स्वस्यापाटवशङ्कापनयनमभिव्यज्यते। अत्र 'बन्धमेव न ददाति' इति च्छाया, तस्याश्च 'घटयितुमेव न शक्यते' इति गङ्गाधरकृता टीका च विचारणीयैव। 'एइ' इत्यस्य 'ददाति' इति च्छाया न स्यात्, नापि च 'देइ' इति कुहचित्पाठोऽवलोकितः।

रहस्यप्रविष्टया मातुलान्या सह नदीस्नानार्थं गतप्रत्यागत काचित्तत्रावलोकिते नायके निजमनः प्रसक्तिमाह–

---

१. **देव्वम्मि पराहुत्ते पत्तिअ घडिअं पि विहडइ णराणम्।**
**कज्जं वालुअवरणं व्व कहँ वि बन्धं विअ ण एइ।।४५।।**
[दैवे पराङ्मुखे प्रतीहि घटितमपि विघटते नराणाम्।
कार्यं वालुकावरण इव कथमपि बन्धमेव न ददाति।।]

**यूना तेन निपीतं मज्जन्त्या मातुलानि हृदयमिव।**

**स्नानहरिद्राकटुकं पिबता किल जलमनुस्त्रोतः।।४६।।**[१]

हे मातुलानि! मज्जन्त्याः स्नात्या मम स्नानहरिद्राकटुकम्। स्नानसमये उद्वर्तनार्थं प्रयुक्तया हरिद्रया कटुकं जलम्। अनुस्रतः जलप्रवाहानुगतं यथा स्यात्तथा। प्रवाहागतहरिद्राजलपाने नान्यलोकानां प्रेम प्रतीतं स्यादिति तथाकरणेन नायकनैपुण्यं सूच्यते। मय्यनुरक्ततया मदङ्गसङ्ग-बहुमानात्पिबता तेन यूना मम हृदयमिव पीतम्। तल्लावण्यदर्शनेन पूर्वमेव विवशीकृताया मम उद्वर्तनहरिद्राजलपानान्मयि प्रणयप्रकटनात्तेन हृदयमपहृतमिति भावः। प्रथमानुरागे लावण्य-दर्शनेन स्नेहदर्शनेन चेत्युभयथा प्रेमप्रसक्तिराख्यायते, तत्र परस्योदाहरणमिति सरस्वतीकण्ठा-भरणम्। अनेन ''मातुलान्यापूर्वकथितसौन्दर्यादिगुणस्य'' इति गङ्गाधरावतरणोक्तमपास्तम्। हृदयमिव पीतमित्युत्प्रेक्षया 'मम हृदयमिदानीं तदायत्तं तथा च तत्प्राप्त्यैव मम जीवनमतस्तदु-पलम्भाय त्वरितं प्रयत्यताम्' इति ध्वन्यते।

कृतमानां नायिकां दाक्षिण्येनानुनयन्कान्त आह-

**जीवितमशाश्वतं किल न च यौवनमपि निवर्ततेऽतीतम्।**

**दिवसा दिवसैर्न समा भवन्ति, किं निष्ठुरो लोकः।।४७।।**[२]

जीवितमस्थिरमिति 'किल' निश्चय एव। अतिक्रान्तं यौवनमपि न पुनरावर्तते। यौवनेऽ-नुभवनीयानि सुखानि पुनरग्रे दुर्लभानि भवेयुरिति निभृतं सूच्यते। दिवसा अपि समाना न भवन्ति। अग्रे सन्तानोत्पत्त्यादिना एषु दिनेष्विव भोगस्वच्छन्दता स्यान्न वेति द्योत्यते। एवं स्थितावपि लोकः किमिति सुखोपभागोदिकर्मणि निष्ठुरः, इति न प्रतीयत इत्यर्थः। एवं च 'याचमानस्य मे प्रार्थनया प्रसादानुगुणमाचर, मा किल रोषपरुषतया अग्रे स्मरणीयसुदुर्लभसुखा-

---

१. **मामि हिअअं व पीअं तेण जुआणेण मज्जमाणाए।**
**ण्हाणहलिद्दाकडुअं अणुसोत्तजलं पिअन्तेण।।४६।।**
[मातुलानि हृदयमिव पीतं तेन यूना मज्जन्त्याः।
स्नानहरिद्राकटुकमनुस्रोतोजलं पिबता।।]

२. **जिविअं असासअं विअ ण णिवत्तइ जोव्वणं अतिक्कन्तम्।**
**दिअहा दिअहेहिँ समा ण होन्ति किं णिट्ठुरो लोओ।।४७।।**
[जीवितमशाश्वतमेव न निवर्तते यौवनमतिक्रान्तम्।
दिवसा दिवसैः समा न भवन्ति किं निष्ठुरो लोकः।।]

नुभवादात्मानं च सहचरं च वञ्चय' इत्यभिव्यज्यते। 'कृतकलहयोर्दम्पत्योः प्रणयारोषभङ्गार्थं सखी आह' इति गङ्गाधरावतरणम्।

पारदारिकविनियुज्यमानविभवं प्रियतमं काचिदसहमानतया सासूयमाह–

**अर्जितविभवानामपि खल एव हि भाजनं खलानां स्यात्।**
**निम्बफलानि विपक्वान्यपि काकैरेव खाद्यन्ते।।४८।।**[१]

उपार्जितं द्रव्यं यैस्तेषामपि खलानां भाजनं दानपात्रं खल एव स्यात्। मूले 'उपार्जित-द्रव्याणां खलानां भाजनं कः?' खल एवेति प्रश्नोत्तररूपमिव, इह तु सरलमेवेति बोध्यम्। विपक्वान्यपीत्यपिना 'पक्वान्येव फलानि न सुजनोपयोगीनि तदा अपक्वानां तु का कथा, तथा च 'धनार्जने सत्यपि नास्मदादीनां तत्कृतं सौख्यं तदभावे तु किं वाच्यम्' इति दयितं प्रति गूढमाक्षेपोऽभिव्यज्यते।

कस्याश्चिद् गृहवृत्तान्तमवलोक्य निजस्येङ्गितज्ञतां सूचयन्नागरिकः सुहृदमाह–

**अद्य मया गन्तव्यं घनान्धकारेऽपि तस्य सुभगस्य।**
**आर्या निमीलिताक्षी पदपरिपाटीं गृहे कुरुते।।४९।।**[२]

तस्य सुभगस्य सविधे इत्यर्थः। पदपरिपाटीं पादपरिचारणम्। अद्य मया गन्तव्यमित्य-नेन अनभ्यस्ततमःसञ्चारा भाविकृष्णाभिसारिका सेयम्। अद्यैव निशि गन्तव्यं यतः स 'सुभगः', प्रियाप्रणयावलम्बनतया सौभाग्यशालीति न विलम्बावसरः। अत एव स्वल्पसमय एवाभ्याससिध्यर्थं गृहे पदपरिपाटीकरणम्, एवं च नायिकाया मौग्ध्यमभिव्यज्यते। परिपाटीपदेन 'तमसि गमने उच्चावचपदनिक्षेपेण भूषणध्वनिसम्भवान्माभूत्प्रकटता' इति पदन्यासपाटवाभ्यासे सावधानता ध्वन्यते। आर्या उत्तममहिला। तथा च कौलीन्यभयेनाभिसारनिह्नवार्थमतिसतर्कता-

---

१. **उप्पाइअदव्वाणँ वि खलाणँ को भाअणं खलो च्चेअ।**
**पक्काइँ वि णिम्बफलाइँ णवरँ काएहिँ खज्जन्ति।।४८।।**
[उत्पादितद्रव्याणामपि खलानां को भाजनं खल एव।
पक्वान्यपि निम्बफलानि केवलं काकैः खाद्यन्ते।।]

२. **अज्ज मए गन्तव्वं घणन्धआरे वि तस्स सुहअस्स।**
**अज्जा णिमीलिअच्छी पअपरिवाडिं घरे कुणइ।।४९।।**
[अद्य मया गन्तव्यं घनान्धकारेऽपि तस्य सुभगस्य।
आर्या निमीलिताक्षी पदपरिपाटीं गृहे करोति।।]

भिव्यज्यते। स्मरणादिना उद्दीपका माया नायिकायाः प्रियतमानुरागसूचकोऽभिसरणचेष्टानुभावो-ऽयमिति सरस्वतीकण्ठाभरणम्। अयत्नोपलब्धं आर्याच्छन्दः सिद्धिकृतो मुद्रालङ्कारोऽपि नात्र विस्मार्यः। 'नायिकानुरागं प्रकाशयन्त्या दूत्याः कामुकं प्रत्युक्तिरियमिति केचित्' इति गङ्गाधरटीका।

कुपितान्नायकाद्व्यलीकशङ्कया तमनभिसरन्तीं नायिकां काचिद्विदग्धा दूती सुजनचर्या-माह-

**कुप्यत्येव न सुजनो यदि कुप्यति विप्रियं न चिन्तयति।**
**यदि चिन्तयति न जल्पति यदि जल्पति लज्जितो भवति।।५०।।**[१]

यदि विप्रियं चिन्तयति तथापि मुखान्न कथयति, अहमस्यैवमेवं करिष्यामीति विकत्थनस्य सुजनचर्याविप्रतीपत्वात्, फलोदयात्पूर्वं कार्यप्रकटनस्य नीतिबाह्यत्वाच्च। अथवा 'कृते प्रतिकृतन्यायेन विप्रियमस्य शिक्षार्थं कर्तव्यमेव, पुनर्जनसमक्षं किमित्येनमानमयामीति चिन्तयन्न जल्पतीति भावः। तेन सुजनस्य विचारगाम्भीर्यमभिव्यज्यते। यदि जल्पति रोषावेशव-शान्मुखान्निः सारयति, तर्हि रोषापगमे निजस्खलितमनुसन्धाय 'स्वयमपि तु जिह्रेति विबुधः'। ''कृतविप्रियं प्रति प्रतिकूलाचरणप्रवृत्तस्य कस्यचिन्निवारणाय कश्चित्सुजनचरित्रं वर्णयति'' इति गङ्गाधरः।

'रूपमात्रसारां तां किं बहु मन्यसे' इति सपत्नीमभिभूय निजगुणगणगौरवमभि-व्यञ्जयन्ती काचित्कान्तमाह-

**सोऽर्थो यो निजहस्ते तन्मित्रं यन्निरन्तरं व्यसने।**
**तद्रूपं यत्र गुणास्तद्विज्ञानं च यत्र धर्मः स्यात्।।५१।।**[२]

---

१. **सुअणो ण कुप्पइ व्विअ अह कुप्पइ विप्पिअं ण चिन्तेइ।**
**अह चिन्तेइ ण जम्पइ अह जम्पइ लज्जिओ होई।।५०।।**
[सुजनो न कुप्यत्येव अथ कुप्यति विप्रियं न चिन्तयति।
अथ चिन्तयति न जल्पति अथ जल्पति अथ जल्पति लज्जितो भवति।।]

१. **सो अत्थो जो हत्थे तं मित्तं जं णिरन्तरं वसणे।**
**तं रूअं जत्थ गुणा तं विण्णाणं जहिं धम्मो।।५१।।**
[सोऽर्थो यो हस्ते तन्मिन्त्रं यन्निरन्तरं व्यसने।
तद्रूपं यत्र गुणास्तद्विज्ञानं यत्र धर्मः।।]

अर्थो धनम्। व्यसने विपदि यन्निरन्तरम् आन्तर्येण व्यवधानेन शून्यं स्यात्। तच्च शरीरद्वारा मनोद्वारेति द्विधा। तथा च अव्यवधनेन सहचरं मनसा प्रणवं च यत्तन्मित्रमित्यर्थः। विज्ञानं लोकशास्त्रादिषु बहुज्ञता। एवं च केवलं बाह्यसौन्दर्यशालिनीमत एव रूपगर्वेण त्वयि तथा नानुरज्यन्तीं तां किं मुधाऽनुवर्तसे हृदयेन त्वदनुवर्तनादिगुणसम्पन्नां बहु मन्यस्व मामित्यभिव्यज्यते। अन्योक्तिविधया एतदनुहारि रुचिरमाह आचार्यगोवर्द्धनः-

'इह रूपमात्रसारे चित्रकृते कनककह्लारे। न रसो नापि च गन्धो मधुकरबन्धो मुधा भ्रमसि।।' ''भाविधनप्रत्याशया भुजङ्गे कृतानुरागां दुहितरं वारयन्ती वेश्यामाता धनादीनामुपादेयताप्रयोजकमाह'' इति गङ्गाधरटीकावतरणम्।

'प्रवासे कथमिव व्यत्येति स्म रजनिः' इति निशि विश्रम्भालापेषु प्रिययाऽनुयुक्तश्चिरप्रवासादागतः प्रियतमस्तामाह-

**चन्द्रमुखि चन्द्रधवला दीर्घा दीर्घाक्षि तव विरहे।**
**कथमपि गमिता रजनी शतयामेव हि चतुर्यामा।।५२।।**[१]

चन्द्रमुखीति सम्बोधनेन चन्द्रेणाऽवदातायां रात्रौ चन्द्रमालोक्य त्वन्मुखं स्मृतमिति विरहे शतगुणितवेदनाधिक्यमभिव्यज्यते। पूर्वार्द्धे दीर्घेति कथितेऽपि पुनः 'चतुर्यामायामिनी शतयामेव कथमपि गमिता' इत्यनेन 'अधिकादधिकं रात्रेश्चत्वारः प्रहरा भवन्ति परमद्य किं शतं प्रहरा जाताः?' इत्येवमविनिद्रं रात्र्यवसानप्रतीक्षया रजनीदैर्घ्यातिशयप्रतीतेर्नायकस्य वेदनातिशयो ध्वन्यते। कथमपीत्यनेन 'जीवितविरामात्पूर्वं नासीन्निशावसानसम्भावना, परं यथाकथञ्चिन्नीता' इति कष्टातिशयो ध्वन्यते। अतिक्रान्तेति परिवर्ते गमितेति ण्यन्तप्रयोगेण 'क्षणदापि मदर्थमक्षणदा वैरिणी रात्रिः किं स्वेच्छया गता? बलान्मया कथञ्चिद् गमितेति विरहिणोऽसहनताऽतिशयो व्यज्यते। यदि तु प्रकृतिनियमानुसारं रात्रिः कथमपि गतेति मूलानुरोधस्तर्हि 'याता' इति पाठो बोध्यः। चतुर्यामा शतयामेव गतेत्युत्प्रेक्षया 'त्वद्विरहे रात्रेश्चत्वारो यामाः शतं जाताः' इति विरोधालङ्कारध्वनिरपि स्वत उपतिष्ठते। चन्द्रमुखि चन्द्रधवला, दीर्घा दीर्घाक्षीत्यादिरनुप्रासस्तु स्वयं वाचमनुधावतीति किं तत्र समीक्षापेक्षया।

यथेष्टधनालाभेनापरितुष्टायाः कस्याश्चन दूत्याः परिवादपैशुन्यमभिव्यञ्जन्ती सखी खलचरितमाह-

---

१. **चन्दमुहि चन्दधवला दीहा दीहच्छि तुह विओअम्मि।**
**चउजामा सअजाम व्व जामिणी कहँ वि वोलीणा।।५२।।**
[चन्द्रमुखि चन्द्रधवला दीर्घा दीर्घाक्षि तव वियोगे।
चतुर्यामा शतयामेव यामिनी कथमप्यतिक्रान्ता।।]

**अकुलीनोऽथ द्विमुखस्तावन्मधुरोऽन्नमानने यावत्।**
**जीर्णेऽन्ने तु मुरज इव पिशुनो बत विरसमारसति।।५३।।**[1]

अकुलीनः असत्कुलजातः। समक्षपरोक्षयोवर्चनभेदेन द्विजिह्वितया द्विमुखः। पिशुनः खलो मुरज इव मृदङ्ग इव तावन्मधुरो यावन्मुखे अन्नं भोजनं भवति। मृदङ्गसादृश्येन– चूर्णलिप्तमुखत्वे मृदङ्गे ह्यन्यवाद्यान्यभिभूयापि यथा मधुरं रसति, तथैव भोजनादिसन्तुष्टः खलस्तदवस्थायामन्यलोकापेक्षयाऽधिकप्रशंसाचाटुकृद्भवतीति स्वार्थमात्रमैत्रीरूपा क्षुद्रता व्यज्यते। भोजने जीर्णे तु विरसमप्रियम् आरसति जल्पति, निन्दतीत्यर्थः। एवम्, अकुलीनः कौ पृथिव्यां न लीनः, मृदङ्गस्य बन्धुरत्वेन आलवालीकृतवस्त्रोपर्यवस्थापनात्। द्विमुख उभयमुखः, उभयतो वाद्यढक्कासत्त्वात्। एवंविधो मुरजोऽपि यावन्मुखेऽन्नं पिष्टलेपो भवति तावदेव मधुरो नादेन श्रुतिसुखावहो भवति। पिष्टलेपे जीर्णे शुष्कतया समाहरणोचिते तु विरसं नीरसं रूक्षं यथा स्यात्तथा आरसतीत्यर्थः। आनने यावदन्नं तावन्मधुर इत्यत्र आन इति सप्तम्या 'अन्नाननसम्बन्धे सत्येव अर्थात् भुञ्जानदशायामेव स चाटूनि कुरुते' इत्यर्थसूचनेन मुरजोपमानस्य पिशुनस्य अत्यन्तं स्वार्थपरताभिव्यज्यते। अकुलीन इति पदेन 'सत्कुलजाताः न स्वार्थमात्रैक-मित्राणि भवन्ति' इति सूच्यते। मत्कृतच्छायायामन्नपदं मुरजपक्षेऽपि भोजनपदापेक्षया कियदर्थ-समर्पकमिति सहृदयहृदयमेव परीक्षकम्। 'दुर्जनमैत्री न चिरकालस्थायिनीति सखी नायिकां शिक्षयति' इति गङ्गाधरः। किं वा दुर्जनमुखपिण्डदानार्थं कुलटां शिक्षयन्त्याः कुट्टन्या इयमुक्ति-रिति दुर्जनार्थं पिण्डदानव्यवस्थां कुर्वन्नवसरोचितमाह गङ्गाधर इति हृदयेन ब्रूमः।

तटस्थाः पथिका अपि तत्कटाक्षशरविद्धाः परिताम्यन्तीति कस्याश्चिदुपवर्णनया नायकमनः समाकर्षन्ती दूती आह–

**स्नुषया तथाऽवलोकित ईषद्वलिकार्द्धतारकं पथिकः।**
**सुप्तो निभृतमलिन्दे गृहपतिना वारितोऽपि यथा।।५४।।**[2]

---

१. **अउलीणो दोमुहओ ता महुरो भोअणं मुहे जाव।**
**मुरओ व्व खलो जिण्णम्मि भोअणे विरसमारसइ।।५३।।**
[अकुलीनो द्विमुखस्तावन्मधुरो भोजनं मुखे यावत्।
मुरज इव खलो जीर्णे भोजने विरसमारसति।।]

२. **तह सोण्हाइ पुलइओ दरवलिअन्तद्धतारअं पहिओ।**
**जह वारिओ वि घरसामिएण ओलिन्दए वसिओ।।५४।।**
[तथा स्नुषया प्रलोकितो दरवलितार्धतारकं पथिकः।
यथा वारितोऽपि गृहस्वामिना अलिकन्दके सुप्तः।।]

ईषद्वलितार्द्धतारकं विभ्रमवशेन किञ्चिदुच्चलितम् अर्द्धतारकं यस्मिन्दर्शने यथा भवति तथा। तारकाया अक्षिकनीनिकाया अर्द्धमर्द्धतारकम्। कटाक्षपुरस्सरमवलोकनेन नायिकाया अभिलाषो व्यज्यते। अलिन्दे बहिर्द्वारपार्श्वस्थे प्रकोष्ठे। गृहस्वामिनेत्यनेन गृहाधिकारिणो नायिकाश्वशुरस्य सत्तायामपि पथिको नयनशरविद्धतया न निशि निवासलोभं त्युक्तं प्राभवदिति स्नुषावलोकनस्याऽत्यन्तमाकर्षकता सूच्यते। निभृतमित्यनेन निवारणाद् हिर्निष्क्रान्तोऽपि स्नुषावलोकनेनाऽनुमिततदभिलाषस्तत्समागमलालसया पुनरविज्ञातमागत्य सुप्त इति पथिकस्यौत्सुक्यातिशयो ध्वन्यत इति मच्छायायामाधिक्यम्। सुप्त इत्यत्र गृहान्निर्गत्य सङ्गमाशया पुनः परावृत्तस्य शयनं बोधयितुमिष्टमिति शयनेन सकलविज्ञातं तूष्णीं संवेशमात्रं (न तु निद्रा) लक्ष्यते, तेन च नायिकासङ्गमाभिलाषो ध्वन्यत इति विज्ञातमेव विज्ञानाम्। अलिन्दस्य शून्यतासत्तायामपि पथिकलङ्घनपरिश्रान्तस्य पान्थस्य निवासवारणादनुभविता श्वशुरेण प्रतिषिद्धस्य पथिकस्य तरुणत्वं द्योत्यते। अत एव पूर्वमपि कदाचिदवलोकितपरसङ्गमां स्नुषां सकटाक्षमध्वगमवलोकयन्तीं वीक्ष्य स वारित इति नायिकायाः सुसाध्यत्वं ध्वन्यते। तथा चैवंविधविभ्रमवतीं साभिलाषां च किं नानुसरसीति नायकं प्रत्यभिव्यज्यते दूत्या। 'दर्शनमात्रेणैव विदग्धा भावमाविष्कुर्वन्ति लक्षयन्ति चेति दर्शयन्नागरिकः सहचरमाह' इति गङ्गाधरावतरणम्।

न किल सुजनाः स्वमुखेन स्वगुणकीर्तनं प्रशंसन्तीति निजश्लाघनपरं कञ्चन शिक्षयितुं कश्चिद्विदग्धचर्यानिष्णात आह–

**शैलोन्नतमपि पुरुषं लघु विलघयतश्चिराय कार्ये द्वे।**
**निर्वरणमनिर्व्यूढे निर्व्यूढे यच्च निर्वरणम्।।५५।।**[१]

अनिर्व्यूढे अकृते कार्ये निर्वरणं निवेदनम्, आत्मगुणप्रकाशनार्थमिति भावः। निर्व्यूढे कृते च कार्ये आत्मश्लाघार्थं यन्निवेदनम्, एते द्वे अपि कार्ये शैलोन्नतमपि अत्यन्तगुरुकमपि पुरुषं लघु शीघ्रं चिराय चिरकालार्थं लघयतो लघूकुरुतः। लघुशब्दात्तत्करोति तदाचष्ट इति णिच्। अकृतकार्यस्य व्यर्थमेव निवेदनम्, कृते च कार्ये स्वमुखेन नोचितं श्लाघाहेतुकं तत्कथनमित्युभयोः कार्ययोर्लाघवकरत्वमुचितमेवेत्यर्थः। यद्वा असम्पादितनायकसमागमामपि निजकार्यं वर्णयन्तीं दूतीं प्रति नायिकाया उक्तिरियम्।

केनचन यूना सह बद्धभावापि त्वं मत्तस्तदपलापमकार्षीरेतावत्कालम्, परमद्य मया लक्षितासीति सूचयन्ती वयःस्था काचित्काञ्चन सुन्दरीमाह–

---

१. **लहुअन्ति लहुं पुरिसं पव्वअमेत्तं पि दो वि कज्जाइं।**
**णिव्वरणमणिव्वूढे णिव्वूढे जं अ णिव्वरणम्।।५५।।**
[लघयतो लघु पुरुषं पर्वतमात्रमपि द्वे अपि कार्ये।
निर्वरणमनिर्व्यूढे निर्व्यूढे यच्च निर्वरणम्।।]

**द्वारगता कं पश्यसि तुङ्गकुचोत्सङ्गसङ्गिना पुत्रि।**
**उन्नमितकलशनिहितार्घवारिजेनेव वदनेन।।५६।।**[१]

दूरादवलोकनार्थं पूर्वकायस्योन्नामितत्वात् लोकेभ्यो दर्शनव्यग्रतागोपनार्थं मुखस्य क्षणमवनामितत्वाच्च तुङ्गस्तनोपरि स्थितेन। अत एव उन्नामितयोः कलशयोरुपरि निवेशितेन अर्घवारिजेनेव अर्घकमलेनेव मुखेन हे पुत्रि द्वारस्थिता सती कं प्रलोकयसि। यदि न तव केनापि सह मैत्री तर्हि उत्कण्ठाधिक्यवर्द्धितप्रश्वासतया दूरविलोकनतत्परतया चोन्नतकुच-पूर्वकाया लोकेभ्यो मार्गदर्शनव्यग्रतानिह्नवार्थमवनमितमुखी च द्वारि स्थिता कं वीक्षसे? द्वारस्थित्या च त्वं सुखसाध्यतया प्राप्तासि कामुकेन। तथा चोक्तमनङ्गरङ्गे-'निर्लज्जा विधवा कलासु कुशला.' इत्यादि। अत एव विदितरहस्याया मत्तस्तव गोपनं व्यर्थमेवेति भावः। पुत्रीत्यामन्त्रणेन 'त्वमिदानीमेव प्रबुद्धासि, अहं तु बहोः कालादेतत्परिज्ञायानुभूय च परित्यक्तवती' इत्यात्मनोऽ-भिज्ञतातिशयो द्योत्यते। अत एव मा परिज्ञातमप्यर्थमपलप। त्वं मम वात्सल्यपात्रमसीति मत्तः साहाय्यमेव ते भावीति भूयानर्थो ध्वन्यते। 'द्वारस्थितिकलितशीलखण्डनां कुलजां कुट्टनी विश्वासयितुमाह' इति गङ्गाधरावतरणम्।

स्थानेऽस्मिन् रूपगुणपन्नाप्यनधिकारिकरपतिता काचित्सुस्तनी सुलभेति नागरिकं काचिद्दूती सूचयति-

**वृतिविवरनिर्गतच्छद एरण्डः शंसतीव तरुणेभ्यः।**
**हलिकवधूर्भवनेऽस्मिन्नेतावन्मात्रसुस्तनी वसति।।५७।।**[२]

ग्रामे गृहवृतिनिरन्ध्रीकरणार्थमेरण्डो रोप्यत इति ग्राम्याणां पद्धतिः। ततश्च गृहवृतिविवरात् निर्गतो बहिर्निष्क्रान्तश्छदःपल्लवो यस्य, ईदृश एरण्डवृक्षः। पयोधरातिपरिणाहसूच-

---

१. **कं तुङ्गथणुक्खित्तेण पुत्ति दारट्ठिआ पलोएसि।**
**उण्णामिअकलसणिवेसिअग्घकमलेण व मुहेण।।५६।।**
[कं तुङ्गस्तनोत्क्षिप्तेन पुत्रि द्वारस्थिता प्रलोकयसि।
उन्नामितकलशनिवेशितार्घकमलेनेव मुखेन।।]

२. **वइविवरणिग्गअदलो एरण्डो साहइ व्व तरुणाणम्।**
**एत्थ घरे हलिअवहू एद्दहमेत्तत्थणी वसइ।।५७।।**
[वृतिविवरनिर्गतदल एरण्डः साधयतीव तरुणेभ्यः।
अत्र गृहे हलिकवधूरेतावन्मात्रस्तनी वसति।।]

कोत्तानप्रसारिताङ्गुलेर्हस्तस्याभिनयसन्निभेन स्वसन्निवेशेन–एतावन्मात्रो सुन्दरो स्तनौ यस्या ईदृशीति तरुणेभ्यो हालिकवधुस्तनपरिणाहं शंसति कथयतीत्यर्थः। हलिकवधूरित्यनेन लावण्यत्यास्तस्या अननुरूपस्तत्पतिर्हलावनादिकर्मणा प्रायो बहिरेव तिष्ठतीति तत्सौलभ्यं द्योत्यते। तरुणेभ्य इति साधरणनिर्देशेन 'तरुणास्तल्लाभलालसया तदवसरप्रतीक्षायां भ्राम्यन्तेव न पुनरद्यावधि केनापि सा सङ्गतेति यावन्नासौ केनचिद्यूना वशीक्रियते तावत्त्वरितमेनामनुसर' इति नागरिकं प्रत्यभिव्यज्यते। उत्तानप्रसारिताङ्गुलिहस्तसन्निवेशेन वस्त्वन्तरपरिणाहप्रतिबिम्बनं लोकप्रसिद्धं तदिहाऽप्यभिनयरूपेण जातमित्यभिनय एवालङ्कार इति सरस्वतीकण्ठाभरणम्। ''गुप्त्यर्थं निवेशितोऽपि खलः प्रत्युत रहस्यमेव प्रकाशयतीति प्रदर्शयन्नागरिकः सहचरमाह'' इति गङ्गाधरः।

धनिकभुजङ्गं साभिलाषीकर्तुं व्याजेन दुहितुर्घनस्तनभारं प्रशंसन्ती, शीघ्रानयनार्थं भुजङ्गेनोक्ता कुट्टनी तमाह–

**गजकलभकुम्भसन्निभघनपीननिरन्तराभितुङ्गाभ्याम् ।**
**तीरयति नोच्छ्वसितुमपि हतस्तनाभ्यां पुनस्तु गन्तुं किम्।।५८।।**[१]

गज इव प्रौढः कलभो गजकलभस्तत्कुम्भसन्निभौ अत एव घनपीनौ निबिडस्थूलौ, एवं निरन्तरौ पीनतया परस्परव्यवधानशून्यौ च अभितुङ्गौ च कठोरतया अग्रोत्थितौ च यौ ताभ्याम्। हतस्तनाभ्यां स्तनहतकाभ्यामित्यर्थः। उच्छ्वसितुमपि न तीरयति न पारयति (शक्नोति), पुनर्गन्तुं तु किं पारयेदित्यर्थः। अत्र तुङ्गपदेनैव स्तनस्थूलताप्रतीतौ सत्यां पुनः 'गजकुम्भसन्निभ–पीन–निरतन्तरादिपदैर्विशेषो द्योत्यते। प्रौढकरिशावककुम्भसादृश्येन न केवलं पीनतैव किन्तु तादृक्कलभस्य यथा कुम्भः संहतावयवतया कठिनो भवति तथा कठिनौ। अत एव समासे 'गजकलकुम्भसन्निभौ अत एव घनपीनौ' इति पूर्वविग्रहो दर्शितः। यौ किल अतिपीनतया निरन्तरौ भवतस्तौ गौरवेण कदाचिन्नतौ स्यातामिति तन्निवारणार्थं पुनर्विशेषणम् 'अभितुङ्गौ' इति। एतादृग्घनपीनतायामपि अभितुङ्गौ अभिमुखं तुङ्गतया स्थिताविति गाथाकुर्तुः प्रतिपदमाकूतं बोध्यम्। अनया च व्याजस्तुत्या 'घनयौवनेन मदालसा करिकुम्भस्तनी सौभाग्येन त्वयोपलब्धा न किल सरभसमवहेलया सामान्यवदाकारणीया, प्रत्युत सौन्दर्याधिदेवतेव त्वयैव

---

१. **गअकलहकुम्भसंणिहघणपीणणिरन्तरेहिँ तुङ्गेहिं।**
**उस्ससिउं पि ण तीरह किं उण गन्तुं हअथणेहिं।।५८।।**
[गजकलभकुम्भसन्निभघनपीननिरन्तराभ्यां तुङ्गाभ्याम्।
उच्छ्वसितुमपि न तीरयति किं पुनर्गन्तुं हतस्तनाभ्याम्।।]

सम्मुखमुपसर्पणीयेति वृद्धयाभिध्वन्यते। 'क्वचिद् गुणोऽपि दोषतां यातीति निदर्शयन्नागरिकोऽभिसारिकायाः सत्वराभिसारगमनविरोधिस्तनभारं प्रत्युद्वेगाहिदमाहेति केचित्।

बहोः कालात्पूर्णधनदानेन तोषयन्तं धनिकभुजङ्गं प्रति कामशास्त्ररहस्योपदेशेन निजनिर्मायतां सूचयन्ती सहैव नर्तनकर्मीणां स्वदुहितरं प्रति तं साभिलाषं कुर्वती च वृद्धा वेश्यामाता आह–

**मासकसूतां दिवसज्वरिणीं षण्मासगर्भिणीं चापि।**
**रङ्गोत्तीर्णां पुत्रक कामयमानः प्रियामेधि।।५९।।**[1]

एकमासप्रसूताम्, एकदिवसज्वरिताम्, षण्मासिकगर्भधारिणीम्, नर्तनं कृत्वा रङ्गशालात आगतां च प्रियां कामयमानो भव। पुत्रकेत्यामन्त्रणेन स्नेहभाजनतया गुह्यमपि त्वत्तो न गोपनीयमित्यभिव्यज्यते। अथवा नववयस्को बहुधोपदेशसापेक्षो भवानत एव त्वां किञ्चिद् गुह्यमुपदिशामिति वा। एवंविधाः सुरतकर्मणि सुखसाध्या भवन्ति, प्रसन्नाः सुभृशमनुरज्यन्ति, आनन्दविह्वलाश्च महत्सुरतसुखं प्रसुवत इति वेश्याभिरधिकं निह्नवनीयमप्यहं ते प्रकाशयामीति पक्षपातो ध्वन्यते। 'नृत्यादिव्यग्रामेनां किञ्चित्प्रतीक्षमाणोऽपि विलम्बेन नोत्ताम्य, यतस्त्वत्सुखायैवेदम्' इति स्वप्रयोजनसाधनध्वनिमपि वृद्धा न व्यस्मार्षीदिति सहृदयैर्बोध्यम्। मासप्रसूतादीनां स्वल्पसाध्यत्वं प्रोक्तं कामशास्त्रे। यथा ह्यनङ्गरङ्गम्–

**'रङ्गाद्विश्रान्तदेहा चिरविरहवती मासमात्रप्रसूता**
**गर्भालस्या च नव्यप्रिययुततनुका त्यक्तमानप्रसङ्गा।**
**स्नाता पुष्पावसाने नवरतिसमये मेघकाले वसन्ते**
**प्रायः सम्पन्नरागा मृगशिशुनयना स्वल्पसाध्या रते स्यात्।।'**

'रम्याणां तत्तद्विशेषप्राप्त्या रम्यतातिशयो भवतीति प्रतिपादयन्ती कुट्टनी भुजङ्गं नर्तकीं स्वदुहितरं प्रति साभिलाषं कर्तुमाह' इति गङ्गाधरः।

---

१. **मासपसूअं छम्मासगब्भिणिं एक्कदिअहजरिअं च।**
**रङ्गत्तिण्णं च पिअं पुत्तअ कामन्तओ होहि।।५९।।**
[मासप्रसूतां षण्मासगर्भिणीमेकदिवसज्वरितां च।
रङ्गोत्तीर्णां च प्रियां पुत्रक कामयमाने भव।।]

उत्तुङ्गपीनपयोधरां काञ्चन नायिकां प्रति निजाभिलाषं प्रकाशयन्कश्चित्सहृदय आह–

**प्रतिपक्षमन्युपुञ्जौ लावण्यघटावनङ्गगजकुम्भौ।**
**पुरुषशतहृदयविधृतौ स्तनौ स्तनन्ती ( सगर्वा ) किमिति वहसि।।६०।।**[१]

प्रतिपक्षस्य सपत्नीजनस्य क्रोधजनितोपतापपुञ्जौ, प्रियप्रणयेर्ष्यावशानां सपत्नीनां चितक्षोभजननात्। अनेन सपत्नीबाहुल्येऽपि 'एतत्स्तनसौन्दर्यमहिम्ना त्वमेव सर्वातिशायिनी स्या:, तत्सन्तु काममन्या: कान्तास्त्वं किमिति नानुकम्पसे' इत्यात्माभिप्रायो व्यज्यते। लावण्यस्य घटौ, सौन्दर्यातिशयात्। अनङ्गरूपगजस्य कुम्भौ मूर्द्धांशौ। गजकुम्भस्थलं यथा निबिडं भवति तदभेदेन स्तनयो: काठिन्यं व्यज्यते। किञ्च कामोऽपि त्वत्कुचसौन्दर्यं मूर्ध्ना वहति किं पुनरन्य इत्यनयोर्महिमातिशयो व्यज्यते। मन्युपुञ्जौ, लावण्यघटौ, गजकुम्भौ, एभिस्त्रिभी रूपणै: क्रमश: कुचयोरुत्तुङ्गत्वं महत्त्वं काठिन्यं च द्योत्यते। पुरुषशतेन हृदये मनसि विधृतौ अभिलषितौ। अनेन सर्वकामुकजनाकर्षकत्वं सूच्यते। तथा चाहमेतौ दृष्ट्वा यदि एतल्लाभायाऽभिलाषं प्रकाशयामि तर्हि न मे दोष इत्यभिव्यज्ते। एवंविधौ स्तनौ सगर्वा त्वं किमिति वहसि। यावदनयोरनुरूपे जने नोपयोगस्तावत्तव गर्वो वृथेति भाव:। तथा च एतयोर्महत्त्ववेदिनि मयि किमिति नानुकम्पस इति ध्वन्यते। पूर्वार्द्धे मन्युपुञ्जदीनां विशेष्यानाकलनदशायां रूपकत्वेऽपि 'स्तनौ' इति विशेष्यावबोधे सति गम्योम्प्रेक्षैवेति मन्मतम्। अत्र 'थणन्ती' इति मूलं 'स्तनन्ती' ति तच्छाया गङ्गाधरेणोपवर्णिता विचारणीयैव। ष्टन वन शब्दे, स्तन गदी देवशब्दे, अनयोर्द्वयोरपि धात्वोरत्र नोपयोग:। 'शब्दं कुर्वती त्वं किमिति स्तनौ वहसि' अत्र शब्दायमानत्वं स्तनवहनं च द्वे अपि अस्वरसे एवेति न परोक्षं परीक्षकाणाम्। तस्मात् गर्वार्थकप्राकृतथुणघातोर्निष्पन्नोऽत्र 'थुणन्ती' शब्द एवेति मदभिप्राय:। 'थुण्ण: दृप्त:' इति तद्धातुनिष्पन्न: शब्दो देशीनाममाला–यामालोक्यते।

कस्यचित्कृते प्रतिकूलमपि किञ्चित् कस्यचित्कृतेऽनुकूलं भवतीति निदर्शयन्सहृदय आह–

---

१. **पडिवक्खमण्णुपुञ्जे लावण्णउडे अणङ्गगअकुम्भे।**
**पुरिससअहिअअधरिए कीस थणन्ती थणे वहसि।।६०।।**
[प्रतिपक्षमन्युपुञ्जौ लावण्यकुटावनङ्गगजकुम्भौ।
पुरुषशतहृदयधृतौ किमिति स्तनन्ती स्तनौ वहसि।।]

**गृहिणीघनकुचपीडनसुखकेलिगतस्य भाविपथिकस्य।**

**सुखयन्ति चापशकुनाङ्गारकवारान्यविष्टिदिवसाश्च।।६१।।**[1]

गृहिण्याः कठिनकुचयोर्निष्पीडनसुखकेलिपतितस्य भविष्यत्पथिकस्य यात्रां करिष्यत इत्यर्थः। अपशकुनानि अङ्गारकवाराणि अन्ये विष्टिदिवसाश्च सुखयन्ति। विष्टिर्भद्रा। अपशकुनादिप्रतिबन्धेन प्रियतमाविरहकारिणी यात्रा न भवतीति भावः। विरुद्धात्कार्यसम्पत्तिसिद्धा पञ्चमी विभावना, अयत्नं वाञ्छितसिद्ध्या प्रहर्षणं च। आभ्यामलङ्काराभ्यां प्रियासङ्गसुखवश्यस्य नायकस्य प्रवासरूपक्रियायामालस्यं व्यज्यते। उक्तं च सरस्वतीकण्ठाभरणे–'क्रियाविद्वेष आलस्यं सुखसम्विन्मदादिभिः'। अनेन चालस्यव्यभिचारिणा तत्सामयिकचेष्टारूपानुभावसहकारेण गृहिणीरूपालम्बनगताया रतेः परिपुष्टिरिति कण्ठाभरणे स्पष्टम्। तत्र हि 'पेल्लणसुखे णिवडिअस्स' इति पाठः।

नायकं गमनायोत्कण्ठयितुं दूती नायिकाया अनुरागातिशयमाह–

**सा तव कृतेन बालक सततगृहद्वारतोरणनिषण्णा।**

**अवशुष्यति हि वराकी वन्दनमालेव दिवसमेव बत।।६२।।**[2]

विरहवेदनानभिज्ञत्वाद् हे बालककल्प वन्दनमालेव सततं निरन्तरं गृहद्वारस्य तोरणे उपरिदेशे निषण्णा। सततमित्यनेन 'न जाने कस्मिन्क्षणे स आयायात्' इति उत्कण्ठातिशयो द्योत्यते। सा वराकी तव कृतेन बत दिवसमेव समस्तं दिनमभिव्याप्यैव शुष्यति। दिवसमित्यत्यन्तसंयोगेन शोषस्य दिनावसानपर्यन्तभावितयाऽतिशयो व्यज्यते। शुष्यतीति वर्तमानार्थकलटा 'त्वम्प्रतीक्षाहेतुकः शोषो न तस्याः पूर्यते' इति सूचनया प्रतिदिनं समस्तदिन व्यापी प्रतीक्षाक्लेशो ध्वन्यते्। अत एव 'यहि अवशुष्यत्य नुदिवसं वन्दनमालेव बत वराकीयम्' इति

---

१. **घरिणिघणत्थणपेल्लणसुहेल्लिपडिअस्स होन्तपहिअस्स।**
**अवसउणङ्गाधअवारविट्ठिदिअहा सुहावेन्ति।।६१।।**
[गृहिणीघनस्तनप्रेरणसुखकेलिपतितस्य भविष्यत्पथिकस्य।
अपशकुनाङ्गारकवारविष्टिदिवसाः सुखयन्ति।।]

२. **सा तुह कएण बालअ अणिसं घरदारतोरणणिसण्णा।**
**ओससई वन्दणमालिअ व्व दिअहं विअ वराई।।६२।।**
[सा तव कृतेन बालकानिशं गृहद्वारतोरणनिषण्णा।
अवशुष्यति वन्दनमालिकेव दिवसमेव बराकी।।]

पाठोऽभविष्यत्तर्हि वरम्। वन्दनमालेव शुष्यतीत्युपमया तोरणे यथा वन्दनमाला अविचलभावेन परेच्छया आगन्तुकस्यागमनं प्रतीक्षमाणा तिष्ठति, तदनागमने च मुधा शुष्यति, तथा सापि त्वद्गतचित्ता निश्चेष्टमवतिष्ठत इति नायिकाया अनुरागातिशयो द्योत्यते। तथा चैवं त्वय्यनुरक्तामपि तां तत्प्रणयगाम्भीर्यापरिज्ञानान्न बहु मन्यसे, इत्युपालम्भोपबृंहितं द्रुतगमनाय नायकस्योत्तेजनं ध्वन्यते।

कपटानुरागशालिनं त्वामासाद्याऽहं वञ्चिताऽस्मीति नायकमुपालभमानाऽन्यापदेशेने काचिदाह–

**हसितं सहस्ततालं विशुष्कवटमुपगतैः पथिकैः।**
**पत्रफलानां सदृशे शुकवृन्दे सभयमुड्डीने।।६३।।**[१]

पत्रफलाढ्योऽयं वृक्ष इति बुध्या विश्रमार्थं शुष्कवटवृक्षमुपगतैः पथिकैः पत्रफलानां सदृशे शुकवृन्दे मनुष्यागमनेन सभयमुड्डीने सति सहस्ततालं यथा स्यात्तथा तालिकाः प्रदाय साश्चर्यकौतुकं हसितमित्यर्थः। शुकानां पक्षावृतं हरितशरीरं पत्रसदृशं रक्ताश्चञ्चवश्च फलसदृश्य इति भावः। तथा च तव कृत्रिममनुरागं वीक्ष्य त्वयि विश्वासमकरवमिदानीं स तवानुरागो द्रागेव व्यपगत इति नायिकोपालम्भो ध्वन्यते। ''सहजगुणहीनानामाहार्यगुणाधानं न चिरकाल-स्थायीति काचिदन्यापदेशेनाह'' इत्यवतरणं 'सङ्केतस्थाने जनावस्थितिसूचनेनाऽभिसारिकां निवारयन्त्या दूत्या इयमुक्तिरिति केचित्' इत्युपसंहारश्च गङ्गाधरटीकायाम्।

'सखि अत्याकृष्टेन मानेन दयितो विरज्येदत एव परिहर साम्प्रतं मानम्, अलमेतावता' इति सखीभिर्बहुबोधिताया अप्याग्रहिलाया नायिकाया रात्रिवृत्तान्तं निभृतमनुसन्धायाऽऽगता सखी रहस्यप्रविष्टया मातुलान्या पृष्टा मानकलहे सख्या विजयमाह–

**मातुलि तथा निपतता पदयोरद्यास्मि हासिता तेन।**
**दीपकदशां ज्वलन्तीं तया किलाभ्युन्नयन्त्या च।।६४।।**[२]

---

१. **हसिअं सहत्थतालं सुक्खवडं उवगएहिँ पहिएहिं।**
**पत्तअफलाणँ सरिसे उड्डीणे सूअविन्दम्मि।।६३।।**
[हसितं सहस्ततालं शुष्कवटमुपगतैः पथिकैः।
पत्रफलानां सदृशे उड्डीने शुकवृन्दे।।]

२. **अज्ज म्मि हासिआ मामि तेण पाएसु तह पडन्तेण।**
**तीए वि जलन्तिं दीववत्तिमब्भुण्णअन्तीए।।६४।।**
[अद्यास्मि हासिता मातुलानि तेन पादयोस्तथा पतता।
तथापि ज्वलन्तीं दीपवर्तिमभ्युत्तेजयन्त्या।।]

हे मातुलानि! अद्य तथा तादृक्प्रकारेण तस्याः पादयोः पतता तेन, 'उज्ज्वलप्रकाशे सम्यक्पश्याधुना मत्सौभाग्यम्' इति गर्वेण मत्प्रदर्शनार्थं प्रज्वलन्तीमपि दीपदशां दीपकवर्ति-मुत्तेजयन्त्या तया च हासितास्मीत्यर्थः। तथेति पादप्रणामप्रकारं प्रतीङ्गितम्, ततश्च नायकस्य तत्समयेऽपराधस्वीकारसङ्कोचसूचिका पुनः सङ्गमोत्कण्ठालौल्येन परवशतया अनुनयप्रवृत्ति-पिशुना च विलक्षणा भावभङ्गी सूच्यते। तेनानुनये नायकस्य दैन्यातिशयो ध्वन्यते। दिवा तथादृढतां प्रदर्शयतस्तस्य रात्रौ तादृशं विचित्रं दैन्यं तस्याश्च तद्दर्शनाय तादृशीं दीपोत्तेजनचेष्टां च दृष्ट्वा सम हासो जात इत्यर्थः। अत्र 'अन्येऽपि मम सौभाग्यं पश्यन्तु' इति बुध्या दीपोत्तेजनं कुर्वत्या इति गङ्गाधरोक्तिर्विचारणीयैव। निशि विश्रब्धं शयनगृहमधिवसतोरनयोः कथं नामान्यजनसम्भवः? तस्मात्कपाटरन्ध्रादिद्वारेण निभृतं पश्यन्तीं सखीमनुसन्धायैव दीपोत्तेजनमिति बोध्यम्। किञ्च 'पतिं प्रत्यनादरं दृष्ष हासो जातः' इत्यपि नोचिता तदुक्तिः। दीपोत्तेजनेन 'पश्य मयि कियदनुरक्तोवल्लभः' इति स्वसौभाग्यप्रदर्शने आग्रहो न पत्यनादरसूचने। मान-पतिकृतपादप्रणामादिषु अनुरागस्यैव विजृम्भणेनाऽनादरकथयाया एवानुदयात्।

पूर्वसुभगामनुवर्तमानं प्रियं दृष्ट्वा निजसौभाग्यमबहुमन्यमानां नवसुभगां सान्त्वयितुं सखी सुजनस्वभावमाह-

**अनुवर्तनमिह कुर्वन्द्वेष्येऽपि जने ह्यभिन्नमुखरागः।**
**आत्मवशोऽपि च सुजनः कुलीनतायाः परवशोलम्।।६५।।**[१]

द्वेष्येऽपि जने अभिन्नमुखरागः सन्, न भिन्नः परिवर्तितः स्नेहदाक्षिण्यजनितो मुखप्रसादो येनैवंभूतः सन्। मुखरागे किञ्चिदपि परिवर्तनं न जानीयादनुवर्तनीयो जनस्तथा अनुवर्तनं कुर्वन्। अभिन्नमुखराग इत्यनेन द्वेष्यतया तं प्रति स्नेहाभावेऽपि बाह्यामुखवर्णपरावृत्तिर्न भवेदिति सूच्यते। आत्मवशोऽपि उच्चाशयतया पारवश्यमवधीरयन्स्वतन्त्रोऽपि सुजनः कुलीनतायाः सत्कुलप्रसूततायाः, आभिजात्यस्येत्यर्थः। अलं भूयस्तरां परवशः। आत्मवशोऽपि परवश इति विरोधालङ्कारेण 'पूर्वसुभगानुवर्तनमनभीष्टमपि दाक्षिण्यानुगतया कुलीनतया करोति न स्नेहेन अतएव न त्वया विमनायितव्यम्' इति नवीनां प्रति ध्वन्यते।

आभिजात्येन कोपेऽपि प्रियं प्रत्यादरं प्रदर्शयन्त्या नायिकाया मानमज्ञात्वा नेयं विजना-तीति भ्रान्तिवशादन्यवनितासु प्रसज्यन्तं दुर्विदग्धं शिक्षयनती काचिज्जरद्वधूराह-

---

१. **अणुवत्तणं कुणन्तो वेसे वि जणे अहिण्णमुहराओ।**
**अप्पवसो वि हु सुअणो परव्वसो आहिआईए।।६५।।**
[अनुवर्तनं कुर्वन्द्वेष्येऽपि जनेऽभिन्नमुखरागः।
आत्मवशोऽपि खलु सुजनः परवशः कुलीनतायाः।।]

**अनुदिवसवर्द्धितादरविज्ञानगुणैर्जनितमाहात्म्यः।**
**अभिजातजनः पुत्रक विरज्यमानोऽपि दुर्लक्ष्यः।।६६।।**[1]

हे पुत्रक! अनेन–नाधुना जानासि विदग्धवनिताव्यवहारान्, शिक्षस्वेदानीमिति स्वस्यानुभवित्वं द्योत्यते। अनुदिवसं वर्द्धित आदरो यैरेवंभूतैर्विज्ञानप्रमुखैर्गुणैः। जनितं माहात्म्यं महत्त्वं यस्यैतादृशः। प्रतिदिनमादरं प्रदर्शयद्भिर्विज्ञतादिगुणैः स्थापितनिजमहत्त्व इत्यर्थः। एवंभूतः कुलीनजनो विरज्यमानोऽपि दुर्लक्ष्यः। तथा च– परमविदग्धासेयं तवान्यवनितासु प्रसक्तिं ज्ञात्वा विरज्यमानापि कुलजात्वेन प्रत्यहमादरातिशयं प्रदर्शयति, त्वं च नेदं विजानासि। अहो तेऽपाटवमिति पुत्रकपदसहकारेण ध्वन्यते। दुर्लक्ष्य इत्यनेन कठिनतया प्रत्येयत्वं सूच्यते। तेन – च सूक्ष्मतयावलोकनेन लक्षणीयमपि अविदग्धतया न त्वमज्ञासीरिति व्यज्यते। विरज्यमान इति वर्तमानार्थकशानचा 'तव प्रणयवैमुख्येन जनिता अस्या विरक्तिर्नाधुनापि पूर्णतया दृढीभूता' इति सूच्यते। एवं च अद्यावधि कृतमपराधं प्रणिपातादिना प्रसाद्य प्रमार्जयेति ध्वन्यते।

लोकापवादभाजने कस्मिंश्चिज्जने बलादनुरागप्रदर्शनार्थमागृह्णतीं दूतीं काचिदाह–

**विज्ञानगुणमहार्घे पुरुषे द्वेष्यत्वमपि हि रमणीयम्।**
**लज्जामहे प्रियत्वेनापि जने जनविनिन्दिते नूनम्।।६७।।**[2]

विज्ञानगुणमहार्घे विज्ञतागुणेन परमादरणीये। जनविनिन्दिते जने प्रियत्वेनापि अनुकूल-त्वेनापि लज्जामहे। आनुकूल्यप्रदर्शनेनापि लज्जामहे किं पुनरनुरागस्थापनेनेति विरागातिशयो ध्वन्यते।'विदग्धं प्रति साभिलाषा कापि स्वभर्तरि वैराग्यं सूचयन्ती आह' इति गङ्गाधरावतरणम्।

---

१. **अणुदिअहवड्ढिआअरविण्णाणगुणेहिँ जणिअमाहप्पो।**
**पुत्तअ अहिआअजणो विरज्जमाणो वि दुल्लक्खो।।६६।।**
[अनुदिवसवर्धितादरविज्ञानगुणैर्जनितमाहात्म्यः।
पुत्रकाभिजातजनो विरज्यमानोऽपि दुर्लक्ष्यः।।]

२. **विण्णाणगुणमहग्घे पुरिसे वेसत्तणं पि रमणिज्जम्।**
**जणणिन्दिए उण जणे पिअत्तणेणावि लज्जामो।।६७।।**
[विज्ञानगुणमहार्घे पुरुषे द्वेष्यत्वमपि रमणीयम्।
जननिन्दिते पुनर्जने प्रियत्वेनापि लज्जामहे।।]

पीनोत्तुङ्गकुचां कामपि कामिनीमचिरेणैव कालेन पतितकुचामालोक्य कश्चित्सहृदयो वयस्यामहा–

**कथमिव तस्याः स तथा स्वभावगुरुकोऽपि कुचभरः पतितः।**
**अथवा महिलानां हृदि न चिरं सन्तिष्ठते कोऽपि।।६८।।**[१]

स्वभावेन गुरुकः उत्तुङ्गः, पक्षे निसर्गेण गौरवभाजनम्। स्वयं विचार्य उत्तररूपेण स्वयमेवाह– 'अथवा महिलानां हृदि कोऽपि चिरं न संतिष्ठते' इति। अनेन सामान्येन विशेष–समर्थनरूपार्थान्तरन्यासेन 'निसर्गगौरवशाल्यपि पुरुषः स्त्रीणां हृदि स्वल्पकालमेवावकाशं लभते किं पुनः साधारणः' इति स्त्रीणामस्थिरप्रेमता अभिव्यज्यते। तथा स्वभावगुरुक इत्यत्र तथेतिनिर्देशेन स्तनयोरनन्यसाधारणो निबिडतोच्चतादिगुणः परामृश्यते, तेन तयोः पूर्वमतितुङ्गता निबिडता चासीदिति ध्वन्यते।

वसनाञ्चलेन बालातपं वारयन्तीं प्रियतमां प्रति प्रियश्चाटूक्तिविधया आह–

**सुतनु वदनं स्पृशन्तं सूर्यं वसनाञ्चलेन वारय मा।**
**एतस्य पङ्कजस्य च स वेत्तु कतरत्सुखस्पर्शम्।।६९।।**[२]

'साउली'ति वस्त्राञ्चलवाचको देशी।'साउली' इत्यस्य साकुलीति च्छाया, साकुलीति च पल्लविकाविषये वर्तते। तथा च 'पल्लवच्छत्रिकया वदनं मा वारयं' इत्यर्थं इति कुलबालदेवटीका। एतस्य वदनस्य पङ्कजस्य च मध्ये कतरत्सुखस्पर्शमस्ति इति स वेत्तु जानातु। प्रत्यहं पङ्कजं करेण स्पृशन्नयमेवाद्योभयोः स्पर्शसुखतारतम्यं निर्णेष्यतीति भावः। अनेन– तव वदनं कमलमिव मृदु सुरभि सुन्दरमस्तीत्युपमालङ्कारो ध्वन्यते। स वेत्तु कतरत्सुख–स्पर्शमित्यनेन तव मुखमेव स्पर्शे समधिकसुखकारकमिति वक्तुराकूतेन व्यतिरेकध्वनिरेव वा। अत्र पङ्कजपदेन पङ्कोत्पन्नस्यास्य कियत्स्पर्शसौरभादि भविष्यतीति जानात्विति अर्थगाम्भीर्यं

---

१. **कहँ णाम तीअ तह सो सहावगुरुओ वि थणहरो पडिओ।**
**अहवा महिलाणँ चिरं को वि ण हिअअम्मि संठाइ।।६८।।**
[कथं नाम तस्यास्तथा स स्वभावगुरुकोऽपि स्तनभरः पतितः।
अथवा महिलानां चिरं कोऽपि न हृदये सन्तिष्ठते।।]

२. **सुअणु वअणं छिवन्तं सूरं मा साउलीअ वारेहि।**
**एअस्स पङ्कअस्स अ जाणउ कअरं सुहप्फंसम्।।६९।।**
[सुतनु वदनं स्पृशन्तं सूर्यं मा वस्त्राञ्चलेन वारय।
एतस्य पङ्कजस्य च जानातु कतरत्सुखस्पर्शम्।।]

ध्वन्यते। ततश्च व्यतिरेकध्वनिरेव कवेरभिप्रेत इति स्फुटीभवति। 'स वेत्तु कतरत्सुखस्पर्शम्' अनेन मत्परीक्षणं चाटूक्तिरिति कदाचन न विश्वास्यं परमयं तटस्थ उभयो: करस्पर्शेन तारतम्यं परीक्षमाणो निर्णेष्यतीति 'स:' पदोद्वलितेन ध्वन्यते इति मार्मिकैराकलनीयम्। 'नायकप्रलोभनाय सखी नायिकामुखं वर्णयतीति' गङ्गाधरः। तत्र 'सुतनु' इत्यामन्त्रणसमन्वये कस्योक्तिरुचितेति मार्मिकैर्विमृश्यम्।

सीधुपानेनोपारूढमदा प्रमदा मानेऽपि मृदुर्भवतीति मानिनीमानापनोदनोपायं नागरिकः स्वसुहृदमाह–

**करसंपुटवलितोद्ध्र्वाननया प्रियया मनस्विन्या।**
**मानौषधमिव मदिरागण्डूषः पीयते प्रियतमस्य।।७०।।**[१]

प्रियस्य करसम्पुटेन बलितं ग्रहणपुरस्सरमुन्नमितम्, अत एव ऊद्ध्र्वमाननं यस्याः। अनेन अनिच्छन्त्या अपि सीधुपानार्थं प्रसह्याभिमुखीकरणं सूच्यते, तेन नायिकामानवैमुख्यं व्यज्यते। मनस्विन्या मानदार्ढ्येनोन्नतमनसा मानिन्येत्यर्थः। प्रियया प्रियतमस्य मदिरागण्डूषः (आकुञ्चितवदने पूरिता मदिरा) मानापनयनौषधमिव पीयत इत्यर्थः। औषधं यथा मृदुप्रकृति-भिर्बलात्कथञ्चित्पीयते तथा मानवैमुख्येन अनिच्छन्त्या, अतएव प्रियस्य करसम्पुटेन बलादूर्ध्वी-कृताननया दयितया मुखसमीपानीतदयितमुखेनावर्जितः सीधुगण्डूषः पीयत इति भावः। तथा च- तत्समये बलादावर्जितापि मदिरा शीघ्रमेव मानिनीमावर्जयतीति सिद्धयोगोऽयमिति नागरिकेण सुहृदं प्रत्यभिव्यज्यते।

नायकोत्कण्ठासंवर्द्धनार्थं दूती नायिकायाः सौन्दर्यातिशयमाह–

**निर्वर्ण्यतां कथं सा यस्या अङ्गे यथा दृष्टे।**
**दुर्बलगवीव दृष्टिः पङ्कनिपतिता हि नोत्तरति।।७१।।**[२]

---

१. **माणोसहं व पिज्जइ पिआइ माणंसिणीअ दइअस्स।**
**करसंपुडवलिउद्धाणणाइ मइराइ गण्डूसो।।७०।।**
[मानौषधमिव पीयते प्रियया मनस्विन्या दयितस्य।
करसंपुटवलितोर्ध्वाननया मदिराया गण्डूषः।।]

२. **कहँ सा णिव्वण्णिज्जइ जीअ जहा लोइअम्मि अङ्गम्मि।**
**दिट्ठी दुव्वलगाई व्व पङ्कपडिआ ण उत्तरइ।।७१।।**
[कथं सा निर्वर्ण्यतां यस्या यथालोकितेऽङ्गे।
दृष्टिर्दुर्बला गौरिव पङ्कपतिता नोत्तरति।।]

निर्वर्ण्यतां विलोक्यताम्, सा सर्वाङ्गेषु कथं दृश्यतामित्यर्थः। यस्या नायिकाया अङ्गे यथा येन प्रकारेणावलोकिते सति दृष्टिः पङ्कपतिता दुर्बला गौरिव नोत्तरति, अग्रे न चलति तदङ्गलावण्यवशीभूता तत्रैवावतिष्ठत इति भावः। अनेन नायिकालावण्यस्य आसेचनकत्वं ध्वन्यते। यदास्माभिर्लावण्यवशीभूतया दृष्ट्या सम्पूर्णा साऽवलोकितैव न तदा कथमस्माकं तत्सुन्दरता वचनगोचरा भवतु। एवंविधामसामान्यसुन्दरीमनुपदमेव वशयेति दूत्या व्यज्यते। एतदर्थसंवादिनी पूर्वमपि गाथा वर्णिता- 'जस्स जहँ विअ.'।।३४।।

कस्मिन्नपि स्नेहबन्धमास्थापयितुं वदन्तीं दूतीं नायिका आह-

**क्रियमाणैव विनश्यत्युदके रेखेव खलजने मैत्री।**

**सुजने कृता तु सा पुनरनघा पाषाणरेखेव।।७२।।**[१]

क्रियमाणैवेति वर्तमानार्थकशानचा मैत्रीस्थापनव्यापारस्यापूर्णता सूच्यते। तेन यावत्पर्यन्तं पूर्णा मैत्र्यापि न सिद्ध्यति, ततः पूर्वमेव खलस्य दौरात्म्येन सा भज्यत इति व्यज्यते। अनघा निरपाया, कालान्तरेऽपि नाशायोग्येत्यर्थः। तथा च- अस्थिरस्नेहे तस्मिन्प्रणयबन्धो मुधैवेति दूतीं प्रति द्योत्यते। अत्र पाषाणरेखेति लौकिकनिदर्शनस्य कियन्माधुर्येण निर्वाह इति सहृदयैरालोच्यम्।

चिरप्रवासादागत्य पुनः प्रवासाय विचारयन्तं कान्तं काचित्सदैन्योपालम्भमाह-

**हंहो दुष्करकारक पुनरपि चिन्तां करोषि गमनस्य।**

**नाद्यापि हन्त सरला भवन्ति वेण्यास्तरङ्गिणश्चिकुराः।।७३।।**[२]

हंहो दुष्करकारकेत्यत्र 'हंहो' इति साश्चर्यचमत्कारे। एवं च 'प्रवासे तवानुस्मरणेन भूयान्मया क्लेशोऽनुभूतः' इत्यादि विश्रब्धमालपितवानपि पुनः प्रवासं विचारयसीत्याश्चर्यमेवेति

---

१. **कीरन्ती व्विअ णासइ उअए रेह व्व खलअणे मेत्ती।**

**सा उण सुअणम्मि कआ अणहा पाहाणरेह व्व।।७२।।**

[क्रियमाणैव नश्यत्युदके रेखेव खलजने मैत्री।

सा पुनः सुजने कृता अनघा पाषाणरेखेव।।]

२. **अव्वो दुक्करआरअ पुणो वि तन्तिं करेसि गमणस्स।**

**अज्ज वि ण होन्ति सरला वेणीअ तरङ्गिणो चिउरा।।७३।।**

[अव्वो दुष्करकारक पुनरपि चिन्तां करोषि गमनस्य।

अद्यापि न भवन्ति सरला वेण्यास्तरङ्गिणश्चिकुराः।।]

नायिकयाऽभिव्यज्यते। पुनरपि चिन्तां करोषीत्यनेन प्रवासेऽनुभूतानि दुःखानि संस्मार्य, तानि पुनरुपस्थापयितुं विचारयसीति पूर्वदुःखानुभवं प्रतीङ्गितं द्योत्यते। चिन्तां करोषीत्यनेन 'गमनस्य का कथा, तच्चिन्तामात्रमपि मम प्रवाससमदुःखानुभावकतया वेदनादायीति' ग्लानिसञ्चारी द्योत्यते। करोषीति परस्मैपदेन 'एतच्चिन्ताकरणस्य फलमात्मने न स्यात्ताद्दग्भयावहं परं परस्मै तदैकान्तिकवेदनापदं भवेदित्युपालम्भो व्यज्यते। त्वद्विरहे केशानामप्रसाधनाद्वेणीरूपमावाप्ता अत एव तरङ्गिणः कुटिलीभूताः केशा हन्त अद्यापि सरला न भवन्ति। तव विरहे केशानां ताद्दग्वेणी बद्धा यदेषु दिनेषु प्रतिदिनं प्रसाधनेऽपि कौटिल्यभाजां केशानां सरलता न जातेति भावः। अनेन प्रवासादागमनस्य स्वल्पकालता सूच्यते। तथा च– केशपर्यन्तेष्वपि त्वत्प्रवासचिह्नमद्यापि वर्तते, एतावत्तवरितं पुनर्गन्तुं चिन्तयसीति नायकं प्रति गमनशीघ्रताजनितवेदनातिशयो द्योत्यते। एवं च – स्मर्यन्तां प्रवासे यानि दुःखानि भवता मया च पूर्वमनुभूतानि, तानि पुनः सन्निधापयितुं विचारमपि हृदि आनयसीति दुष्करं करोषीति नायकस्य कठिनहृदयतां सूचयन्ती सा दैन्येन सह दुष्करकारकपदोपोद्वलितमुपालम्भं ध्वनयतीति सहृदयैर्विभावनीयम्। प्रवासोद्भूत–भृशोत्कण्ठादिभिश्चित्तवासना प्रवासानन्तरेऽपि तस्या नोपशाम्यतीति वेणीवर्णनादिना सूच्यते, एतदुदाहरणे दत्ता सेयं गाथा सरस्वतीकण्ठाभरणे।[१]

निधुवनेऽतथाव्युत्पन्नत्वादिच्छासत्त्वेऽपि अकौशलप्रकटनभयेनाप्रवर्तमानस्य धनिक–नवयुवकस्य वैलक्ष्यव्यपगमनपूर्वकं तत्कर्मणि प्रवृत्तिपाटवार्थं धूर्ता काचित्सद्भावस्नेहरत–प्रशंसामाह–

---

१. एतद्गाथार्थमुपजीव्य व्रजभाषाकविमूर्द्धन्येन परममार्मिकेण विहारिणा दोहाछन्द उपनिबद्धम्–

**'अज्यौं न आये सहजरँग बिरह दूबरे गात।**

**अबही कहा चलाइयत ललन चलनकी बात।।'**

'विरहकृशान्यङ्गानि नाद्यापि शरीरस्वास्थ्यसूचिकां सहजामवस्थामवाप्तानि 'हे ललन' अधुनैव गमनस्य वार्तां किमिति प्रवर्तयसि।' इदानीं विचार्यतां कस्यातिशायि वर्णनमिति। 'अबहीं कहा चलाइयत' पदेन ज्ञायते यद् गमनशीघ्रतानिवारणमत्राप्यभिप्रेतम्। शरीरे कृशतानिवृत्तिपूर्वकं सहजशोभागमः पूर्वभावी, उत प्रत्यहं प्रसाधनेन सरलीक्रियमाणानां केशानां पूर्वावस्था ? रसरक्ताद्युपचयद्वारा भाविनी प्रायो नात्महस्तगता शरीरपुष्टिरवश्यं बहुभिर्दिनैः स्यात्। उन्मार्जनप्रसाधनादिद्वारा आत्मायत्ता केशानां पूर्वावस्था ततः शीघ्रभाविन्येव। ततश्च केशपर्यन्तादपि पूर्वं विरहचिह्नं न निवृत्तं भवांश्च पुनर्गन्तुं चिन्तयतीति गमनशीघ्र–ताप्रदर्शनकृतं नायकस्य कठिनहृदयत्वं गाथवौशधिकं सूचितवतीति निर्विवादम्। किञ्च गमनस्य वार्तां प्रवर्तयसीत्यपेक्षया 'गमनस्य चिन्तामपि करोषीति' चिन्तामात्रस्य विरहवेदनादायकत्वं सूचयन्गाथाकार एवाधिकं मार्मिक इति सूक्ष्मं विचार्यताम्। किञ्चैवं विरहवेदनासमये हृदयावेगप्रकाशनकृत–प्रणयजिह्म–ताप्रदर्शनावसरेऽपि 'ललन' इति शिथिलसम्बोधनं न च्छायां तथा पुष्यति, यथा 'हंहो! दुष्करकारक' इत्यत्र चिन्तामपि करोषि तद्दुष्करं करोषीति कठिनहृदयताचित्रोपस्थापकं दुष्करकारकेति सम्बोधनम्। किञ्च 'पुनरपि' पदेन यत्पूर्वदुःखानुभवं प्रतीङ्गितं तदपि दोहाछन्दसि लुप्तप्रायम्। परस्मैपदव्यञ्जनं तु भाषायामसम्भवमेव। एवं स्थितेऽपि गाथात आधिक्यस्थापनं केषाञ्चित्पक्षपात एव। विहारिणः सूक्तेः संस्कृतपद्येऽनुवादस्तद्विमर्शनं च 'कवितानिकुञ्जान्तर्गत–मत्सङ्कलित–'साहित्यवैभव' तोऽवगन्तव्यम्।

**न तथा छेकरतान्यपि हरन्ति पुनरुक्तरागरसिकानि।**

**सद्भावस्नेहरतानि यथेच्छविधानि यत्र तत्र यथा।।७४।।**[१]

पुनरुक्ते पुनः पुनः परिशीलिते रागे रञ्जने रतव्यापारे रसिकानि रसानुभवशालीनि। छेकानां कामशास्त्रप्रसिद्धरतशिल्पकुशलानां रतान्यपि तथा न हरन्ति यथा यत्र तत्र अवसरलाभानुसारं यस्मिन्कस्मिंश्चित्स्थाने प्रवृत्तानि, यथेच्छं विधा येषां तानि यथेच्छविधानि। येन केनापि प्रकारेण कल्पितानीत्यर्थः। एवंविधानि सद्भावस्नेहेन यानि रतानि तानि हरन्ति मनो वशीकुर्वन्ति। विदग्धजनरतानि कामशास्त्रप्रसिद्धबन्धालिङ्गनादिपूर्वक्षुण्णमार्गानुसारित्वेन पुनरुक्तिपरिशीलकत्वाच्चर्वितचर्वणोपमानि। अनेन बहुविदग्धजनैर्बहुधा रमणेऽहमुररीकृता, तथा च भवतोऽपि मत्समागमेन तत्कौशलमुदयेदिति युवकोत्साहनं व्यज्यते। एवंविधेषु विदग्धरतेषु स्नेहापेक्षया कौशलप्रदर्शनस्पर्द्धाऽधिका भवति, नवजनरते तु सद्भावस्नेह एव निर्भरं भवतीति भावः। तथा च 'मा सङ्कोचं कार्षीरहं त्वत्स्नेहनिर्भराणि रतानि भृशमभिरोचयामि' इति तत्प्रवृत्तौ तस्य प्रोत्साहनमभिव्यज्यते। सरस्वतीकण्ठाभरणे 'उपचारानपेक्षो विस्रम्भजः प्रेमप्रकारो यथा' इति प्रसङ्गे उदाहृता सेयं गाथा।

नववनितासक्तं स्वामिनं तत्प्रणयवञ्चिता पूर्वसुभगा प्रश्नस्योत्तरे आह–

**सममुह्यसे दयितया तथापि कृशितासि किमिति रे भणसि।**

**अनभिज्ञोपरिभरतो मुञ्चति बलदोऽपि चाङ्गानि।।७५।।**[२]

प्रियया सह उह्यसे उरसि धार्यसे। तथापि 'किमिति कृशिता कृशेव जातासि' इति रे भणसि। 'रे' इति अवस्कन्दितचित्तया प्रणयधाष्ट्र्येन प्रयुक्तमिति बोध्यम्। हे अनभिज्ञ!

---

१. **ण वि तह छेअरआइँ वि हरन्ति पुणरुत्तराअरसिआइं।**
**जह जत्थ व तत्थ व जह व तह व सब्भावणेहरमिआइं।।७४।।**
[नापि तथा छेकरतान्यपि हरन्ति पुनरुक्तरागरसिकानि।
यथा यत्र वा तत्र वा यथा वा तथा वा सद्भावस्नेहरमितानि।।]

२. **उज्झसि पिआइ समअं तह विहुरेभणसि कीस किसिअं त्ति।**
**उवरिभरेण अ अण्णुअ मुअइ बइल्लो वि अङ्गाइं।।७५।।**
[उह्यसे प्रियया समं तथापि खलु रे भणसि किमिति कृशेति।
उपरि (भरेण) च हे अज्ञ मुञ्चति बलीवर्दोऽप्यङ्गानि।।]

उपरिभरतो उपरिनिहितभारवशाद् बलीवर्दोऽप्यङ्गानि मुञ्चति, सोऽप्यङ्गैः क्षीयत इत्यर्थः। अपिना बलीवर्दस्यापीयं दशा, तदा किं ममाऽबलाया वाच्यमिति सूच्यते। दयितया सममुह्यस इत्यनेन नवाङ्गनायां तव प्रेमसङ्क्रमणेऽपि मम तथैव त्वयि प्रणयः, प्रत्युत त्वत्प्रियेति त्वत्प्रणयबहुमानेन तामपि हृदये करोमीत्यात्मनः प्रेमातिशयः प्रकाश्यते। किं वा- त्वद्गतचित्ततया मम हृदयात्तवाऽपसरणमसम्भवमेव, त्वं चैषु दिनेषु नवीनया तया तव प्रियया विना क्षणं न तिष्ठस्येव। अत एव त्वन्मूर्त्या सह सपत्नीरूपेण सापि मम हृदये प्रतिक्षणमुदयतीत्युपालम्भोऽभिव्यज्यते। तथापि भणसीत्यनेन 'प्रणयभङ्गेन मद्दैन्यं जानतस्तव 'किमिति इयं कृशास्ति' इति विचारानयनमप्यनुचितं तथापि त्वं मुखेन प्रत्यक्षं मां प्रति कथयसीत्यहो ते नैर्घृण्यम्' इत्युपालम्भोऽभिव्यज्यते। सरस्वतीकण्ठाभरणानुसारं वैसादृश्यवती सेयं सहोक्तिः। कृशतायामुपरि-भारस्य कारणत्वमुक्तमिति काव्यलिङ्गम्। आभ्यामलङ्काराभ्यां 'नवप्रियासङ्क्रान्तप्रणयस्य ते वैमुख्यत एव मम सेयं दशा। त्वं दुर्बलतामेव पृच्छसि परं कदाचित्प्रेमभङ्गदुःखान्ममान्तोऽपि भवेत् (अङ्गानि मुञ्चतीति अङ्गमोचनार्थोपन्यासात्), परं परगतदुःखाननुभवान्न च त्वमिदं वेत्सि' इति सोपालम्भं प्रणयावेदनं ध्वन्यते।

चिरप्रवासादागतस्य दयितस्य रमणवृत्तान्तं सख्याऽनुयुक्ता नायिका सानुरागमाह-

**दृढगूढग्रन्थी इव कथमपि मे तेन मोचितौ बाहू।**
**अस्माभिरपि तदुरसि स्तनौ निखाताविवोत्खातौ।।७६।।**[१]

दृढं गूढा ग्रन्थिर्ययोः, अनुरागनिर्भरपरिरम्भणवशादन्योन्यं निबिडावसक्तौ मे बाहू तेन कथमपि मोचितौ। ग्रन्थिपदेन, अनर्घमभिलषितधनं यथा दृढग्रन्थ्या निबध्यते तथा बहोः कालादुपलब्धः प्रेयान्न पुनरपसरेदिति दृढभुजबन्धेन बध्यत इति सूच्यते। तेन दयितं प्रत्यनुराग उत्कण्ठातिशयश्च ध्वनितः। कथमपीति पदेन सुखविह्वलाया मे नासीद्दयितं मोक्तुमवबोधः, परं दयितेन कष्टाद्बाहुबन्धो मोचित इति जडता ध्वन्यते। अस्माभिरपि तदुरसि निखाताविव भूमिनिहितन्यासाविव अन्तरवरोपितौ स्तनौ कथमपि उत्खातौ उद्धृतौ। तदुरसि निखातावित्यनेन स्तनयोः काठिन्यमुत्तुङ्गता चाभिव्यज्यते। निखातावित्यनेन- निधिकुम्भौ यथा भूमौ निखन्येते तथा दृढमाश्लिष्यता प्रियतमेन स्तनौ निजोरसि निखाताविति स्तनयोर्बहुमानेनानुरागातिशयो ध्वनितः। दृढग्रन्थीइव, निखाताविवेति, उपमाभ्यां नायकयोः परस्परममूल्यधनबुद्ध्या मिथः प्रणयपरिपाकातिशयो व्यज्यते।

---

१. **दिढमूलबन्धगण्ठि व्व मोइआ कहँ वि तेण मे बाहू।**
**अम्हेहिँ वि तस्स उरे खुत्त व्व समुक्खआ थणआ।।७६।।**
[दृढमूलबन्धग्रन्थी इव मोचितौ कथमपि तेन मे बाहू।
अस्माभिरपि तस्योरसि निखताविव समुत्खातौ स्तनौ।।]

मुग्धां कलहान्तरितामनुनीयागता सखी तत्कान्तमाह–

**अनुनयपरितोषितया तवापराधांश्चिरेण गणयन्त्या।**
**अप्रभवत्करयुग्माङ्गुल्या च तया चिरं रुदितम्।।७७।।**[१]

चिरेण बहुकालपर्यन्तम्, अनेनापराधानां बहुत्वं व्यज्यते। गणनावसरे अपराधानां बहुत्वादप्रभवन्त्यः (गणनां कर्तुमशक्नुवत्यः) करयुग्मस्य उभयोः करयोरङ्गुल्यो यस्यास्तया। इयतोपराधान् कथं गणयामीत्याकुलया तया बहुकालं रुदितम्। ननु अपराधगणनायामपि कथमियं मुग्धेति चेत् मुग्धाया अपि तथाचेष्टा वर्ण्यते। उक्तं स्वयं कोषकारेण–'हत्थेसु अ पाएसु अ' (४/७), किञ्च सख्यनुनयेनैव प्रसादः, तदग्र एवापराधगणनापि मुग्धात्वे साधिका। तथा च 'मुग्धया तया बहवस्तवापराधा इदानीं मदनुनयेन सोढाः, न पुनरेवमग्रे करिष्यसि' इति नायकं प्रत्यभिव्यज्यते।

प्रियतमसकाशादागतां प्रस्विन्नाङ्गीं नायिकामुद्दिश्य सखी सखीः प्रति सपरिहासमाह–

**स्वेदच्छलेन पश्यत तनुनि तदङ्गे विमातुमसमर्थम्।**
**लावण्यं सरतीव त्रिवलीसोपानपङ्क्त्येदम्।।७८।।**[२]

तनुनि तस्या अङ्गे विमातुमसमर्थम् (अमात्) इदं लावण्यं त्रिवलीरूपसोपानपङ्क्त्या स्वेदच्छलेन सरति बहिर्निःसरतीति पश्यत। तथा च– दयितेन सह यौवनसुखमुपभुज्य समागतेयमिति सखीः प्रति सरसपरिहासो व्यज्यते।'नर्तनश्रमप्रस्विन्नाङ्ग्या दुहितुः सौन्दर्यातिशयं कामुकचित्तप्रलोभनाय कुट्टनी वर्णयति' इति गङ्गाधरावतरणम्। चौर्यरतगोपनार्थं सख्या उक्तिरियमिति केचित्।

---

१. **अणुणअपसाइआए तुज्झ वराहे चिरं गणन्तीए।**
**अपहुत्तोहअहत्थङ्गुरीअ तीए चिरं रुण्णम्।।७७।।**
[अनुनयप्रसादितया तवापराधाञ्श्चिरं गणयन्त्या।
अप्रभूतोभयहस्ताङ्गुल्या तया चिरं रुदितम्।।]

२. **सेअच्छलेण पेच्छह तणुए अङ्गम्मि से अमाअन्तम्।**
**लावण्णं ओसरइ व्व तिवलिसोवाणवत्तीए।।७८।।**
[स्वेदच्छलेन पश्यत तनुकेऽङ्गे तस्या अमात्।
लावण्यमपसरतीव त्रिवलीसोपानपङ्क्तिभिः।।]

कस्याश्चित्प्रभूतधनाप्राप्तिरूपं दोषं परिहर्तुं भुजङ्गजनोत्कण्ठां संवर्धयन्ती कुट्टनी सौन्दर्यप्रशस्तिमन्यापदेशेनाह–

**दैवायत्ते तु फले किं क्रियतां पुनरियद् ब्रूमः।**

**कङ्केल्लिपल्लवानां न पल्लवाः सन्ति सदृशोऽन्ये।।७९।।**[१]

कङ्केलिरशोकवृक्ष इति त्रिकाण्डशेषो राजनिघण्टश्च। अन्ये पल्लवा अशोकपल्लवानां न सन्ति सदृशा इत्यवश्यं भणामः। फलमाम्रादिवन्नास्ति एतत्तु दैवाधीनमत्र किं क्रियताम्, इत्यभिधया वाच्यार्थबोधे पर्यवसिते फलपदेन शब्दशक्तिमूलानुरणनव्यङ्ग्यरूपेण 'सर्वातिशायिनोऽपि जनस्य फलं सम्पल्लक्षणं दैवाधीनतया कदाचिन्न भवति' इति सामान्यरूपं विशेषस्य समर्थकं प्रतीयत इत्यर्थान्तरन्यासस्य ध्वनिः। सम्पूर्णवाक्यार्थेन तु 'दैवायत्तौ लाभसत्कारौ मा भवतां नाम, परमेतत्सदृशी परःशतेष्वपि सुन्दरी न प्राप्स्यते, तत्किं विचारयसि, निजसौभाग्यं बहु मन्यस्व'' इति भुजङ्गं प्रति ध्वन्यते। अप्रस्तुतेनाशोकवृत्तान्तेन प्रस्तुतस्य नायिकावृत्तान्तस्य प्रतीतिरित्यप्रस्तुतप्रशंसाध्वनिरिति सेयं गाथा ध्वन्यालोक उदाहृता।

कलाहन्तरितां नायिकामनुनेतुमागतः कान्तः स्वसौभाग्यख्यापनाय निजसुहृदं प्रति तां प्रदर्शयन्नाह–

**क्षालयतीव कलङ्कं कपोलपतितस्य मानिनी शशिनः।**

**अनवरतवाष्पजलभृतनयनघटाभ्यां विलोकयत।।८०।।**[२]

मानिनी कपोले प्रतिबिम्बितस्य चन्द्रस्य कलङ्कमनवरतवाष्पजलेन भृताभ्यां नयनकलशाभ्यां क्षालयतीव इति पश्यत। चन्द्रप्रतिबिम्बसङ्क्रमणेन कपोलयोर्मसृणता–स्वच्छता–

---

१. **देव्वाअत्तम्मि फले किं कीरइ एत्तिअं पुणो भणिमो।**
**कङ्केल्लिपल्लवाणं ण पल्लवा होन्ति सारिच्छा।।७९।।**
[दैवायत्ते फले किं क्रियतामियत्पुनर्भणामः।
कङ्केल्लिपल्लवानां न पल्लवा भवन्ति सदृशाः।।]

२. **धुअइ व्व मअकलङ्कं कवोलपडिअस्स माणिणी उअह।**
**अणवरअवाहजलभरिअणअणकरसेहिँ चन्दस्स।।८०।।**
[धावतीव मृगकलङ्कं कपोलपतितस्य मानिनी पश्यत।
अनवरतवाष्पजलभृतनयनकलशाभ्यां चन्द्रस्य।।]

तिशयश्च सूच्यते, तेन च नायिकायाः सौन्दर्यातिशयो द्योत्यते। शशिनः कलङ्कं क्षालयतीवेत्युत्प्रेक्षया 'त्वन्मुखस्याग्रे कलङ्कीति प्रत्यक्षं चन्द्रोऽवधीरित एव, परमिदानीं मानेनाप्रसन्नं मुखं दधती त्वं चन्द्रापमानकलङ्कं स्वयं प्रक्षाल्य मुखसाम्ये तं स्थापयितुमिच्छसीति मुखाप्रसादनकरं मानहतकं लघु परित्यज' इत्यनुनयो ध्वन्यते। अथवा वाष्पजलै कपोलक्षालने कज्जलश्यामिकासङ्गेन चन्द्रमध्ये निष्कलङ्कस्य तवाननस्य सादृश्यप्रतिबन्धको यो मृगकलङ्क आसीत्तं क्षालयसि, तवापि कज्जलकालिम्राऽङ्कसम्बन्धान्मुखेन सह चन्द्रसादृश्ये प्रतिबन्धाभावाच्चन्द्रकलङ्कक्षालनमेवेति पश्य विरोधिनो जयम्, ततश्चालं मानप्रसङ्गेनेति नायकाकूतं ध्वन्यते। किञ्च कपोले कज्जलेन कलङ्कं कुर्वत्यपि कलङ्कं क्षालयसीति विरोधध्वनिरपि सहृदयैरनुभवनीयः। एवं च- असामान्यसुन्दर्या अपि मद्वियोगे कियदस्या दुःखम्, अत एव पश्य मे सौभाग्यमित्यनवरतवाष्पेत्युक्त्या सूचयन्नायकः स्वसौभाग्यगर्वं सुहृदं प्रत्यभिव्यनक्ति।

बहुपत्नीकस्य भर्तुर्नेयमत्यन्तवल्लभा भविष्यति, ततश्च त्वद्गतमानसा सेयं पुनरागमिष्यत्येवात्र, ततः किमेतावद्विक्लवोऽसीति वयस्येनाश्वास्यमानः पितृगृहात्पतिगृहं प्रयान्त्याः कस्याश्चिदुपनायकस्तं प्रत्यन्यापदेशेनाह-

**अन्यकुसुममालासु च्यवेत नवमालिका न गन्धेन।**

**कोऽप्यन्यः किल मांसलपरिमलपटलो हताशायाः।।८१।।**[१]

अन्यपुष्पप्रथितमालिकानां मध्ये नवमालिका (पुष्पम्) आत्मनो गन्धेन न च्युता भवेत्, न न्यूना भविष्यतीत्यर्थः। यतः किल हताशाया अस्या मांसलो बहलः परिमलपुञ्जः कोप्यन्य एव अन्यपुष्पेभ्यो विलक्षण एव। हताशाया इति प्रेमभर्त्सनयोक्तिः। अथवा हता आशा अन्यासां सपत्नीनां यया तस्या इत्यर्थः। तथा च- स्वलावण्येन अन्य सपत्नीनामियं परिभवप्रदा स्यादिति व्यज्यते। कोऽपीत्यनेन परिमलस्यानिर्वचनीयता सूच्यते। तथा च- ये किलास्याः सौन्दर्यसौकुमार्यादयो गुणाः सन्ति तानहमेव जानामि, न त्वां वचनेन प्रत्याययितुं प्रभवामीति सुहृदं प्रत्यभिव्यज्यते। मांसल इत्यनेन बहलमस्याः सौन्दर्यं तथा चोपभोगादिना मन्दीभूतलावण्यच्छायतया शिथिलितभर्तृप्रणयाया अस्याः कदाचिल्लाभः स्यात्साप्याशा नेति द्योत्यते। एवं च- सर्वसपत्नीजनमूर्धन्या सेयं भर्तुः परमवल्लभा स्यादतोऽस्याः पुनः समागमाय सुमृशं विमनाये इत्यात्मनोऽभिप्रायः सुहृदं प्रतिध्वन्यते।

---

१. **गन्धेण अप्पणो मालिआणँ णेमालिआ ण फुट्टिहइ।**

**अण्णो को वि हआसाइ मंसलो परिमलुग्गारो।।८१।।**

[गन्धेनात्मनो मालिकानां नवमालिका न च्युता भविष्यति।

अन्यः कोऽपि हताशाया मांसलः परिमलोद्गारः।।]

नष्टधनं भुजङ्गमुत्साहयितुं कुट्टनी सत्पुरुषप्रशंसामाह–

**तुङ्गानि फलविपत्त्या फलसम्पत्या नितान्तनम्राणि।**

**हृदयानि सुपुरुषाणां महातरूणामिवोच्चशिखराणि।।८२।।**[१]

दैवदत्तवैभवसम्पदा अत्यन्तमवनतानि, गर्वशून्यत्वात्। वैभवक्षये तु दैन्यजनितहृदयाधोगतिराहित्येन सुपुरुषाणां हृदयानि महाशयत्वादुन्नतानीति भावः। शिखराणि अग्राणि। फलशब्दस्य श्लिष्टत्वेन श्लेषानुप्राणिता सेयमुपमा। अनया च 'धनापगमेऽपि उन्नतहृदयेन न त्वया विमानायितव्यम्' इति भुजङ्गं प्रत्यभिव्यज्यते।

प्रोषितभर्तृकायाः सखी तत्कान्तस्य सत्वरं गृहागमनार्थं तत्समीपगामिनं पान्थमाह–

**आश्वासयति परिजनं विलुठन्त्या हन्त पथिकजायायाः।**

**निःस्थामवर्तने किल वलयरवो वलितकरमुखरः।।८३।।**[२]

विलुठन्त्याः शयनीयतले विरहवेदनया इतस्ततः परिवर्तमानायाः पथिकजायाया निःस्थाम निःसहं यद्वर्तनं पार्श्वपरिवर्तनं तस्मिन्। वलिते चलिते करे, मुखरोऽनुबद्धझणत्कारो वलयशब्दः परिजनमाश्वासयति सान्त्वयति। कङ्कणशब्दं श्रुत्वा जीवतीति ज्ञानेन परिजनस्याश्वासो भवतीति भावः। चङ्क्रमणादिकस्य तु का कथा, शयनीयेऽपि सा यदा वेदनया पार्श्वपरिवर्तनं करोति तदैव जीवतीति ज्ञायते, तेन च विरहक्लेशातिशयो व्यज्यते। निःस्थामेत्यनेन पार्श्वपरिवर्तनमपि वेदनातिशयेन निःसहतयैव करोति, अन्यथा तु पार्श्वपरिवर्तनायासमपि सा

---

१. **फलसंपत्तीअ समोणआइँ तुङ्गाइँ फलविपत्तीए।**
**हिअआइ सुपुरिसाणं महातरूणं व सिहराइं।।८२।।**
[फलसम्पत्या समवनतानि तुङ्गानि फलविपत्या।
हृदयानि सुपुरुषाणां महातरूणामिव शिखराणि।।]

२. **आसासेइ परिअणं परिवत्तन्तीअ पहिअजाआए।**
**णित्थाणुवत्तणे वलिअहत्थमुहलो वलअसद्दो।।८३।।**
[आश्वासयति परिजनं परिवर्तमानायाः पथिकजायायाः।
निःस्थामवर्तने वलितहस्तमुखरो वलयशब्दः।।]

न सहते इति सूच्यते। वलित एव करे मुखर इत्यनेन–अशक्ततया किञ्चिद्धस्तस्पन्दन एव वलयशब्दो भवति, एवं च वलयानां समधिकशैथिल्येन कृशतातिशयो ध्वन्यते। जीवतीत्येता–वन्मात्रेणापि सान्त्वनया विरहवेदनातिशयात्तस्या जीवनं परिजनस्य सन्दिग्धमेवेति ध्वन्यते। परिजनमाश्वासयति न पुनरन्यजनमित्यनेन समीपस्थतया परिजनेनैव कङ्कणशब्दो विरहदुर्बलायाः श्रूयत इति शय्योपान्तस्थितपरिजना सन्दिग्धजीवना सा कथञ्चिन्नाद्यापि दशमीं दशामुपगतेति सत्वरं गृहमुपगच्छेति प्रवासिनं प्रत्यभिव्यज्यते।

क्षीणविभवोऽपि स न कदाचिदनुदाराशयः स्यादिति नायिकामनुकूलयितुं दूती नायकौदार्यमाह–

**उन्नतमेव मनः स्यान्मनस्विनो ह्यन्तिमास्वपि दशासु।**

**किरणाः स्फुरन्ति सन्ततमस्तमनेप्यूर्ध्वमेव रवेः।।८४।।**[१]

अस्तमनेऽपि रवेः किरणाः सन्ततं नित्यमूर्ध्वमेव स्फुरन्ति प्रसरन्ति। अनेन दृष्टान्तेन उन्नतमनाः स त्वामेव कामयते न कदाचिदधमां स्पृहयेन्न चास्य वदान्यतायां विशङ्कस्वेति नायिकायाः प्रोत्साहनं व्यज्यते।

अतीवोदाराशयः कारुणिकश्च स इति नायकगुणसूचनेन काञ्चिदुन्नतहृदयां नायिकामनुर–ञ्जयन्ती दूती सुजनप्रशंसामाह–

**उदरं भरन्ति मातः शकुना अप्यात्मनो ह्यनुद्विग्नाः।**

**विकलोद्धरणनिसर्गा भवन्ति यदि केऽपि सत्पुरुषाः।।८५।।**[२]

---

१. **तुङ्गो च्चिअ होइ मणो मणंसिणो अन्तिमासु वि दसासु।**
**अत्थमणम्मि वि रइणो किरणा उद्धं चिअ फुरन्ति।।८४।।**
[तुङ्गमेव भवति मनो मनस्विनोऽन्तिमास्वपि दशासु।
अस्तमनेऽपि रवेः किरणा ऊर्ध्वमेव स्फुरन्ति।।]

२. **पोट्टं भरन्ति सउणा वि माउआ अप्पणो अणुव्विग्गा।**
**विहलुद्धरणसहावा हुवन्ति जइ के वि सप्पुरिसा।।८५।।**
[उदरं बिभ्रति शकुना अपि हे मातर आत्मनोऽनुद्विग्नाः।
विह्वलोद्धरणस्वभावा भवन्ति यदि केऽपि सत्पुरुषाः।।]

परोदरपूरणचिन्ताशून्यतया अनुद्विग्नाः शकुनाः पक्षिणोऽपि आत्मन उदरं पूरयन्ति। यदि केऽपि महान्तः पुरुषा भवन्ति ते विकलस्य दुर्गतस्य उद्धरण आपन्निवारको निसर्गः स्वभावो येषां तादृश भवन्तीत्यर्थः। केपीत्यनेन तादृशा महापुरुषा दुर्लभा भवन्तीत्यभिव्यज्यते। तथा चैतादृशमसुलभमुदाराशयं सत्वरमुपगच्छेति दूत्या ध्वन्यते। अत्र 'भरन्तीत्यस्य बिभ्रती'ति गङ्गाधरकृतच्छाया तु विच्छायैव, धारणार्थकस्य पूरणार्थेऽवाचकत्वात्। 'पोट्टं भरन्ती'ति मूलस्य उदरभरण एव तात्पर्याद्धारणार्थस्याऽसङ्गतेः।

कृत्रिमेणापि भावेन सोऽनुरञ्जनीय इति वारं वारमनभिरुचितपुरुषानुरागार्थमागृह्णतीं दूतीं काचिद्विदग्धवधूराह–

**लोकः परमार्थज्ञः सद्भावमृते न गृह्यते जातु।**
**वञ्चयितुं काञ्जिकया को वा शक्नोति जीर्णमार्जारम्।।८६।।**[१]

परमार्थज्ञो वस्तुतत्त्वज्ञो लोकः सद्भावं विना कदाचिदपि न गृह्यते न वशीक्रियते। जीर्णमार्जारं वृद्धबिडालं दध्यादिस्थाने काञ्जिकां प्रदाय को वा प्रतारयितुं शक्नोति। काञ्जिकयेत्यनेनकृत्रिमभावः स्नेहाग्रेऽतिलघुः सत्वरपरिचेयश्चेति सूच्यते। एतेन–बहुवनितासु कृतासक्तितया अनुभवशाली स न कृत्रिमभावेन प्रतारयितुं सुशक इति दूतीं प्रति ध्वन्यते।

अलङ्काराद्यलानापरितुष्टां नायिकामवबोधयितुमकारणस्नेहमहिमानमन्यापदेशेन दूत्याह–

**विपिनात्तृणमथ विपिनात्पानीयं सर्वतः स्वयंग्राह्यम्।**
**हरिणानां हरिणीनां तथापि च प्रेम मरणान्तम्।।८७।।**[२]

---

१. **ण विणा सब्भावेण ग्घेप्पइ परमत्थजाणुओ लोओ।**
**को जुण्णमज्जरं कञ्जिएण वेआरिउं तरइ।।८६।।**
[न विना सद्भावेन गृह्यते परमार्थज्ञो लोकः।
को जीर्णमार्जारं काञ्जिकया प्रतारयितुं शक्नोति।।]

२. **रण्णाउ तणं रण्णाउ पाणिअं सव्वअं सअंगाहम्।**
**तह वि मआणँ मईणँ अ आमरणन्ताइँ पेम्माइं।।८७।।**
[अरण्यात्तृणमरण्यात्पानीयं सर्वतः स्वयंग्राहम्।
तथापि मृगाणां मृगीणां चामरणान्तानि प्रेमाणि।।]

स्वयं ग्राह्यमित्यनेन भोजनादिभारोऽपि न पुरुषसात्तथापि मृगीणामपरिमितः प्रेमेति तां प्रत्यभिव्यज्यते। तथा च-केवलमलङ्काराद्यप्राप्त्यैव प्रणयशिथिलीकरणं नोचितं प्रत्युत निरुपाधिकं प्रेमैव श्लाघ्यमिति ध्वन्यते।

ग्रीष्मेऽपि कामिनोः परिरम्भणादि यथा सुखकरं न तथान्यदिति कश्चित्सहृदयः सुहृदमाह–

**न तथापनयति तापं चन्दनपङ्कोऽपि कामिमिथुनानाम्।**
**ग्रीष्मे यथा सुविषमेऽपि मिथः परिरम्भसुखकेलिः।।८८।।**[१]

चन्दनपङ्को ग्रीष्मे बाह्यं तापमपनयति नाभ्यन्तरम्, अन्योऽन्यालिङ्गनकेलिश्च पुनरुभयविधमिति भावः। ऊष्मोत्पादकस्यापि तापापनोदकत्वेन विरोधः, ततश्च ग्रीष्मेऽपि सर्वापेक्षया प्रियायामेवानन्दमधिकमुपलभे इति द्योत्यते। अत्र 'सन्तापातिशयखण्डनाय चन्दनलेपाद्युपचारं कुर्वाणां वारयन्ती विरहिणी काचिदाह' इति गङ्गाधरावतरणम्। सम्भोगचेष्टा–स्वालिङ्गनं यथेति प्रघट्टके उदाहृता सेयं गाथा कण्ठाभरणे।

कुलयुवतीनां सलज्जत्वेऽपि भावसूचनचातुर्यं प्रियतमेषु कियत्सुखावहमिति कस्या–श्चन वृत्तान्तं नागरिकः सुहृदमाह–

**किमिति घृतलिप्तवदना तिष्ठसि परिपृष्टयेति कुलवध्वा।**
**द्विगुणावेष्टितजघनस्थलया लज्जानतं हसितम्।।८९।।**[२]

घृतलिप्तवदना किमिति तिष्ठसीति स्त्रीष्वनधिकं प्रवृत्तेन प्रियतमेन परिपृष्टया वध्वा द्विगुणावेष्टितं पूर्वतोऽप्यधिकं प्रच्छादितं जघनस्थलं यया एतादृश्या सत्या त्रपया लज्जयावनतं

---

१. **तावमवणेइ ण तहा चन्दणपङ्को वि कामिमिहुणाणम्।**
**जह दूसहे वि गिम्हे अण्णोण्णालिङ्गणसुहेल्ली।।८८।।**
[तापमपनयति न तथा चन्दनपङ्कोऽपि कामिमिथुनानाम्।
यथा दुःसहेऽपि ग्रीष्मे अन्योन्यालिङ्गनसुखकेलिः।।]

२. **तुप्पाणणा किणो चिट्ठसि त्ति पडिपुच्छिआएँ वहुआए।**
**विउणावेढ्ढिअजहणत्थलाइ लज्जोणअं हसिअम्।।८९।।**
[घृतलिप्तानना किमिति तिष्ठसीति परिपृष्टया वध्वा।
द्विगुणावेष्टितजघनस्थलया लज्जावनतं हसितम्।।]

यथा स्यात्तथा हसितम्। जघनस्थलप्रच्छादनसहकृतेन सलज्जहसितेनात्मनो रजोदर्शनमाविष्कृतमिति भावः। रजोदर्शनसमये घृतलिप्ताननया स्थीयत इति स्त्रीणामाचारः। 'सपत्न्या दुश्चारित्र्यख्यापनार्थं मुग्धवधूवृत्तविरुद्धां प्रथमरजोयोगसूचनव्युत्पत्तिं तस्याः सूचयन्ती कापि सेर्ष्यमाह' इति गङ्गाधरः।

कुलयुवतीनां कठिनं किल चारित्र्यमिति शिक्षयन्ती पुरन्ध्री कुलवधूमाह–

**स्वहृदय एव विलीनो नोक्तो ज्ञात्वा तु गृहसारम्।**
**बान्धवकुटिलवचनमिव दुर्गतवध्वा स्वदोहदो हन्त।।९०।।**[1]

दरिद्रस्य पत्न्या आत्मनो गृहस्य सामर्थ्यं ज्ञात्वा बन्धुजनानां सन्तापजनकं वचनमिव स्वदोहदो गर्भिणीत्वकाले सञ्जातः स्वमनोऽभिलाषः पतिश्वश्र्वादीनामग्रे न कथितः किन्तु हन्त स हृदय एव विलीनः।'प्रसवोत्सवे एवमिव धनवितरणादिकं भविष्यति' इति सन्तापनार्थं बान्धवैर्वक्रोक्त्या कथितं वचनं गृहजनानां केवलं क्लेशकरमेव भवेन्न पुनः सामर्थ्याभावात्तत्प्रतीकारः क्षम इति बुद्ध्वा यथा न कथितं तथा तत्पूरणसामर्थ्याभावं ज्ञात्वा स्वदोहदोऽपि नोक्त इति भावः। दोहदस्योत्पत्तिमनुक्त्वा 'स्वहृदय एव विलीनः' इति केवलं तद्विलयस्यैव कथनेन उत्पन्नोऽपि दोहदः सुशीलतया न हृदये क्षणमपि स्थाप्यते किन्तु उत्पत्तिक्षण एव विलीयत इति सूच्यते, तथा च सोऽयमतिशयोक्तिध्वनिः। अथवा हृदय एव विलीन इत्यनेन इच्छायाः प्रबलत्वेन वारं वारं सा हृदय एव भ्राम्यन्तीं विलीयते न बहिः प्रकाश्यत इति सूच्यते। एवं च गृहजनस्य मनःक्लेशनिवारणार्थं स्वयं मनःक्लेशं सहन्ते कुलनार्य इति तां प्रत्यभिव्यज्यते।

पुत्रवत्या अपि गृहिण्याः कियत्सौन्दर्यमिति दर्शयितुं सहृदयः स्वसुहृदमाह–

**धावति विगलितकचभरसिचयनियमनावरुद्धकरकमला।**
**चन्दिलभयविपलायितबालकपरिमार्गिणी गृहिणी।।९१।।**[2]

---

१. **हिअअ च्चेअ विलीणो ण साहिओ जाणिऊण घरसारम्।**
**बान्धवदुव्वअणं विअ दोहलओ दुग्गअवहूए।।९०।।**
[हृदय एव विलीनो न कथितो ज्ञात्वा गृहसारम्।
बान्धवदुर्वचनमिव दोहदो दुर्गतवध्वा।।]

२. **धावइ विअलिअधम्मिल्लसिचअसंजमणवावडकरग्गा।**
**चन्दिलभअविवलाअन्तडिम्भपरिमग्गिणी घरिणी।।९१।।**
[धावति विगलितधम्मिल्लसिचयसंयमनव्यापृतकराग्रा।
चन्दिलभयविपलायमानडिम्भपरिमार्गिणी गृहिणी।।]

विगलितयोः कचभरसिचययोः (केशपाश-पटयोः) नियमने संयमने अवरुद्धे व्यापृते करकमले यस्याः सा। चन्दिलो नापितस्तस्य भयेन विपलायितस्य बालकस्यान्वेषिणी गृहिणी धावति। ससम्भ्रमगमनेन विलुलितकेशवसनाञ्चलाया भुजमूलशोभां पश्येति भावः। क्षौरकष्टा-शङ्कया बालका नापिताद्बिभ्यतीति लोकः। 'चन्दिलः पुंसि वास्तूकशाके गर्भे च नापिते' इति मेदिनी। तथा च चन्दिलेति देशीशब्दः प्राकृतपर्यवसायीति यैरुक्तं तदपास्तम्। अत एव ध्वन्यालोके 'अर्थान्तरगतिः काक्वा या चैषा परिदृश्यते' इत्यत्र काक्वा अर्थान्तरप्रतीतेरुदाहरणस्य 'आम असइओ ओरम.' (५/१७) गाथाया व्याख्याने 'चन्दिलं नापितमेव पामरप्रकृतिं न कामयामहे' इति लोचनकारेण नापितवचनश्चन्दिलशब्दः संस्कृतभाषायामुपात्तः।'कुलस्त्रीचरित-विरुद्धं सपत्न्या धाष्ट्यं ख्यापयन्ती कापि बन्धुवधूजनमाह' इति गङ्गाधरावतरणम्। अत्र पलायमानेति मूलानुरोधे तु 'चन्दिलभयपरिधावद्बालक' इति पाठो बोध्यः।

नायिकाया वयःसन्धि सौभाग्यं च भुजङ्गजनमनोहरणार्थं दूती आह-

**वहति वधूर्नवयौवनमनोहराणि हि यथा यथाङ्गानि।**

**कृशति न तथा तथास्या मध्यो दयितः सपत्नश्च।।९२।।**[1]

यथा यथा येन येन क्रमेण। सपत्नः प्रतिपक्षः। कृशति कृशो भवति, आचारार्थे क्विप्। यौवनस्वाभावान्मध्यः कटिदेशः, अत्यासक्तया दयितः, ईर्ष्यासन्तापाच्च सपत्नीप्रभृतिः प्रतिपक्षः कृशो भवतीति भावः। यौवनरूपकारणस्य मध्यादिकृशतारूपकार्यस्य च समानका-लिकतावर्णनेनाक्रमातिशयोक्तिः। मध्यो दयितः सपत्नश्च कृशतीत्येकदेशे तु दयिते सपत्ने च तुल्यव्यापारवर्णनात्सरस्वतीकण्ठाभरणोक्ता द्वितीया तुल्ययोगिता ज्ञेया। एताभ्यामलङ्कारा-भ्यामलङ्कृतेन वस्तुना तु वयःसन्धिकृतेन नायिकायाः सौन्दर्येण सह दयितस्यात्यन्तं वल्लभा सा प्रचुरप्रयत्नेन साध्येति दूत्याकूतं ध्वन्यते।

कुलवधूनां निजदयिते निरुपाधिकः प्रेमा भवतीति वृद्धपतिपद्वेषिणीं काञ्चन चञ्चलशीलां शिक्षयन्ती काचिद्विदग्धवधूराह-

---

१. **जह जह उव्वहइ वहू णवजोव्वणमणहराइँ अङ्गाइं।**
**तह तह से तणुआअइ मज्झो दइओ अ पडिवक्खो।।९२।।**
[यथा यथोद्वहते वधूर्नवयौवनमनोहराण्यङ्गानि।
तथा तथा तस्यास्तनूयते मध्यो दयितश्च प्रतिपक्षः।।]

**भवति पतिः किल जीर्णो यथा यथा दुर्गतो विरूपोऽपि।**
**कुलयुवतीनामधिकं तथा तथा वल्लभो भवति।।९३।।**[1]

यौवनं धनं सौन्दर्यं वावलम्ब्य निरुपाधिकप्रेमवतीनां न प्रणयः। प्रत्युत वृद्धादिः किल नान्ययुवतीनां प्रेमभाजनं भविष्यतीति निरंशप्रेमलाभसन्तोषेण निसर्गतः पतिप्रणयिनीनां कुलरमणीनामधिकाधिकां प्रीतिरिति भावः।

कस्मिन्नपि युवके बद्धप्रणया काचित्पथि गच्छन्तं तं समानवयःशीलां मातुलीं दर्शयन्ती आह–

**मातुलि सोऽयं युवको वारंवारेण यमसत्यः।**
**ग्रामैकवटोदकमिव कृच्छ्रेण प्राप्नुवन्ति घनघर्मे।।९४।।**[2]

हे मातुलि, अयं स युवकोऽस्ति यम् असत्यो घनघर्मे निर्भरग्रीष्मसमये ग्रामस्य एकं वटोदकमिव, वटवृक्षसमीपस्थस्य एकमात्रकूपस्य जलमिवेत्यर्थः। वारंवारेण वारक्रमेण, पर्यायेणेति यावत्, कृच्छ्रेण प्राप्नुवन्ति। ग्रामैकवटोदकमिवेत्यनेन ग्रामे सर्वासामयमेव स्पृहणीय इति तस्यासाधारणसौन्दर्यं ध्वन्यते। घनघर्मे शीतलजलं विना जीवितं यथा दुर्वहं तथा सर्वासामप्यसतीनामयमालम्बनमिति तस्य दुर्लभत्वं व्यज्यते। पर्यायेण प्राप्नुवन्तीत्यनेन एकस्या उत्तरमेका प्राप्नोतीति तस्य स्वल्पकालाय लभ्यत्वं द्योत्यते। तथा–च यमन्याः स्वल्पकालर्थमपि महता कष्टेन प्राप्नुवन्ति स मयानायासेन प्राप्त इति निजसौभाग्यमभिव्यज्यते। 'अडअणाओ' असत्यः, इति गङ्गाधरटीका। कुलबालदेवस्तु 'जं अडअणाओ' इत्यस्य 'यं च ललनाः' इति च्छायामाह।

---

१. **जह जह जरापरिणओ होइ पई दुग्गओ विरूओ वि।**
**कुलवालिआणँ तह तह अहिअअरं वल्लहो होइ।।९३।।**
[यथा यथा जरापरिणतो भवति पतिर्दुर्गतो विरूपोऽपि।
कुलपालिकानां तथा तथाधिकतरं वल्लभो भवति।।]

२. **एसो मामि जुवाणो बारंबारेण जं अडअणाओ।**
**गिम्हे गामेक्कवडोअअं व किच्छेण पावन्ति।।९४।।**
[एव मातुलानि युवा वारंवारेण यमसत्यः।
ग्रीष्मे ग्रामैकवटोदकमिव कृच्छ्रेण प्राप्नुवन्ति।।]

पराङ्गनासङ्गदुर्ललितस्य निजदयितस्य सङ्केतस्थानभङ्गेन परितुष्टा काचित्कुलवधूः पितृष्वसारमाह–

**ग्रामवटस्य पितृष्वस आपाण्डुरकान्ति पाण्डुरमुखीनाम्।**
**सममसतीनां मनसा निपतति वाताहतं पत्रम्।।९५।।**[१]

हे पितृष्वसः! ग्रामवटस्य ग्राममध्यस्थवटस्य। अनेन जटापत्रगहनतया रात्रौ चौर्यसुरत-सौकर्यं व्यज्यते। आपाण्डुरकान्ति परिणततया सर्वतः पाण्डुरच्छायं पत्रं वाताहतं सत् सङ्केतस्थान-भङ्गात् विघटितसुरतसौख्यतया पाण्डुरमुखीनामसतीनां हृदयेन समं पतति। पत्रमित्येकवचनेन एकैकपत्रपतने हृदयपतनसमदुःखं भवतीति ध्वन्यते। सङ्केतस्थानभङ्गेनोभयोर्दुःखसम्भवेऽपि केवलमसतीनां दुःखवर्णनाद्दयितापवादं जिहीर्षन्त्या नायिकाया दाक्षिण्यं पतिपरायणत्वं च द्योत्यते। अनया च सहोक्तया 'अहं दयिताभिसारस्थानानि जानन्त्यपि तदनुवृत्तकौशलेन सर्वं सहे' इत्यात्मनो धैर्यं व्यज्यते।

आत्मन इङ्गितज्ञतां सूचयन्नागरिकः स्वसुहृदमाह–

**पश्यत्यलब्धलक्ष्यं विहसति शून्यं श्वसिति दीर्घम्।**
**जल्पति यथाऽस्फुटार्थं तथा तु हृदयस्थितं किमप्यस्याः।।९६।।**[२]

यथा इयं अलब्धलक्ष्यं यथा स्यात्तथा, लक्ष्यं विनैव पश्यतीत्यर्थः। दीर्घं निश्वसिति, अनेन चिन्ता व्यज्यते। शून्यं हसति, विनैव लक्ष्यं हसतीत्यर्थः। अस्फुटार्थं जल्पति, प्रियं हृदये स्मृत्वा तेन सममस्पष्टार्थं यथा तथा संलापादिकं करोतीत्यर्थः। अनेन स्मृतिर्व्यज्यते- 'स्मृतिः पूर्वानुभूतार्थविषयं ज्ञानमुच्यते'। तथा अस्याः किमपि हृदयस्थितमस्ति। अलक्ष्यं

---

१. **गामवडस्स पिउच्छा आवण्डुमुहीणँ पण्डुरच्छाअम्।**
**हिअएण समं असईणँ पडइ वआहअं पत्तम्।।९५।।**
[ग्रामवटस्य पितृष्वस आपाण्डुमुखीनां पाण्डुरच्छायम्।
हृदयेन सममसतीनां पतति वाताहतं पत्रम्।।]

२. **पेच्छइ अलद्धलक्खं दीहं णीससइ सुण्णअं हसइ।**
**जह जम्पइ अफुडत्थं तह से हिअअट्ठिअं किं पि।।९६।।**
[पश्यत्यलब्धलक्ष्यं दीर्घं निःश्वसिति शून्यं हसति।
यथा जल्पत्यस्फुटार्थं तथा तस्या हृदयस्थितं किमपि।।]

वीक्षणादिभिर्ज्ञायते यदियं प्रियतमदत्तहृदयास्तीति भावः। एषा प्रथमानुरागे नायिकाया विप्रलम्भचेष्टेति सरस्वतीकण्ठाभरणम्।

प्रत्युत्पन्नमतयः कुलटाः पतिमपि प्रतारयन्तीति शिक्षयन्नागरिकः सहचरमाह–

**अयि गृहपते गतो नः शरणं रक्षैनमिति भणन्त्यसती।**

**सहसागतस्य तूर्णं स्वभर्तुरेव स्वजारमपर्यती।।९७।।**[१]

जारागमनोत्तरमेव सहसा अतर्कितमागतस्य स्वभर्तुरेव निर्मायताप्रदशनार्थं त्वरितं स्वस्य जारमर्पयति। गृहपते। इत्यामन्त्रणेन गृहस्य त्वं स्वामीति गौरवबुद्ध्या तुभ्यमेव सोऽयं समर्पणीय इति द्योत्यते। अथवा शरणागतोऽयमेतावत्कालं गृहस्वामिन्या मया रक्षितः, इदानीं त्वं साक्षात्स्वामी समागत इति तदुपरि गौरवभरविन्यसनं द्योत्यते। स्वभर्तुरेवेत्येवकारेण स्वभर्तुरेव तासां प्रतारणं सुकरं किं पुनरन्यस्येत्यतिशयो द्योत्यते। भर्तृपदेन स केवलं रक्षणभरणकर्तैव न पुनर्दयित इति द्योत्यते।

न किल प्रणयो निह्नयमानोऽपि निपुणैर्न लक्ष्यत इति प्रतिपादयन्ती काचित्सखीं प्रति कस्याश्चिद्वृत्तनिदर्शनमाह–

**हृदयस्थिताय वितरत कृशितां पश्यत पितृष्वसर्नो किम्।**

**हृदयस्थितः कुतो न मोहमगादिति कुमारिका ब्रुवती।।९८।।**[२]

कौमारावस्थायामेव केनचन यूना सह कस्याश्चित्प्रणयमालक्ष्य विदग्धया कयाचित्कु-मार्याः पितृष्वसारं प्रत्युक्तम्–अनया यस्मै हृदये स्थानं दत्तं तस्मै अस्या हृदयेप्सिताय इयं दीयताम्। इमां पूर्वमकृशामपि निरन्तरानुध्यानवशात्सम्प्रति कृशां किं न पश्यथ? ततः

---

१. **गहवइ गओम्ह सरणं रक्खसु एअं त्ति अडअणा भणिरी।**
**सहसागअस्स तुरिअ पइणो व्विअ जारमप्पेइ।।९७।।**
[गृहपते गतोऽस्माकं शरणै रक्षैनमित्यसती भणित्वा।।
सहसागतस्य त्वरितं पत्युरेव जारमर्यपयति।।]

२. **हिअअट्ठिअस्स दिज्जउ तणुआअन्तिं ण पेच्छह पिउच्छा।**
**हिअअट्ठिओम्ह कंतो भणिउं मोहं गआ कुमरी।।९८।।**
[हृदयेप्सितस्य दीयतां तनुभवन्तीं न पश्यथ पितृष्वसः।
हृदयेप्सितोऽस्माकं कुतो भणित्वा मोहं गता कुमारी।।]

स्वप्रणयवृत्तप्रकाशनेन लज्जिता सा– 'कुमारीणां नः हृदयस्थितः कुतः ?' इति ब्रुवती कुमारी प्रियस्मारणावेगान्मोहं गतेति भावः। 'हिअअट्ठिअस्स' इत्यस्य 'हृदयेप्सिताय' इति गङ्गाधरच्छाया।

सुरतावसानोपचारचातुर्यं शिक्षयन्ती सखी कस्याश्चिद्दूतं नायिकां प्रत्याह–

**खिन्नस्योरसि वितरति पत्युर्ग्रीष्मपराह्णरमितस्य।**

**आर्द्रे विगलत्कुसुमं स्नानसुगन्धं चिकुरभारम्।।९९।।**[1]

ग्रीष्मपराह्णे रमितस्य अत एव खिन्नस्य पत्युरुरसि चिकुरभारं वितरति स्थापयतीति सम्बन्धः। सुगन्धिशीतलस्य स्नानमृदुलस्य केशपाशस्य स्थापनकौशलेन वल्लभस्य तापपरिश्रमावपनयतीति भावः। वयः कौशलाभ्यां सम्पूर्णतया प्रगल्भा सेयं नायिकेति सरस्वतीकण्ठाभरणम्। 'भुजङ्गप्रलोभनाय दूती नायिकायाः सुरतवसानोपचारचातुर्यमाह' इति गङ्गाधरवतरणम्।

कलितकौमुद्यां केलिरसिकः कश्चन कोविदः कान्तायाः कपोलकान्तिं कीर्तयति–

**सरसदशनमण्डलयुतकपोलबिम्बागतोऽयमेणाक्ष्याः।**

**अन्तर्दरसिन्दूरितशङ्खसुभाजनतुलां वहति चन्द्रः।।१००।।**[2]

मृगाक्ष्याः सरसदशनमण्डलेन मण्डलकारेण सरसदन्तक्षतेन मणिमालानामकेन युतो यः कपोलस्तत्र बिम्बेन प्रतिबिम्बद्वारा आगतः अयं चन्द्रः, अन्तः मध्ये ईषत्सिन्दूरयुक्तस्य शङ्खभाजनस्य तुलां सादृश्यं वहति। मृगाक्ष्याः रक्तवर्णकान्तदन्तक्षतयुक्ते स्वच्छकपोले प्रतिफलितो गोलाकारश्चन्द्रबिम्बो मध्ये सिन्दूरयुक्तस्य शङ्खनिर्मितपात्रस्य सादृश्यं वहतीत्यर्थः।

---

१. **खिण्णस्स उरे पइणो ठवेइ गिम्हावरण्हरमिअस्स।**
**ओलं गलन्तकुसुमं ण्हाणसुअन्धं चिउरभारम्।।९९।।**
[खिन्नस्योरसि पत्युः स्थापयति ग्रीष्मपराह्णरमितस्य।
आर्द्र गलत्कुसुमं स्नानसुगन्धं चिकुरभारम्।।]

२. **अह सरसदन्तमण्डलकवोलपडिमागओ मअच्छीए।**
**अन्तो सिन्दूरिअसङ्खवत्तकरणिं वहइ चन्दो।।१००।।**
[असौ सरसदन्तमण्डलकपोलप्रतिमागतो मृगाक्ष्याः।
अन्तः सिन्दूरीतशङ्खपात्रसादृश्यं वहति चन्द्रः।।]

शुभ्रकान्तित्वाच्चन्द्रबिम्बस्य शङ्खपात्रसादृश्यम्। दन्तक्षतमण्डलस्यारक्तत्वात्सिन्दूरसाम्यं बोध्यम्। मणिमालालक्षणं तु–'दन्तौष्ठसंयोगाभ्यासनिष्पादनात्प्रवालमणियिसिद्धिः'। 'सर्वस्येयं मणिमालायाश्च' इति सूत्रयोर्वात्स्यायनेनोक्तम्। ['उच्छूनकं प्रवालमणिश्च कपोले' इति पूर्वसूत्रानुसारं कपोले उत्तरदन्ताधरोष्ठाभ्यां स्थानस्य गृहीत्वा पीडनं तदभ्यासः (पुनः पुनः करणम्) प्रवालमणिसम्पादकम्, मालाकारश्चेन्मणिमाला]। एतद्गाथाव्याख्याने 'कपोलयोरिति द्विवचनम्, कपोलयोरेव च शङ्खपात्रसादृश्यं गङ्गाधरेणोक्तमनन्वयि। शङ्खपात्रसादृश्यं वहति चन्द्र इति स्पष्टमेककपोलमुद्दिश्यैव मूले प्रोक्तत्वात्। किञ्च चन्द्रमण्डलाभिमुखकपोलायाः कान्ताया एकस्मिन्नेव कपोले चन्द्रप्रतिबिम्बः प्रतिफलेन्नोभयोः, अत एव 'कपोलयोः प्रतिमागतः सङ्क्रान्तप्रतिबिम्बश्चन्द्रः' इत्यादि व्याख्यानं विचारणीयेव।

शतकमुपसंहरति–

**रसिकजनहृदयदयिते कविवत्सलकुशलसुकविपरिरचिते।**
**सप्तशतके समाप्तं गाथाशतकं तृतीयमिदम्।।१०१।।**[1]

कविवत्सलः (हालः) कुशलः प्रमुखो येषु तादृशैः सुकविभिः परिरचिते।।

**(इति तृतीयशतकम्)**

---

१. **रसिअजणहिअअदइए कइवच्छलपमुहसुकइणिम्मअए।**
**सत्तसअम्मि समत्तं तीअं गाहासअं एअम्।।१०१।।**
[रसिकजनहृदयदयिते कविवत्सलप्रमुखसुकविनिर्मिते।
सप्तशतके समाप्तं तृतीयं गाथाशतकमेतत्।।]

--------

# चतुर्थशतकम्

अविदग्धं भर्तारमासाद्य कुलटा नानाविधैश्छद्मभिर्जारनिह्नवं कुर्वत इति शिक्षार्थं नागरिक आह–

**अयमागतोऽद्य नः किल कुलगेहादिति हि जारमसती स्वम्।**

**सहसाऽऽगतस्य पत्युस्त्वरितं कण्ठे नियोजयति।।१।।**[1]

असती 'अयमद्य नः कुलगेहात्पितृगृहादागतः' इति स्वमुपपतिम्। जारागमनोत्तरमेव सहसा अतर्कितमागतस्य पत्युः कण्ठे तूर्णं नियोजयति लगयतीति यावत्। पत्युरित्युक्तया केवलं पालनकर्तैव स न तु हृदयदयित इति सूच्यते। नः इति बहुत्वोक्तया 'केवलं ममैव परिचितो न किन्तु अस्माकं पितृकौटुम्बिकानां सर्वेषामेवायं परिज्ञातः' इति प्रथितपरिचयो द्योत्यते। कण्ठे योजनेन निकटसम्बन्धीति प्रतीत्या शङ्कानवसरात्स्वरहस्यप्रच्छादनमित्याकूतं व्यज्यते। त्वरितमित्यनेन विचाराऽनवसरप्रदानान्निः सन्देहतया स्वस्य सत्यत्वं व्यज्यते। एवंविधाभिरसतीचेष्टाभिर्न व्यामोग्धव्यमिति सहचरं प्रत्याभिव्यज्यते।'छेञ्छई' इत्यसतीवाचको देशी।

स्वाधीनोऽस्याः प्रियतम इति नायिकायाः सौभाग्यं ख्यापयन्ती सखी सखीः प्रत्याह–

**मृष्टाः कर्णाभरणेन्द्रनीलकिरणाहताः शशिमयूखाः।**

**दयितेनाञ्जनमलिनाश्रुशङ्कया मानिनीवदने।।२।।**[2]

---

१. **अह अम्ह आअदो अज्ज कुलहराओ त्ति छेञ्छई जारम्।**

**सहसागअस्स तुरिअं पइणो कण्ठं मिलावेइ।।१।।**

[असावस्माकमागतोऽद्य कुलगृहादित्यसती जारम्।

सहसागतस्य त्वरितं पत्युः कण्ठे लगयति।।]

२. **पुसिआ अण्णाहरणेन्दणीलकिरणाहआ ससिमऊहा।**

**माणिणिवअणम्मि सकज्जलंसुसङ्काइ दइएण।।२।।**

[प्रोञ्छिताः कर्णाभरणेन्द्रनीलकिरणाहताः शशिमयूखाः।

मानिनीवदने सकज्जलाश्रुशङ्कया दयितेन।।]

मानिनीवदने कर्णाभरणस्थस्य इन्द्रनीलमणेः किरणैराहताः सम्भिन्नाः शशिकिरणाः अञ्जनमलिनस्य कज्जलमिश्रस्य अश्रुणः शङ्कया दयितेन मृष्टाः प्रोञ्छिताः। आहतपदेन इन्द्रनील-किरणानां गाढत्वं द्योत्यते, अतएव तत्सम्भेदेन शशिकिरणानामपि नीलवर्णतासम्पत्तिः। चन्द्रमयूखप्रतिफलनेन नायिकाकपोलयोः स्वच्छतातिशयो व्यज्यते। दयितपदेन सोऽपि तस्याः परमप्रेयानिति सूच्यते, ततश्च द्वयोरेव मिथो गाढप्रणयो ध्वन्यते। अविषयेऽपि मानिनीमिमामनुनेतुं प्रियतमो दर्शितादार इति कियदस्याः सौभाग्यमिति चरमं ध्वन्यते।

कस्याश्चन सौन्दर्यातिशयवर्णनेन नायकमधिकाधिकमुत्साहयन्ती दूत्याह-

**एतावति भुवनेऽस्मिन्सुन्दरमहिलासहस्त्रभरितेऽपि।**
**केवलमनुहरतेऽस्या वामार्द्धं दक्षिणार्द्धस्य।।३।।**[२]

केवल अस्या वामार्द्धं दक्षिणार्द्धस्यानुहरते। वामार्द्धभागस्य सादृश्यवाहि दक्षिणार्द्धमेव, नान्या काचन सुन्दरी अस्या अनुहारिणीति भावः। महिलासहस्त्रभरिते इत्यनेन बह्व्यः सुन्दर्यो भरिताः सन्ति, ततश्चान्यसुन्दरीः प्रति सौलभ्यकृतोऽनादरो ध्वन्यते। तस्याः शरीरार्द्धं तस्याः शरीरार्द्धेन सममित्यनन्वयालङ्कारेण साऽद्वितीया सुन्दरी साम्प्रतमस्मिँल्लोके इति दूत्याभिव्यज्यते। किञ्च वामार्द्ध दक्षिणार्द्धस्यानुहरते इत्यनेन यथा तस्या वामार्द्धं सर्वप्रकारेण सुन्दरं तथा दक्षिणार्द्धमपीति सर्वाङ्गं तस्याः सौन्दर्यप्रसवि न त्वन्यासामिव कस्मिन्कस्मिन्नङ्ग इव काचित्त्रुटिरीक्ष्यत इत्यपि ध्वन्यते। तथा चैवंविधामसामान्यसुन्दरीमुपलब्धुं त्वरितमाचेष्टनीयमिति नायकप्रोत्साहनं द्योत्यते।

कृतापराधमपि दयितं मानावलम्बनेन किमिति नावरुणत्सि, किमेतावदायत्तासीति शिक्षयन्तीं सखीं काचिदात्मनोऽनुरागमाह-

**रणयति दयितो हि यथा तथा प्रनृत्यामि चञ्चले प्रेम्णि।**
**वल्ली वलयत्यङ्गं वृक्षे स्तब्धेऽपि निजनिसर्गेण।।४।।**[३]

१. 'नांच नचांना'।

२. **एद्द हमेत्तम्मि जए सुन्दरमहिलासहस्सभरिए वि।**
**अणुहरइ णवर तिस्सा वामद्धं दाहिणद्धस्स।।३।।**
[एतावन्मात्रे जगति सुन्दरमहिलासहस्त्रभृतेऽपि।
अनुहरति केवलं तस्या वामार्ध दक्षिणार्धस्य।।]

३. **जह जह वाएइ पिओ तह तह णच्चामि चञ्चले पेम्मे।**
**वल्ली वलेइ अङ्गं सहावथद्धे वि रुक्खम्मि।।४।।**
[यथा यथा वादयति प्रियस्तथा तथा नृत्यामि चञ्चले प्रम्णि।
वल्ली वलयत्यङ्गं स्वभावस्तब्धेऽपि वृक्षे।।]

प्रियतमो यथा यथा वाद्यं वादयति तथा तथाहं चञ्चले प्रेम्णि नृत्यामि। नर्तको यथा वादकस्य वाद्यलयानुसारमेव पदनिक्षेपं कर्तुं शक्नुयात्तथाहमपि प्रियस्याभिप्रायानुसारमेव प्रेमवशंवदा समाचरामीति प्रियानुवर्तनं ध्वन्यते। किञ्च नर्तकवादकयोर्लयस्य संवाद एव यथा सङ्गीतकसौष्ठवं भवति तथैव दम्पत्योरभिप्रायसाम्ये एव प्रणयगार्हस्थ्यं शोभत इति गृहच्छन्दा-नुरोधेन मिथाऽनुवर्तनमपि गाथाकारेण सूच्यते। 'नृत्यामि चञ्चले प्रेम्णि' इत्यनेन चाञ्चल्यकरं प्रेम आत्मच्छन्देन मां नर्तयतीति लोकोक्त्यनुकरणेन नाहमात्वशंवदेति ध्वन्यते। वल्ली निजस्वभावेन स्तब्धेऽपि वृक्षे अङ्गं वलयति वेष्टयति, अनेन दृष्टान्तेन प्रियः काममस्तु स्वैरचेष्टि-तोऽहं तु तस्मै आत्मसमर्पणं कृतवतीत्यात्मनोऽनुरागातिशयो ध्वन्यते। किञ्च मत्कृतच्छायायां निजनिसर्गेणेति पृथक्पदस्थापनेन वृक्षस्य स्तब्धत्वं यथा निजस्वभावस्तथा लताया अपि वृक्षवेष्टनं निजः स्वभाव इति 'स्तब्धेऽपि वृक्षे वल्ली निजनिसर्गेणाङ्गं वलयति' इत्यर्थसम्पत्त्या स्त्रियाः पतिच्छन्दानुवर्तनं स्वभाव एवेति दयितानुवृत्तिदाक्षिण्यं ध्वन्यते। पूर्वार्द्धे नाहमात्मवशगेत्यर्थान्तर-गर्भिताया लोकोक्तेरनुकरणाच्छेकोक्तिरलङ्कारः 'छेकोक्तिर्यदि लोकोक्तिः स्यादर्थान्तरगर्भिता'। तथा च-प्रेमवंशवदा नाहमात्मनोऽपि प्रभवामि किं पुनर्दयिते मानमनुष्ठातुमिति नायिकया सखीं प्रत्यभिव्यज्यते। 'यद्वा निराश्रयतया स्थातुमशक्ता लता यथा स्तब्धं वृक्षमाश्रित्य तिष्ठति तथाहमपि नटप्रायमननुरक्तमधममप्याश्रित्य तिष्ठामि यावदुत्तमं कमप्यासादयामीति दूतीं प्रति कुलटायाः कस्याश्चिदियमुक्तिः' इति गङ्गाधरटीका।

महता प्रयत्नेन प्राप्तस्य दयितस्य हृदयेच्छानुवर्तनवैमुख्यं सूचयन्ती नायिका स्वसखी-माह-

**दयितो दुःखैराप्यत आप्तो दुःखैर्हि भवति चाधीनः।**
**आप्तोऽप्यनाप्त एव तु न हि यदि हृदयानुकूलः स्यात्।।५।।**[१]

स्वामी भर्ता वा सुखं प्राप्यः परं यः किल हृदयामीप्सितः प्रियः स हि दुःखैर्लभ्यत इति दयितपदस्याकूतम्। यदि प्रियो लब्धस्तर्ह्यपि सौन्दर्यगुणाद्यभिमानेन दयिताया वशीभूतो न भवति प्रत्युत तामेवाभिभूय स्वयं स्वैरचारी स्यादेवं च महता कष्टेन पुनः स्वाधीनो भवतीति भावः। यदि तु हृदयानुकूलो न भवति तर्हि लब्धोऽप्यलब्ध एव। 'महताऽऽयासेन प्राप्तोऽपि न मे हृदयानुवर्तनं करोति' इति नायिकाया सनिर्वेदमात्माभिप्रायो व्यज्यते।

---

१. **दुक्खेहिँ लम्भइ पिओ लद्धो दुक्खेहिँ होइ साहीणो।**
**लद्धो वि अलद्धो व्विअ जइ जइ हिअअं तह ण होइ।।५।।**
[दुःखैर्लभ्यते प्रियो लब्धो दुःखैर्भवति स्वाधीनः।
लब्धोऽप्यलब्ध एव यदि यथा हृदयं तथा न भवति।।]

प्रियं प्रति सोत्कण्ठा कलहान्तरिता प्रियसखीमाह–

**अनुनयसुखलोलुपया कष्टमकृतमपि कृतं प्रकुर्वत्या।**
**दयितः सरलनिसर्गोऽप्यविनयमार्गं बलान्नीतः।।६।।**[१]

अपराधे सिद्धे सति विलक्षः प्रियो मामनुनयेदिति प्रियसकाशादनुनयसुखं कान्त्या अत एव प्रियेण अकृतमप्यपराधं कृतं कुर्वत्या साधयन्त्या मया। सरलस्वाभावोऽपि प्रियो बलादविनयमार्ग नीत इति कष्टम्। अव्वो इति कष्टमित्यर्थे देशी। कष्टमविनयमार्गं नीत इति मतिप्राबल्येन कोपभावस्य शान्तिः। भर्त्रादिपदमनुच्चार्य दयितपदप्रयोगेण वल्लभं प्रति तत्प्रणयादिस्मरणेनोत्कण्ठाख्यभावस्योदयश्च व्यज्यत इति भावसन्धिः।'कार्ण्यिा' इति संस्कृते दुःश्रवं स्यादिति 'लोलुपया' इति परिवर्तितं छायायाम्। ये तु केवलं मूलपदाङ्कानुसारिणस्तेषां कृते 'अनुनयसुखकार्ण्यिा' इति पाठः। 'करोतिरत्रोच्चारणे। अकृतमप्यपराधं कृतमिति समुच्चारयन्त्येत्यर्थः।।' इति गङ्गाधरः। किञ्च जातानुतापा कलहान्तरितेत्यपि गङ्गाधरोक्तं व्यर्थमेव, अनुतापे सत्येव कलहान्तरितात्वव्यपदेशसिद्धेः। 'चाटुकारमपि प्राणनाथं कोपादपास्य या। पश्चात् तापमवाप्नोति कलहान्तरिता तु सा।।' इति सरस्वतीकण्ठाभरणम्।

प्रोषितपतिकाया विरहवेदनां मुग्धतां च संसूच्य तत्कान्तस्यागमनत्वरार्थं तत्सखी तत्समीपगामिनं पान्थमाह–

**करयोः पदयोश्चाङ्गुलिसङ्गणनेनेह यापिता दिवसाः।**
**कथमधुना गण्यन्तामित्युक्त्वा रोदिति हि मुग्धा।।७।।**[२]

हस्तयोः पादयोश्चाङ्गुलिगणनया दिवसा व्यतीताः। इदानीमङ्गुलिसंख्यामतिक्रम्य व्यतीतानि दिनानि केन गण्यन्तामित्युक्त्वा मुग्धा रोदिति। एतावत्कालमङ्गुलिगणनाव्यापारेण

---

१. **अव्वो अणुणअसुहकङ्खिरीअ अकअं कअं कुणन्तीए।**
**सरलसहावो वि पिओ अविणअमग्गं बलण्णीओ।।६।।**
[कष्टमनुनयसुखकाणिंशीलयाकृतं कृतं कुर्वत्या।
सरलस्वाभावोऽपि प्रियोऽविनयमार्गं बलान्नीतः।।]

२. **हत्थेसु अ पाएसु अ अङ्गुलिगणणाइ अइगआ दिअहा।**
**एण्हिं उण केण गणिज्जउ त्ति भणिऊ रुअइ मुद्धा।।७।।**
[हस्तयोश्च पादयोश्चाङ्गुलिगणनयातिगता दिवसाः।
इदानीं पुनः केन गण्यतामिति भणित्वा रोदिति मुग्धा।।]

अद्य श्व इत्याशामवलम्ब्य दिवसा यापिता इत्युत्कण्ठातिशयो व्यज्यते। तथा च गणनासाधनानुपलम्भेन निर्विनोदा सेयं नाधुना कालविलम्बं सहेतेति त्वरातिशयो ध्वन्यते। मुग्धेत्यनेन मुग्धतया नेयं गणनायाः साधनान्तरं जानीयात्, तथा चैवंविधापि सेयं निर्घृणेन त्वया समधिकं पीड्यत इत्युपालम्भो व्यज्यते।

प्रवासोद्यतस्य नायकस्य गमनप्रतिरोधार्थं काचिदुन्मादकं वसन्तं सहैव यात्राप्रतिरोधकमपशकुनं च स्मारयति–

**शुकमुखसच्छायैः किल पलाशकुसुमैर्विराजते वसुधा।**
**बुद्धस्य चरणवन्दनपतितैरिव भिक्षुसङ्घातैः।।८।।**[1]

अरुणवर्णैरत एव शुकमुखसदृशैः। मध्ये आसीनस्य बुद्धदेवस्य चरणवन्दनार्थं पर्यन्ततो दण्डवत्पतितैर्भिक्षुसङ्घैरिव। लोहितानि कुसुमपत्राणि वस्त्रस्थानीयानि तद्वृन्तञ्च शिरःस्थानीयमिति प्रणतभिक्षुसादृश्यं बोध्यम्। तथा च विरहिजनदुरन्तोऽयं वसन्तः समागतस्ततोऽपि हन्त गन्तुम-भिलष्यसीति स्मारणं व्यङ्ग्यम्। कठिनहृदयतया ततोपि चेन्न निरुध्यसे अथापि यात्रासमयेऽप-शकुनानि त्ववश्यं परिहेयानीत्यपशकुनार्थं भिक्षुसङ्घातस्मारणाकूतम्। उक्तं हि वसन्तराजशकुने–

**'वमद्विकेशो हतमानगर्वः क्षिण्णाङ्गनग्नान्त्यजतैलदिग्धाः।**
**रजस्वला गर्भवती रुदन्ती मलान्वितोन्मत्तजराधवाश्च।।**
**दीनो द्विषत्कृष्णविमुक्तकेशाः क्रमेलकस्थाः खरसैरिभस्थाः।**
**संन्यासिसांक्रन्दनपुंसकाद्या दुःखावहाः सर्वसमीहितेषु।।'**

किञ्च पतितैरिति पदमप्यपशकुनमेव। उक्तं हि तत्रैव–

**'स्थैर्यं स्थिरार्थाद् गमनं तदर्थाद्वाक्यान्निवृत्तिर्विनिवर्तितार्थात्।**
**लाभं जयं भङ्गममङ्गलं वा बुध्येत तत्तत्प्रतिपादनार्थात्।।'**

मानिनीमनुनेतुं प्रियतमः सदाक्षिण्यमाह–

---

१. **कीरमुहसच्छहेहिं रेहइ वसुरा पलासकुसुमेहिं।**
**बुद्धस्स चलणवन्दणपडिएहिँ व भिक्खुसंघेहिं।।८।।**
[कीरमुखसदृक्षै राजते वसुधा पलाशकुसुमैः।
बुद्धस्य चरणवन्दनपतितैरिव भिक्षुसङ्घैः।।]

**अङ्गं यद्यत्पृथुलं तत्तज्जातं कृशोदरि कृशं ते।**
**यद्यत्तनु तत्तदीपि च तनुतरमभवत्किमत्र मानेन।।९।।**[1]

मानजेन मन्युदुःखेन तव सेयं दशा, ततश्चैवंविधक्लेशकरं मानं मुञ्चेति भावः। मानसामयिकेन वियोगदुःखेन तनोस्तनुतरतावर्णनादतिशयोक्तिः। अनया च-तवेव ममापि समधिकवेदनावहं मानमिदानीमवमुञ्चेति ध्वन्यते। गाथायामस्यां 'णिट्ठिअम्' इत्सस्य संस्कृतपदशय्यानुरोधेन तनुतरमित्युपनिबन्धः। मूलपदाङ्कानुसरणे तु 'यद्यत्तनुतत्तदपि च निष्ठितमिह किं नु मानेन' इति पाठ्यम्। निष्ठितं निष्ठां प्रकर्षं गतम्। अति दुर्बलं जातमित्यर्थः। ''अनुनयं ग्राहयितुं सखी मानवतीमाह'' इति गङ्गाधरावतरणम्।

गुणवतीं तां विहाय कथमयमन्यस्यामनुरक्त इति सख्यानुयुक्ता नायिकासखी तामाह-

**ह्रियते गुणेन न जनो ह्रियते यो येन भावितस्तेन।**
**मुक्ताफलानि मुक्त्वा गुञ्जा गृह्णन्ति किल पुलिन्दगणाः।।१०।।**[2]

ह्रियते वशीक्रियते। गुणकर्तृकहरणस्यानुपपत्त्या अभिमुखीकरणं लक्ष्यम्। तेन च वशीकरणं व्यङ्ग्यम्। गुणेन जनो न वशीक्रियते किं तु यो जनो येन भावितः प्रणयवशाद- नुध्यातस्तेन अर्थात् प्रेमभाजनेन जनेन वशीक्रियते। यस्य यत्र प्रेम भवति तत्र गुणाभावेऽपि सोऽनुरज्यतीति भावः। मौक्तिकेषु महामूल्यबहुमानं त्यक्त्वा स्वाभाविकप्रेमवशात्पुलिन्दा गुञ्जास्वनुरज्यन्तीत्याशयः। मुक्तागुञ्जादृष्टान्तेन 'परमादरणीयां मत्सखीं विहाय अन्यस्यामनुरक्तस्य तस्य वनेचरवन्न गुणपरिचयवैदग्ध्यम्' इति ध्वन्यते। 'निजभर्तुरेव न सा वल्लभा तत्कथं तस्या गुणानस्तौषीरित्यभियोज्येनोक्ता दूती तमाह' इति गङ्गाधरः।

---

१. **जं जं पिहुलं अङ्गं तं तं जाअं किसोअरि किसं ते।**
**जं जं तणुअं तं तं पि णिट्ठिअं किं त्थ माणेण।।९।।**
[यद्यत्पृथुलमङ्गं तत्तज्जातं कृशोदरि कृशं ते।
यद्यत्तनुकं तत्तदपि निष्ठितं किमत्र मानेन।।]

२. **ण गुणेण हीरइ जणो हीरइ जो जेण भाविओ तेण।**
**मोत्तूण पुलिन्दा मोत्तिआइँ गुञ्जाओं गेह्णन्ति।।१०।।**
[न गुणेन ह्रियते जनो ह्रियते यो येन भावितस्तेन।
मुक्त्वा पुलिन्दा मौक्तिकानि गुञ्जा गृह्णन्ति।।]

गमनानुमतिं याचते मे किमिति किमप्युत्तरं न ददासीति प्रियतमेनोक्ताया नायिकायाः सम्बन्धिनी काचिद्वृद्धा तमाह–

**लङ्कानिलयानां सुत वसन्तमासैकलब्धविभवानाम्।**

**[ वसान्त्रमांसैकलब्धविभवानाम्। ]**

**आपीतलोहितानां बिभेति लोकः पलाशानाम्।।११।।**[1]

हे पुत्र लङ्का शाखा स्थानं येषां तेषाम्। वसन्तमासे प्राप्तात्यन्तप्रसराणाम्। आ ईषत्पीत-वर्णानि च लोहितानि च तेषाम्। पलाशानां किंशुकपुष्पाणां लोकः प्रियविरहवेदनाकातरो वधूजनो बिभेति। पलाशकुसुमैर्विरहिजनदुरन्तं वसन्तमालक्ष्य प्रवासविषये सेयमुत्तरं न प्रतिपद्यत इति भावः। पलाशानामिति शेषत्वविवक्षायां पञ्चम्यर्थे षष्ठी। यत्र यात्रानुमतियाचनरूपप्रकरणेन पलाशादिपदानां किंशुकादिष्वर्थेषु वक्तृतात्पर्यावगमात् शक्तेर्नियमने सति पूर्वोक्तार्थसम्पत्तावपि 'लङ्कालआणम्' 'वसन्तमासेक्कलद्धपसराणम्' इत्यादिषु पलाशादिशब्दैरनुरणनव्यङ्ग्यविधया-लङ्कापुरीवासिनाम्, वसा अन्त्राणि मांसं च एभिः प्राप्तात्यन्तप्रसराणां समन्तात्पीतरुधिराणां पलाशानाम् (पलं मासमश्नन्ति तेषाम्) राक्षसानां लोको बिभेतीत्यर्थो ध्वन्यते। तथा च पलाशकुसुमैः सह एकपदोपस्थितिवशाद्राक्षसरूपस्यार्थस्योपमानोपमेयभावप्रतीत्या शब्दशक्तिमूल उपमालङ्कारध्वनिः। एवं च विरहिणीजनघस्मराणि किंशककुसुमानि राक्षसानिव वीक्षमाण सेयं भवत्प्रवासानुमतौ नोत्तरं ददातीति नायकं प्रति चरममभिव्यज्यते। 'जनः' इति सामान्यनिर्देशेन 'यः किल मानुषः स तु पलाशेभ्यो बिभेति परं भवानस्मिन्नपि समये प्रवासमभ्युपगच्छन् न जाने एभ्यो बिभेति न वा, हन्त भवतः कीदृशी क्रूरहृदयता' इत्युपालम्भोऽपि ध्वन्यते। 'लङ्का रक्षःपुरी शाखाशाकिनीकुलटासु च' इति मेदिनी। अत्र 'राक्षसेभ्यो जनो बिभेतीति श्लेषः' इति गङ्गाधरव्याख्यानं तु विचारणीयमेव। स्वयंप्रदर्शितेन गमनानुमति-याचनप्रकरणेन किंशुकार्थे पलाशपदस्याभिधाया नियन्त्रणेन राक्षसरूपार्थस्य व्यञ्जनां विनानुपपत्तेः। युगपद्यत्र द्वयोरर्थयो-स्तात्पर्यावगमस्तत्रैव श्लेष इति स्पष्टं प्रतिभावताम्। न च भयदायकराक्षसार्थोऽपि सहैव प्रतीयत इति वाच्यम्। यात्राप्रश्ने राक्षसार्थस्य असम्बद्धत्वात्। किं च पलाशपदेन किंशुक-रूपमर्थमवगत्य ततो विरहिणीजनघस्मरतया पलाशेषु (किंशुकेषु) पलाशता राक्षसता आरोप्यते।

---

१. **लङ्कालआणँ पुत्तअ वसन्तमासेक्कलद्धपसराणम्।**

**आपीअलोहिआणं वीहेइ जणो पलासाणम्।।११।।**

[लङ्कालयानां पुत्रक वसन्तमासैकलब्धप्रसराणाम्।

आपीतलोहितानां बिभेति जनः पलाशानाम्।।]

आलम्बनं विना राक्षसत्वरूपस्यारोपस्यानुपपत्तेः। अत एव पूर्वं पलाशपदस्य किंशुकरूपार्थं एव शक्तिः, अनन्तरं च राक्षसरूपार्थप्रतीतिः। सा च काञ्चिद्वृत्तिं विना दुरुपपादा, वृत्तिं विना शब्दादर्थबोधस्वीकारेऽतिप्रसङ्गात्। लक्षणा तु मुख्यार्थबाधाद्यभावान्न, ततस्तु व्यञ्जनाऽत्रावश्यं स्वीकार्या। सा चेयं पलाशादिपदानां परिवृत्त्यसहत्वाच्छाब्दीति कृतं प्रसक्तानुप्रसक्तेन।

दयितं प्रति नायिकायाः प्रणयातिशयं सखी सखीमाह–

**आदाय चूर्णमुष्टिं हर्षोत्सुक्येन वेपमानायाः।**
**प्रियमवकिरामि पुर इति हस्ते गन्धोदकं जातम्।।१२।।**[१]

पुरः प्रियतममवकिरामि विच्छुरयामीति चूर्णमुष्टिं मुष्टौ कर्पूरादिगन्धद्रव्यकृतवर्णधूलिमादाय हर्षजनितेनौत्सुक्येन वेपमानाया नायिकाया हस्ते गन्धोदकं जातम्। प्रियतमदर्शनजनितसात्त्विकभावात्मकस्वेदेन चूर्णमुष्टिरेव गन्धोदकं जातमिति भावः। कान्तावलोकनमात्रेण तस्या एतावान् भावोदय इति नायकं प्रत्यनुरागातिशयो व्यज्यते। औत्सुक्येनेत्यनेन प्रियतमदर्शनोत्तरं तदुपरि वर्णमुष्टिप्रक्षेपकालविलम्बाऽसहनत्वं सूच्यते। तथा च चूर्णमुष्टिग्रहणोत्तरं कदा प्रियं विच्छुरयामीत्युत्कण्ठया स्वेदोद्गमरूपोऽनुभावोऽभिव्यञ्जितः। उक्तं हि सरस्वतीकण्ठाभरणे– 'औत्सुक्यं वाञ्छितप्राप्तौ कालक्षेपासहिष्णुता। चित्ततापत्वरास्वेददीर्घनिश्वसितादिकृत्।।' 'भिसिणेमि' इति विच्छुरणार्थे देशी।

देवराभिसारस्ते मया ज्ञात इति सूचयन्ती सपत्नी सपत्नीमाह–

**पृष्ठं प्रोञ्छ कृशोदरि पृष्ठगृहाङ्कोटपत्रचित्रयुतम्।**
**मा ज्ञास्यसेऽतिऋजुके देवरजायाभिरतिविदग्धाभिः।।१३।।**[२]

---

१. **घेत्तूण चुण्णमुट्ठिं हरिसूससिआएँ वेपमाणाए।**
**भिसिणेमित्ति पिअअमं हत्थे गन्धोदअं जाअम्।।१२।।**
[गृहीत्वा चूर्णमुष्टिं हर्षोत्सुकिताया वेपमानायाः।
अवकिरामीति प्रियतमं हस्ते गन्धोदकं जातम्।।]

२. **पुट्ठिं पुससु किसोअरि पडोहरङ्कोल्लपत्तचित्तलिअम्।**
**छेआहिँ दिअरजाआहिँ उज्जुए मा कलिज्जिहिसि।।१३।।**
[पृष्ठं प्रोञ्छ कृशोदरि पश्चाद्गृहाङ्कोटपत्रचित्रितम्।
विदग्धाभिर्देवरजायाभि ऋजुके मा कलिष्यसे।।]

हे कृशोदरि पृष्ठगृहे पश्चाद्भागवर्तिगृहे योऽङ्कोटवृक्षस्तत्पत्रैश्चित्रितं पृष्ठभागं प्रोञ्छ मार्जय। अयि सरले! ऋजुतयाऽभिसरणप्रच्छादनानभिज्ञे! एवं सति अतिविदग्धाभिर्देवरजायाभिर्मा ज्ञास्यते। पृष्ठप्रोञ्छनाभावे तु विदग्धाभिस्ताभिर्निजदयिताभिसारिणीति त्वं लक्षयिष्यस इति भावः। तथा च-अक्षोटतरुतले देवरेण सह त्वं साम्प्रतमेव सङ्गतवतीत्यहं जाने। नेदमधुना त्वयापलपितुं शक्यम्, उत्तानसंवेशनेन रममाणायास्तव पृष्ठस्य तत्पत्रैश्चित्रितत्वादिति सपत्नीं प्रत्यभिव्यज्यते। देवरजायाभिरित्यनेन 'देवरपत्न्योऽपि दयिताभिसारेर्ष्यया त्वदन्वेषणपराः सन्ति, ततो नाहमेवैतदभिज्ञा ता अपि सन्तीति' ध्वन्यते। अवसरालाभान्निरास्तरण एव तरुतले त्वया रतं ततोऽपि ऋजुतया त्वं तद्गोपयितुं नाशक इति ऋजुके इत्यामन्त्रणेन द्योत्यते। अतिविदग्धा अपि देवरजायास्त्वया तद्दयितवशीकरणेन सम्यक् विजिता इत्युपालम्भगर्भाऽसूयापि ऋजुके इत्यामन्त्रणेन ध्वन्यते। कृशोदरीत्यामन्त्रणेन तु कृशमध्यायास्तवोत्तानबन्ध एव सुखावहोऽभूदिति स्वस्य बन्धचातुर्यममिव्यज्यते। 'पडोहर' शब्दः पश्चाद्गृहवाचको देशी। 'अक्षोटकन्दरालौ द्वावङ्कोटे तु' इत्यमरः।

कृतापराधे दयिते मानावलम्बनेन क्षणमात्मगौरवं स्थापनीयमिति शिक्षयन्तीं सखीमात्मनोऽनुरागातिशयात्तत्राक्षमतां काचिदाह-

**स्थगयिष्यामि कराभ्यां नयने तस्मिन्विलोकिते द्वाभ्याम्।**

**अपिधास्यामि कथं मम पुलकितमङ्गं कदम्बकुसुममिव।।१४।।**[१]

तस्मिन्दृष्टे सति द्वाभ्यां कराभ्यां नयने स्थगयिष्यामि आच्छादयिष्यामि, परं तद्दर्शनेन पुलकितं रोमाञ्चयुक्तमत एव कदम्बकुसुममिव स्थितं ममाङ्गं कथम् अपिधास्यामि आच्छादयिष्यामि। सर्वाङ्गव्यापितत्वात्पुलकं गोपयितुमशक्यमिति भावः। स्थगयिष्यामीत्यनेन 'यत्किल मत्प्रयत्नेन साध्यं तदधीनं मम, यत्तु मम हृदयाधीनं तत्राहमवशा, हृदयस्य प्रियतम-वशीभूतत्वात्' इत्यभिव्यज्यते। कदम्बकुसुममिवेत्युपमया कदम्बकुसुमे यथा केसराः स्वभावतो भवन्ति तथा प्रियतमस्यावलोकनमात्रेण ममापि स्वतो रोमाञ्चोद्गमो भवतीति प्रियं प्रति निसर्गतोऽनुरागो द्योत्यते। तथा च प्रियतमे एवमनुरक्ताया मम शारीरिकविकारगोपनमेव तस्मिन्न-वसरे दुष्करं किं पुनर्मानावलम्बनमिति सखीं प्रति ध्वन्यते।

---

१. **अच्छीइँ ता थइस्सं दोहिँ वि हत्थेहिँ वि तस्सिं दिट्ठे।**

**अङ्गं कलम्बकुसुमं व पुलइअं कहँ णु ढक्किस्सम्।।१४।।**

[अक्षिणी तावत्स्थगयिष्यामि द्वाभ्यामपि हस्ताभ्यां तस्मिन्दृष्टे।

अङ्गं कदम्बकुसुममिव पुलकितं कथं नु च्छादयिष्यामि।।]

सं. गा. १४

नायकसमीपगामिनं पान्थं प्रति सखीजनो नायिकाया अवस्थां गृहस्यापि च दुर्दशां सूचयन् तस्य त्वरितागमनार्थं सन्दिशति–

**झञ्झावतोत्तृणिते गृहे रुदित्वा हि निःसहनिषण्णाम्।**
**दर्शयतीव घनानां प्रोषितपतिकां नु विद्युदुद्द्योतः।।१५।।**[१]

झञ्झावातेन वर्षावायुना उत्तृणिते तृणशून्यीकृते गृहे प्रियस्मरणोत्कण्ठया रुदित्वा निःसहं यथा स्यात्तथा निषण्णां प्रोषितपतिकां विद्युदुद्द्योतो घनानां घनान् प्रति दर्शयतीव। घनानामिति कर्मणः शेषत्वविवक्षया षष्ठी। भवतामुदयादियमेतामवस्थां तु प्राप्ता, किमिदानीम–बलामधिकं क्लेशयथ, प्रत्युत पत्युरेतस्याः कुरुतोत्कण्ठां येन इमां दुर्दशामवाप्ता सेयं जीवितुं शक्नुयादित्याशयेन मेघान् प्रदर्शयतीति भावः। स्त्रीत्वान्मृदुहृदयतया विद्युतः प्रोषितपतिकां प्रति पक्षपातः, अत एव दयमाना विद्युत्प्रोषितपतिकाया उपरि दयाप्रकाशनार्थं तां मेघेभ्यो दर्शयतीत्याशयः। यथा मृच्छकटिकेऽप्युक्तम्– 'यदि गर्जति वारिधरो गर्जतु तन्नाम निष्ठुराः पुरुषाः। अयि विद्युत्प्रमदानां त्वमपि च दुःखं न जानासि।।' अथवा प्रियविरहवेदनया समधि–कक्लिष्टामत एव दुःखाधिक्यसम्भवभिया मेघदर्शनमसहित्वा गृहे निलीय निषण्णां प्रोषितपतिकां विद्युत्प्रकाशो मेघान् प्रति दर्शयति। स्त्रीत्वात्स्त्रीरहस्याभिज्ञा विद्युद् उपजापकारिणीव निजदयितान् मेघान् प्रति क्लेशनार्थं तां प्रकाशयतीति भावः। किंवा उत्कण्ठोच्छ्वसितहृदयतया मेघदर्शनात्पराजीय गृहे निलीनां प्रोषितपतिकां विद्युत्प्रकाशो घनानाम् (घनान् कर्मभूतान्) दर्शयतीव। विरहोद्दीपकान्मेघान्द्रष्टुमनिच्छन्तीमपि प्रोषितपतिकां विशीर्णगृहप्रविष्टो विद्युत्प्रकाशस्तान्मेघान्बलाद्दर्शयतीत्यर्थः। 'दृशेश्चेत्यनेन प्रयोज्यकर्तुः प्रोषितपतिकायाः कर्मत्वेन द्वितीया। मेघान् अपश्यन्तीमपि प्रयोज्यां प्रयोजको विद्युत्प्रकाशो बलात्पश्यन्तीं ज्ञात्वा प्रदर्शनकर्मणि प्रयोजयतीत्यहो वैयाकरणानामविषयो विषयः!! [धातुवाच्यव्यापारस्य कर्तुरेव प्रयोज्यत्वमालम्ब्य प्रयोजककर्त्रा प्रेरणे कृते धातोर्णिच् वैयाकरणैरनुशिष्टः; न तु धातुवाच्य–व्यापारादूरं पलायमानस्य कर्तुर्बलात्कारेण प्रयोज्यत्वं संस्थाप्य णिजर्थं प्रेरणं क्रियते। अत्र हि प्रोषितपतिका दृशधातुवाच्यव्यापारादवलोकनादूरं पलाय्य गृहे निलीना तथापि तां पश्यन्तीं प्रयोज्य बलात्कारप्रयोजकेन विद्युत्प्रकाशेन बलादेव णिजर्थं प्रेरणं कृत्वा दर्शयतीति प्रसेधित–मेवेति विलोक्यतामाश्चर्यम्!!] तथा च त्वद्विरहवेदनया क्लिष्टायां तस्यां वर्षाकालिको मेघाडम्बरो बलादत्याचरतीति ध्वन्यते। वातेनैव तृणानामुड्डयनेन गलितमुञ्जबन्धनस्य च्छदिषो गृहस्वामि–

---

१. **झञ्झावउत्तणिए घरम्मि रोऊण णीसहणिसण्णम्।**
**दावेइ व गअवइअं विज्जुज्जोओ जलहराणम्।।१५।।**
[झञ्झावतोत्तृणिते गृहे रुदित्वा निःसहनिषण्णाम्।
दर्शयतीव गतपतिकां विद्युद्द्योतो जलधराणाम्।।]

कर्तृकं बहुकालादप्रत्यवेक्षणं सूच्यते। तथा च बहोः कालात्ते विरहवेदनामेषा विसोढवतीति व्यज्यते। निःसहमित्यनेन 'त्वदनुध्यायेन उत्कण्ठितहृदयतया यावद्बलं सा रोदिति, विरहकृशतया तत्राप्यसमर्थत्वे तु निःसहतया निषीदति' इति विरहदौर्बल्यातिशयो व्यज्यते। गृहे निषण्णामित्यनेन त्वद्गतचित्ततया न गृहजनसङ्कथास्वस्या मनो रमते, अत एव विजने गृहे निषीदतीति ग्लान्या प्रियानुरागातिशयो ध्वन्यते। दर्शयतीवेत्यनेन 'नासौ खिन्ना मेघान्पश्यति परं साम्प्रतं त्रुटितगृहान्तरालान्मेघा इमां पश्यन्ति, इति दैन्यदूना सेयमचिरादुज्जीवनीया' इति ध्वन्यते। तथा चैवं गृहदारिद्र्यदशायामपि त्वदनुरागवशात्केवलं त्वदनुध्यानमात्रावलम्बनामिमां त्वरितं सम्भावय, अन्यथा सम्प्रति मेघैरवेक्षिता सेयं नाधिककालमेवं तिष्ठेदिति त्वरितागमनं ध्वन्यते। गतपतिकामिति मूलपाठो न सुन्दर इति प्रोषितपतिकामिति प्रयुक्तम्।

अनुरक्तायामपि कस्याञ्चन ग्राम्यवेषादिना मन्दादरं नायकं प्रवर्तयितुं दूती साकूतमन्यापदेशेनाह–

**भुङ्क्ष्व यदायत्तं नो लवणं कुग्रामरन्धने तु कुतः।**
**सुभग सलवणेनापि च किं तेन हि यत्र न स्नेहः।।१६।।**[१]

यत् नः आयत्तम् अधीनं तद् भुङ्क्ष्व। रिद्धं रन्धनम्। सुलभलवणात्प्रदेशात्सुदूरवर्तितया कुत्सितस्यास्य ग्रामस्य रन्धने लवणं सामुद्रादि कुतः स्यात्। हे सुभग! तेन सलवणेनापि किं यत्र स्नेहो घृतादिर्न स्यात्। सुभगेत्यनेन त्वं तादृशसौभाग्यशाल्यसि, यद्दृष्टमात्र एव त्वयि सेयं स्नेहानुबन्धमधिगतवतीति नैतस्याः स्नेहनिर्भरं मनो मन्दादरताप्रदर्शनेन कदर्थनीयमिति सौन्दर्य–गर्वितं प्रत्यभिव्यज्यते। वाच्येनानेन वस्तुना 'कुग्रामे (यत्र समयेऽपेक्षितस्याभीष्टवस्तुनः कामं नोपलम्भ एतादृशे लघौ ग्रामे) यदृच्छयाऽऽगतस्य प्राघुणिकस्य यदि विवशतया यथामनोरथं परिचरणं न स्यात्तदा दक्षिणेनागन्तुकेनापि यदेतेषां स्वाधीनं (यद्धि मनोरागान्निवेद्यते) नेदं यत्र कुत्रचित्सुलभमिति परिज्ञाय तत्स्वीकारेणैव सन्तोष्टव्यम्। लवणं हि अन्यान्यस्थलेषु सुलभम्, किञ्चिद्व्ययेनापि लब्धुं शक्यम्। स्नेहः (घृतादिकम्) तु शुद्धो भूरिव्ययेनापि कदाचिदेवोपलभ्येत नागरिकैर्भवादृशैरिति स्नेह एव बहुमानदृशावलोकनीयो न तावदापातमञ्जुलं लवणम्। किं च लवणं यदि विशेषपरिमाणे भुज्यते तर्हि त्वरितमेव वैरस्यमापादयति। स्नेहस्तु अधिकाधिकमपि व्यामिश्रित आसेव्यते तर्ह्यपि न प्रकृतरसस्य भङ्गः, प्रत्युत शरीरस्येव तस्य भूयान्परिपोष

---

१. **भुञ्जसु जं साहीणं कुत्तो लोणं कुगामरिद्धम्मि।**
**सुहअ सलोणेण वि किं तेण सिणेहो जहिँ णत्थि।।१६।।**
[भुङ्क्ष्व यत्स्वाधीनं कुतो लवणं कुग्रामरिद्धे।
सुभग सलवणेनापि किं तेन स्नेहो यत्र नास्ति।।]

एव। तथा च– लावण्यमात्रलोलुपतया नास्याः स्वाभाविकः स्नेहोऽवधीरणीय इति दूत्या कश्चिन्नागरिकतादर्पशालिनं प्रति प्रतिबोध्यते। यत्स्वाधीनमित्यनेन सौन्दर्यं नास्या अधीनं तद्धि दैवायत्तम्। यत्रास्याः स्ववशः स किल बहुत्र दुर्लभः स्नेहो भाग्यवशात्सुलभस्ते जात इति त्वत्सौन्दर्याग्रे निजस्य सौन्दर्यमकिञ्चिनमन्वानतया विनयातिशयमाविष्कुर्वत्यां सुदत्यामस्या-मवश्यं दयनीयमिति व्यज्यते। व्यञ्जनादिपदमनुपादाय रन्धनपदनिबन्धनेन– रन्धितमोदनादिकं यथाऽपरस्यैव कार्ये समुपयुज्यते, न च वैरस्योत्पादकं कालहरणमत्र प्रशस्यते। तथा च नेयं केनचिदन्येन यावदभियुज्यते तावदेनामुपस्थितामनुकम्पस्वेति ध्वन्यते। छायायां 'नः' इति बहुत्वेनगैकस्य कस्यचन वशः किं तु बहवोऽपि वयमस्मिन्कुस्थलेऽन्यं प्रबन्धं कर्तुं न प्रभवाम इति विवशतातिशयोऽभिव्यज्यते। भुङ्क्ष्वेति मूलानुरोधि पदम्। अन्यथा तु 'स्वादय यत्स्वा-धीनम्' इत्यपि बन्धबन्धुरं स्यात्। कुगामरिद्धम्मीति प्राकृतेन सह 'रिद्धम्' इत्येव छायामुप-कल्पयन् गङ्गाधरस्तु विच्छाय एव, रिद्धस्यानिष्पत्तेः। प्राकृते तु रन्धितस्य सम्भवेद्रिद्धमिति।

नीरसमपि स्नेहवशान्मनोऽनुकूलं भवतीति समीपोपस्थितं नायकं श्रावयितुं काचित्सखीं प्रत्यन्यापदेशेनाह–

**सुखपृच्छिकामुखाम्बुजसुरभिपवनशीतलीकृतं हलिकः।**
**प्रकृतिकटुकमपि निपिबति तथौषधं तिष्ठति हि न यथा॥१७॥**

प्रकृत्या स्वभावेनैव कटुकं तिक्तम्। औषधं तथा पिबति यथा न तिष्ठति, नावशिष्यत इत्यर्थः। अयमभिप्रायः– ज्वरार्तस्य नायकस्य सुखप्रश्नार्थमागतया नायिकया तत्समयप्रदेयमुष्णं क्काथौषधं फूत्कारेण शीतलीकृतम्। स चानुरागानुप्राणितः कटुकमपि तन्निःशेषं पीतवानिति। हलिक इत्यनेन हालिकोऽपि तावदेवमनुरागरमणीयां दाक्षिण्यचर्यामनुरुणद्धि। भवांस्तु नागरिकत्वाभिमानीति किं पुनर्भवति विशेषवचनेनेति साकूतं ध्वन्यते। औषधमित्यनेन मयाऽयमनुरागस्तव महान्तमपि मनोव्याधिमपनयेदतः किञ्चिद्धैर्येण नियमे स्थातव्यमित्यभि-व्यज्यते। प्रकृतिकटुकमित्यनेन 'न मेऽनुरागस्तव हृदयावर्जकस्तथापि परिमाणे सुखप्रद इत्यौषधरूपेणापि सोऽभ्युपगन्तव्यः' इति सूच्यते। ''विरसमप्यनुरागात्सुरसं भवतीति कापि सखीमाह'' इति गङ्गाधरावतरणम्।

---

१. **सुहपुच्छिआइ हलिओ मुहपङ्कअसुरहिपवणणिव्वविअम्।**
**तह पिअइ पअइकडुअं पि ओसहं जह ण णिट्ठाइ॥१७॥**
[सुखपृच्छिकाया हलिको मुखपङ्कजसुरभिपवननिर्वापितम्।
तथा पिबति प्रकृतिकटुकमप्यौषधं यथा न तिष्ठति॥]

सा न समागता अहं तु निकुञ्जे चिरं स्थित्वा समागत इति वदन्तं नायकं पुनः सङ्केतस्थाने नेतुं नायिकायास्तत्र गमनं समागमोत्कण्ठां च दूती निपुणतयाभिव्यनक्ति–

**सा विस्मृतसङ्केता वानीरवनेऽथ तत्र तत्रैव।**
**तव दर्शनं विमार्गति विभ्रष्टनिधानदेशमिव।।१८।।**[1]

विस्मृतं सङ्केतस्थलं यया एतादृशी सा। तत्र तत्र तस्मिंस्तस्मिन्नेव वानीरवने वेतसवने। विस्मृतं निधानदेशमिव निधिस्थलमिव तव दर्शनमन्वेषयतीति भावः। निधानस्थाने विस्मृते सति तत्सन्निधानस्य यथा सर्वोऽपि देशः पुङ्खानुपुङ्खरूपेणान्विष्यते, तथा सापि सर्वत्रैव तस्मिन्वानीरवने भवन्तं विमार्गतीत्याशयः। तत्र तत्रैवेत्यनेन पुनः पुनस्तेष्वेवान्वेषणं करोतीत्युत्कण्ठातिशयो ध्वन्यते। त्वां विमार्गतीत्यस्य स्थाने तव दर्शनं विमार्गतीत्यनेन विस्मृतसङ्केततया त्वामलभमानासौ त्वद्दर्शनमपि साम्प्रतं बहु मन्यते किं पुनस्त्वत्समागमसुखमित्यनुरागातिशयो व्यज्यते। विमार्गतीति वर्तमानार्थं सूचयता लटा, अधुनापि सा त्वद्गतचित्ततया वानीरवनान्वेषणमेव करोति, न कथञ्चित्ततो निवर्तितुं कामयत इति तामेतां त्वरितं सम्भावयेति नायकार्थं त्वरातिशयो व्यज्यते। गङ्गाधरस्त्वेतदवतरणे 'अहं तु गतः सा न गता' इति वदन्तं नायकं प्रति नायिकायास्तत्र गमनं प्रतिपादयन्ती दूत्याह' इति केवलं नायिका तत्र गताऽभूदित्येव सूचयति, न तु नायकस्य सम्प्रति गमनमभ्यर्थयते। एतदभावे 'विमार्गणं चकार' इत्येव वक्तव्यमासीत् 'विमार्गती'ति वर्तमानार्थस्य किं स्वारस्यमिति मार्मिकैर्विचार्यम्।

रोषमुपगता सेयं रहस्यं प्रकाशयेदिति भयेन दूतीतो मनोगतं गोपयन्तीं काञ्चन सुजनचरितेन समाश्वासयन्ती काचिदाह–

**वदनात्सुजनस्य कुतोऽप्रियं सुदृढरोषकलुषितस्यापि।**
**राहुमुखेऽपि हि शशिनः किरणाः पीयूषमेव मुञ्चन्ति।।१९।।**[2]

---

१. **अह सा तहिं तहिं व्विअ वाणीरवणम्मि चुक्कसंकेआ।**
**तुह दंसणं विमग्गइ पब्भट्ठणिहाणठाणं व।।१८।।**
[अथ सा तत्र तत्रैव वानीरवने विस्मृतसङ्केता।
तव दर्शनं विमार्गति प्रभ्रष्टनिधानस्थानमिव।।]

२. **दृढरोसकलुसिअस्स वि सुअणस्स मुहाहिँ विप्पिअं कन्तो।**
**राहुमुहम्मि वि ससिणो किरणा अमअं विअ मुअन्ति।।१९।।**
[दृढरोषकलुषितस्यापि सुजनस्य मुखादप्रियं कुतः।
राहुमुखेऽपि शशिनः किरणा अमृतमेव मुञ्चन्ति।।]

सुदृढरोषेण कलुषितस्य दुर्मनायितस्यापि सुजनस्य मुखात्। अप्रियं परमर्मवेधकं वचनं कुतः ? नैवेति काक्वा सूच्यते। राहुमुखेऽपीत्यनेन– वैरिणा सुभृशमाक्रान्तोऽपि शीतभानुर्यथाऽमृतमेव वर्षति न कालकूटं तथैव दुर्जनैः खेदितापि नेयं भवत्या रहस्यं प्रकाशयेदिति तस्या मनस्वितया समाश्वसिहीति सान्त्वनमभिव्यज्यते। राहुदृष्टान्तेन–सर्वथा ग्रासेऽपि नेयं प्रणयभङ्गं कुर्यादिति ध्वन्यते।'कृतापराधं नायकसहचरं भयान्नायकोपसर्पणविमुखमभिमुखयितुं काचिदाह' इति गङ्गाधरः।

आत्मना प्रहितस्य प्रणयोपहारस्य परावर्तनेन नायिकायाः प्रणयभङ्गमनुमाय विषीदन्तं कान्तं सान्त्वयन्ती नायिकासखी सुजनचरितमाह–

**अवमानितोऽपि सुजनो विभवविहीनोऽपि दूयते न तथा।**
**असमर्थः प्रतिकर्तुं यथा परैर्मान्यमानो हि।।२०।।**[१]

धनादिवैभवरहितः सुजनस्तिरस्कृतोऽपि तथा न दूयते न व्यथते तथा प्रत्युपकारं कर्तुमसमर्थः, अन्यैर्जनैर्धनदानादिना सम्मान्यमानः सन् व्यथते। प्रत्युपकारं विना अन्यैः कृतेन सम्मानेन महतीं मनोव्यथामनुभवतीति भावः। तथा च नेयं त्वयि विरक्ता किन्तु भवदभिलाषसम्पादनस्य नास्ति तस्या वश इति मनस्वितया भवदुपहारं स्वीकर्तुं सङ्कुचतीति नायिकाया उदाराशयत्वं ध्वन्यते। अवमानित इत्यनेन त्वं यस्मिन्समये तां प्रति न तथानुरक्तोभूस्तदापि नासीत्तस्यास्त्वां प्रति काचिदीर्ष्येति ध्वन्यते। परैर्मान्यमानो दूयत इत्यनेन न सा भवदुपायनलालसा प्रणयातिशयं दर्शयति प्रत्युत स्वाभाविकानुरागशालिनी सा तस्मादपत्रपत इति नायिकाया नैसर्गिकस्नेहोऽभिव्यज्यते। परैरिति बहुवचनेन–अन्येऽपि बहव उपायनद्वारा तामनुकूलयितुं प्रभवेयुर्यदि सा उपायनलोभिनी भवेत्, परं सा त्वयि सत्यानुरागिणीति नायिकाया अनन्यलभ्योऽनुरागो ध्वन्यते। तथा च–एवमुन्नतमानसा सा त्वयि सुदृढमनुरज्यतीत्यहो ते सौभाग्यमिति नायकं प्रति प्रोत्साहनं ध्वन्यते। 'कापि जाराभिमतसम्पादनासमर्थां तत्कृतोपहारं परिहरन्ती कोऽत्र दोष इति वदन्तीं दूतीमाह' इति गङ्गाधरटीका।

मयि विश्रब्धं प्रकाशय रहस्यमिति प्रोत्साहयन्ती दूती नायिकामन्यापदेशेनाह–

---

१. **अवमाणिओ वि ण तहा दुम्मिज्जइ सज्जणो विहवहीणो।**
**एडिकाउं असमत्थो माणिज्जन्तो जह परेण।।२०।।**
[अवमानितोऽपि न तथा दूयते सज्जनो विभवहीनः।
प्रतिकर्तुमसमर्थो मान्यमानो यथा परेण।।]

**अविनिर्गतानि कलहान्तरेऽपि हृदये जरामुपेतानि।**

**सुजनश्रुतानि दहनो दहति रहस्यानि चायुषः पूर्तौ।।२१।।**[१]

कहलान्तरेऽपि कलहमध्येऽपि अविनिर्गतानि मुखाद्बहिरनिःसृतानि। हृदये जरामुपेतानि बहुकालं स्थितानि। सुजनेन श्रुतानि रहस्यानि गोप्यवृत्तानि आयुषः क्षये अग्निर्दहति, न पुनरन्यस्मिन्सङ्क्रामन्तीति भावः। हृदये जरामुपेतानीत्यनेन सुजनः स्वयमपि न तानि पुनः स्मरणेनावर्तयति, किन्तु स्वयमेव तानि शनैः शनैर्मन्दीभूतानि भवन्तीति सौजन्यातिशयो ध्वन्यते। तथा च रोषमुपगतापि नाहं रहस्यं प्रकटयेयमिति विश्वस्यतां मयीति दूत्या स्वविश्वसनीयत्वं ध्वन्यते।

वसन्तसमुद्भवेन समुज्जृम्भमाणां विरहवेदनामनुभवन्त्याः प्रोषितपतिकाया अवस्थां नायकसमीपगामिनं पान्थं प्रति सखी सवैदग्ध्यमाह–

**अङ्गणमाधविकानां स्तबका द्वारार्गला जाताः।**

**विगतो गतपतिकानां पान्थविलोकेऽपि चाश्वासः।।२२।।**[२]

अङ्गणे प्ररूढा या माधविका वासन्त्यो लतास्तासाम्। स्तबका गुच्छकाः। तवानुध्याननिश्चला सा प्रायो निर्जने भवनमध्य एव तिष्ठति। साम्प्रतं च वसन्तसमागमेन अङ्गणमाधविकानां स्तबकोद्गमः सञ्जातः। तथा च समुद्दीपितविरहहुतवहा चिन्तालीनमानसतया नोत्थाय बहिरप्यागन्तुं प्रभवतीति स्तबका द्वारस्यार्गलायिताः समभवन्नित्याशयः। अत एव गतपतिकानां प्रोषितपतिकानाम्। पान्थानां विलोकनेऽपि आश्वासो विगतः आशावलम्बनं नष्टम्। भवत्पथमवलोकन्यती सा समजीवदेतावत्कालं तदपि माधविकागुच्छकैस्तिरोहितमिति वेदनातिशयो ध्वन्यते। पान्थविलोकेऽपि चाश्वासो विगत इत्यनेन– न सा अन्यं प्रति दृष्टिमपि निक्षिपति, तदेवं त्वदेकमात्रजीवितामेतां नाधिकं क्लेशयेहित्यपि ध्वन्यते। द्वारार्गला जाता इत्यनेन न कश्चनान्यः

---

१. **कलहन्तरे वि अविणिग्गआइँ हिअअम्मि जरमुवगआइं।**
**सुअणकआइँ रहस्साइँ डहइ आउक्खए अग्गी।।२१।।**
[कलहान्तरेऽप्यविनिर्गतानि हृदये जरामुपगतानि।
सुजनश्रुतानि रहस्यानि दहत्यायुःक्षयेऽग्निः।।]

२. **लुम्बीओ अङ्गणमाहवीणँ दारग्गलाउ जाआउ।**
**आसासो पन्थपलोअणे वि पिट्टो गअवईणम्।।२२।।**
[स्तबका अङ्गणमाधवीनां द्वारार्गला जाताः।
आश्वासः पान्थप्रलोकनेऽपि नष्टो गतपतिकानाम्।।]

पुरुषो द्वारमात्रमपि प्रवेष्टुं लभत इति द्योत्यते, किं बहुना मनोविनोदाय पान्थान्प्रति दृङ्निक्षेपोऽपि नास्याः सुलभ इति परिरक्षितचारित्रैव सेयमिति सूच्यते। गतपतिकानामिति बहुवचनेन विरहिजनदुरन्तेऽस्मिन्वसन्ते सर्वासामेव प्रोषितपतिकानां सामान्येनेयं दशा, तत्रापि सेयं त्वदेकमात्रावलम्बना, त्वन्मार्गावलोकनविनोदमप्यलभमाना दुःखातिशयमनुभवतीति न यावदियं शोचनीयां दशामधिगच्छति तावत्त्वरितमेव सञ्जीवनीयेति तत्कान्तं प्रति ध्वन्यते। लुम्बीति स्तबकवाचको देशी। 'दूती प्रोषितभर्तृकाङ्गणस्य माधवीलताकुञ्जगहनत्वेन दिवैवाभिसरण-योग्यताम्, नायिकायाश्च वसन्तकालप्राप्त्योत्कण्ठातिशयेन सुसाध्यतां प्रतिपादयन्तीं नायकमाह' इति गङ्गाधरावतरणम्।

प्रियतमं प्रति नायिकायाः प्रणयातिशयं नयनयोः सौन्दर्यं च प्रकटयितुं सखी आह-

**यदि नयने न हि भवतः प्रियदर्शनसुखनिमीलिते तस्याः।**

**कर्णरचितं तदा कैः कुवलयमालक्ष्यते तस्याः।।२३।।**[१]

तस्या नयने प्रियदर्शनसुखस्य रसेन मुकुलिते यदि न भवतः, तदा कर्णयो रचितं निवेशितं तस्याः कुवलयं कैर्जनैरालक्ष्यते। आयतरुचिरयोस्तया नयनयोः कर्णकुवलययोश्च परस्परं न विशेषः। केवलं नयनमुकुलीभावेनैव मिथोभेदः परिज्ञायत इत्यर्थः। नयनकुवलययोः सादृश्याद्विशेषाप्रतीतौ प्राप्तायां मुकुलीभावेन विशेषस्फूर्तिवशाद्विशेषकालङ्कारः। "भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ" इति पीयूषवर्षलक्षणम्। [सामान्यरीत्या विशेषास्फुरणे प्राप्ते कुतश्चित्कारणाद्विशेषस्फूर्तौ तत्प्रतिद्वन्द्वी (सामान्य प्रतिद्वन्द्वी) विशेषकः] इति कुवलयानन्दः। अनेन च नयनयोः शोभातिशयो व्यज्यते। प्रियतमस्य दर्शनमात्रेणैवैतादृशं सुखं तदा समागमादिना कियत्स्यादिति प्रियं प्रति सख्याः प्रणयातिशयो ध्वन्यते। मूलोपात्तेन दर्शनसुखरसेति रसपदेन न विशेषार्थपरिपोष इत्यनुपादानमत्र। 'आद्यस्य नयनपदेन द्वितीयस्य च कुवलयपदेनान्वयात्तस्या इति पदद्वयस्य न वैयर्थ्यमिति ध्येयम्।' इति गङ्गाधरटीका।

जलधरोल्लासमयः प्रावृट्समय सर्वानेवानन्दयतीति घनसमयमभिस्तुवन्तं सहचरं प्रति नागरिको निजनैपुण्यमभिनयन्नाह-

---

१. **पिअदंसणसुहरसमउलिआइँ जइ से ण होन्ति णअणाइं।**
**ता केण कण्णरइअं लक्खिज्जइ कुवलअं तिस्सा।।२३।।**
[प्रियदर्शनसुखरसमुकुलिते यदि तस्या न भवतो नयने।
तदा केन कर्णरचितं लक्ष्यते कुवलयं तस्याः।।]

**कर्दममग्नहलाग्रोत्कर्षणशिथिलेऽथ निद्रिते पत्यौ।**

**अप्राप्तमोहनसुखा घनसमयं पामरी शपते।।२४।।**[१]

कर्दमे मग्नं यत् हलाग्रं हलमुखं तस्यात्कर्षणेन शिथिले पत्यौ अनिच्छायामपि श्रमवशात् झटिति सुप्ते सति, न प्राप्तं मोहनसुखं सुरतसुखं यया एतादृशी पामरी कृषीवलभृत्यस्त्री घनसमयं शपति आक्रुश्यति। अन्यसमये यावानानन्द आसीत्सोऽप्यनेन लोपित इति वर्षासमयं निन्दतीत्यर्थः। वर्षासमये भवद्भूयानानन्द इति प्रतीक्षमाणायः पूर्वानन्दस्याऽप्यभावाद्विषादनमलङ्कारः- ''इष्यमाणविरुद्धार्थसम्प्राप्तिस्तु विषादनम्''। एतेन वर्षासमये अन्येषामृतूनामपेक्षया अधिकसुखस्य परिवर्तेऽधिकदुःखमेव पामरगेहिन्या उपलभ्यत इति नागरिकेण सूच्येत। वास्तवे तु पत्युर्गृहवर्तित्वेऽपि हालिकवध्वाः सुलभत्वं साधयन्त्या दूत्या विटं प्रत्युक्तिः। कर्दममग्नेत्युक्त्या हलवाहनसमये मध्ये मध्ये उपवेशनविश्रामोऽपि कर्दममग्ने स्थले दुर्लभ इति सूच्यते। ततश्च सम्पूर्णदिनं यावदुपवेशनमात्रविश्राममप्यलभमानस्य हालिकस्य रात्रौ दिवसानुभूतपरिश्रमाधिक्येन गाढनिद्राक्रान्तत्वं ध्वन्यते। मोहनसुखेत्यनेन सुरतसुखं सा सम्यक्तया वेत्तीति सुखापेक्षिण्यास्तस्याः अभिसरणीयत्वं ध्वन्यते। घनसमयमिति नागरपदविन्यासादस्ति तस्या अपि घनघटाविच्छुरितासु वर्षासु प्रवृद्धा भूयसी समुत्कण्ठेति तस्याः सुसाध्यत्वमभिव्यज्यते। कृषकस्य गृहे यो भृत्यः कार्यं करोति स एवात्र प्रायः पामरपदेन व्यवह्रियते। तथा च पामरीपदेन-अन्यसेवावश्यस्य तत्पतेर्न स्वातन्त्र्यं यद्धलवाहनकार्ये शैथिल्यं कुर्यादिति सुखसाध्यत्वं तद्गेहिन्याः सूच्यते। शपतीत्यनेन आक्रोशं विहाय न तस्या अन्यो वश इति मेघान्प्रत्यसूयोदयेनोत्कण्ठातिशयोऽभिव्यज्यते। असिमन्पक्षे पूर्वप्रतिपादितेन विषादालङ्कारेण उत्कण्ठारूपो व्यभिचारी ध्वन्यत इति भावध्वनिः। पर्यन्ततस्तु पामरीनिष्ठा रतिरेव परिपुष्यतीति रसध्वनिः। ''अभ्युदयहेतुरपि कार्यवशादुद्वेगं जनयतीति प्रतिपादयन्नागरिकः सहचरमाह' इति गङ्गाधरावतरणम्।

प्रवासार्थमुद्यतस्य दयितस्य गमननिवारणेच्छया विरहे भाविनं वेदनातिशयं सूचयितुं काचित्कामशरनमस्कारापदेशेनाह-

---

१. **चिक्खिल्लखुत्तहलमुहकड्ढणसिठिले पइम्मि पासुत्ते।**
**अप्पत्तमोहणसुहा घणसमअं पामरी सवइ।।२४।।**
[कर्दममग्नहलमुखकर्षणशिथिले पत्यौ प्रसुप्ते।
अप्राप्तमोहनसुखा घनसमयं पामरी शपति।।]

**दुन्वन्ति ददति सौख्यं कुर्वन्त्यनुरागमथ च रमयन्ति।**
**अरतिरतिबान्धवेभ्यो नमो नमो मदनबाणेभ्यः।।२५।।**[१]

कामबाणा दुन्वन्ति उपतापयन्ति, उत्कण्ठां सम्वर्ध्य मनोवेदनां जनयन्तीत्यर्थः। नैकमात्रं परिहरणीया एवेत्याह–सौख्यं ददति, दयितसांन्निध्ये रतेरभिवर्द्धनेन सुखं परिपोषयन्तीति भावः। ननु शनैःशनैरुत्कण्ठाशान्त्या स्यादुपरम इत्याह–अनुरागं कुर्वन्ति रतेः प्रवर्द्धनेन प्रेमाणं प्रकर्षयन्तीत्यर्थः। अत एव रमयन्ति, सौमनस्यमेव सम्पादयन्ति। तथा च विरहे दुःखदातृत्वात् सङ्गमे च सुखकारकत्वात् अरतेर्व्याकुलतायाः रतेश्चत्तञ्जनस्यापि कारकेभ्यो मदनबाणेभ्यो नमः। अरतिबान्धवानामपि रतिबान्धत्वेन विरोधालङ्कारः। तथा च तव विरहे उत्कण्ठाभि-वर्द्धनात्कियतीं पीडां जनयेयुरिमे, त्वत्सत्तायां तु अनुरागसम्वर्द्धनान्मनोरमा एवेति त्वमेव विचारयेति प्रियं प्रति प्रवासस्थगनमभिध्वन्यते। दुन्वन्ति अरति इत्यनयोः प्रथमोक्त्या विरहे दुःसहवेदनाधिक्यं सूच्यते। तथा च सुखापेक्षया विरहे दुःखमेवाधिकमुत्पाद्यते स्मरशैरैरिति गमनस्थगन एव तात्पर्यम्। बाणेभ्य इति बहुवचनेन पञ्चापि मयि युगपत्पीडां सञ्चारयेयुरिति पीडातिशयो ध्वन्यते।

शृण्वन्तं कञ्चन कामुकं प्रत्यात्मनो मनोव्यथां सूचयन्ती काचन मनसिजशरवर्ण-नाव्यपदेशेनाह–

**कुसुममया अपि निशिता अकृतस्पर्शा अपि प्रतापाढ्याः।**
**भिन्दन्तोऽपि च रतिदाः कामशराः किल बहुविकल्पा।।२६।।**[२]

निशिताः अतिखराः अतितीक्ष्णा इति यावत्। प्रतापाढ्याः दुःसहपरितापकारकाः। हृदयं छिन्दन्तोऽपि रतिकराः, पूर्वोक्तक्लेशदायकाः सन्तोऽपि प्रियं प्रत्युत्कण्ठासम्वर्द्धनेन रतिं पोषयन्तीति

---

१. **दुम्मेन्ति देन्ति सोक्खं कुणन्ति अणुराअअं रमावेन्ति।**
**अरइरइबन्धवाणं णमो णमो मअणबाणाणम्।।२५।।**
[दुन्वन्ति ददति सौख्यं कुर्वन्त्यनुरागं रमयन्ति।
अरतिरतिबान्धवेभ्यो नमो नमो मदनबाणेभ्यः।।]

२. **कुसुममआ वि अइखरा अनद्धफंसा वि दूसहपआवा।**
**भिन्दन्ता वि रइअरा कामस्स सरा बहुविअप्पा।।२६।।**
[कुसममया अप्यतिखरा अलब्धस्पर्शा अपि दुःसहप्रतापाः।
भिन्दन्तोऽपि रतिकराः कामस्य शरा बहुविकल्पाः।।]

भाव:। एवं च कामस्य बाणा बहुविकल्पा बहुप्रकारा:। कुसुममया अपि निशिता इत्यादि-विरोधालङ्कारेण 'विरुद्धधर्माश्रयतया ते स्पष्टं बहुप्रकारा:' इति सूच्यते। तथा च 'तवावलोकेन भूयांसं परितापमहमनुभवामि, वितर मयि करुणादृशमिति' कामुकं प्रत्यभि-व्यज्यते।

काचन प्रोषितपतिका प्रियगुणस्मरणेनोत्कण्ठां विनोदयन्ती सखीमाह-

**जनयन्तीर्ष्यां मदनं प्रदीपयन्ति प्रसाहयन्त्यसुखम्।**

**विरहे न ददति मर्तुं हन्त गुणास्तस्य बहुमार्गा:।।२७।।**[१]

अन्य महिला अपि तं कामयन्त इति मनसि ईर्ष्यामुत्पादयन्ति। अनेन रमणीमोहक: प्रियस्य सौन्दर्यातिशयो व्यज्यते। चन्द्रकलादिस्थानवेदित्वात्सङ्गमे मदनं प्रदीपयन्ति, काममङ्गेषूत्तेजनामुत्पाद-यन्तीत्यर्थ:। अनेन दयितस्य सुरतकलाकौशलमभिव्यज्यते। असुखम् अननुकूलमपि प्रसाहयन्ति बलात्सह्यं सम्पादयन्ति, अतिशयविप्रियकरणेऽपि मानं जनयितुम-वकाशं न प्रददतीत्यर्थ:। अनेन वल्लभस्यानुनयचातुर्यं ध्वन्यते। विरहे मर्तुं न ददति, समागमाशां जनयित्वा मरणायाऽवकाशं न प्रयच्छन्तीत्यर्थ:। अनेन प्रेयसो नैसर्गिकप्रेमभाजनत्वं ध्वन्यते। अत एव तस्य दयितस्य गुणा बहुमार्गा बहुप्रकारा:। एकेन प्रकारेण चेन्मनो न बध्येत तर्हि प्रकारान्तरेण ते मानसं वशयेयुरिति गुणानां बहुप्रकारशालित्वं सूच्यते। एवंविधगुणशालिन: प्रियतमस्य विप्रयोग इत्यात्मनो वेदनातिशयश्चरमं ध्वन्यते। ''तस्य कामशरस्य गुणा बहुमार्ग इत्यर्थ इति कश्चित्'' इति गङ्गाधर:।

वायनकदानव्यपदेशेन प्रतिगृहं भ्रमन्ती त्वद्दर्शनलालसया भवद्गृहमपि प्रययौ सा। तत्रापि भवतोऽवलोकनं न तस्या: समघटतेति नायिकाया: प्रेमातिशयं सूचयन्ती दूती काचिदाह-

**नीतानि निबिडनिर्दय पिनद्धनवरङ्ग्या वराक्याऽद्य।**

**गृहपतिपाट्या वायनकानि तवालोकलालसया।।२८।।**[२]

---

१. **ईसं जणेन्ति दावेन्ति मम्महं विप्पिअं सहावेन्ति।**
**विरहे ण देन्ति मरिउं अहो गुणा तस्स बहुमग्गा।।२७।।**
[ईर्ष्यां जनयन्ति दीपयन्ति मन्मथं विप्रियं साहयन्ति।
विरहे न ददति मर्तुमहो गुणास्तस्य बहुमार्गा:।।]

२. **णीआइँ अज्ज णिक्किव पिणद्धणवरङ्गऑइ वराईए।**
**घरपरिवाडीअ पहेणआइँ तुह दंसणासाए।।२८।।**
[नीतान्यद्य निष्कृप पिनद्धनवरङ्गकया वराक्या।
गृहपरिपाट्या प्रहेणकानि तव दर्शनाशया।।]

अयि भूरिनिर्दय! पिनद्धनवरङ्ग्या पिनद्धं धारितं नूनतरक्तवस्त्रं यया, वराक्या दयनीयया तया गृहपरिपाट्या गृहाद् गृहमित्यनुक्रमेण। वायनकानि प्रहेणकानि नीतानि। 'प्रहेणकं वायनकम्' इति हारावली। 'वायन' इति व्रजभाषा। वायनकप्रदाने यावन्तो गृहमनुष्या भवन्ति तावन्त्येव वायनानि प्रदीयन्त इति गृहान्तःप्रविष्टाया विलम्बसम्भवेऽपि गणनाव्याजेन तन्निगूहनमिति नायिकायाश्चातुर्यमपि सूच्यते। पिनद्धनवरङ्ग्येति स्वस्य प्रसाधनेच्छया प्रियदर्शने उत्साहः, तं प्रत्यनुरागश्चाभिव्यज्यते। 'अनलङ्कृता दर्शनपथं परिहरति' इति वात्स्यायनः। 'भूषाविहीना न ददाति दर्शनम्' इत्यादि इच्छाशालिन्या लक्षणमिति चानङ्गरङ्गम्। तथा च-पश्य तव सौभाग्यं यत्तव दर्शनमात्रार्थं सा गृहगृहभ्रमणायासमकिञ्चिद् गणयन्ती परिताम्यति। अत एवंविधप्रणय-शालिन्यां तस्यां त्वरितमनुकम्पितव्यमिति दूत्या नायकं प्रत्यभिव्यज्यते।

धनशालिनं कञ्चिदनादृत्य दरिद्रनायकेऽनुरक्तां काञ्चन निवारयन्ती सखी दुर्गतानां लक्षणानि सूचयितुमाह-

**सूच्यत इह हेमन्ते करीषशिखिगन्धिनातिदुर्गतकः।**
**परिविरलतन्तुना बत जीर्णपटेनैव धूमकपिलेन।।२९।।**[१]

करीषाग्नेर्गन्धो विद्यते यस्मिन्नेवंविधेन। करीषाणां पशुविचरणस्थानेभ्यो निर्मूल्यं सुलभत्वात्, बहुकालस्थायित्वाच्च तदग्नेः, तत्सङ्ग्राहकस्य दरिद्रस्य दीनतातिशयः सूच्यते। करीषाग्निधूमात् कपिलेन धूम्रवर्णेन। करीषाग्निः शनैर्मन्दो भवति चेदतिसमीपस्थित्या तापोऽनु-भूयत इति तस्यामवस्थायां बहुकालं धूमानुभवेन वस्त्रस्य कपिशवर्णत्वं जायत एवेति सूच्यते। परिविरलतन्तुना बहोः कालादेकस्यैव धारणेन बहवस्तन्तवो विशीर्णा इति असान्द्रसूत्रेण। जीर्णवस्त्रेणैवातिदुर्गतकः अतिदरिद्रः सूच्यते परिचीयत इत्यर्थः। इह हेमन्त इत्यनेन अस्मिन्नेव समये त्वं परिचिनुहीति सख्या परिबोधपाटवं द्योत्यते। एवंविधं वस्त्रादिदौर्गत्यमनुभवन्तं तं किमिति बहुमन्यस इति सख्या समवबोध्यते। पुप्फुआ इति करीषाग्निवाचको देशी।

बहवः क्लेशाः किल हेमन्तकालप्रवास इति प्रवासोद्यतं नायकं प्रवासादुपरमयितुं काचन शिशिरकालप्रवासिनोऽवस्थां वर्णयति-

---

१. **सूइज्जइ हेमन्तम्मि दुग्गओ पुप्फुआसुअन्धेण।**
**धूमकविलेण परिविरलतन्तुणा जुण्णवडएण।।२९।।**
[सूच्यते हेमन्ते दुर्गतः करीषाग्निसुगन्धेन।
धूमकपिलेन परिविरलतन्तुना जीर्णपटकेन।।]

**तीक्ष्णपलालोल्लिखितानि वहति पथिको हिमागमविभाते।**

**अङ्गान्याचमनाम्भःस्तिमितकरस्पर्शमसृणानि ।।३०।।**[१]

पथिको हिमागमस्य विभाते प्रभाते 'व्युष्टं विभातं द्वे क्लीबे पुंसि गोसर्ग इष्यते' इत्यमरः। तीक्ष्णाः ये पलाला क्षेत्रेषु छिन्नधान्याग्रगुच्छकास्तृणकाण्डास्तैः उल्लिखितानि अवघृष्टानि अङ्गानि। आचमनस्य प्रातर्मुखगण्डूषकरणस्य यत् अम्भः जलं तेन स्तिमितः आर्द्रः यः करस्तस्य स्पर्शेन मसृणानि चिक्कणानि वहति धारयति। पूर्वदिने छिन्नधान्यकणिशेषु क्षेत्रेषु चलनेन तृणकाण्डोल्लिखितान्यङ्गानि प्रातःकाले आचमनजलार्द्रकरेण मसृणानि कृत्वा तानि विगतवेदनानि करोतीत्यर्थः। 'नाडी नालं च काण्डोऽस्य पलालोऽस्त्री स निष्फलः' इत्यमरः। सिप्पिरं पलालः, ओल्लिओ आर्द्रितः, इति देशीद्वयम्। तथा च निर्भरानङ्गसङ्गररमणीयेऽस्मिन् समये यदि भवानपि प्रवासमङ्गीकरिष्यति तर्हि भवेद्भवतोऽपि सेयमवस्था, तत्स्थगय गमन-विचारमिति नायिकया कान्तं प्रत्यभिव्यज्यते।

स्वस्मादतिशयितरूपगुणशालिनीमुत्तमस्त्रियमाग्रहेण परिगृहीतवतः कस्यचिदधमस्य वरवर्णिनीलाभलालसयाऽनुसरणं कुर्वन्तं कामुकजनं प्रदर्श्य, उत्कृष्टनायिकापरिग्रहप्रयतं कञ्चिदधमं स्वाध्यवसायान्निवारयितुं कश्चिदन्यापदेशेनाह-

**सहकारमञ्जरीं किल पामरशीर्षे नखरलूनाम्।**

**ह्रियमाणां बन्दीमिव मधुपयुवानोऽनुधावन्ति।।३१।।**[२]

बलात् ह्रियमाणां बन्दीकृतां स्त्रियं यथा तद्विमोचनकामनया युवानोऽनुसरन्ति तथा नखैरुत्खण्डितां पामरशीर्षस्थां सहकारमञ्जरीं भ्रमरयुवानोऽनुसरन्तीति भावः। पामरशीर्षे इत्यनेन अलभ्यलाभां तामाकलय्य सोऽत्यादरेण तस्यां व्यवहरतीति व्यज्यते। नखरैर्लूनामित्यनेन 'न स्वयमुपलब्धा प्रत्युत बलात् सा आकर्षितेति' तस्या अधमेऽननुरागो ध्वन्यते। तथा च-यद्येवं

---

१. **खरसिप्पिरउल्लिहिआइँ कुणइ पहिओ हिमागमपहाए।**
**आअमणजलोल्लिअहत्थफंसमसिणाइँ अङ्गाइं।।३०।।**
[तीक्ष्णपलालोल्लिखितानि करोति पथिको हिमागमप्रभाते।
आचमनजलार्द्रितहस्तस्पर्शमसृणान्यङ्गानि।।]

२. **णक्खक्खुडिअं सहआरमञ्जरिं पामरस्स सीसम्मि।**
**बन्दिम्मिव हीरन्तीं भमरजुआणा अणुसरन्ति।।३१।।**
[नखोत्खण्डितां सहकारमञ्जरीं पामरस्य शीर्षे।
बन्दीमिव ह्रियमाणां भ्रमरयुवानोऽनुसरन्ति।।]

त्वमप्युत्तमां स्त्रियं बलात्परिग्रहीष्यसि तर्हि तवापि युवभिरभिधावनं भविष्यतीति तं प्रत्य-भिव्यज्यते। वस्तुतस्तु-अधमेन केनचिद्बलादपहृत्य विपदमवापितां नायिकामुपेक्षमाणस्य नायकस्य शिक्षायै नायिकासखी तदुद्धरणाय त्वरयितुमन्यापदेशेनाह-भ्रमरैर्यस्याः सहकारमञ्जर्याः पूर्वं रसोनुऽभूतस्तां नखखण्डनखेदखिन्नां पामरजनसङ्गपतितां चालोक्य तदुद्धारकामनया अवशत्वेऽपि तस्या अनुसरणं क्रियते। भवाश्च समर्थोऽपि नागरिकतामनभिवीक्ष्य तामुपेक्षत इत्यहो ते स्वार्थपरायणता, तदुद्धर तां द्रुतमिति नायकं प्रत्यावेद्यते।

काञ्चन सुन्दरीमभिलक्ष्य त्वं प्रणत्यादिचेष्टां करोषीति त्वं मयाभिलक्षितोऽसीति सूचयन्ती काचित्प्रौढा दूती नायकमाह-

**सूर्यच्छलेन कस्मै त्वमञ्जलिं पुत्रक प्रणामयसि।**
**हास्यकटाक्षोन्मिश्रा देवानां नो भवन्ति जयकाराः।।३२।।**[१]

अञ्जलिं प्रणामयसि अञ्जलिं बध्वा प्रणामं करोषीत्यर्थः। देवानां जयकाराः जय जयेत्यादिकाः स्तुतयः। हास्येन, कटाक्षेण नेत्रप्रगान्तावलोकनेन च सम्पुटिता न भवन्तीत्यर्थः। पुत्रकेति सम्बोधनेन प्रणयभाजनत्वं लक्ष्यते। तेन ''त्वयि मम भूयान्स्नेहः, अत एव रहस्यवेदिन्यां मयि सूर्यप्रणामादि कपटमपहाय सत्यं वद, कस्यामनुरक्तोऽसि, अहं ते कार्यं साधयिष्यामि, न पुनस्तवापवादं प्रचारयिष्यामि'' इति नायकं प्रति विश्वासोत्पादनमभिव्यज्यते।

निजदयितरतासक्तां नायिकां चौर्यसुरतप्रशंसया उत्कण्ठयितुं दूती काचिदाह-

**मुखविध्मापितदीपं रुद्धश्वासं सशङ्कितोल्लापम्।**
**शपथशतरक्षितोष्ठं सुखयति किल चोरिकारमितम्।।३३।।**[२]

---

१. **सूरच्छलेण पुत्तअ कस्स तुमं अञ्जलिं पणामेसि।**
**हासकडक्खुम्मिस्सा ण होन्ति देवाणँ जेक्कारा।।३२।।**
[सूर्यच्छलेन पुत्रक कस्मै त्वमञ्जलिं प्रणामयसि।
हास्यकटाक्षोन्मिश्रा न भवन्ति देवानां जयकाराः।।]

२. **मुहविज्झविअपईवं णिरुद्धसासं ससङ्किओल्लावम्।**
**सवहसअरक्खिओट्ठं चोरिअरमिअं सुहावेइ।।३३।।**
[मुखविध्मापितप्रदीपं निरुद्धश्वासं सशङ्कितोल्लापम्।
शपथशतरक्षितोष्ठं चोरिकारमितं सुखयति।।]

हस्तादिवायुना शब्दो विलम्बश्च स्यादिति मुखेन मुखवातेन विध्मापितो निर्वापितः प्रदीपो यत्र तत्। मा कश्चन श्रौषीदिति निरुद्धः श्वासो यत्र, शङ्कितेन शङ्कया सह उल्लापः संलापश्च यत्र तत्। अधरदशंनेन गृहजनो मा ज्ञासीदिति शपथशतेन शपथशतं कारयित्वा रक्षितो दंशानाद् गोपितः ओष्ठोऽधरो यत्र तत्। चोरिकया चौर्येण रमितं रमणम्। तथा चैतादृशं सुखं स्वानुभवेनैव त्वं ज्ञास्यसीति दूतीकृतमुत्कण्ठासम्वर्द्धनमभिव्यज्यते।

गानव्याजेन त्वं कञ्चन प्रणयिनं सोत्कण्ठामनुध्याय रोदिषीति अहं जाने इति नायिकायाः स्वस्मिन्विश्वासमास्थापयन्ती दूती नायिकामाह-

**गेयच्छलेन कस्य स्मृत्वा रोदिषि सुनिर्भरोत्कण्ठम्।**
**मन्युनिरुद्धगलार्द्धान्निर्यत्स्खलिताक्षरोल्लापम्।।३४।।**[१]

गेयच्छलेन गानव्याजेन। कस्य स्मृत्वा कं स्मृत्वा, कर्मणः शेषत्वविवक्षया षष्ठी। सुनिर्भरा उत्कण्ठा यस्मिन्कर्मणि यथा भवति तथा। मन्युना शोकेन रुद्धो यो गलः कण्ठस्तस्मात् अर्द्धम् उन्निर्यन् निःसरन्, अतएव स्खलिताक्षरः स्खलितान्यक्षराणि यस्मिन्नीदृश उल्लापो वाक्यविन्यासो यस्मिन् कर्मणि यथा भवति तथा। त्वं रोदिषीति स्वरहस्यं मह्यमावेदयेत्यर्थः। मन्युरुद्धकण्ठं स्खलिताक्षरमिति क्रियाविशेषणाभ्यां हृदये भावानां भृशमावेशोऽभिव्यज्यते। तेन त्वं कञ्चित्स्मृत्वैवोत्कण्ठया रोदिषि न पुनर्गानमेवं भवतीति विदितं मया। तन्मयि विश्वस्य रहस्यं प्रकाश्यतां येनाहमेवं खेदमनुभवन्त्यास्ते साहाय्यं सम्पादयामीति दूत्या नायिकां प्रत्यभिव्यज्यते।

स्वयंदूती प्रतिवेशिनमुपपतिं प्रति सङ्केतसमयं सूचयितुमाह-

**बहलतमा हतरात्रिः पतिरद्य प्रोषितो गृहं शून्यम्।**
**प्रतिवेशिन्नयि जागृहि तथा; विमुष्यामहे न यथा।।३५।।**[२]

---

१. **गेअच्छलेण भरिउं कस्स तुमं रुअसि णिब्भरुक्कण्ठम्।**
**मण्णुपडिरुद्धकण्ठद्धणिन्तखलिअक्खरुल्लावम्।।३४।।**
[गेयच्छलेन स्मृत्वा कस्य त्वं रोदिषि निर्भरोत्कण्ठम्।
मन्युप्रतिरुद्धकण्ठार्धनिर्यत्स्खलिताक्षरोल्लापम्।।]

२. **बहलतमा हअराई अज्ज पउत्थो पई घरं सुण्णम्।**
**तह जग्गेसु सअज्जिअ ण जहा अम्हे मुसिज्जामो।।३५।।**
[बहलतमा हतरात्रिरद्य प्रोषितः पतिर्गृहं शून्यम्।
तथा जागृहि प्रतिवेशिन्न यथा वयं मुष्यामहे।।]

बहलं निबिडं तमः अन्धकारो यस्याम्। अनेन अन्धकारवशान्नागच्छन्तं कोऽपि विलोकयिष्यतीति द्योत्यते। अद्यैव प्रोषित इत्यनेन अद्यैव प्रवासं गतस्य तस्यागमनशङ्का नास्तीति विश्रब्धत्वं व्यज्यते। गृहं शून्यमित्यनेन, अन्यजनशङ्कारहितेऽस्मिन्नेव गृहे आगम्यतां नान्यदिवसवत् भवद्गृह इति सङ्केतो ध्वन्यते। तथा जागृहि यथा न विमुष्यामहे इत्यनेन त्वं सन्नद्धो भूत्वा इममवसरं प्रतिपालय, अन्यथा भाग्यवशादुपलब्धस्याऽस्याऽवसरस्यावधीरणे वञ्चिता एव वयमिति सतर्कीकरणमभिव्यज्यते। एवंविधवाक्चातुर्येण नायिकायाः प्रौढिः प्रागल्भ्यं च ध्वन्यते।

पूर्ववयसि आत्मनाऽनुभूतं दुःखमनुसन्धाय गृहिणीपदप्राप्तौ स्नुषादिष्वपि सदयमेव व्यवहरन्ति कुटुम्बिन्य इत्यात्मनो व्यवहारपाटवमभिव्यञ्जयन्नागरिकः सहचरमाह–

**सञ्जीवनौषधीमिव सुतस्य रक्षत्यनन्यकर्मैव।**

**श्वश्रूर्नवाभ्रदर्शनकण्ठागतजीवितां स्नुषामेताम्॥३६॥**[1]

श्वश्रूः नवाभ्राणां नवीनमेघानां दर्शनेन कण्ठागतजीवितामेतां स्नुषाम्। सुतस्य निजपुत्रस्य पुनरुज्जीवनमहौषधिमिव अनन्यकर्मैव त्यक्तान्यव्यापारैव सती रक्षति। विरहवेदनया संस्थितायामस्यां मम पुत्रोऽपि न भवेदित्याशङ्कया तां सतर्कमुपचरतीत्यर्थः। सुतस्य सञ्जीवनौषधिमिवेत्यनेन पुत्रोऽस्यामेकान्ततो बद्धप्रणय इति अनुभवमार्मिकत्वं श्वश्र्वा द्योत्यते। नवाभ्रेत्यनेन पूर्वमननुभूतस्य सहसैव सजलजलदावलोकनसमुद्दीपितस्य विरहस्य दुःसहत्वं ध्वन्यते। अनन्यकर्मैवेत्यनेन सर्वस्मिन्नेव काले स्नुषायाश्चिन्तासन्तापस्ततो विरहदुःखस्यातिशयः सूच्यते। पुत्रप्रेमवशात् सावधानं विहितेन श्वश्रूकृतोपचारेण निजवल्लभालम्बनाया नायिकानिष्ठरतेरतिशयः, पर्यन्ततो ध्वन्यत इति सुधीभिरनुसन्धेयम्। "प्रोषितभर्तृकायाः सखी तत्कान्तस्यागमनत्वरार्थं तत्समीपगामिनं पथिकमाह" इति गङ्गाधरावतरणम्।

केवलं वल्लभायैवोक्तं सुगुप्तं निजमनोऽभिलाषं सपत्न्या मुखादाकर्ण्य रहस्यभङ्गात्कोपमुपगता नायिका प्रियतममुपालभमाना सवैदग्ध्यमाह–

---

१. **संजीवणोसहिम्मिव सुअस्स रक्खइ अणण्णवावारा।**
**सासू णवब्भदंसणकण्ठागअजीविअं सोह्णम्॥३६॥**
[सञ्जीवनौषधिमिव सुतस्य रक्षत्यनन्यव्यापारा।
श्वश्रूर्नवाभ्रदर्शनकण्ठागतजीवितां स्नुषाम्॥]

**निवससि हृदयनिहितया हृदयेऽस्माकं स्वजायया साकम्।**

**कथमन्यथा तया मे मनोरथाः सुभग विज्ञाताः।।३७।।**[१]

हे सुभग हृदयनिहितया स्वजायया सह अस्माकं हृदये निवसति। अन्यथा एतदभावे तया मे मनोरथाः कथं विज्ञाताः ? मनोगतपरिज्ञानरूपस्य हेतोर्विन्यासात्काव्यलिङ्गम्। तेन च अहर्निशं त्वामेव हृदयेऽनुचिन्तयाम्यहम्, परं त्वं मां विहाय तस्यां सपत्न्यामनुरक्तः। अत एव गोपनीयमपि रहस्यं तस्याः प्रकाशयसीति गूढोपालम्भो ध्वन्यते। स्वजायेत्यनेन 'सैव ते साम्प्रतं पत्नी यस्यास्त्वं मद्विश्रम्भजल्पितमपि प्रकाशयसि। अहं तु स्त्रीसामान्यमिति'र्ष्याऽभिव्यज्यते। सुभगेत्यनेनापि ''अहमन्यस्यामनुरक्तस्तथापीयं मामेवानुध्यायतीत्यात्मनः सौभाग्येनैवावलिप्तोऽसि'' इति गूढमुपालम्भो द्योत्यते। 'खण्डिता प्रातरागतं नखदन्तक्षताङ्कितं कान्तं सेर्ष्यमाहेति'' गङ्गधरावतरणम्।

नायिकायाः प्रणयातिशयं प्रकाशयन्तीं दूती नायकमाह–

**अयि सुभग त्वयि गतवति तन्नयनाभ्यां नु कर्णलग्नाभ्याम्।**

**दत्तं स्फुरदस्राभ्यां पानीयं हन्त दर्शनसुखेभ्यः।।३८।।**[२]

त्वयि गतवति दर्शनपथमतिक्रम्य अदृश्यमाने सति त्वद्दर्शनकौतुकात् विकसिताभ्यामत एव कर्णपर्यन्तविस्तृताभ्यां स्फुरत् प्रसरत् अस्रम् अश्रु ययोः सकाशादेतादृशाभ्यां तस्याः (नायिकायाः) नयनाभ्यां कर्तृभ्यां दर्शनसुखेभ्यः पानीयं दत्तम्, न पुनरेवंविधानि दर्शनसुखानि स्युरिति तेभ्यो विसर्जनजो जलाञ्जलिर्दत्त इत्यर्थः। सुखेभ्यः पानीयं दत्तमिति छेकोक्तिः। 'छेकोक्तिर्यदि लोकोक्तिः स्यादर्थान्तरगर्भिता'। त्वदागमनविरहदुःखान्न तया रुदितं किन्तु स सुखेभ्यो जलाञ्जलिर्दत्त इत्यपह्नुतिर्व्यज्यते। किं वा 'न पुनरेवंविधस्य दर्शनसुखस्याशेति तस्मै

---

१. **णूणं हिअअणिहित्ताइ वससि जाआइ अम्ह हिअअम्मि।**
**अण्णह मणोरहा मे सुहअ कहं तीअ विण्णाआ।।३७।।**
[नूनं हृदयनिहितया वससि जाययास्माकं हृदये।
अन्यथा मनोरथा मे सुभग कथं तया विज्ञाताः।।]

२. **तइ सुहअ अईसन्ते तिस्सा अच्छीहिँ कण्णलग्गेहिं।**
**दिण्णं घोलिरवाहेहिँ पाणिअं दंसणसुहाणम्।।३८।।**
[त्वयि सुभग अदृश्यमाने तस्या अक्षिभ्यां कर्णलग्नाभ्याम्।
दत्तं धूर्णनशीलवाष्पाभ्यां पानीयं दर्शनसुखेभ्यः।।]

जलाञ्जलिरिव प्रत्तः' इत्युत्प्रेक्षा। अन्ततस्तु त्वद्दर्शनसुखस्याग्रे सा न किञ्चित्सुखं गणयति इति सुखेभ्य इति बहुवचनसहकारेण नायिकानिष्ठोऽनुरागातिशयो ध्वन्यते। सुभगेत्यामन्त्रणेन 'पश्य ते सौभाग्यं यत्सा त्वय्येवं दृढानुरागा' इति नायकप्रोत्साहनं ध्वन्यते। नयनयोः कर्णलग्रतायां तु– ''श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोरित्यनुसारं गुणश्रवणेनैव पूर्वं नायिकाया नायकेऽनुरागोऽभवत्। ततश्च रूपगुणकीर्तिं श्रावयद्भ्यां कर्णाभ्यामेव स्वल्पसमागमसुखोत्तरं सेयं विरहवेदना दत्तेति, उपालम्भदानार्थमिव नयनयोर्गमनम्'' इति 'नु' पदोत्प्रेक्षितं तात्पर्यं ध्वन्यते।

काचित्प्रोषितभर्तृका प्रियतमं प्रति सन्देशं प्रहिण्वती आह–

**ध्यानागतभवदाननदर्शनविनिरुद्धजीवितैषणया।**
**दुःखितया हि मया किल कालो नेयः कियन्मात्रः।।३९।।**[१]

ध्यानेन भावनया आगतं यत् त्वन्मुखं तस्य दर्शनेन विनिरुद्धा स्थापिता जीवितैषणा जीविताशा यया एतादृश्या दुःखाकुलया मया कियत्परिमाणः कालो यापनीयः। अहं तवानुध्यानादेव जीवामि नान्यन्मेऽवलम्बनमित्यात्मनोऽनुरागो ध्वन्यते। जीविताशयेत्यनेन विरहदुःखान्मम जीवने निर्वेद एव जातः परं भावनया आगतं त्वन्मुखं दृष्ट्वा तत्सुखमनुभूय ''भावनयैव एतावत्सुखम्, प्रत्यक्षदर्शनं तु न जाने कियन्मात्रं स्यादिति त्वद्दर्शनप्रत्याशयैव मे जीवितस्थितिरिति'' प्रियतमं प्रति सूच्यते। कियन्मात्रो नेतव्य इत्यनेन नाधिककालमेवं जीवेयमिति आगमनत्वरार्थं सूचयति। 'निरुद्ध' पदेन 'जीविताशा तु दुःखनिर्विण्णा वेगेन गच्छन्त्यासीत्, परं बलपूर्वकं त्वन्मुखध्यानेन सा वारिता' इति विरहातिशयो ध्वन्यते।

पूर्व रूपयौवनसम्पन्नामपि बहूपभोगेन सम्प्रति विगतरूपयौवनां काञ्चन कुलटामालोक्य कुट्टन्याह–

**कं नहि दुनोषि विगतानालक्षितरूपयौवना पुत्रि।**
**दृष्टा नष्टपुरातनजनपदपटला हि जन्मभूमिरिव।।४०।।**[२]

---

१. **उप्पेक्खागअतुअमुहदंसणपडिरुद्धजीविआसाइ।**
**दुहिआइ मए कालो कित्तिअमेत्तो व्व णेअव्वो।।३९।।**
[उत्प्रेक्षागतत्वन्मुखदर्शनप्रतिरुद्धजीविताशया।
दुःखितया मया कालः कियन्मात्रो वा नेतव्यः।।]

२. **वोलीणालक्खिअरूअजोव्वणा पुत्ति कं ण दुम्मेसि।**
**दिट्ठा पणट्ठपोराणजणवआ जम्भूमि व्व।।४०।।**
[व्यतिक्रान्तालक्षितरूपयौवना पुत्रि कं न दुनोषि।
दृष्टा प्रणष्टपौराणजनपदा जन्मभूमिरिव।।]

हे पुत्रि! विगतं व्यतिक्रान्तमत एव अनालक्षितम् अवीक्षितं रूपं यौवनं च यस्या एतादृशी त्वम्। नष्टं पुरातनं जनपदपटलं जनसमूहो यस्याः सा। बहोः कालाद् दृष्टा जन्मभूमिरिव त्वं कं वा न दुनोषि परितापयसि। गलितपूर्वरूपयौवनां त्वामालोक्य विनष्टजनसमूहाया आत्मनो निवासभूमेरालोकनेन यथा दुःखं भवति तथा सर्वस्याप्यालोकयितुर्भवतीत्याशयः। अनालक्षित-मित्याङ्उपसर्गेण समन्तादपि तवाङ्गे रूपयौवनचिह्नं नास्ति, एवंविधस्ते भोगोपमर्द इति द्योत्यते। जनपद-जन्मभूमिपदाभ्यां बहव एव जनाः पूर्वकाले त्वद्यौवनमुपभुक्तवन्तस्ते साम्प्रतं त्वामेवं-विधामालोक्य दूयन्त इति व्यज्यते। पुत्रीत्यनेन त्वयि मम निष्कपटवात्सल्यमिति विश्वसनीयत्वं द्योत्यते।

इमौ द्वावपि परस्परमनुरक्तावित्यात्मनो गूढेङ्गितपरिज्ञानपाटवमभिव्यञ्जयन्नागरिकः सहचरमाह-

**परितोषविकसिताभ्यां जनमध्ये तेन भणितमक्षिभ्याम्।**

**तदभिमतं प्रतिपन्नं तयाऽङ्गकैरुद्गमत्स्वेदैः।।४१।।**[१]

तेन नायकेन। परितोषेण अनुरागजनितेन हर्षेण विकसिताभ्याम्। अक्षिभ्यां (करणम्) जनमध्ये अभिमतं भणितम्। नायिकाया उद्गमत्स्वेदैः निष्पतद्घर्मजलैरङ्गैः तस्याभिमतं वाञ्छितं प्रतिपन्नं स्वीकृतम्। नयनविकासेन औत्सुक्यं द्योत्यते। तथा च त्वया मे मानसं वशीकृतमिति नायकेन नेत्रद्वारैवात्मनोऽभिमतं प्रकाशितम्। अङ्गेषु स्वेदरूपस्य सात्विकभावस्योदयात्, तयापि तं प्रत्यात्मनोऽनुरागं प्रकाश्य नायकस्याभिमतमङ्गीकृतमिति गूढमप्यनयोरनुरागमहं विदितवानिति नागरिकेण सूच्यते। निष्पतदिति स्थाने उद्गमदिति कथनेन स्वेदाधिक्यं लक्ष्यते, तथा च सात्विकभावप्रकर्षेण रत्यतिशयो ध्वन्यते। अक्षिभ्यां भणितमिति अर्थान्तरसङ्क्रमितवाच्यम्। तेन च, स्पष्टमात्माभिप्रायः प्रकाशित इति निवेदनेऽतिशयो व्यज्यते। ''वयस्यस्याभिमतं सम्पत्स्यत इति नायकसहचरेण पृष्टा दूती तमाह'' इति गङ्गाधरावतरणम्।

परस्परमाबद्धानुरागावपि समुचितावसराप्राप्त्या समागमसौख्यं नानुभवितुं शक्नुत इति कयोश्चिदवस्थां सूचयन्नागरिकः सहचरमाह-

---

१. **परिओसविअसिएहिं भणिअं अच्छीहिँ तेण जणमज्झे।**
**पडिवण्णं तीअ वि उव्वमन्तसेएहिँ अङ्गेहिं।।४१।।**
[परितोषविकसिताभ्यां भणितमक्षिभ्यां तेन जनमध्ये।
प्रतिपन्नं तयाप्युद्गमत्स्वेदैरङ्गैः।।]

**अन्योऽन्यं सन्देशानुरागसंवर्द्धमानकुतुकानि।**
**दुःखं ह्यसमाप्तमनोरथानि तिष्ठन्ति मिथुनानि।।४२।।**[१]

परस्परं यः सन्देशो दूतीद्वारानुरागावेदनम्, तेन (सञ्जनितः) योऽनुरागस्तेन वर्धमानं कौतूहलं समागमौत्सुक्यं येषां तानि। न समाप्तो मनोरथः समागमाभिलाषो येषां तानि। मिथुनानि युगलानि दुःखं यथा स्यात्तथा तिष्ठन्तीत्यर्थः। परस्परदर्शनं विना दूतीद्वारा सन्देशप्रेषणेन दर्शनेऽपि कौतुकं द्योत्यते, तेनोत्कण्ठातिशयो व्यज्यते। असमाप्तमनोरथानीत्यनेन यावदभिलषितपूर्तिर्न जायते तावदुत्कण्ठाधिक्यमिति नागरिकः स्वमार्मिकत्वं सूचयति। मिथुनं तिष्ठतीत्येव वक्तव्येऽपि बहुत्वं प्राकृतानुरोधेन।

प्रियतमं प्रति सञ्जनितमात्मानुरागं गोपयन्तीं नायिकां सखी सदैवदग्ध्यमाह–

**वल्लभ एव स न हि यदि गोत्रग्रहणेन तस्य सखि किमिति।**
**भवति मुखं तव रविकरसम्भेदोद्भिन्नमिव नलिनम्।।४३।।**[२]

तस्य गोत्रग्रहणेन नामग्रहणेन। 'गोत्रं तु नाम्नि च' इत्यमरः। रविकराणां सम्भेदेन स्पर्शेन उद्भिन्नं विकसितं कमलमिव तव मुखं किमिति भवतीति सम्बन्धः। रविकरयोगविकसितस्य कमलस्य साम्येन स्वभावसुन्दरस्यापि पद्मस्य रविकरान् विना यथा न विकासलक्ष्मीस्तथा तवापि सहजमनोहरमपि मुखं तस्य नामश्रवणेनैव लज्जानुरागजनितमपूर्वमुल्लासमनुभवतीति सूच्यते। तथा च नामश्रवणमात्रेण तवेदृशमौत्सुक्यं किं पुनर्दर्शनादिषु सत्सु, एवं च तवानुरागमभिजानत्यां मयि नैतद् गोपनीयमिति सख्याभिव्यज्यते।

---

१. **एक्कक्कमसंदेसाणुराअवड्ढन्ताकोउहल्लाइं।**
**दुःखं असमत्तमणोरहाइँ अच्छन्ति मिहुणाइं।।४२।।**
[अन्योन्यसन्देशानुरागवर्धमानकौतूहलानि।
दुःखमसमाप्तमनोरथानि तिष्ठन्ति मिथुनानि।।]

२. **जइ सो ण वल्लहो व्विअ गोत्तग्गहणेण तस्स सहि कीस।**
**होइ मुहं ते रविअरफंसव्विसदं व तामरसम्।।४३।।**
[यदि स न वल्लभ एव गोत्रग्रहणेन तस्य सखि किमिति।
भवति मुखं तव रविकरस्पर्शविकसितमिव तामरसम्।।]

गाढं गृहीतमानापि कथङ्कारमनुनीता दयितेन भवतीति रहस्याभिज्ञया मातुलान्या पृष्टा काचिदाह–

**मानतरुपरुषमरुतो मातुलि सर्वाङ्गनिर्वृतिकरस्य।**

**अवगूहनस्य भद्रं रतिनाटकपूर्वरङ्गस्य।।४४।।**[१]

मानद्रुमार्थं परुषपवनस्थानीयस्य। मानजनितवियोगकाले उपतप्तानां सर्वाङ्गाणाम-निर्वचनीयसुखकारकस्य। सुरतरूपनाटके पूर्वरङ्गभूतस्य, अवगूहनस्यालिङ्गनस्य भद्रम्। भवत्विति शेषः। पूर्वरङ्गरूपणेन नाट्यविघ्नशान्तये यथा पूर्वरङ्गे नान्दीपाठाद्युपायः क्रियते येन नाट्यं निर्विघ्नमानन्दप्रसु भवेत्तथात्रापि निष्कण्टकं निधुवनसिद्धये पूर्वं मानादिविघ्नविध्वं-सकमवगूहनं क्रियत इति सूच्यते। पूर्वरङ्गविषये उक्तं दर्पणे– ''यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोप-शान्तये। कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते।।'' एतत्प्रसङ्गे भावप्रकाशिकापि मनोहरमाह– ''सभापतिः सभासभ्या गायका वादका अपि। नटीनटाश्च मोदन्ते यत्रान्योऽन्यानुरञ्जनात्।। अतो रङ्ग इति ज्ञेयः पूर्वं यत्स प्रकल्पते। तस्मादयं पूर्वरङ्ग इति विद्वद्भिरुच्यते।।'' तीव्रपवनेन महतोऽपि वृक्षस्य भङ्गो यथा भवत, तथा आलिङ्गनेन दृढोऽपि मे मानो भग्न इति भावः।

कस्मिन्नपि युवके जातानुरागा काचित्तस्मिन् शृण्वन्ति सति हृदयामन्त्रणच्छलेनात्मनः-समागमोत्कण्ठामेवमाह–

**विरमाधुना हृदय हे नूनं निजकानुमाननिःशङ्क।**

**अविदितपरमार्थजनानुलग्न लघयसि किमित्यस्मान्।।४५।।**[२]

मम यथा विरहदुःखं तथान्यस्यापि स्यादिति निजानुमानेन मनोरथभङ्गशङ्कारहित हे हृदय। अतएव (निःशङ्कतया) न विदितः परमार्थः अन्यदीयविरहवेदनारूपं रहस्यं येन ईदृशे

---

१. **माणदुमपरुसपवणस्स मामि सव्वङ्गणिव्वुइअरस्स।**

**अवऊहणस्स भद्दं रइणाडअपुव्वरङ्गस्स।।४४।।**

[मानद्रुमपरुषपवनस्य मातुलानि सर्वाङ्गनिर्वृतिकरस्य।

अवगूहनस्य भद्रं रतिनाटकपूर्वरङ्गस्य।।]

२. **णिअआणुमाणीसङ्क हिअअ दे विरम एत्ताहे।**

**अमुणिअपरमत्थजणाणुलग्ग कीस म्ह लहुएसि।।४५।।**

[निजकानुमाननिःशङ्क हृदय हे प्रसीद विरमेदानीम्।

अज्ञातपरमार्थजनानुलग्न किमित्यस्मांल्लघयसि।।]

जने अनुलग्न ! भृशमासक्त ! (हृदय) अस्थाने प्रार्थनारूपेण कार्येण अस्मान् किमिति लघूकरोषि। विरामाधुनास्मात्कर्मण इत्यर्थः। निजकानुमानेत्यादिविशेषणेन अहं त्वयि बद्धदृढानुरागा समागमार्थं भृशमुत्कण्ठितेति व्यज्यते। (यथाहमुत्कण्ठिता तथान्योऽपि स्यादिति सम्बोधनेन सूचनात्)। अस्मान् लघयसीत्युक्त्या न वयमेवंविधा लघवो यदस्माकं प्रार्थना उपेक्षणीया भवेदिति सूचनेन स्वस्यासुलभत्वं ध्वनयति। विरमेत्यनेन अहं पूर्वानुरागस्य चरमसीमामुपगतास्मि, न मे इतोऽग्रे कश्चन वश इति द्योत्यते। तथा च सामान्यतोऽसुलभाप्यहं त्वसौभाग्येन भवन्तं कामयमानास्मि, त्वं च न मेऽनुरागं यथावद्वेत्सीति नायिकयाभिव्यज्यते।

समीपस्थितमुपपतिं श्रावयितुं नायिकायाः सौन्दर्यप्रशंसां काचित्सखी तां प्रत्यवमवतारयति–

**हसितः प्रशंसता सखि चिरमावसथिकजनः पत्या।**

**विधुरिति तव किल वदने वितीर्णकुसुमाञ्जलिविलक्षः।।४६।।**[१]

हे सखि! 'अहो पश्य ते रूपमहिमानमिति' प्रशंसता श्लाघमानेन पत्या। विधुः चन्द्रोयमिति बुध्या तव वदने वितीर्णः कुसुमाञ्जलिर्येन, अतएव विलक्षो लज्जितः, आवसथिकजनः– चन्द्रार्घदानादिव्रतनियमस्थो जनश्चिरं हसितः। अथवा अहो एषां वस्तुपरिचयपाटवमिति आवसथिकजनं साकूतं प्रशंसता पत्या विलक्ष आवसथिकजनो हसित इत्यर्थः। दयितादिपदमनादृत्य पत्या इत्युक्त्या सम्बन्धानुरोधेन पतिमात्रं सोऽस्या न वल्लभ इति जारं प्रति सुसाध्यत्वमस्या ध्वन्यते। तथा चैवमसामान्यलावण्यशालिनीमिमां कामयमानस्याहो ते सौभाग्यमिति शृण्वन्तमुपपतिं प्रति प्ररोचनमभिव्यज्यते। 'जारव्यामोहनाय दूती नायिकायाः सौन्दर्यातिायं ख्यापयितुमाह' इति गङ्गाधरः।

तव दुर्बलतामालोक्य तत्कारणं पृच्छन्तीभ्यः सखीभ्यः किं त्वया प्रत्युत्तरं दीयत इति शठनायकेनोक्ता नायिका तमाह–

---

१. **ओसहिअजणो पइण सलाहमाणेण अइचिरं हसिओ।**
**चन्दो त्ति तुज्झ वअणे विइण्णकुसुमञ्जलिविलक्खो।।४६।।**
[आवसथिकजनः पत्या श्लाघमानेनातिचिरं हसितः।
चन्द्र इति तव वदने वितीर्णकुसुमाञ्जलिविलक्षः।।]

**भवति प्रत्यक्षेऽपि प्रतिदिनमङ्गैर्नु हीयमानैर्हि।**

**बालक नो जानीमः कस्य भणामोऽत्र पृच्छ्यमानाः किम्।।४७।।**[1]

हे बालक! भवति त्वयि प्रत्यक्षेऽपि सन्निहितेऽपि, प्रतिदिनं क्षीयमाणैरङ्गैरुपलक्षिताः अत एव किमिति दुर्बलासीति जनैः पृच्छयमाना वयमत्र कस्य किं भणाम इति न जानीमः। पूर्वं तव विदेशगमनं दुर्बलतायां कारणमासीत्, इदानीं त्वयि सन्निहितेऽपि, सपत्नीजनरमणादिभिस्तव दुश्चेष्टितैः सञ्जातायाः कृशतायास्तद्विश्वासमकुर्वतीभ्यः सखीभ्यः किं कारणं वक्तव्यमित्यहं न जाने इति भावः। बालकेति सम्बोधनेन 'अहो त्वमुन्मुग्धः शिशुरसि यत्प्रत्यक्षव्यलीकानि कुर्वन्नपि तानि न जानासि' इति विपरीतलक्षणया आक्षेपो ध्वन्यते। तथा च तवैव व्यलीकशतैः खिन्नामपि मां त्वमेव किं प्रत्युत्तरं जिज्ञाससे, अहो ते धौर्त्यमिति नायकं प्रत्याशयोऽभिव्यज्यते। प्राकृते वचनस्यानियमात् 'पुच्छिज्जन्ती' (पृच्छयमाना) इत्येकवचनेन सह जानीमो भणाम इति बहुवचनस्य सम्बन्धे न विरोध इति ज्ञेयम्। 'बालक उचितानभिज्ञ' इति गङ्गाधरटीका।

पूर्वमनुरागप्रदर्शनेन कृतशीलखण्डनं ततो मन्दादरं नायकं नायिकायाः प्रणयातिशयं प्रदर्श्य तदनुकूलं कर्तुं दूती सवैदग्ध्योपालम्भमेवमाह–

**अङ्गानां तनुकारक शिक्षक किल दीर्घरोदितव्यानान्।**

**विनयातिक्रमकारक मा मैनां प्रस्मरिष्यसि हि।।४८।।**[2]

तन्विति भावप्रधानो निर्देशः। अङ्गानां तनुताकारकेत्यर्थः। विनयस्य गुरुजनानामाज्ञापालनस्य अतिक्रमम् उल्लङ्घनं कारयति तच्छीलस्तत्सम्बुद्धौ। एनां पुनर्मा मा स्मरिष्यसि। सा

---

१. **छिज्जन्तेहिँ अणुदिणं पच्चक्खम्मि वि तुमम्मि अङ्गेहिं।**
**बालअ पुच्छिज्जन्तीं ण आणिमो कस्स किं भणिमो।।४७।।**
[क्षीयमाणैरनुदिनं प्रत्यक्षेऽपि त्वय्यङ्गैः।
बालक पृच्छयमाना न जानीमः कस्य किं भणामः।।]

२. **अङ्गाणं तणुआरअ सिक्खावअ दीहरोइअव्वाणम्।**
**विणआइक्कमआरअ मा मा णं पम्हसिज्जासु।।४८।।**
[अङ्गानां तनुकारक शिक्षक दीर्घरोदितव्यानाम्।
विनयातिक्रमकारक मा मा एनां प्रस्मरिष्यसि।।]

किल तव विरहे अङ्गानि क्षपयति, दीर्घ रोदिति, गुरुणामाज्ञामपि त्वत्कृते न किञ्चिदगणयति, एवंविधामनुरागशालिनीं मा स्मरिष्यसि– मा भूयः स्मर। विपरीतलक्षणया त्वदेकावलम्बनां तां शीघ्रमेव जीवयेति दूत्याभिव्यज्यते।'विनयस्य शीलस्यातिक्रमः खण्डनं तत्कारकेति'' गङ्गाधरः। त्वदनुरागपरायणया तया त्वत्कृते इयन्ति दुःखानि सोढानि, त्वं तु स्मरणमात्रमपि न करोषीत्य-पालम्भः। तथा च यदि किञ्चिन्मात्रमपि तत्प्रणयानुरोधस्तर्हि तामनुसर सत्वरमिति दूत्या द्योत्यते।

प्रवासोन्मुखं नायकं प्रवासान्निवारयितुं शृण्वति तस्मिन्काचित्सखीमाह–

**अयि शक्यतेऽन्यथा नो प्रियस्य परिवर्द्धमानगुरु कामम्।**
**मरणविनोदेन विना विरमयितुं बत विरहदुःखम्।।४९।।**[१]

अयि सखि कामं यथेच्छं परिवर्द्धमानं शनैः शनैर्वृद्धिं गतमत एव गुरु महत्, दुःस-हमिति यावत्। प्रियस्य विरहदुःखम्। मरणविनोदेन विना निजप्राणत्यागं विना अन्यथा अन्येन प्रकारेण विरमयितुं दूरीकर्तुं बत न शक्यत एवेत्यर्थः। विनोदपदेन विरहवेदनाया अग्रे मरणमपि विनोदरूपमेव, येन तत्तादृशघोरदुःखनिवृत्तिर्भवतीति विरहदुःखस्य दुःसहत्वमभिव्यज्यते। तथाच– तव प्रस्थाने विरहदुःखं मया न शक्येत सोढुम्, मरणं विना च तदुपशमस्य नास्त्युपायः, अत एव शनैः शनैरुपचितं तन्मम जीवनमेव समापयेदतस्त्वमेव विदेशगमनौचित्यं विचारयेति नायकं प्रत्यभिव्यज्यते।

अन्यासक्तं नायकं सवैदग्ध्यमुपालभमाना काचिदाह–

**असतीपुरतोऽस्माभिस्तव सुगुणान् भूरि वर्णयन्तीभिः।**
**स्वयमेव बालक कृतोऽसि दुर्लभः कस्य कुप्यामः।।५०।।**[२]

असतीनामग्रतः। त्वद्गुणवर्णनेनानुरक्तास्त्वां कामयन्ते ताः। त्वं च पूर्ववल्लभां विहाय तास्वेवानुरज्यसि, अत एवास्माकं दुर्लभोऽसि संवृत्त इति भावः। असतीपदेन भ्रष्टचारि-

---

१. **अण्णह ण तीरइ च्चिअ परिवड्ढन्तगरुअं पिअअमस्स।**
**मरणविणोएण विना विरमावेउं विरहदुक्खम्।।४९।।**
[अन्यथा न शक्यत एव परिवर्धमानगुरुकं प्रियतमस्य।
मरणविनोदेन विना विरमयितुं विरहदुःखम्।।]

२. **वण्णन्तीहिँ तुह गुणे बहुसो अम्हेहिँ छिञ्छईपुरओ।**
**बालअ सअमेअ कओसि दुल्लहो कस्स कुप्पामो।।५०।।**
[वर्णयन्तीभिस्तव गुणान्बहुशोऽस्माभिरसतीपुरतः।
बालक स्वयमेव कृतोऽसि दुर्लभः कस्मै कुप्यामः।।]

त्रास्वनुरज्यसि, यास्तवानुरागवशात्सततं गुणवर्णनमुखरास्तासु विरज्यसीत्याक्षेपो व्यज्यते। बालकपदेन– 'याः परपरिरम्भपरायणत्वेन प्रसिद्धा असत्यः सन्ति तासां पुरतोऽपि (इमा मद्दयितं वशयेयुरिति परिज्ञानेऽपि) अनुरागप्रवणत्वेन तव गुणरणनिका मया उदारतया विहिता। त्वं च तासां मम चानुरागतारतम्यमविदन्नेव तास्वधिकमनुरज्यसि। अतएव एवमुचितानभिज्ञतया बालकल्पे त्वयि किं कोपेन' इत्युपालम्भो ध्वन्यते। किंपदेन वाच्यं प्रति कोपाभावात् 'क्रुधद्रुहर्ष्यासूयार्थानां यं प्रति कोपः' इति न चतुर्थी, किं तु शेषत्वेन विवक्षया षष्ठी। तया चास्मदनुरागमुपेक्षमाणं त्वां प्रत्येव कोप इति व्यज्यते। कोपं कुर्वत्या अपि 'कस्य कुप्यामः' इति प्रतिषेधादाक्षेपालङ्कारः। 'निषेधाभासमाक्षेपं बुधाः केचन मन्वते' इति कुवलयानन्दः। तेन च नायकं प्रति कोपोऽभिव्यज्यते। छिञ्छई असती। 'काप्यात्मनोऽनुरागं तस्य चान्यासक्तिं सूचयन्ती नायकमाह' इति गङ्गाधरावतरणम्।

प्रियस्यात्मनश्च परस्परानुरागप्रकटनेन निजसौभाग्यमभिव्यञ्जयन्ती काचित्सखीमाह–

**जातः सोऽपि विलक्षो विहस्य मयकापि गाढमुपगूढः।**
**ग्रन्थिं मार्गयमाणः प्रथमापसृतस्य वसनस्य।।५१।।**[१]

विलक्षो लज्जितः। मयका मया। प्रथमेति.– तत् करस्पर्शात्पूर्वमेव अनुरागनिर्भरत्वा-त्स्खलितस्याधोवसनस्य बन्धनग्रन्थिमन्विष्यन्। तस्य लज्जानुरागरमणीयं मुखमालोक्य समुद्भवदुत्कलिकया मया तद्वैलक्ष्यमपनेतुं दयितो गाढमालिङ्गित इत्यर्थः। दर्शनमात्रादेव वसनविगलनेन औत्सुक्यातिशयो ध्वन्यते। तेन च दयितं प्रति एतावान्मेऽनुरागः, सोऽपि च मय्येवमनुरज्यतीति निजसौभाग्यमभिव्यज्यते।

कलहान्तरिताया दूती नायकमनुनयाभिमुखं कर्तुं तद्विरहवैकल्यमाह–

**काण्डर्जुका वराकी त्वयाद्य सा किल कृतापराधेन।**
**दिवसेन शिक्षिता मुहुरलसायितरुदितजृम्भितान्यनिशम्।।५२।।**[२]

---

१. **जाओ सो वि विलक्खो मए वि हसिऊण गाढमुवगूढो।**
**पढमोसरिअस्स णिअंसणस्स गण्ठिं विमग्गन्तो।।५१।।**
[जातः सोऽपि विलक्षो मयापि हसित्वा गाढमुपगूढः।
प्रथमापसृतस्य निवसनस्य ग्रन्थिं विमार्गयमाणः।।]

२. **कण्डुज्जुआ वराई अज्ज तए सा कआवराहेण।**
**अलसाइअरुण्णविअम्भिआइँ दिअहेण सिक्खविआ।।५२।।**
[काण्डर्जुका वराकी अद्य त्वया सा कृतापराधेन।
अलसायितरुदितविजृम्भितानि दिवसेन शिक्षिता।।]

शरकाण्डवत् ॠजुका सरला। कृतः सपत्न्यभिसारादिरपराधो येन, ईदृशेन त्वया। अद्य दिवसेन दिवसमभिव्याप्य मुहुर्वारंवारम्। अनिशं भृशमलसायित- रुदित-जृम्भितानि शिक्षिता। अद्य दिवसमात्रेण त्वया तस्यै रुदितादीनां पूर्णा शिक्षा दत्तेत्यर्थः। काण्डवदित्युक्त्या स्वभावसरलः शरकाण्डो यथा न पुनर्वक्रीकर्तुं शक्येत तथैव निसर्गसरला सेयं सपत्न्यनुरोधरूपं कृत्रिमदाक्षिण्यं दर्शयितुं न समर्था। एवं च नायिकायाः शुद्धानुरागप्रवणत्वं द्योत्यते। दिवसेनेत्य-त्यन्तसंयोगे अपवर्गे तृतयेति तृतीया। अनया च तृतीयया- 'दिवसमात्रेणैवानया विरहजनिताना-मलसायितरुदितादीनां शिक्षायाः फलं प्राप्तम्' इति नायिकाया ग्लानिभावजनितो वेदनातिशयो ध्वन्यते। त्वया शिक्षा दत्तेत्यनेन रोदनादिदुःखं यत्सानुभवति तत्र भवानेव निदानमित्युपालम्भो द्योत्यते। तथा च कृतापराधेन त्वया विहितमनुनयं कोपवशादगृह्णत्याः दिवसं यावदनुभूतविरह-वेदनायास्तस्याः साम्प्रतं ग्लानिवशान्नाधिकं विरहसहनसामर्थ्यमित्ययमेवानुनयावसर इति दूत्याभिव्यज्यते।'कण्णुज्जुआ' इति पाठे कर्णॠजुका कर्णदुर्बलेत्यर्थः। यथानया श्रुतं तथैवानया विश्वस्तमिति स्वभावतः सारल्यमस्या इति भावः। 'कन्या ॠजुका' इत्यर्थः'' इति तु केषाञ्चिदाग्रह एव। 'अन्यासक्तं नायकमनुकूलयितुं दूती नायिकाया विरहवैधुर्यमाह' इति गङ्गाधरावतरणम्।

मन्दादरतया कृतापराधमथ सद्भावशून्येन दाक्षिण्येनानुनयन्तं शठनायकं नायिकाह-

**अपराधैरपि न तथा प्रतीहि मामेभिरभिदुनोषि यथा।**
**अपहस्तितसद्भावैः सुभग सुदाक्षिण्यभणितैस्ते।।५३।।**[१]

(वारं वारं विहितैर्बहुसंख्यकैः) एभिरपराधैरपि मां तथा न दुनोषि, यथा अपहस्तित-सद्भावैः अपहस्तितो हस्ताभ्यामपसारितः सद्भावः स्नेहो यैः, एतादृशैस्ते तव समधिकदाक्षिण्य-भाषितैस्त्वं मां दुनोषि, इति त्वं प्रतीहि विश्वसिहि। आन्तरिकस्नेहशून्येन तवानेन कृत्रिमदाक्षिण्ये-नापराधतोऽप्यधिकं मे दुःखं जायत इति भावः। मत्कृतच्छायायां दाक्षिण्यस्य 'सु' इति विशेषणेन 'अपराधं कृत्वापि कृत्रिमदाक्षिण्येन मां प्रसादयितुमभिलषसि, अहो सुष्ठु ते दाक्षिण्यम्!' इत्याक्षेपोऽभिव्यज्यते। सुभगेति सम्बोधनेन एवमुपेक्षणेऽपि अहं त्वयि किदनुरक्ता, त्वं तु तथापि व्यलीकान्न विरमसीत्यहो ते सौभाग्यमित्युपालम्भगर्भं प्रणयावेदनमभिव्यज्यते।

मनसि शिथिलीभूतमानापि उपरितः कोपमौनेन मानमभिनयन्ती काचिन्मानिनी अनुनयार्थं नायकेन समालिङ्गिता। कोपस्य प्रशमेन, उत्कण्ठायाश्चोदयेन परिरम्भसमये अनुराग-

---

१. **अवराहेहिँ वि ण तहा पत्तिअ जह मं इमेहिँ दुम्मेसि।**
**अवहत्थिअसब्भावेहिँ सुहअ दक्खिणणभणिएहिँ।।५३।।**
[अपराधैरपि न तथा प्रतीहि यथा मामेभिर्दुनोषि।
अपहस्तितसद्भावैः सुभग दाक्षिण्यभणितैः।।]

वशात्स्वत एव तस्या भुजभ्रमणविभ्रमोऽभवत्। अत एव 'भावं प्रकटयद्भ्यमाभ्यामहं विलक्षी-कृतास्मि' इति बाहुलतिकयोरुपरि सवाष्पमभिक्रुध्यन्तीं नायिकां सप्रणयदाक्षिण्यं नायक आह–

**दयितालिङ्गनरभसभ्रमिताभ्यां कुप्य भुजलताभ्यां मा।**

**एतेन ननु मनस्विनि मुखेन तूष्णीकरुदितेन।।५४।।**[१]

हे मनस्विनि मानिनि तूष्णीकं यथा स्यात्तथा रुदितेन सवाष्पेण अनेन मुखेन [उपलक्षिता] त्वम्। दयितस्य अभीष्टस्य आलिङ्गने सरभसं भ्रमः कम्पाद्युद्गमः सञ्जातो ययोः ईदृशीभ्यां भुजलताभ्यां मा कुप्य मा कोपं कार्षीः। भुजलताभ्यामिति 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति चतुर्थी। प्राकृतधातुघटितस्य 'जूर' इत्यस्य विभ्रमेण मृदुक्रोधप्रदर्शनमर्थः, यस्याविकलं हिन्दीभाषा 'खिजना'। स्पर्शे सुखं प्राप्तमिति कारणात् मां प्रियमनुकूलं भावयद्भ्यां भुजाभ्यां विभ्रमभ्रमणं स्वीकृतमिति विवशयोर्नानयोर्भुजलतिकयोर्दोषः, किं तु परिरम्भणापराधी अयं ते जनो दोषीति भुजयोरुपरि मा क्रोधं कार्षीरिति भावः। दोष्णोर्दोषरूपकारणस्याभावेऽपि कोपोदयात्प्रथमा विभावना। 'विभावना विनापि स्यात्कारणं कार्यजन्म चेत्' इति तल्लक्षणे पीयूषवर्षः। आलिङ्गनापराधं कृतवत्यपि वल्लभे कारणसत्तायामपि कोपस्यानुदयाद्विशेषोक्तिः। 'कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे' इति तल्लक्षणम्। प्रशान्तकोपा त्वमिति कम्पविभ्रमेण परिज्ञातवानहं ततश्च माधुना मुधा मानं कार्षीरित्याशयः। त्वं यदि कोपवशान्मां प्रियं न गणयसि तर्हि तथा कुर्वत्यौ भुजलते अपि किं निवारयसीति नायकस्यानुनयचातुर्यमभिव्यज्यते। पर्यन्ततस्तु कोपस्य शान्तिः, उत्कण्ठायाश्चोदय इति भावसन्धिरभिव्यज्यते। 'प्रियाशय जिज्ञासया भ्रमन्तौ भुजौ निर्भर्त्सयन्तीं नायिकां नायक आह' इति गङ्गाधरावतरं तु स्पष्टमस्पष्टार्थम्। नायक आत्मनः कृते प्रियपदं कथं व्यवहरेत्? 'प्रिया' पदं तु न सम्बध्येत, निद्राव्याजगतायास्तस्याः 'प्रिया' आशयजिज्ञासयेति विरुद्धार्थत्वादिति।

कुसुमावचयव्याजेन गोदावरीतटनिकटनिकुञ्जे कामप्यभिसरसीति विदितं मया ते रहस्यमिति कञ्चन विलासिनं सूचयन्ती जरत्कुट्टनी सपरिहासवैदग्ध्यमाह–

---

१. **मा जूर पिआलिङ्गणसरहसभमिरीणँ बाहुलइआणम्।**

**तुह्णिक्कपरुण्णेण अ इमिणा माणंसिणि मुहेण।।५४।।**

[मा क्रुध्यस्व प्रियालिङ्गनसरभसभ्रमणशीलाभ्यां बाहुलतिकाभ्याम्।

तूष्णीकप्ररुदितेन चानेन मनस्विनि मुखेन।। ]

**मा पुष्पलावक व्रज तुष्यन्त्युदकाञ्जलिभिरपि देवाः।**
**पुत्रक गोदावर्याः शीलोन्मूलानि कूलानि।।५५।।**[1]

मा व्रज, गोदावरीकूलमिति यावत्। देवाः केवलेनार्घ्यदानेनापि तुष्यन्ति। गोदावर्याः कूलानि शीलं सच्चरितमुन्मूलयन्ति मूलतः अपनयन्ति एवं भूतानि (उन्मूलयतेः पचाद्यच्) सन्ति। पुत्रकेति सम्बोधनेन 'मया बहुकालमेवंविधानि कौतुकानि दृष्टानीत्यात्मनः प्रागल्भ्यम्, त्वं मे स्नेहपात्रमसीति' सान्त्वनं चाभिव्यज्यते। तथा च– परिज्ञातरहस्यापि नाहं ते विरोधिनी, प्रत्युत स्नेहवशात्सहायैवेति परिहासपूर्वकमभिद्योत्यते। मा व्रजेति वाच्ये निषेधे चमत्कारवि-श्रान्तेस्तात्पर्यस्य चाभावात्सूक्ष्म-पिहितादयो व्यङ्ग्यसम्बन्धरमणीया अलङ्कारा नात्र, किन्तु 'कामं व्रज परमहं ते जाने गोदावरीतीरनिभृतविलासरसिकत्वम्' इति ध्वनिरेव। उदकाञ्जलिभि-स्तुष्यन्तीत्युक्त्या जलार्थमपि गोदावरीगमनसम्भवात्, देवानामर्घ्याञ्जलौ पुष्पाणामावश्यकत्वाच्च गोदावरीगमनवारणे न तात्पर्यम्। ततश्च-देवतार्चनकुसुमा वचयमिषेण यदि त्वं लङ्का गोदावरीनिकुञ्जमभिव्रजसि तर्हि कामं व्रज, परमेवंविधैरेव कौतुकैः शुक्लीकृतकेशेष्व-स्मादृशेषु सोऽयं ते मिषः स्थूल एव। निपुणमभिज्ञातमस्माभिर्यन्मिषपूर्वकं त्वं काञ्चिदभिसरसि। तत्सुखेन साधय समीहितम्। अहं तेऽनुकूलैव। किन्तु न मया सह कैतवलीला ते सफला समुचिता चेति विलासिनं प्रत्यभिव्यज्यते।

तस्यैव विरहे उन्मनायिता त्वमसि, माऽस्मत्तो गोपयेति सखी नायिकामाह–

**वचने वचने प्रचलच्छीर्षं शून्यावधानहुङ्कारम्।**
**सखि ददती निश्वासान्तरेषु किं तापयस्यस्मान्।।५६।।**[2]

---

१. **मा वच्च पुप्फलाविर देवा उअअञ्जलीहिँ तूसन्ति।**
**गोआअरीअ पुत्तअ सीलुम्मूलाइँ कूलाइं।।५५।।**
[मा व्रज पुष्पलवनशील देवा उदकाञ्जलिभिस्तुष्यन्ति।
गोदावर्याः पुत्रक शीलोन्मूलानि कूलानि।।]

२. **वअणे वअणम्मि चलन्तसीससुण्णावहाणहुंकारम्।**
**सहि देन्ती णीसासन्तरेसु कीस म्ह दुम्मेसि।।५६।।**
[वचने वचने चलच्छीर्षशून्यावधानहुङ्कारम्।
सखि ददती निःश्वासान्तरेषु किमित्यस्मान्दुनोषि।।]
सं. गा. १६

हे सखि वचने वचने मम प्रत्येकवचने, निश्वासानाम् अन्तरेषु मध्यावसरेषु, मध्ये मध्ये निश्वासं मुक्त्वेत्यर्थः। प्रचलच्छीषं प्रश्नस्योत्तरप्रदानकाले सम्मतिं सूचयितुं प्रचलत् शीर्षं यस्मिन्नेवं यथा स्यात्तथा। शून्यावधानहुङ्कारं प्रियानुध्यानमग्नतया प्रत्यक्षालम्बनवस्तुनोऽभावात् शून्यं यदवधानं चित्तैकाग्र्यं तन्मध्ये हुङ्कारं 'शृणोमीति' सूचकं हुमिति शब्दं ददती उच्चारयन्ती त्वमस्मान् किमिति दुनोषि। एकाग्रचित्ता त्वमन्यदेव किञ्चिदनुचिन्तयसि, मम वचनोत्तरे तु निरवधानमेव कम्पितशीर्षं हुङ्कारं ददासि। तथा चान्तरङ्गाया अपि मत्तः प्रियप्रणयं गोपयन्ती त्वं मम मनसि दुःखमुत्पादयसीति भावः। मानसिकध्यानमग्नतायां चक्षुरादीनां किञ्चिदालम्बनं विनैव बद्धावधानता प्रायो भवत्यनुरक्तवियुक्तानामिति अन्यमनस्कजनस्वभाववर्णनात्स्वभावोक्तिः। अनया च 'वचनानामुत्तरस्थाने सन्निश्वसितेनानेन ते शून्यावधानहुङ्कारेण ज्ञातोऽस्माभिस्तेऽनुरागः। तत्किमिति मुधा तदपह्नवेनास्मान् प्रतापयसि। वयं त्वत्स्नेहेन त्वत्समानसन्तापाः, तदस्मासु विश्वसिहि' इति वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

कुपितां नायिकां प्रसादयितुं प्रेषिता काचित्प्रौढा दूती नायकमहा-

**सद्भावं पृच्छन्ती बालक तव रोदिता प्रियया।**

**नास्त्येवेति सशपथं हासोन्मिश्रं भणन्त्या हि।।५७।।**[१]

सद्भावं तस्यां तव स्नेहं पृच्छन्ती अहम्, सद्भावो नास्त्येवेति सशपथं सहासं च तदुत्तरे भणन्त्या तव प्रियया रोदितास्मीत्यर्थः। शपथं कृत्वा कथनेन स्नेहाभावे सत्यता, हास्येन च तद्गोपने प्रयासोऽभिव्यज्यते। तथा च- तवापराधैस्तथा सा व्यथिता यथा तव निःस्नेहतामेव निश्चिनोति, परं दाक्षिण्येन तां व्यथां कृत्रिमहासेन निह्नोतुं यतत इत्येतादृशं तस्या हृदयदुःखं मौग्ध्यं च दृष्ट्वा मे बलादश्रूण्यागतानीति भावः। तव प्रिययेत्यनेन 'सा तव प्रियेति त्वं प्रसेधयसि, तथापि तामेव क्लेशयति। अहो ते प्रीतिः' इत्युपालम्भो व्यज्यते। बालकेत्यामन्त्रणेन एवमनुगतामपि तां खेदयंस्त्वमुचितानभिज्ञ एवेति ध्वन्यते।

ग्रामीणानामपि सङ्कल्पमात्रादेव सात्त्विकभावाः प्रादुर्भवन्ति किं पुना रसिकानामिति निजमार्मिकतां ख्यापयितुं कश्चन नागरिकताभिमानी सहचरमाह-

---

१. **सब्भावं पुच्छन्ती बालअ रोआविआ तुअ पिआए।**
**णत्थि व्विअ कअसवहं हासुम्मिस्सं भणन्तीए।।५७।।**
[सद्भावं पृच्छन्ती बालक रोदिता तव प्रियया।
नास्त्येव कृतशपथं हासोन्मिश्रं भणन्त्या।।]

**अत्र मया रन्तव्यं तया सहेत्याकलय्य हृदयेन।**

**कृषककरस्वेदार्द्रा निपतति तुवरी समुप्यमानेयम्।।५८।।**[१]

अत्र अस्मिन्नाढकीक्षेत्रे तया सह मया रन्तव्यमिति हृदयेनाकलय्य चिन्तयित्वा समुप्यमाना क्षेत्रभूमौ सम्यग्विकीर्यमाणा इयं तुवरी आढकी [अरहर इति भाषायां प्रसिद्धा] कृषककरयोः स्वेदेन आर्द्रा सती निपततीति योजना। तुवरीक्षेत्रस्य वसन्तेऽपि निबिडहरितत्वेन तत्सुरतसङ्केतस्थानं भविता, ततश्च तत्र भावि सुरतसुखमनुस्मृत्य पामरकरयोः स्वेदरूपसात्त्विकभावोदयो जात इति भावः। 'अथाढकी। काक्षी मृत्स्ना तुवरिका मृत्तालकसुराष्ट्रजा' इत्यमरः। 'आढकी तु तुवर्यां स्त्री परिमाणान्तरे त्रिषु' इति च मेदिनी। 'सङ्कल्पमात्रात्सात्त्विकभावा भवन्तीति कापि स्ववैदग्ध्यं ख्यापयितुं सखीमाह' इति गङ्गाधरः।

कार्पासवृन्तावचयाय समागता सेयं मद्दयितं प्रत्यनुरक्तेति ग्रामणीस्नुषा निजसखीमाह–

**गृहपतिसुतोच्चितेष्वपि पश्यत कार्पासवृन्तेषु।**

**मोघं भ्रमति पुलकितो लग्नस्वेदाङ्गुलिः करो वध्वाः।।५९।।**[२]

गृहपतेः सुतेन मम पत्येति यावत्। एतेन वक्त्र्याः स्नुषात्वसाधनान्नववयस्कत्वं सूच्यते। उच्चितेष्वपि अवचितेष्वपि फुल्लकार्पासयुक्तेषु वृन्तेषु। पुलकितः विलग्नः स्वेदो यासु ईदृश्योऽङ्गुलयो यस्मिन्नीदृशश्च। वध्वा हस्तो मोघं भ्रमति, अवचेयकार्पासाभावेऽपि वल्लभप्रेम्णा भ्रमति, इति यूयं पश्यत। स्वेदरोमाञ्चौ भ्रमतीत्यनेन सूचितो वेपथुश्चेति सात्त्विकभावा ग्रामणीसुते नायिकाया रतिमनुभावयन्ति। तथा च– किञ्चित्कालार्थमुपागतापि सेयं मद्दयितेऽनुरक्ताभूदिति स्वपतेः कामनीयत्वम्, परं स च मद्वशीभूत इत्यात्मनः सौभाग्यं च गृहपतिपदस्वारस्यसहकारेण ध्वन्यते।

---

१. **एत्थ मए रमिअव्वं तीअ समं चिन्तिऊण हिअएण।**
**पामरकरसेओल्ला णिवअइ तुवरी ववविज्जन्ती।।५८।।**
[अत्र मया रन्तव्यं तथा समं चिन्तयित्वा हृदयेन।
पामरकरस्वेदार्द्रा निपतति तुवरी उप्यमाना।।]

२. **गहवइसुओच्चिएसु वि फलहीवेण्टेसु उअह वहुआए।**
**मोहं भमइ पुलइओ विलग्गसेअङ्गुली हत्थो।।५९।।**
[गृहपतिसुतावचितेष्वपि कर्पासवृन्तेषु पश्यत वध्वाः।
मोघं भ्रमति पुलकितो विलग्नस्वेदाङ्गुलिर्हस्तः।।]

ग्रामीणस्य मुग्धतां सूचयन्तकश्चन नागरिकताभिमानी सहचरमाह–

**आर्यां मोहनसुखितां मृतेति मुक्त्वा पलायिते हलिके।**

**दरविकचवृन्तभारादवनतया हसितमिव हि कार्पास्या।।६०।।**[1]

आर्यां श्रेष्ठां ग्रामनेतृसुतामित्यर्थः। मोहनेन सुरतेन सुखितां सुरतसुखनिमीलिताक्षीमिति यावत्। मृतेति भयेन मुक्त्वा पलायिते सति। आर्यामित्युक्त्या ग्रामनेतुः सुता कामान्धतया उपभुक्ता, दुर्दैवान्मृता चेति भयातिशयः सूच्यते। अतएव पलायिते इत्युक्तं न तु गते इति। ईषद्विकसितवृन्तभारद्वारा प्रकटितश्वेतवर्णहासा लज्जया नम्रमुखीव कार्पासी जहासेत्युत्प्रेक्षा। आर्यामिति छन्दोनामसूचनान्मुद्रालङ्कारोऽप्ययत्नलभ्यो बोद्धव्यः। [सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः]। पर्यन्ते तु 'ग्रामीणस्यानभिज्ञतामवलोक्य स्त्रीभावात्स्त्रीरहस्यवेदिनी जडापि कार्पासी जहास, किं पुनरन्य इति तन्मुग्धतातिशयप्रकटनेनात्मनो गौरवं द्योत्यते।

काचिदात्मनो निन्दाव्याजेन प्रियतमं प्रत्युनरागातिशयं सौभाग्यं च सूचयन्ती सखीमाह–

**नर्तितुमिह निःश्वासोत्कम्पपुलकितैर्हि जानते धन्याः।**

**अवलोकितेऽपि दयिते विस्मृत आत्मापि मादृशीभिस्तु।।६१।।**[2]

नर्तनसमये दयितकरस्पर्शवशात् निःश्वासेन उत्कम्पेन पुलकितेन (पुलकनमेव पुलकितं भावे क्तः) उपलक्षिता या नर्तितुं जानन्ति ता धन्याः। अस्मादृशीभिस्तु दयितस्यावलोकनेऽपि सति आत्मापि निजशरीरादिकमपि विस्मृतं किं पुनरन्यदित्यर्थः। 'अहमधन्या' इत्यात्मानं निन्दन्त्यपि दयितप्रणयसौभाग्यवत्यहमेवेति स्तुतिं सूचयतीति व्याजस्तुतिः। पर्यन्ततस्तु 'नर्तनकलामञ्जुला अपि ता न धन्याः' प्रियप्रणयपीयूषपायिन्यहमेव धन्येति व्यतिरेकालङ्कारो व्यङ्ग्य। नर्तनप्रकरणाभावे तु नर्तितुमित्यत्र 'दयितसमागमे निःश्वासादिभिरुप–

---

१. **अज्जं मोहणसुहिअं मुअत्ति मोत्तू पलाइए हलिए।**
**दरफुडिअवेण्टभारोणआइ हसिअं व फलहीए।।६०।।**
[आर्यां मोहनसुखितां मृतेति मुक्त्वा पलायिते हलिके।
दरस्फुटितवृन्तभारावनतया हसितमिव कार्पास्या।।]

२. **णीसासुक्कम्पिअपुलइएहिँ जाणन्ति णच्चिउं धण्णा।**
**अम्हारिसीहिँ दिट्ठे पिअम्मि अप्पा वि वीसरिओ।।६१।।**
[निःश्वासोत्कम्पितपुलकितैर्जानन्ति नर्तितुं धन्याः।
अस्मादृशीभिर्दृष्टे प्रिये आत्मापि विस्मृतः।।]

लक्षिता या नानाविधान्गात्रविभ्रमान्कर्तुं जानन्ति ता धन्याः' इत्यर्थन्तरसङ्‌क्र-मितावाच्यो ध्वनिर्बोध्यः, नर्तनस्य स्वार्थे बाधेन शारीरिकविभ्रमार्थे लाक्षणिकत्वात्। ततस्तु व्यतिरेकाल-ङ्कारध्वनिना सह पूर्वोक्तध्वनेः संसृष्टिर्बोद्धव्येत्यलं साहित्यगहनपद्धत्या।

सपत्नीषु त्वं नवयौवनेन लब्धविजयासीति काचित्प्रौढा मुग्धां नायिकामामह-

**क्षीणेनापि क्षीयत एतेन तनूयतेऽथ तनुनापि।**
**कथमिव ते प्रतिपक्षो मध्यस्थेनापि पुत्रि मध्येन।।६२।।**[1]

हे पुत्रि ते प्रतिपक्षः सपत्नीजनः क्षीणेनः अपचयं प्राप्तेनापि मध्यस्थेन वपुर्मध्यभा-गस्थितेन ते मध्येन (करणे तृतीया) कथं क्षीयते अपचीयते। तनुना दुर्बलेनापि (मध्येन) कथं तनूयते दुर्बलतया [आचारार्थे क्यङ्]। मध्यस्थ उभयोः पक्षमनालम्ब्य मध्यस्थत्वेन उदासीनतया स्थितः सन् यदि क्षयमधिगतः कृशोऽपि भवेत्तर्हि प्रतिपक्षं न पीडयति, प्रबलादेव पीडासम्भवात्। किं तु तवायं मध्यस्थत्वादिगुणयुक्तोऽपि मध्यः सपत्नीजनं पीडयतीत्यपिशब्द-वाच्यो विरोधाङ्कालरः। अनेन चालङ्कारेण 'श्रोण्याद्यङ्गपरिष्कारकेणानेन ते नवयौवनेन सपत्नीज-नोऽपचयमाप्य परां पीडामनुभवति, त्वं च मुग्धतया न जानासि तासां रहस्यम्।' इत्यर्थो ध्वन्यते। 'पुत्रि' इति सम्बोधनेन त्वं मे स्नेहपात्रमसीति निजपक्षपातो नायिकाया मौग्ध्यं च द्योत्यते। 'इष्टसिद्धये दूती नायिकाया व्याजस्तुतिमाह' इति गङ्गाधरावतरणम्।

तव वियोगे मम मर्मवेधिनी पीडा जायत इति निजप्रणयिनां काचित्सवैदग्ध्यं सानुरागं चाह-

**व्याधिरिव वैद्यरहितो धनरहितः स्वजनमध्यवास इव।**
**दर्शनमिव रिपुलक्ष्म्या दुःसहनीयस्तव वियोगः।।६३।।**[2]

---

१. **तणुएण वि तणुइज्जइ खीएण वि खिज्जए बला इमिणा।**
**मज्झत्थेण वि मज्झेण पुत्ति कहँ तुज्झ पडिवक्खो।।६२।।**
[तनुकेनापि तनूयते क्षीणेनापि क्षीयते बलादनेन।
मध्यस्थेनापि मध्येन पुत्रि कथं तव प्रतिपक्षः।।]

२. **वाहिव्व वेज्जरहिओ धणरहिओ सुअणमज्झवासो व्व।**
**रिउरिद्धिदंसणम्मिव दूसहणीओ तुह विओओ।।६३।।**
[व्याधिरिव वैद्यरहितो धनरहितः स्वजनमध्यवास इव।
रिपुऋद्धिदर्शनमिव दुःसहनीयस्तव वियोगः।।]

रिपुलक्ष्म्या वैरिसमृद्धेर्दर्शनमिव, तव वियोगो दु:सह। स्वनेत्राभ्यां दर्शनस्य श्रवणाद्यपेक्षया समधिकक्षोभकारित्वाद्दर्शनमिवेत्यनेन वेदनातिशयः सूच्यते। वैद्यरहितव्याध्यादेरेकैकस्य मरणान्तिकपीडाकारकत्वाद्दुः सहनीयत्वं सर्वेषां साधारणो धर्मस्तथा च सेयमभिन्नधर्मा मालोपमा। एवं च तव वियोगे मम प्राणान्तिकपीडा जायत इत्यात्मनोऽनुरागातिशयो ध्वन्यते। प्रियं प्रति नायिकायाः सन्देशगाथेयमिति केचित्।

वृद्धवराङ्गना निजदुहितुः पीनोन्नतपयोधरतामभिधाय विलासिनं राजानं चाटूक्तिभिरनुकूलं कुर्वत्याह-

**कः स्थगयितुं समर्थोऽत्र जगति विस्तीर्णनिर्मलोत्तुङ्गम्।**

**हृदयं च तव नराधिप गगनं च पयोधरान्मुक्त्वा।।६४।।**[१]

विस्तीर्णं गभीराशयतया महावकाशम्, निर्मलं कपटादिकालुष्यरहितम्, उत्तुङ्गम् उच्चाभिलाषितया उन्नतम् ईदृशं तव हृदयम्, व्यापकं रजोमालिन्यरहितमुन्नतं गगनं च। राजपक्षे पयोधरान् स्तनान्, गगनपक्षे मेघान् मुक्त्वा कः स्थगयितुमधिकर्तुं समर्थः, न कोऽपीत्यर्थः। पयोधरानिति बहुत्वेन एकैव रमणी किं बह्व्योऽपि सुन्दर्यो दैवदत्तराजपदस्य तेऽनायासमेव सुलभा इति प्रोत्साहनं ध्वन्यते। पयोधरान् मुक्त्वा कः समर्थ इत्यनेन 'महावीरस्य तव विस्तीर्णत्वादिपूर्वोक्तगुणयुक्ते हृदि शौर्यादिद्वारा बलात्प्रभावस्थापनं तु दुष्करम्, किं तु शौर्यद्वारा प्राप्तं विभवं भोगद्वारा सफलयतस्तव रसिकस्य हृदि नारीविलास एव स्थानं प्राप्तुं शक्नुयादिति तच्छौर्यस्तुतिर्विलासार्थं राज्ञ उत्तेजनं च ध्वन्यते। वर्ण्यस्य हृदयस्य अप्रस्तुतस्य गगनस्य च स्थगनरूपैकधर्मान्वयाद्दीपकम्। 'वदन्ति वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः'। पर्यन्ततस्तु उच्चाभिलाषी भवानन्याः सामान्या वारवधूर्विहाय बहुव्ययलभ्यामपि नवयौवनामिमां मत्तनयामेव कामयिष्यते, यतो विस्तीर्णहृदयो रसिकश्च भवानिति वस्तु ध्वन्यते।

इयं निकुञ्जे दत्तसङ्केतेति परिज्ञातमस्या रहस्यमिति निजमार्मिकतां सूचयन्नागरिकः सहचरमाह-

---

१. **कोत्थ जअम्मि समत्थो थइउं वित्थिण्णणिम्मलुत्तुङ्गम्।**
**हिअअं तुज्झ णराहिव गअणं च पओहरं मोत्तुम्।।६४।।**
[कोऽत्र जगति समर्थः स्थगयितुं विस्तीर्णनिर्मलोत्तुङ्गम्।
हृदयं तव नराधिप गगनं च पयोधरान्मुक्त्वा।।]

**आकर्णयते ह्यसति कुञ्जतले दत्तसङ्केता।**
**अग्रपदपीडितानां मर्मरकं जीर्णपत्राणाम्।।६५।।**[१]

अग्रपदेन निजपादाग्रभागेन पीडितानामवमर्दितानां पुराणपर्णानां मर्मरकं चूर्णनकालिकं 'मरमर' इति शब्दम्। सहजचङ्क्रमणे पादतलपश्चाद्भागस्य भूमौ पूर्वमवस्थापनस्वभावात्सर्व-शरीरभरस्य तत्रैव सङ्क्रमणेन शुष्कपत्राणामतिशयितचूर्णीभावान्न तथा शब्दो यथा शनैर्निहिताद-ग्रभागादर्धार्धमर्दितानां पत्राणामित्यग्रपदप्रयोगेणातिशयो व्यज्यते। अथवा कुञ्जतले सङ्केतकरणात्त-त्तलेऽवनमितपूर्वकायं शनैः शनैर्गमनसमये मा कश्चन श्रौषीदिति सतर्कतास्वाभाव्याच्चकित-चकितमग्रपदमेव विन्यस्यते, अतएव अग्रपदपीडितानामिति सतर्कतातिशयसूचनार्थमुक्तिः। तथा चैवमतिसतर्कं पदानि विन्यस्यन्त्यपि पत्रचूर्णनशब्दं सभयचकितमाकर्णयन्ती जारं कुट्टनी समाश्वसयितुमाह'' इति गङ्गाधरावतरणम्। 'त्वत्पदशब्दमाकर्णयन्ती सङ्केतस्थिता सा ते दयिता तिष्ठति, मा व्याकुली भूः' इति तद्व्याख्यातात्पर्यम्। अत्र अग्रपादं जारस्य परिगृह्यते। परं स्वयमेव प्रोत्साह्यानयन्ती कुट्टनी प्रणयिनमेव प्रति तामसतीति कथं व्यपदिशेदित्येव विचार्यम्।

नायकमुत्कण्ठयन्ती दूती कस्याश्चिन्मुखसौरभं वर्णयति–

**सुरभिमुखानिलपरिमलनिबद्धमण्डलमभिद्रवन्त्यलयः।**
**अज्ञातचन्द्रपरिभवमपूर्वकमलं मुखं तस्याः।।६६।।**[२]

अलयो भ्रमराः। न ज्ञातश्चन्द्रपरिभवः चन्द्रसकाशान्मीलनं येन ईदृशम् अत एवापूर्व-कमलं तस्या मुखम् सुरभिर्यो मुखानिलस्तस्य परिमलेन विशिष्टसुगन्धेन (हेतौतृतीया)निबद्धं मण्डलं मण्डलभ्रमणं यस्मिन्कर्मणि यथा भवति तथा अभिद्रवन्ति तन्मुखपर्यन्ततो लीयन्त

---

१. **आअण्णेइ अडअणा कुडङ्गहेट्ठम्मि दिण्णसंकेआ।**
**अग्गपअपेल्लिआणं मम्मरअं जुण्णपत्ताणम्।।६५।।**
[आकर्णयत्यसती कुञ्जाधो दत्तसङ्केता।
अग्रपदप्रेरितानां मर्मरकं जीर्णपत्राणाम्।।]

२. **अहिलेन्ति सुरहिणीससिअपरिमलाबद्धमण्डलं भमरा।**
**अमुणिअचन्दपरिहवं अपुव्वकमलं मुहं तिस्सा।।६६।।**
[अभिलीयन्ते सुरभिनिःश्वसितपरिमलाबद्धमण्डलं भ्रमराः।
अज्ञातचन्द्रपरिभवमपूर्वकमलं मुखं तस्याः।।]

इत्यर्थः। अज्ञातचन्द्रपरिभवमिति व्यतिरेकः। अपूर्वकमलमिति गम्योत्प्रेक्षा रूपकं वा। अलयोऽभिद्रवन्तीत्यनेन बहवः कामुकास्तामनिशमनुबध्नन्तीति कामनीयत्वातिशयो द्योत्यते। अज्ञातचन्द्रपरिभवमित्यनेन उत्कृष्टादप्युत्कृष्टं मुखं न तन्मुखं पराजेतुमलमिति सौन्दर्यातिशयः सूच्यते। ततश्च 'बहवः कामिनस्तामहर्निशमनुसरन्ति, अत एव सौभाग्यवता भवता सा त्वरितमुपगन्तव्या, न च तस्याः समागमे कश्चित्प्रतिबन्धः (अज्ञातचन्द्रपरिभवमिति)' इति नायकं प्रति चरमं व्यङ्ग्यम्। अहिलेन्तीत्यस्य अभिलषन्तीति च्छायेति कश्चित्।

नायिकायाः प्रणयातिशयं सूचयन्ती दूती नायकमाह–

**धैर्यलम्बिन्या अपि गुरुजनपुरतस्त्वयि व्यतिक्रान्ते।**
**पतितोऽक्षिनिमीलनतो वाष्प पक्ष्मस्थितस्तस्याः।।६७।।[१]**

गुरुजनानां पुरस्तात्, विकारगोपनार्थं धैर्यालम्बनशीलाया अपि तस्याः [ताच्छील्ये णिनिः]। त्वयि व्यतिक्रान्ते तामतिक्रम्य आगते सति। अक्षिनिमीलनतः विरहजनितविषादेन नेत्रनिमीलनात्, तस्याः पक्ष्मस्थितः एतावत्कालं धैर्येणावरोधात्पक्ष्मस्वेव स्थापितो वाष्पः पतितः कपोलयोः प्रावहत्। प्रयत्नवशाद् गुरुजनानुरोधादवरुद्धोऽपि दुःखावेगस्त्वदेकमात्रालम्बनया तया नाधिकं सोढुमपार्यत, अवशया तया पर्यन्ते गुर्वनुरोधोऽपि न बहु मानितः। एवं किल तस्या सुदृढोऽनुराग इति नायकोत्कण्ठायै दूत्याभिव्यज्यते। पक्ष्मसु किञ्चित्कालं वाष्पस्थित्या नेत्रयोर्विशालता व्यज्यते। अत्र ''गुरुजनलज्जया तया नानुगमनं कृतं वाष्पेण पुनः कृतमेव'' इत्यपदलभ्यमपि रमणीयमाह गङ्गाधरः।

'मानालम्बनेऽपि गाढानुरागवशान्नाधिककालं मां व्यथयति सा' इत्यात्मनः सौभाग्यं सूचयन्नागरिकः सहचरमाह–

**विगलन्मानभरायाः शयनपराञ्च्याः स्मरामोऽस्याः।**
**कैतवसुप्तोद्वर्तनकुचकलशापीडसुखकेलिम् ।।६८।।[२]**

---

१. **घीरावलम्बिरीअ वि गुरुअणपुरओ तुमम्मि वोलीणे।**
**पडिओ से अच्छिणिमीलणेण पम्हट्ठिओ वाहो।।६७।।**
[धैर्यावलम्बनशीलाया अपि गुरुजनपुरतस्त्वयि व्यतिक्रान्ते।
पतितस्तस्या अक्षिनिमीलनेन पक्ष्मस्थितो वाष्पः।।]

२. **भरिमो से सअणपरम्मुहीअ विअलन्तमाणपसराए।**
**कइअवसुत्तुव्वत्तणथणकलसप्पेल्लणसुहेल्लिम्।।६८।।**
[स्मरामस्तस्याः शयनपराङ्मुख्या विगलन्मानप्रसरायाः।
कैतवसुप्तोद्वर्तनस्तनकलशप्रेरणसुखकेलिम्।।]

मानवशात् शयने पराञ्च्याः पार्श्वं परिवर्त्य पराङ्मुखं सुप्तायाः। पश्चात् अनुरागोत्कण्ठया विगलन् शाम्यन् मानभरो यस्यास्तस्याः। विगलदिति वर्तमानार्थकशतृप्रत्ययेन तस्मिन्नेव क्षणे कोपशान्तिरारब्धेति सूचनेन नायिकाया नवीनोत्कण्ठोदयो ध्वन्यते। अतएव कैतनेव कपटेन युत्सुप्तोद्वर्तनं पार्श्वपरिवर्तनं कैतवेन सुप्ते शयने यद्, उद्वर्तनं पार्श्वपरिवर्तनमिति वार्थः। तत्र कुचकलशाभ्यां य आपीडो निबिडावमर्दस्तत्सुखकेलिं स्मरामः। औत्सुक्योदयेन पार्श्वपरिवर्तने कृते पीनोत्तुङ्गयोः कुचयोर्यः स्वयमेव गाढसम्मर्दस्तत्सुखं नाद्यापि विस्मराम इत्यर्थः। अनुनयं विनापि मद्गतगाढानुरागवशात्सा विगलितमानाऽभवदित्यात्मनः सौभाग्यं ध्वन्यते।

येन सह फाल्गुनोत्सवकेलिमन्वभूरस्ति तस्मिंस्तेऽनुराग इति सूचयन्ती सखी नायिकां सपरिहासमाह–

**फाल्गुनमहनिर्दोषं दत्तं केनापि पङ्कमण्डनकम्।**

**स्तनकलशाननविलुठत्स्वेदविधौतं हि किमिति धावयसि।।६९।।**[1]

फाल्गुनमहे फाल्गुनोत्सवे निर्दोषं निन्दनीयतारहितम्। 'मम उद्धवः उत्सवः' अमरः। केनापि दत्तम्। केनापीत्यनेन न वयं तं परिजानीमो मा लज्जस्वेति नायिकाया अश्वासनं ध्वन्यते। पङ्कमण्डनकं कर्दमरूपं प्रसाधनम्। कर्दमोऽपि निसर्गसुन्दरे त्वद्वपुषि भूषणमिव जातमिति नायिकायाः सौन्दर्यं गूढमभिव्यज्यते। स्तनकलशयोर्मुखात् विलुठन् विगलन् यः स्वेदस्तेन धौतं क्षालितमपि पुनः किमिति धावयसि क्षालयसि। कर्दमप्रक्षेपसमये प्रक्षेप्तरि अनुरागवशात्ते स्वेदोद्गमो बभूवेति लक्षितमस्माभिः। ततश्च त्वं किमित्यस्मत्तो गोपयसि। फाल्गुनोत्सवे त निन्दनीयमिदिमित सख्या ध्वन्यते।

त्वद्वचनादहमगमं तस्या निकटे, परं मामालोक्यापि न सा किञ्चिदुक्तवतीति वदन्तं नायकं प्रौढा दूती सुमधुरमाह–

---

१. **फग्गुच्छणणिद्दोसं केण वि कद्दमपसाहणं दिण्णम्।।**

**थणअलसमुहपलोट्टन्तसेअधोअं किणो धुअसि।।६९।।**

[फाल्गुनोत्सवनिर्दोषं केनापि कर्दमप्रसाधनं दत्तम्।

स्तनकलशमुखप्रलुठत्स्वेदधौतं किमिति धावयसि।।]

**ग्रामणिसुतया बालक गुरुजननिकटेऽपि किं न भणितोऽसि।**
**अनिमिषमीषद्विवलद्वदनसुनयनार्धसन्दृष्टै ।।७०।।**[१]

ग्रामणिसुतया ग्रामनायकपुत्र्या 'इको ह्रस्वोऽङ्ग्य' इति ह्रस्वः। अनेन पितृगृहस्थिताया-स्तस्याः सुलभत्वं नववयःशालिनत्वं च द्योत्यते। अनिमिषं निमेषशून्यं यथा स्यात्तथा। ईषद्विवलत् किञ्चित्परवर्तमानं वदनं मुखं येषु एवंभूतानि यानि सुन्दराणि नयनार्धदृष्टानि कटाक्षवीक्षितानि तैः (करणे तृतीया)। गुरुजनसविधेऽपि किं न भणितोऽसि, एतादृशमावश्यकं किमस्ति यन्न भणितोऽसि, अपि तु सर्वं भणितोऽसीत्यर्थः। नयनार्धसन्दृष्टैर्भणितोऽसीत्यत्र वाच्यार्थतिरस्कारेण लक्षणा। तथा च तया गूढं सूचितोऽसीति व्यङ्ग्योऽर्थः। पर्यन्ते तु 'गुरुजनसन्निधानेऽपि सा इङ्गितैः सर्वमात्मगतं प्रकाशयामास, त्वं तु न तत्तात्पर्यमज्ञासीरित्यहो ते मौग्ध्यम्' इति बालकेतिसम्बोधनसहकारेणाभिव्यज्यते।"ईषद्विवलितवदनं च नयनार्धदृष्टानि चेति कर्मधारयः" इति गङ्गाधरटीका। 'धूआए' इत्यस्य 'स्नुषायाः' इति च्छायां केचिद्वदन्ति, तेषां मते गुरुजनसमक्षमित्यस्य श्वशुरादिनिकटे इत्यर्थः स्यात्।

एतमेवार्थं प्रकारान्तरेणाह–

**नयनाभ्यन्तरविसरद्बाष्पभरोद्बन्धमन्दया दृष्ट्या।**
**पुनरुक्तप्रेक्षितया बालक किं यन्न भणितोऽसि।।७१।।**[२]

तवावलोकनजातेन हर्षेण नयनाभ्यन्तरे विसरन् घूर्णमानो यो बाष्पभरस्तस्योद्बन्धेन आपूरणेन मन्दया मन्थरया दृष्ट्या। पुनरक्तं प्रेक्षितं यस्याः, वारं वारं विलोकनशालिन्येति यावत्। ईदृश्या तया। उत्कण्ठावशात् मुहुर्विलोकनशालिन्या तया त्वद्दर्शनजातहर्षेण सवाष्पमन्थरया दृष्ट्या सर्वमात्मगतं भणितोऽसीति भावः। व्यङ्ग्यार्थस्तु पूर्ववत्। अश्रुरूपेणा-नुभावेन रतेः प्रतीतिरत्रेति सरस्वतीकण्ठाभरणम्।

---

१. **किं ण भणिओ सि बालअ गामणिधूआइ गुरुअणसमक्खम्।**
**अणिमिसमीसीसिवलन्तवअणणअणद्धदिट्ठेहिं।।७०।।**
[किं न भणितोऽसि बालक ग्रामणीपुत्र्या गुरुजनसमक्षम्।
अनिमिषमीषदीषद्वलद्वदननयनार्धदृष्टैः।।]

२. **णअणब्भन्तरघोलन्तबाहभरमन्थराइ दिट्ठीए।**
**पुणरुत्तपेच्छिरीए बालअ किं जं ण भणिओ सि।।७१।।**
[नयनाभ्यन्तरघूर्णमानवाष्पभरमन्थरया दृष्टया।
पुनरुक्तप्रेक्षणशीलया बालक किं यन्न भणितोऽसि।।]

घनतरुणवयसि रसाकुलया कयाचित्सुरतसमये गणपतिमूर्तिरुपधानीकृता। यौवनावेगशान्तौ तामेव पूजयन्ती सा जरामुपालभते–

**शिरसि वितीर्णो युवभिर्गणपतिरिह मम पुरा योऽभूत्।**
**प्रणमामि बत तमधुना तुष्टा भव हतजरे कामम्।।७२।।**[१]

एकं तद्दिनमासीद्यत्र निर्भरयौवनाया मम तावानावेगोऽभवत्, सर्वमेतदद्य तिरोहितम्। हतायास्तवैव तदिदं कर्तव्यमिति जरां प्रति सासूय उपालम्भः।

पामरेणापि दुःसहं विरहदुःखमिति कञ्चित्साकूतमुपालभमाना नायिकासखी निदर्शनविधया आह–

**जायाशून्ये भवने हालिकतनयो विदह्यतेऽन्तरतः।**
**पश्यन् रमितस्थानान्युत्खातनिधानकानीव।।७३।।**[२]

रमितस्य जायया सह रमणस्य स्थलानि, उत्खातं भूमिमुत्खाय गृहीतं निधानं निधिद्रव्यं येभ्यस्तानि, निधिशून्यानि स्थानानीवेत्यर्थः। पश्यन् सन् अन्तरतः हृदयाभ्यन्तरे दह्यते। निधानकानीवेत्यत्र उत्खातनिधानतया शून्यानि तानि स्थानानि निन्दायोग्यानीति तेषां निन्दाद्योतकः कप्रत्ययः। निधिलाभ इव प्रेयस्याः समागमः, तया विरहितः पामरोऽपि अन्तःपुटपाकं दह्यते किं पुनः सहृदयः। त्वं च पुनरात्मनं रसिकचूडामणिं मन्यसे। ततश्च मत्प्रियसखीविरहमुपेक्षमाणस्य किं ते वक्तव्यमिति नायकं प्रत्युपालम्भो ध्वन्यते। गङ्गाधरस्तु ''मृतचौरिकामहिलां शोचन्तं कमप्यन्यापदेशेनाह' इत्यवतरणमुक्त्वा 'विज्ञोपि त्वं मृतचौरिकामहिलां प्रतिशोचसीत्ययुक्तमिति'' भावमाह। विरहदुःसहत्वसाधनेन प्रणयसर्वस्वमाविष्कुर्वत्या अस्या गाथायाः 'मृतायाः शोको न कर्तव्यः' इति तात्पर्यकल्पने कियत्स्वारस्यमिति सहृदयैर्विभाव्यम्।

---

१. **जो सीसम्मि विइण्णो मज्झ जुआणेहिँ गणवई आसी।**
**तं व्विअ एह्लिं पणमामि हअजरे होहि संतुट्ठा।।७२।।**
[यः शीर्षे वितीर्णो मम युवभिर्गणपतिरासीत्।
तमेवेदानीं प्रणमामि हतजरे भव सन्तुष्टा।।]

२. **अन्तोहुत्तं डज्झइ जाआसुण्णे घरे हलिअउत्तो।**
**उक्खाअणिहाणाइँ व रमिअट्ठाणाइँ पेच्छन्तो।।७३।।**
[अन्तरभिमुखं दह्यते जायाशून्ये गृहे हालिकपुत्रः।
उत्खानिधानानीव रमितस्थानानि पश्यन्।।]

मानमङ्गीकृत्य दयितानुनयसुखमनुभवेति सख्योपदिश्यमाना काचिन्निजहृदय-दशामाह-

**आपाण्डुरता निद्राभङ्गो दीर्घाश्च निःश्वासाः।**
**जायन्ते यद्विरहे तेन समं कीदृशो मानः।।७४।।**[१]

यद्विरहे यस्य विरहे। विरहकार्श्येन आ-ईषत् पाण्डुरता, अधिकाया रोपरूपत्वाद्रसप्राति-कूल्यम्। नाहं तस्य विरहं मनागपि सोढुं क्षमेत्यात्मनोऽनुरागातिशयो द्योत्यते। कथं कुपितासीति नायकेन पृष्टाया धीरानायिकाया उक्तिरियमिति केचित्।

प्रियव्यलीकैः सुभृशमुपतप्ता काचन तं प्रति सप्रणयकोपोपालम्भमाह-

**विसृजामि तेन नासून् मन्युभिरभिपूरिता सुभग येन।**
**म्रियमाणा मा पुनरपि लप्स्ये त्वां त्वद्गतस्वान्ता।।७५।।**[२]

मन्युभिर्हृदयोपतापजातैः क्रोधैः पूरिता 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः। बहुवचनेन 'भवता वारंवारमेव विप्रियमाचर्यते येन मे मुहुः क्रोधः' इति द्योत्यते। असून् प्राणान्। त्वद्गतमनाः सती म्रियमाणा जन्मान्तरेऽपि पूर्वसंस्कारवशात्त्वामेव विप्रियकारिणं पतिं येन लभेय, तेन प्राणान्न त्यजामीत्यर्थः। तव दुश्चेष्टितैर्भृशमुपतप्य दुःखान्म्रियमाणाप्यहं मरणसमयेऽपि भवदनुध्यानं न त्युक्तं क्षमेत्येतावान्मेऽनुरागः। अहो ते सुभगतागर्व इति सुभगसम्बोधनो- जृम्भित उपालम्भः प्रणयश्चाभिव्यज्यते। लगिष्यामीति प्राकृतशैलीसुभगमपि संस्कृतबन्धे न सुन्दरमिति 'लप्स्ये' इति परिवर्तितम्।

प्रियापराधैः कुपिता काचिद्विदग्धचर्योचितं सुमधुरमुपालभते-

---

१. **णिद्दाभङ्गो आवण्डुरत्तणं दीहरा अ णीसासा।**
**जाअन्ति जस्स विरहे तेण समं कीरिसो माणो।।७४।।**
[निद्राभङ्ग आपाण्डुरत्वं दीर्घाश्च निःश्वासाः।
जायन्ते यस्य विरहे तेन समं कीदृशो मानः।।]

२. **तेण ण मरामि मण्णूहिँ पूरिआ अज्ज जेण रे सुहअ।**
**तोग्गअमणा मरन्ती मा तुज्झ पुणो वि लग्गिस्सम्।।७५।।**
[तेन न म्रिये मन्युभिः पूरिताद्य येन रे सुभग।
त्वद्गतमना म्रियमाणा मा तव पुनरपि लगिष्यामि।।]

**विषहामहे सुभग ते सर्वम्, विश्रब्धमपराध्य।**
**गुणनिर्भरे हि हृदये प्रतीहि दोषा न मान्त्येव।।७६।।**[१]

सर्वं भवत्कृतमपराधजातं वयं विषहामहे। विश्रब्धं विश्वासेन सहितं यथा स्यात्तथा अपराध्य अपराधान्कुरु। त्वदीयैर्गुणैर्निर्भरे पूर्णे मम हृदये दोषा मान्त्येव न, अवकाशमेव न लभन्ते इति प्रतीहि विश्वसिहि। अहं त्वद्गतचित्ततया बलात्सर्वं विप्रियं सहे। अत एव लब्धसाहसस्त्वम-पराधान् कर्तुं पारयसि। एवंगुणानुरक्तायां मयि नोचितं ते व्यलीककरणमित्युपालम्भो ध्वन्यते। दोषा न मान्त्येवेत्यनेन दोषां प्रतिपदं ते जायन्ते, किन्तु त्वद्गुणानुरक्तहृदयया मया न ते गृह्यन्ते इत्याक्रोशो व्यज्यते। विषहामहे इति बहुत्वोक्तया केवलमस्माभिरेव न अन्याभिरपि त्वयि कृतानुरागामिर्भवदपराधाः सोढव्या भवन्तीति सूच्यते, आत्मगौरवं वा ध्वन्यते। मुहुर्मुहुरपराधेषु सत्स्वपि त्वदनुरागवशीकृतया न मे परिजानासि धैर्यमहो ते सुभगतादर्प इति सुभगपदसहकृतं वस्तु ध्वन्यते। अस्यां गाथायामपराध्यस्वेत्यात्मनेपदं गङ्गाधरकृतच्छायायां व्याकरणविरुद्धत्वाद्विच्छायमेव।

नायकसमीपगामिनं पान्थं प्रति नायिकाया विरहवेदनां प्रतिपादयन्ती सखी सन्दिशति–

**भरितोच्चरत्प्रविसृतप्रियसंस्मरणाभिसूचको वाष्पः।**
**नयनस्थितो वराक्या दुःखपरीवाह इव वहति।।७७।।**[२]

भरितः पूर्णः अतएव नयनमुत्क्रम्य निर्गच्छन्, प्रविसृतः प्रवृद्धः। तथा प्रियसंस्मरण-स्याभिसूचको वराक्या दीनायास्तस्या नयनस्थितो वाष्पो दुःखस्य प्रवाह इव वहति। दुःखप्रवाहोऽपि पूर्णत्वे सति आधारदेशमुल्लङ्घ्य गच्छन् प्रियस्मरणसूचको भवतीति द्वयोरपि तदिदं विशेषणम्। नायमश्रुप्रवाहः किन्तु प्रवृद्धत्वाद्बहिर्निर्गच्छन्प्रियविरहजन्मा दुःखप्रवाहोऽ-यमित्यपह्नुतिर्ध्वन्यते। पर्यन्ततस्तु 'विरहवेदनया परिपूर्णं दुःखितामत एव दयनीयामिमां त्वरितं सम्भावयस्व' इति नायकं प्रति ध्वन्यते। 'नायिकाया विरहार्तिं प्रतिपादयन्ती दूती नायकं

---

१. **अवरज्झसु वीसद्धं सव्वं ते सुहअ विसहिमो अम्हे।**
**गुणणिब्भरम्मि हिअए पत्तिअ दोसा ण माअन्ति।।७६।।**
[अपराध्यस्व विस्रब्धं सर्वं ते सुभग विषहामहे वयम्।
गुणनिर्भरे हृदय प्रतीहि दोषा न मान्ति।।]

२. **भरिउच्चरन्तपसरिअपिअसंभरणपिसुणो वराईए।**
**परिवाहो विअ दुक्खस्स वहइ णअणट्ठिओ वाहो।।७७।।**
[भृतोच्चरत्प्रसृतप्रियसंस्मरणपिशुनो वराक्याः।
परीवाह इव दुःखस्य वहति नयनस्थितो वाष्पः।।]

त्वरयितुमाह' इति गङ्गाधरावतरणम्। अत्र प्रियमेवामिमुखीकृत्य कथनेऽपि पुनः 'प्रियसंस्मरण' इत्युक्तेर्न स्वारस्यमिति मन्मतिः।

नायिकायाः प्रणयातिशयं द्योतयन्ती दूती नायकमाह–

**यद्यत्करोषि यद्यज्जल्पसि यद्यन्निरीक्षसे त्वं हि।**

**दीर्घो दिवसोऽपि भवति, न तत्तदनुशिक्षमाणायाः।।७८।।**[१]

अनुशिक्षमाणायाः तत्तत्पूर्वोक्तं करणादिकमनुशिक्षमाणायाः, अनुकरणं कृत्वा शिक्ष-माणायाः। त्वदाचरणस्य त्वद्भाषणस्य त्वद्विलोकनस्य चानुकरणेन विरहवेदनां विनोदयन्त्यास्तस्या दिवसोऽपि लघुर्भवतीत्यर्थः। अपिपदेन सम्पूर्णो दिवसोऽपि दीर्घो न प्रतीयत इति सूच्यते। तथाच–त्वन्मयत्वात्त्वद्विरहे त्वद्भावनयैव सा समस्तं दिवसं यापयपि, न देहकार्यमपि करोति, एवं किल तस्यास्तवय्यनुराग इति नायकं प्रति द्योत्यते। जल्पनादेरनुकरणेनतव कृति-भाषणादिकं तस्या हृदि तथा मधुरं प्रतीयते यथा सा स्वयमपि तदनुकरणे विवशा भवतीति गुणमुग्धत्वसूचनेन नायकप्रोत्साहनं ध्वन्यते। जं जं करेसीत्यादिवाक्यद्वये वीप्सायामपि, तृतीये 'जह तुम' इत्युपलब्धपाठे तद्भङ्गः, परं मच्छायायां तत्रापि वीप्सानिर्वाह इति द्रष्टव्यम्। 'जह तुम' इत्यत्र यथा येन प्रकारेण त्वं पश्यसीति प्रकारनिर्देशान्न वीप्साया आवश्यकतेति सिद्धस्य समाधानम्।

रात्रौ निवासार्थं स्थानं शयनीनं च याचते पथिकाय कयाचित्साक्रोशं तृणान्येव दत्तानि। अनन्तरं तु तद्रूपलावण्यमुग्धा सा तेन संसक्ताभूत्। अत एव तद्गुणमुग्धतया प्रभाते विरहाकातरायास्तस्या अवस्थां स्वमार्मिकताप्रदर्शनाय नागरिकः सहचरमाह–

**शयितुं हि भर्त्सयन्त्या तृणानि दत्तानि यानि पथिकस्य।**

**तान्येव हन्त रुदती वरतनुराकर्षति प्रातः।।७९।।**[२]

---

१. **जं जं करेसि जं जं जप्पसि जह तुम णिअच्छेसि।**
**तं तमणुसिक्खिरीए दीहो दिअहो ण संपडइ।।७८।।**
[यद्यत्करोषि यद्यज्जल्पसि यथा त्वं निरीक्षसे।
तत्तदनुशिक्षणशीलाया दीर्घो दिवसो न सम्पद्यते।।]

२. **भण्डन्तीअ तणाइं सोत्तुं दिण्णाइँ जाइँ पहिअस्स।**
**ताइं च्चेअ पहाए अज्जा आअड्डइ रुअन्ती।।७९।।**
[भर्त्सयन्त्या तृणानि स्वप्तुं दत्तानि यानि पथिकस्य।
तान्येव प्रभाते आर्या आकर्षति रुदती।।]

सं. गा. १७

भर्त्सयन्त्या नात्र स्थानमिति कलहं कुर्वाणया। शयितुं शयनार्थम्। वरतनुरार्या। तद्गत-चित्ततया तान्येव तृणानि रुदती सती आकर्षति। पूर्वं यानि तृणान्यवहेलया शयानार्थं दत्तानि, तान्येव पथिकगुणस्मरणाद्रुदत्या पथिकाङ्गसङ्गभावनया सगौरवमवचितानीत्यर्थः। पथिकास-क्तहृदयतया तद्विरहे सा भृशमुत्ताम्रभूदिति स्वस्य प्रणयपरिज्ञानपाटवं सुहृदं प्रति सूच्यते वक्त्रा।

गृहजनभयेन मनोऽभिलषितामपि नायिकां नोपसरन्तं नायकं सत्पुरुषस्वभाववर्णन-च्छलेन दूती बोधयति–

**व्यसनेऽनुद्विग्नाः किल भयेऽपि धीरा अगर्विता विभवे।**

**अविषमशीलाः सन्ति हि समेषु विषमेषु सत्पुरुषाः।।८०।।**[१]

व्यसने दुःखे उद्वेगरहिताः। भये उपस्थितेऽपि अविचलचित्ताः। समेषु आत्मनोऽनु-कूलेषु, विषमेषु आत्मनः प्रतिकूलेषु उभयविधेष्वपि सत्पुरुषाः अविषमशीला अभिन्नस्वभावा भवन्ति, स्वभाववैषम्यं न दर्शयन्तीत्यर्थः। भयं परिहाय धैर्येण कार्यं कर्तव्यमिति दूत्या नायकप्रोत्साहन-मभिव्यज्यते। 'कोऽपि सहचरस्य गाम्भीर्यशिक्षार्थं सत्पुरुषप्रशंसामाह' इति गङ्गाधरावतरणम्।

प्रातः प्रियतमास्मरणोत्कण्ठया गीतं पथिकजनगीतमाकर्ण्य समुद्दीपितविरहहुतवहा काचित्प्रोषितपतिका सखीमाह–

**अद्य सखि केन कल्ये कामपि मन्ये स्ववल्लभां स्मरता।**

**अस्माकं स्मरविशिखाहतहृदयव्रणविघट्टनं गीतम्।।८१।।**[२]

---

१. **वसणम्मि अणुव्विग्गा विहवम्मि अगव्विआ भए धीरा।**
**होन्ति अहिण्णसहावा समेसु विसमेसु सप्पुरिसा।।८०।।**
[व्यसनेऽनुद्विग्ना विभवेऽगर्विता भये धीराः।
भवन्त्यभिन्नस्वभावाः समेषु विषमेषु सत्पुरुषाः।।]

२. **अज्ज सहि केण गोसे कं पि मणे वल्लहं भरन्तेण।**
**अम्हं मअणसराहअहिअअव्वणफोडनं गीअम्।।८१।।**
[अद्य सखि केन प्रातः कामपि मन्ये वल्लभां स्मरता।
अस्माकं मदनशराहतहृदयव्रणस्फोटनं गीतम्।।]

कल्ये प्रातः। 'प्रत्यूषोऽहर्मुखं कल्यं, इत्यमरः। स्वां वल्लभां स्मरतां, रात्रौ मार्गगमनश्रमेण कथञ्चिदायाता निद्रा। अत एव अतिप्रत्यूषे निद्राभङ्गोत्तरं पुनः प्रियास्मरणमनुवृत्तमिति विरहातिशयो व्यज्यते। केन केनचित्। स्मरविशिखैराहतं यद् हृदयं तस्य व्रणानां विघट्टनं स्फोटनं यस्मिन्कर्मणि यथा भवति तथा गीतम्। कामबाणैर्विद्धस्य विरहिहृदयस्य पीडा प्रातः-काले कथञ्चित्सह्यवेदना जातापि, करुणकरुणेन पथिकगीतेन स्फुटितव्रणदधिकदुः-सहाभूदित्यर्थः। तद्धृदयस्य चित्तौत्सुक्यादिकं भावनया आत्मसम्बन्धि समभवदत एव प्रियतमविरहानलः समुददीप्यते भृशं प्रियचिन्तया नायिकागतस्यानुरागस्यातिशयः प्रीतयते।

भाविनः सपत्नीर्ष्यादुःखस्य भावनामात्रमपि सपत्नीजनं पीडयतीति काचित्प्रौढा स्ववयस्यामाह-

**आलोक्य मुग्धवध्वाः स्तनौ समुदन्यमहारम्भौ।**

**दीर्घं प्रथमगृहिण्या ह्यवसन्नकपोलया श्वसितम्।।८२।।**[१]

सम्मुदयन् उत्तिष्ठन् महान् आरम्भः प्रारम्भदशा ययोस्तौ। अवसन्नौ शुष्कौ कपोलौयस्या-स्तया। आरम्भदशायामेव स्तनयोरियान् परिणाहस्तर्हि पूर्णयौवने परस्पराश्लिष्टपीनपयोधराया अस्याः सौन्दर्य कीदृग्भावीति भावनीयमेवेति भावः। मुग्धवध्वा इत्यनेन 'साम्प्रतमस्या मुग्धता, पूर्णयौवनोपलब्धौ प्रवर्धमानसौन्दर्यामिमामालक्ष्य पतितकुचायां मयि शिथिलानुरागो भविष्यति वल्लभः' इति चिन्ताख्यसञ्चारिभावेन दीर्घनिःश्वासरूपानुभावेन च प्रथमपत्नीगतस्य नायकालम्ब-नस्यानुरागस्य परिपोषो भवतीति सहृदयैरास्वादनीयम्। गृहिणीपदेन-गृहप्रबन्धमात्रे तस्या अधिकारः स्याद्दयितस्य विषये तु मुग्धाया एव प्रभुत्वं भवेदिति चिन्तातिशयो ध्वन्यते। दीर्घं श्वसितमित्यनेन भाविनीं तामिमां हृदयवेदनां कस्मै प्रकाशयामीति निगूढो दुःखातिशयो ध्वन्यते। ''आयतिखेदकरं तदात्वेऽपि खेदयतीति निदर्शयन्कोऽपि सहचरमाह'' इति गङ्गाधरः।

शिथिलानुरागं नायकं श्रावयितुं काचित्करिकरेण्वोरनुरागं व्यपदेशेनाह-

---

१. **उट्ठन्तमहारम्भे थणए दट्ठूण मुद्धवहुआए।**

**ओसण्णकवोलाए णीससिअं पढमघरिणीए।।८२।।**

[उतिष्टन्महारम्भौ स्तनौ दृष्ट्वा मुग्धवध्वाः।

अवसन्नकपोलया निःश्वसितं प्रथमगृहिण्या।।]

**विकलस्यापि क्षुधया वल्लभकरिणीमुखं स्मरतः।**
**सरसो मृणालकवलो गजस्य कर एव संम्लानः।।८३।।**[1]

क्षुधया विकलस्यापि अत्यन्तं क्षुधातुरस्यापि। वल्लभायाः करिण्या मुखम्। कर एव संम्लान इत्यनेन क्षुधातिशायन्मृणालकवलं परित्यक्तुमपि न शक्नोति, प्रियास्मरणात्तं भोक्तुमपि न पारयतीति जडताख्यसञ्चारिभावोऽभिव्यज्यते। तथा च–मदमत्तत्वेन जगति प्रसिद्धः पशुर्गजोऽपि निजप्रेयस्यामेवं स्निह्यति, भवान्परमसहृदयोऽपि मामपहाय अन्यत्रानुरज्यसि, अहो भवतो दाक्षिण्यमिति गूढोपालम्भो ध्वन्यते। क्षुधाकुलस्यापीत्यनेन क्षुधया भोजनस्यावश्यकतायां सत्यामपि गजो न तं भुङ्क्ते, भवांस्तु मत्सत्तया उत्कण्ठापनयेन उत्कटावश्यकताऽभावेऽपि अन्याभिः सङ्गच्छते इत्युपालम्भेऽतिशयः सूच्यते। करिणीमुखमित्यनेन पूर्वं तस्या मुखे कवलं समर्प्य पश्चान्मया भोक्तव्यमिति मत्या रतेरतिशयः प्रतीयते। स्वभावतः सरसस्यापि मृणालस्य सरसो म्लान इति सरसताविशेषणेन सद्यस्कत्व जललवलाञ्छितत्वं च लक्ष्यते, ततश्च तथाविधस्यापि म्लानिवर्णनाद्विलम्बो व्यज्यते।

मानावलम्बनेऽपि प्रियतमेन सह दाक्षिण्येन वर्तितव्यमित्युपदिशन्ती काचिद्धीराया नायिकायाः प्रियतमेन सह परस्परसन्लापं वर्णयति–

**दयिते प्रसीद, कुपिता का, सुतनु त्वम्, परेऽस्ति कः कोपः।**
**कोस्तिपरो, नाथ त्वम्, किमिति हि, मम दुरितशक्तिरियम्।।८४।।**[2]

परे अपरस्मिन् स्नेहसम्बन्धरहिते इति यावत्। मम दुरितानामपुण्यानामियं शक्तिर्यत्त्वं स्वोऽपि परः संवृत्त इति भावः। मे अपुण्यानामित्यनेन, ताः किल पुण्यवत्यो यासु त्वमनुरज्य–सीति दयितश्लाघा चोपालम्भश्च सूच्यते। तथाच–सपत्नीस्नेहसक्ततया पर इव मयि व्यवहरसीत्यु–

---

१. **गरुअछुहाउलिस्स वि वल्लहकरिणीमुहं भरन्तस्स।**
**सरसो मुणालकवलो गअस्स हत्थे च्चिअ मिलाणो।।८३।।**
[गुरुकक्षुधाकुलितस्यापि वल्लभकरिणीमुखं स्मरतः।
सरसो मृणालकवलो गजस्य हस्त एव म्लानः।।]

२. **पसिअ पिए का कुविआ सुअणु तुमं परअणम्मि को कोवे।**
**को हु परो नाथ तुमं कीस अपुण्णाण मे सत्ती।।८४।।**
[प्रसीद प्रिये का कुपिता सुतनु त्वं परजनेः कः कोपः।
कः खलु परो नाथ त्वं किमित्यपुण्यानां मे शक्तिः।।]

पालम्भेन नायिकायाः सधैर्यः प्रणयकोपोऽभिव्यज्यते। दयिते इति सम्बोधनेन 'त्वं मे अत्यन्तं प्रेयसी, अत एव त्वत्प्रसादं विना न मे मनस्तोषः' इति प्रियतमेव यथा निजप्रणयातिशयः सूच्यते तथा परः कोऽस्ति ? इति प्रश्नस्योत्तरे 'नाथ त्वम्' इति सम्बोधयन्त्या तयापि 'प्रियपत्न्या मम नियमतः स्वामी सन्नपि मां मुखेन दयिते इति व्यपदिशन्नपि त्वं पर इवाविचारसुखदुः-खपरिणामं व्यवहरसि, यतः प्रत्यक्षमेव मत्सपत्नीषु स्निह्यसि, अहो तेऽलौकिकः प्रणयः स्नेहसद्व्यवहारश्चेति गूढोपालम्भेऽतिशयो ध्वन्यते।

विप्रलब्धाया विरहवेदनामनुरागातिशयं च सूचयन्ती दूती नायकमाह-

**निमिषमिव हि जागरितं रात्रेः प्रथमार्धमेष्यसि त्वमिति।**
**सन्तापपरवशाया वर्षमिव व्यतिगतं शेषम्।।८५।।**[1]

त्वमेष्यसि इत्युत्साहेन रात्रेः प्रथमार्धं निमिषमिव निमेष इव जागरितम्, तयेति शेषः। रात्रेः प्रथमार्धमित्यत्यन्तसंयोगे द्वितीया। सम्पूर्णेऽप्यर्धरात्रे सा सोत्साहं जागरितवतीति भावः। शेषम् अवशिष्टमर्द्धं सन्तप्तायास्तस्या नायिकाया वर्षमिव व्यतिक्रान्तम्। शेषोऽस्या-स्तीत्यर्श आद्यच्, अन्यथा क्लीवतानुपपत्तेः। संस्कृते तु पुंस्त्वमेव साधु। तव समागमस्य भावना-मात्रेणापि कालहरणं न दुःखकरम्, वियोगे तु घटिका अपि वर्षायन्त इति नायकानुरागो ध्वन्यते। भावनामात्रेणापि तावान्सुखातिशयस्त्वत्समागमे तु किं वाच्यं तस्या इति तदतिशयो द्योत्यते।

वैचित्त्येन भ्राम्यन्तीं प्रोषितपतिकां भूतोन्मादभयात्परिहरन्तं जनं प्रति तत्सखीं सदैन्यमाह-

**अवलम्बध्वं भ्राम्यति नेयं ग्रहलङ्घिता न शङ्कध्वम्।**
**आकस्मिकघनरसितोद्भ्रान्तत्रस्तान्तरा पथिकजाया।।८६।।**[2]

---

१. **एहिसि तुमं त्ति णिमिसं व जग्गिअं जामिणीअ पढमद्धम्।**
**सेसं संतावपरव्वसाइ वरिसं व वोलीणम्।।८५।।**
[एष्यसि त्वमिति निमिषमिव जागरितं यामिन्याः प्रथमार्धम्।
शेषं सन्तापपरवशाया वर्षमिव व्यतिक्रान्तम्।।]

२. **अवलम्बह मा सङ्कह ण इमा गहलङ्घिआ परिब्भमइ।**
**अत्थक्कगज्जिउब्भन्तहित्थहिअआ पहिअजाआ।।८६।।**
[अवलम्बध्वं मा शङ्कध्वं नेयं ग्रहलङ्घिता परिभ्रमति।
आकस्मिकगर्जितोद्भ्रान्तत्रस्तहृदया पथिकजाया।।]

भूतादिग्रहैः लङ्घिता आक्रान्ता इयं न भ्राम्यति। इमामवलम्बध्वम्। अवलम्बनदानेन गमनान्निवारयत। न शङ्कध्वम् उन्मादशङ्कया नोद्विजत। आकस्मिकं यद् घनरसितं मेघगर्जितं तेनोद्भ्रान्तं त्रस्तं च अन्तरं मानसं यस्याः सा। सहसा मेघगर्जनादेव तावानुत्कण्ठोदयः, प्रावृषि निरन्तरं वर्षत्सु वारिदेषु तु न जाने किं भावीति प्रोषितपतिकाया विरहवेदनातिशयो द्योत्यते। 'हित्थम्' त्रस्तम्।

नायिकाया गुणोत्कर्षं सूचयन्ती सखी बहुवल्लभाप्रणयिनं नायकं मधुकरव्यपदेशेनाह–

**केसररजःसमूहे मकरन्दो भवति सरसिजे यावान्।**
**अन्यत्रापि हि तावांस्तदा भ्रमन् शोभसे भ्रमर।।८७।।**[१]

सरसिजे, केसररजसां किञ्जल्कपरागाणां समूहे।'किञ्जल्कः केसरोऽस्त्रियाम्' इत्यमरः। उभयत्राप्याधारतया सप्तमी। कमलगतकेसररजःसमूहे इति तात्पर्यम्। यावान् मकरन्दो रसो भवति, अन्यत्रापि पुष्पे तावानेव मकरन्दो भवेत्तदा भ्रमन् शोभसे। भ्रमरेतिसम्बोधनेन रसिकतया नानापुष्पेषु भ्रमणं यथा तत्स्वभावस्तथा तवापि नानाविधस्त्रीलम्पटत्वमित्याक्षेपः। तथा च–न तावानन्यमहिलासु गुणोत्कर्षों यावान्मत्सख्याम्, तथापि त्वमन्यत्र व्रजसि। अहो ते गुणपरिचयवैमुख्यमित्युपालम्भो ध्वन्यते। 'स्वस्य गुणोत्कर्षं ख्यापयन्ती काचित्कान्तमाह–इति गङ्गाधरः। स्वमुखेन स्वगुणवर्णने न दाक्षिण्यमिति मन्मतिः।

स्वभावसुन्दराणां विकृतिरपि श्रियमेव तनोति न वैरूप्यमिति निदर्शयन्कोऽपि सहचरमाह–

**प्रेक्षन्तेऽनिमिषाक्षाः पथिका हलिकस्य पिष्टपाण्डुरिताम्।**
**तनयां दुग्धसमुद्रोत्तरत्सुलक्ष्मीमिव सतृष्णाः।।८८।।**[२]

---

१. **केसररअविच्छड्डे मअरन्दो होइ जेत्तिओ कमले।**
**जइ भमर तेत्तिओ अण्णहिंपि ता सोहसि भमन्तो।।८७।।**
[केसररजःसमूहे मकरन्दो भवति यावान्कमले।
यदि भ्रमर तावानन्यत्रापि तदा शोभसे भ्रमन्।]

२. **पेच्छन्ति अणिमिसच्छा पहिआ हलिअस्स पिट्ठपण्डुरिअम्।**
**धूअं दुद्धसमुद्दुत्तरन्तलच्छिं विअ सअह्ला।।८८।।**
[प्रेक्षन्तेऽनिमिषाक्षाः पथिका हलिकस्य पिष्टपाण्डुरिताम्।
दुहितरं दुग्धसमुद्रोत्तरल्लक्ष्मीमिव सतृष्णाः।।]

अनिमिषनयना देवा दुग्धसमुद्रादुत्तरन्तीमत एव पाण्डुरितां लक्ष्मीं यथापश्यन् तथा सतृष्णाः सलालसाः पथिकाः पिष्टेन तण्डुलगोधूमादिचूर्णेन पाण्डुरितां हालिकस्य तनयामनिमिषाः सन्तः प्रेक्षन्ते। तथा च-अस्माक मध्ये कस्य वा भवेल्लाभसौभाग्यमिति यथा तेऽचिन्तयंस्तथैतेऽपीति पथिकौत्सुक्येन हालिकसुतायाः सौन्दर्यातिशयो ध्वन्यते। 'हालिकसुतामपि सतृष्णं पश्यतामेषां गृहे वासो न देयः' इति सुहृदं प्रति नागरिकस्योक्तिरिति केचित्।

कलहान्तरितायास्तस्याः शीघ्रमेव मनोवेदनाऽपनेयेती दूती नायकमाह-

**कं स्मरसीति निगदिते कः किल मेऽस्तीति जल्पन्त्या।**

**उद्विग्नं च रुदत्या वयमपि बहु रोदिता हि तया।।८९।।**[१]

मम कः स्नेहानुवृत्तिपरोऽस्तीति जल्पन्त्या। प्रियतमो यदि ममाभविष्यत्तर्हि न मामेवमखेदयिष्यदिति भावः। सोद्वेगं रोदनेन प्रियतमप्रणयविच्छेदस्मरणाद्दुःखातिशयो जात इत्याकूतम्। तस्या रोदनेन अहमपि अरोदमिति भावः। तथा च निरन्तरमपराधैस्तव प्रणयभङ्गानुमानान्निरतिशयं खिन्ना सा त्वरितमनुनेयेति नायकं प्रत्यभिव्यज्यते।

बहुविधेनाप्यनुनयेन मानमत्यजन्तीं नायिकां सखी सरोषमाह-

**पदयोः पतितमभव्ये नोत्थापयसि प्रियं नु किमिदानीम्।**

**अवसानमेतदेव प्रेम्णो दूरं गतस्यापि।।९०।।**[२]

---

१. **कस्स भरिसि त्ति भणिए को मे अत्थि त्ति जम्पमाणाए।**
**उव्विग्गरोइरीए अम्हे वि रुआविआ तीए।।८९।।**
[कस्य स्मरसीति भणिते को मेऽस्तीति जल्पमानया।
उद्विग्नरोदनशीलया वयमपि रोदितास्तया।।]

२. **पाअपडिअं अहव्वे किं दाणिँ उट्ठवेसि भत्तारम्।**
**एअं विअ अवसाणं दूरं पि गअस्स पेम्मस्स।।९०।।**
[पादपतितमभव्ये किमिदानीं नोत्थापयसि भर्तारम्।
एतदेवावसानं दूरमपि गतस्य प्रेम्णः।।]

अभव्ये इति सखीं प्रति सप्रणयरोषं सम्बोधनम्। दूरं गतस्यापि अतिप्रवृद्धस्यापि प्रणयस्य एतदेव पदप्रणामरूपमेव अवसानं चरमसीमा। एवं च, इदानीमपि यद्यनुनयं न ग्रहीष्यसि तर्हि प्रियतमस्य द्वेष्या भविष्यसीति सूच्यते। दूरं गतस्यापीत्यपिना 'अतिमानं मानं कुर्वती त्वं प्रणयस्य चरमसीमानं परीक्षसे, ततश्च भवदभीष्टा सेयं प्रेम्णः परा काष्ठैवेति' नायिकायाः प्रेमातिशयकामना सूच्यते। इह भर्तारमितिस्थाने प्रियमितिपदं तु 'एवं त्वत्प्रणयपरिपालनेनायमपि तेऽवश्यं प्रीतिपात्रतामर्हति, ततश्चैतादृशं प्रियमपि प्रणमन्तं किं नोत्थापयसि' इति भर्तृपदापेक्षयाधिकमेव स्वारस्यं पुष्णातीति सहृदयाः परीक्षेरन्।

आत्मनो विपरीतरतपाटवप्रकटनेन शृण्वन्तं कान्तमुत्कण्ठयन्ती काचित्सखीमाह–

**तटविनिहिताग्रहस्ता वारितङ्गैर्भ्रमन्नितम्बेयम्।**

**शालूरी प्रतिबिम्बे विभाति पुरुषायमाणेव।।९१।।**[1]

भ्रमन्नितस्ततः प्रचलन्नितम्बो यस्याः सा। शालूरी मण्डूकी, 'भेके मण्डूकवर्षाभूशा-लूरप्लवदर्दुराः' इत्यमरः। प्रतिबिम्बे जलान्तः स्वीयप्रतिच्छायाया उपरि, विपरीतरतोचितं पुरुषायितं कुवाणेव प्रतिभाति। 'अस्मिन्बन्धेऽहमपि नितम्बपरिचालनचतुरास्मि, येन भवेत्ते मनस्तोषः' इति शृण्वन्तं कान्तं प्रत्यभिव्यज्यते।'आत्मनो विपरीतरताभिलाषं सूचयन्ती नायिका कान्तमाह' इति गङ्गाधरावतरणम्।

कुसुम्भवाटिकायां कृतसुरता काचिदात्मनः सुरतचिह्नगोपनार्थमाह–

**सीत्कृतमुखपरिवेपितमणितविधुतहस्तशिञ्जितव्यानि।**

**शिक्षन्तां कुलबालाः कुसुम्भ युष्मत्प्रसादेन।।९२।।**[2]

---

१. **तडविणिहिअग्गहत्था वारितरङ्गेहिँ घोलिरणिअम्बा।**

**सालूरी पडिबिम्बे पुरिसाअन्तिव्व पडिहाइ।।९१।।**

[तटविनिहिताग्रहस्ता वारितङ्गैर्घूर्णनशीलनितम्बा।

शालूरी प्रतिबिम्बे पुरुषायमाणेव प्रतिभाति।।]

२. **सिक्किरिअमणिअमुहवेविआइँ धुअहत्थसिञ्जिअव्वाइं।**

**सिक्खन्तु वोडहीओ कुसुम्भ तुम्ह प्पसाएण।।९२।।**

[सीत्कृतमणितमुखवेपितानि धुतहस्तशिञ्जितव्यानि।

शिक्षन्तु कुमार्यः कुसुम्भ युष्मत्प्रसादेन।।]

सीत्कृतं सीत्कारः, मुखपरिवेपितं 'स्फुरितकादिषु' चुम्बनविशेषेषु अधराद्यपसारणार्थं मुखस्य परिचालनम्। 'वदने प्रवेशितं चौष्ठं मनागपत्रपावग्रहीतुमिच्छन्ती स्पन्दयति स्वमोष्ठं नोत्तरमुत्सहत इति स्फुरितकम्' इति वात्स्यायनः। मणितं रते कूजितविशेषः। विधुतहस्तं यथा स्यात्तथा शिञ्जितव्यं भूषणझणत्कारः। एतानि सीत्कृतादीनि नखक्षताधरखण्डमुष्ट्याघातैरपि भवन्ति, कण्टकवेधेनापि च भवन्ति। एवं च सीत्कारदयो मम कुसुम्भकण्टकक्षताज्जाताः, न तु सुरतेनेति नायिकाकृतं वृत्तसुरतगोपनं ध्वन्यते। मूलस्थितस्य 'बोडही' शब्दस्य कुमारी तरुणी वेति सन्देहग्रस्तेव गङ्गाधरादिकृता छाया। कुलबालापदेन तु तदुभयं सङ्गृह्यते। स्वभावतो लज्जाशालिनीनां कुलललनानां लज्जाप्रतिद्वन्द्विसीत्कारदिकं को वा शिक्षयेदतो हे कुसुम्भ भवत एवायं प्रसादः। एवं च नाहं सुरतकाले जायमानमेवंविधं वैयात्यं जानामि, कुलजत्वादिति स्वस्य सारल्यं सूच्यते। 'शिक्षन्तु' इति गङ्गाधरटीकापुस्तकेषूपलभ्यमानः परस्मैपदपाठस्तु व्याकरणविरुद्ध एव।

शृण्वन्तं निजमुपपतिं प्ररोचयितुं काचित्तं प्रत्यनुरागातिशयं सूचयन्ती व्यपदेशेनाह–

**यावन्मात्रा रथ्या नितम्ब तावान्कथं न जातोऽसि।**

**यत्स्पृश्यते हि गुरुजनलज्जापसृतोऽपि सुभगोऽसौ।।९३।।**[1]

यावत्परिमाणं यस्या इति यावन्मात्रा। प्रमाणे मात्रच्। यत् येन, गुरुजनानां लज्जावशाद् रथ्यायाः प्रान्तभागेन अपसृतोऽप्यसौ स्पृश्यते। अस्मान्परिहृत्याऽपसृतस्यापि तव स्पर्शमात्रमपि अस्माभिः सबहुमानमाशास्यते, पश्य ते सौभाग्यमिति सुभगपदसहकारेण ध्वन्यते। हस्तादिना स्पर्शे सति लोकानां परिज्ञानं स्यात् जनसम्बाधे नितम्बस्पर्शे तु न कस्यचित्सन्देहः प्रत्युतानन्दा-वाप्तिरित्याशयः।

सङ्केतनिकेतनीकृते नास्मिंस्तृणलतागृहे त्वमागतः इति कञ्चन कामुकं सूचयन्ती दूती तस्य जनसञ्चारशून्यतां वर्णयति–

---

१. **जेत्तिअमेत्ता रच्छा णिअम्ब कह तेत्तिओ ण जाओसि।**

**जं छिप्पइ गुरुअणलज्जिओ सरन्तो वि सो सुहओ।।९३।।**

[यावत्प्रमाणा रथ्या नितम्बं कथं तावन्न जातोऽसि।

येन स्पृश्यते गुरुजनलज्जापसृतोऽपि स सुभगः।।]

**मौक्तिकमायतकण्ठो मरकतसूचीनिविद्धमिव पिबति।**

**प्रावृट्काले बर्ही तृणाग्रसङ्गतमुदकबिन्दुम्।।९४।।**[१]

बर्ही मयूरः प्रावृटकाले मरकतसूचीनिविद्धं हरितवर्णस्य गारुत्मतमणेः सूच्या तनुशलाकया निबिद्धं कृतच्छिद्रतया प्रोतं मौक्तिकमिव स्थितं तृणाग्रसङ्गतं जलबिन्दूम्, आयतकण्ठः सन् पिबति। पानसमये जलबिन्दुपर्यन्तं चञ्चुसञ्चालनार्थं लम्बायमानग्रीवो भवतीत्यर्थः। वर्षाकाले जलबिन्दुसुन्दरतृणपटलशोभास्वभावस्य, पानकाले मयूरस्वभावस्य च वर्णनात्स्वभावोक्तिः। वृष्टेरनन्तरं तृणाग्रलग्नो जलबिन्दुर्मयूरेण पीयत इत्यनेन स्थानस्य जनसञ्चारशून्यता सूच्यते। [जनसञ्चारे सति कम्पनेन तृणाग्रभागे जलबिन्दोरवस्थितिर्न स्यात्।] तेन त्वं सङ्केतस्थानेऽस्मिन्नागत इति दूत्या ध्वन्यते। मरकतसूच्या मौक्तिकवेधवत् दुष्प्रापया तया नायिकाया तव समागमोऽसम्भावित एवेति दूती सूचयतीति केचित्। 'तृणलतागृहं सङ्केतस्थानमिति जारं श्रावयन्ती काप्याह' इति गङ्गाधरः।

अभिसारसमये कञ्चुकपरिधानोत्तरं जायमानां नायिकालावण्यशोभां कामुकमनस्तोषाय दूती वर्णयति–

**भाति सुतनुकुचपृष्ठं सुनीलकञ्चुकभृतोर्वरितम्।**

**जलभृतसलिलधरान्तरदरोद्गतं चन्द्रबिम्बमिव।।९५।।**[२]

---

१. **मरगअसूईविद्धं व मोत्तिअं पिअइ आअअग्गीओ।**
**मोरो पाउसआले तणग्गलग्गं उअअबिन्दुम्।।९४।।**
[मरमतसूचीविद्धमिव मौक्तिकं पिबत्यायतग्रीवः।
मयूरः प्रावृट्काले तृणाग्रलग्नमुदकबिन्दुम्।।]

२. **अज्जाइ णीलकञ्चुअभरिउव्वरिअं विहाइ थणवट्टम्।**
**जलभरिअजलहरन्तरदरुग्गअं चन्दबिम्ब व्व।।९५।।**
[आर्याया नीलकञ्चुकभृतोर्वरितं विभाति स्तनपृष्ठम्।
जलभृतजलधरान्तरदरोद्गतं चन्द्रबिम्बमिव।।]

सुन्दरे नीलकञ्चुके भृते च उर्वरितं च। नीलकञ्चुलिकामापूर्य महत्त्वादुर्वरितमित्यर्थः। सुतनोः कुचमण्डलम्, जलभृततया सान्द्रश्यामस्य सलिलधरस्य मेघस्य अन्तरात् दरोद्गतम् ईषन्निर्गतं चन्द्रमण्डलमिव भाति। अनया चन्द्रोपमया, परमाह्लादजनकगौरमञ्जुलशरीरयष्टिः। सा त्वामद्यैवाभिसरिष्यति, पश्य ते भाग्यवैभवमिति वस्तु दूत्या नायकं प्रत्यभिद्योत्यते।

प्रवासाय कृतोद्यमं वल्लभं निवारयितुं काचिद्वसन्तसमयस्य पथिकजनभयहेतुतां वर्णयति–

**पथिकः पथिकस्य कथां राजविरुद्धामिवाह साशङ्कम्।**
**यत आम्राणां पर्णं तत ईषन्निर्गतं किमपि।।९६।।**[१]

आम्रवृक्षाणां यतो यस्मात् स्थानात् पत्रं निर्गच्छति ततः। ईषत्किञ्चिद्दृश्यमानं किमपि निर्गतमिति राजविरुद्धां कथामिव सभयशङ्कं पथिकः पथिकस्याह कथयति। अङ्कुर इत्यनुक्त्वा किमपीति कथनेन नामग्रहणेऽपि भयोत्पादात्पथिकस्य भयाकुलता द्योत्यते। राजविरुद्धक-थाजल्पेन यथा वक्तुर्भयं भवति तथा पथिकस्यापि आम्राङ्कुरकथाकथने भीतिरिति भावः। ईषन्निर्गतमित्यनेन वसन्तविजृम्भणसूचिका यावदाम्राणां मञ्जरी समग्रं न निर्गच्छति तावदेव प्रवासः समापनीय इति पथिकं प्रत्यभिव्यज्ते। तथा च वसन्तसमये प्रवासं गतस्य तवापि सेयं दशा भाविनीति परिहर गमनमिति नायकं प्रति नायिकायाभिव्यज्यते। अस्यां गाथायां 'राअविरुद्धं व' इत्यस्य 'राजविरुद्धामपि' इति गङ्गाधरच्छाया तु अनक्षरर्थत्वाद्विच्छायैव।

स्वप्ने प्रियसन्दर्शनेन विनोदयन्ति विरहवेदनां वनिताः प्रायश इति विरहविनोदप्रस्तावे सखीभिरुक्ता कदाचिदात्मनोऽनुरागं प्रथयन्त्याह– सखीभिरुक्ता काचिदात्मनोऽनुरागं प्रथयन्त्याह–

**धन्यास्ता महिला या दयितं स्वप्नेऽपि वीक्षन्ते।**
**तेन विना मम निद्रैव नैति का प्रेक्षते स्वप्नम्।।९७।।**[२]

---

१. **राअविरुद्धं व कहं पहिओ पहिअस्स साहइ ससङ्कम्।**
**जत्तो अम्बाण दलं तत्तो दरणिग्गअं किं पि।।९६।।**
[राजविरुद्धामपि कथां पथिकः पथिकस्य कथयति सशङ्कम्।
यत आम्राणां दलं तत ईषन्निर्गतं किमपि।।]

२. **धण्णा ता महिलाओ जा दइअं सिविणए वि पेच्छन्ति।**
**णिद्द व्विअ तेण विणा ण एइ का पेच्छए सिविणम्।।९७।।**
[धन्यास्ता महिला या दयितं स्पप्नेऽपि प्रेक्षन्ते।
निद्रैव तेन विना नैति का प्रेक्षते स्वप्नम्।।]

नैति नागच्छति। दयितदर्शनं विनैव स्वस्थानां यासां निद्रा आयाति, प्रियप्रणयरहितास्ता न धन्या इति स्तुतिव्याजेन निन्दाप्रदर्शनाद्व्याजस्तुतिर्वाच्योऽलङ्कारः। तेन च ताः अधन्याः प्रियप्रणयशालिनी अहं तु धन्येति व्यतिरेकालङ्कारो ध्वन्यते। पर्यन्ते तु तद्विरहिण्या मम स्वप्नेऽपि तद्दर्शनं सुदुर्लभमिति प्रियतमरतिपरिपोषाद्विप्रलम्भध्वनिरित्यलम्।

लावण्यशालिनीमपि सारल्याद्वन्यवेषभूषितां काञ्चन सुन्दरीमवधीरणदृशा पश्यन्तं नायकं प्रतिबोधयितुं दूती अन्यापदेशेनाह–

**परिरब्धकनककुण्डलगण्डस्थलमञ्जुनोः श्रवसोः।**

**अपि समयान्तरवशतो ध्रियते किल तालवृन्तयुगम्।।९८।।**[१]

परिरब्धे चुम्बिते स्पृष्टे इति यावत् कनककुण्डले येन ईदृशे गण्डस्थले मञ्जुनोः शोभाशालिनोः। श्रवसोः कर्णयोरपि समयान्तरवशात् तालवृन्तयुगं तालपत्रकर्णभूषणद्वयं ध्रियते। परिरब्धेत्यनेन कपोलयोर्निबिडः स्पर्शो लक्ष्यते, तेन च उत्तुङ्गमांसलतया नायिकाकपोलयोः सौन्दर्यं ध्वन्यते। तथा च–कनककुण्डलमण्डितयोर्निसर्गसुन्दरीकपोलयोर्यथा समयान्तरे तालपत्रताटङ्कधारणेनापि न परिहीयते शोभा, तथैव नेयं सरलवेषभूषिता निसर्गसुन्दरी तिरस्कारदृशा विलोकनीयेति दूत्याभिद्योत्यते। अस्यां गाथायां 'तत्थवि' इति पाठः, 'तत्रापि' इति च्छायाकरणं च केषाञ्चिदविचार एव। तत्रापि श्रवसोरिति विधेयाविमर्शात् [याभ्यां कनककुण्डले परिरब्धे तयोः श्रवसोरिति व्यस्तपाठ एव तत्स्वारस्यात्]। 'पूर्वं समृद्धस्य कालवशेन गलिताविभवस्य कस्यापि मनःसमाधानाय दूत्यन्यापदेशेनाह' इति गङ्गाधरावतरणम्।

प्रियतमासमागमसमुत्कण्ठमानानां प्रवासिनामुत्साहोत्कण्ठावशान्मध्याह्नतापोऽपि न प्रतिबन्धको भवतीति निजसहृदयतां सूचयन्कश्चिन्नागरिकः सहचरमाह–

---

१. **परिरद्धकणअकुण्डलगण्डत्थलमणहरेसु सवणेसु।**
**अण्णअसमअवसेण अ पहिरज्जइ तालवेण्टजुअम्।।९८।।**
[परिरब्धकनककुण्डलगण्डस्थलमनोहरयोः श्रवणयोः।
अन्यसमयवशेन [च] परिध्रियते तालवृन्तयुगम्।।]

**पथिकस्य हरति तापं ग्रीष्मे मध्याह्ननिर्गतस्यापि।**

**हृदयस्थितजायामुखचन्द्रज्योत्स्नाजलप्रवाहोऽयम्।।९९।।**[१]

अहर्निशं ध्यानवशात् हृदये स्थितो यो जायामुखचन्द्रः, तस्य ज्योत्स्नाजलप्रवाहः। सुधांशुकिरणेभ्यो यदिदं चन्द्रकान्तमणिषु रसप्रस्रवणं भवति तदाभिषेकाद् ग्रीष्मो यथा न भवति सन्तापः, प्रत्युत काचिदनिर्वचनीया निवृत्तिः सम्पद्यते, तथैव मध्याह्ने गृहगमानार्थं पथि चलतां पथिकानामपि प्रियतमामुखस्मरणादित्याशयः। जायापदेन दम्पत्योः स्वाभाविकः प्रेमबन्धः परामृश्यते, तेन च नायिकालम्बनाया रतेरतिशयो ध्वन्यते। 'कथमेतादृशे ग्रीष्मे मम प्रिय आगमिष्यतीति चिन्तयन्तीं नायिकां सख्याह' इति गङ्गाधरः।

अनवसरे प्रार्थिताया नायिकाया भ्रूभङ्गीमभिवीक्ष्य विमनायमानं नायकं विनोदयन्ती दूती मधुरमाह–

**वद को न कुप्यति जनो निवेद्यमानो ह्यदेशकाले तु।**

**रतिसङ्गता रुदन्तं प्रियमपि शपते सुतं माता।।१००।।**[२]

देशयुक्तः कालो देशकालः न देशकालोऽदेशकालस्तस्मिन्निति मध्यमदलोपिसमासो मूलैकवचनानुरोधात्। अस्थाने असमये चेत्यर्थः। शपते क्रोधेनाक्रुश्यति। प्रियमपीत्यनेन अनवसरमालोक्यैव तया प्रत्याख्यातोऽसि न पुनरनुरागभङ्गादिति नायकं प्रति सूच्यते।

---

१. **मज्झह्नपत्थिअस्स वि गिम्हे पहिअस्स हरइ संतावम्।**
**हिअअट्ठिअजाआमुहमअङ्कजोह्नाजलप्पवहो।।९९।।**
[मध्याह्नप्रस्थितस्यापि ग्रीष्मे पथिकस्य हरति सन्तापम्।
हृदयस्थितजायामुखमृगाङ्कज्योत्स्नाजलप्रवाहः।।]

२. **भण को ण रुस्सइ जणो पत्थिज्जन्तो अएसकालम्मि।**
**रतिवाअडा रुअन्तं पिअं वि पुत्तं सवइ माआ।।१००।।**
[भण को न रुष्यति जनः प्रार्थ्यमानोऽदेशकाले।
रतिव्यापृता रुदन्तं प्रियमपि पुत्रं शपते माता।।]

उपसंहरति–

**अत्र चतुर्थं विरमति निसर्गरम्यं शतं हि गाथानाम्।**

**मधुरत्वेनामृतमपि यच्छ्रुत्वा नो लगति हृदये।।१०१।।**[1]

शतं शतकम्। यच्छ्रुत्वा अमृतमपि मधुरत्वेन हृदये स्थानं न लभत इत्यर्थः।

**(इति चतुर्थशतकम्)**

---

१. **एत्थ चउत्थं विरमइ गाहाणँ सअं सहावरमणिज्जम्।**

**सोऊण जं ण लग्गइ हिअए महुरत्तणेण अमअं पि।।१०१।।**

[अत्र चतुर्थं विरमति गाथानां शतं स्वभावरमणीयम्।

श्रुत्वा यन्न लगति हृदय मधुरत्वेनामृतमपि।।]

------

# पञ्चमशतकम्

प्रियतमापराधैर्मुहुर्मुहुः खेदिता मानिनि हृदयामन्त्रणव्याजेन प्रियतममुपालभते–

**दह्यस्व दह्यसे चेत्स्फुटसि स्फुट पच्यसेऽथ पच्यस्व।**

**हृदय गलितसद्भावः परिशेषित एव स खलु मया।।१।।**[१]

हे हृदय! विरहे यदि त्वं दह्यसे अनलज्वालामिवानुभवसि तर्हि दह्यस्व। पच्यसे पुटपाकस्येव वेदनामनुभवसि तर्हि पच्यस्व। दाहक्काथोत्तरमथ स्फुटसि विदीर्यसे तर्हि स्फुट। दाह क्काथ-स्फोटानां क्रमिकत्वमन्वयेन योजनीयम्। दह्यसे इत्यादिषु कर्मणः कर्तृतया यगात्मनेपदे। यः खलु तादृशमनिर्वचनीयं क्लेशं साहयामास स किल गलितः सद्भावः स्नेहहतको मया परिशेषित एव परिसमापित एव। प्रियतमस्नेहवशाद् हृदयदाहमनुभवन्त्या अपि स्नेहपरित्यागोक्तेर्बाधितत्वात्स्नेहाभावस्याभासरूपतया आक्षेपालङ्कारः।'निषेधाभासमाक्षेपं बुधाः केचन मन्वते'। तथा च त्वद्गतस्नेहेनैवाहं हृदयदाहादिदारुणदुःखमनुभवामि, अत एव स स्नेहो निःशेषयितुमिष्टोऽपि मया न तथा पार्यते, त्वं तु तथापि विप्रियकरणान्न निवर्तते इति प्रियतमं प्रति सरोषातिशयमुपालम्भोऽभिव्यज्यते। 'प्रणामकार्तिणी मानिनी नायकानुरक्तं स्वहृदयमाह' इति गङ्गाधरावतरणम्। अत्र परिशेषित इत्यस्य 'परिच्छिन्नो निर्णीतः' इत्यर्थस्तु गङ्गाधराभ्यूहितोऽक्षरैरनवसेय एव। तन्मते गलितः सद्भावो यस्य, स दयितो मया निर्णीत इत्यर्थः परिकल्पनीयो भवेत्।

शृण्वन्तमुपपतिं प्रति 'यवक्षेत्रं सङ्केतस्थानम्' इति सूचयन्ती काचिदन्येषां तत्र गमने भयप्रदर्शनार्थमाह–

---

१. **डज्झसि डज्झसु कट्टसि कट्टसु अह फुडसि हिअअ ता फुडसु।**
**तह वि परिसेसिओ च्चिअ सोहु मए गलिआसब्भावो।।१।।**
[दह्यसे दह्यस्व क्वथ्यसे क्वथयस्व अथ स्फुटसि हृदय तत्स्फुट।
तथापि परिशेषित एव स खलु मया गलितसद्भावः।।]

**दृष्ट्वा विशालतुण्डाग्रनिर्गतं निजसुतस्य दंष्ट्राग्रम्।**
**क्रोडी विनापि कार्यं चरति यवान्ग्रामसन्निधानेऽपि।।२।।**[१]

विशालं यत्तुण्डं मुखं तदग्रे निर्गतम्। क्रोडी सूकरी। 'क्रोडो भूदार इत्यपि' इत्यमरः। कार्य विनापि आवश्यकतां विनापि। सुतस्य विशालदंष्ट्राग्राद्भयभीता न केचिदनिष्टं कर्तुं प्रभवेयुरित्याशयेन ग्रामनिकटेऽपि यवान् भक्षयतीत्यर्थः। क्रोडी सुतेन सह भ्रमतीत्यनेन द्वयोः सूकरयोर्मध्ये गमनं सिंहस्यापि भयावहं किं पुनरन्यस्येति सूचनाल्लोकानां गमननिवारणे तात्पर्यं ध्वन्यते। विनापि कार्यमित्यनेन तृप्तापि सा यवक्षेत्रे भ्राम्यति, अत एव न तस्या आगमने समयनियमो नापि च निवृत्तेः सम्भावनेति आत्यन्तिको जनसञ्चाराभावः सूच्यते। क्रोडीति स्त्रीत्वद्योतकप्रत्ययेन पशुषु मातर्येव प्रेमाधिक्यात् 'द्वादशपुत्रायास्तस्याः कियन्तो वा सुता मातुः स्नेहेन तस्याः सहायतायै आगच्छेयुरिति न निश्चयः' इति भयप्रदर्शनातिशयो व्यज्यते। तथा च 'ग्रामनिकटवर्तिन्यपि यवक्षेत्रे न भवद्भिर्गन्तव्यम्' इति अन्यान्प्रति, 'जनसञ्चारशून्ये तस्मिन्निर्भयं सङ्गन्तव्यम्' इति चोपपतिं प्रति ध्वन्यते।

सर्वसमर्थे ग्रामनायके तस्मिन्कृतप्रणयायास्तव तदभिसारादिषु न किञ्चिद्भयमिति नायिकां सान्त्वयन्ती दूती अन्यापदेशेनाह–

**हेलाकराग्रकर्षितजलरिक्तं सागरं कलयन्।**
**जयतादविहतबडवाग्निभरितगगनो गणाधिपतिः।।३।।**[२]

हेलापुरस्सरं कराग्रेणाकर्षितं यज्जलं तेन रिक्तं सागरं कलयन् प्रकाशयन् सन्। जलनिग्रहात् अविहतेन निष्प्रतिबन्धं प्रवृद्धेन बडवाग्निना भरितं गगनं येन ईदृशो गणाधिप–

---

१. **दट्ठूण रुन्दतुण्डग्गणिग्गअं णिअसुअस्स दाढग्गम्।**
**भोण्डी विणावि कज्जेण गामणिअडे जवे चरइ।।२।।**
[दृष्ट्वा विशालतुण्डाग्रनिर्गतं निजसुतस्य दंष्ट्राग्रम्।
सूकरी विनापि कार्येण ग्रामनिकटे यवाञ्श्चरति।।]

२. **हेलाकरग्गअड्ढिअजलरिक्कं साअरं पआसन्तो।**
**जअइ अणिग्गअवडवग्गिभरिअगगणो गणाहिवई।।३।।**
[हेलाकराग्राकृष्टजलरिक्तं सागरं प्रकाशयन्।
जयत्यनिग्रहबडवाग्निभृतगगनो गणाधिपतिः।।]

तिर्विनायको जयतात् इति वाच्योऽर्थः। अनन्तरं तु गणस्य ग्राममण्डलस्याधिपतिरिति शब्दशक्त्युद्भवेनानुरणनेन "हेलयैव करेण ग्रामात्सङ्ग्राह्येण शुल्केन अग्रे प्रथममेव सम्पूर्णस्य द्रव्यसामर्थ्यस्यायत्तीकृतत्वाद् ग्रामे न कश्चित्तत्प्रतिद्वन्द्वी, अत एव अविहतं स ग्रामे व्याप्तप्रभावः" इति वक्रया दूत्या वैशिष्ट्यात् ग्रामनायके तस्मिन्नाहितस्नेहाया न ते लोकेभ्यो भयमित्यर्थान्तरं ध्वन्यते। जयतादिति आशीरर्थकेन तातङा 'अहं तस्याः प्रत्यहं शुभाशंसिना' इत्यात्मपक्षपातोऽभिव्यज्यते।

शृण्वन्तीं काञ्चन सुन्दरीमनुरञ्जयितुं स्वरसिकताप्रदर्शनाय चाटूक्तिविधया नायिकाकरकोमलताप्रशंसामन्यापदेशेनाह कश्चित्–

**कङ्केल्ले तव मन्येऽमुनैव तन्नास्ति यन्न पर्याप्तम्।**
**उपमीयते हि यत्तव दलेन वरकामिनीहस्तः।।४।।**[१]

कङ्केल्ले हे अशोक तव यत्पर्याप्तं न भवेत् तत्किञ्चिन्नास्ति, अपि तु सर्वमेव पर्याप्तम्, इत्यहममुनैव मन्ये यत्तव पल्लवेन वरवर्णिनीहस्त उपमीयते। अधिकगुणशाल्यपि कामिनीहस्तस्त्वत्पल्लवेन सह साम्यमानीयते इत्यनेन उपमानस्य पल्लवस्यपेक्षया उपमेये हस्ते गुणाधिक्यवर्णनाद्व्यतिरेकः। मन्ये इत्यनेन पर्याप्तगुणानामुत्प्रेक्षणादुत्प्रेक्षा चेति सङ्करः। वरकामिनीकरे तावन्तो गुणाः सन्ति यैरसौ निरुपमान एव लोके। परमशोकपल्लवास्तच्छायामनुहरन्ति, अत एवाहमशोकं धन्यं मन्ये, इति कामिनीष्वतिशयबहुमानप्रदर्शनेन शृण्वन्त्या नायिकाया अनुरञ्जनप्रयत्नोऽभिव्यज्यते। मूलोक्तस्यार्थस्य स्पष्टप्रतिपत्तये अलङ्कारसम्पत्तयेऽत्र मन्ये इति मत्कृतच्छायायामधिकमुपात्तम्। अमुनैवेत्येवकारेण–पल्लवद्वारा कामिनीहस्तोपमालाभमात्रेणैव स्थालीपुलाकन्यायेन मया सर्वे तव पर्याप्ता गुणा अनुमिता इति श्रद्धातिशयो ध्वन्यते। तव तन्नास्ति यन्न पर्याप्तमिति सर्वनामनिर्देशेन तव गुणान्नाहं शब्दतः प्रकाशयितुं शक्नोमीति गुणानां पर्याप्ततातिशयो व्यज्यते।

मन्दस्नेहं नायकमुत्साहयितुं शृण्वति तस्मिन्नायिकासखी अशोकामन्त्रणव्याजेन सुमधुरमाह–

---

१. **एएण च्चिअ कङ्केल्लि तुज्झ तं णत्थि जं ण पज्जत्तम्।**
**उवमिज्जइ जं पल्लवेण वरकामिणीहत्थो।।४।।**
[एतेनैव कङ्केल्ले तव तन्नास्ति यन्न पर्याप्तम्।
उपमीयते यत्तव पल्लवेन वरकामिनीहस्तः।।]
सं. गा. १८

**रसिक विदग्ध विलासिन्सत्यमशोकोऽसि समयज्ञ।**

**वरयुवतिचरणकमलाहतोऽपि यद्विकससि सतृष्णम्।।५।।**[१]

रसिको रसानुभवशीलः। विदग्धश्चतुरः। समयं दोहदकालं जानातीति समयज्ञः। ध्वन्यर्थपक्षे तु समयं रसिकानामाचारं जानातीति। सतृष्णं सलालसम्। वरयुवतिचरणकमले-नाहतोऽपि यद्विकासं गच्छसि तेन त्वं सत्यमेव अशोकोऽसि। आघातेनापि तव न दुःखं प्रत्युत विकास एवेति ततस्तवाऽशोकेति नाम सत्यमस्तीत्यर्थः। पर्यन्ते तु शब्दशक्तिसमुत्थेनानुरणनेन-वैदग्ध्यशालिनो रसिकाः प्रियतमाचरणाऽऽहतिमपि प्राप्य आचारं विदन्तो न कुप्यन्ति, प्रत्युत साभिलाषं विकासं लभन्ते। इयं किल विदग्धानां सरणिस्त्वं तु प्रणयादपि तां वञ्चयसीति अहो ते असमयज्ञतेति शृण्वन्तं नायकं प्रति साकूतं ध्वन्यते। 'पूर्वागाथार्थमेव भङ्ग्यन्तरेणाह' इति गङ्गाधरः। नायिकाचरणघातः प्रसाद एव मन्तव्य इति नायकं शिक्षयितुं कुट्टन्या उक्तिरियमिति केचित्।

'त्वदाहरणसमये वाक्चातुर्येण सर्वं सङ्कटमुल्लङ्घितवान् स ते कामुकः' इति नायिकां सूचयितुं दूती वामनहरेरुपश्लोकनव्यपदेशेनाह-

**अपि बलिवाचाबन्धे नैपुणमाश्चर्यमुन्नयन्प्रकटम्।**

**सुरसार्थकृतानन्दो वामनरूपो हरिर्जयति।।६।।**[२]

बलेर्दैत्यराजस्य वाचया वचनेन बन्धे नियमने। वाचेत्याबन्तम्। नैपुण्यमाश्चर्यमपि च प्रकटं यथा स्यात्तथा उन्नयन् प्रकाशयन्। अत एव सुरसार्थस्य देवसमूहस्य जनितानन्दो

---

१. **रसिअ विअड्ढ विलासिअ समअण्णअ सच्चअं असोओ सि।**
**वरजुअइचलणकमलाहओ वि जं विअससि सएह्णम्।।५।।**
[रसिक विदग्ध विलासिन्समयज्ञ सत्यमशोकोऽसि।
वरयुवतिचरणकमलाहतोऽपि यद्विकससि सतृष्णम्।।]

२. **बलिणो बाआबन्धे चोज्जं णिउअत्तणं च पअडन्तो।**
**सुरसत्थकआणन्दो वामणरूवो हरी जअइ।।६।।**
[बलेर्वाचाबन्धे आश्चर्यं निपुणत्वं च प्रकटयन्।
सुरसार्थकृतानन्दो वामनरूपो हरिर्जयति।।]

वामनरूपधारी हरिर्जयति। वाङ्नियमनमात्रेण स्वर्गराज्यं बलेराहृतवानेवं किल तन्नैपुण्यमित्य-न्यावतारापेक्षया स एव सर्वोत्कर्षेण वर्तते इति वाच्योऽर्थः। अनुरणनेन तु- बलिनो बलवतो गृहजनस्य वाचया वचनेन निरुत्तरीकरणे नैपुण्यं प्रकटयन्, सुष्ठु रसार्थवद्भिर्वचनैर्जनिताखिलप्रीतिः वामनरूपो न्यग्भावितात्मा अवसरमभिलक्ष्य विनयमुपगत इत्यर्थः। एतादृशो हरिः परदारापहारी स ते कामुको जयतीति ध्वन्यमानोऽर्थः। अवसरानुसारं मधुरवचनचातुर्येण विनयेन च स निजगौरवं रक्षितवानिति नायिकां प्रति निभृतं सूच्यते। 'चोज्जम्' इति चोद्यपदस्याश्चर्यमर्थः। 'चोद्यं स्यादद्भुते प्रश्ने चोदनार्हे तु वाच्यवत्' इति मेदिनी। अत्र गाथायां 'बलेः' इति व्यस्तां छायां कृत्वा तस्य 'दैत्यराजो बलवांश्च' इत्यर्थद्वयोपपादनं गङ्गाधरस्य दुःशकमेव, बलवदर्थकस्य बलिशब्दस्य षष्ठ्यां बलिन इति रूपापत्तेः। बलिन इति छायाकल्पने तु दैत्यार्थनुपपत्तिः। मम तूभयं सङ्गतमिति सहृदयैरालोचनीयम्। अत्र 'दौःसाधिकाभिशस्तस्य जारस्य परिहासकौशलं दूती तत्प्रियामानन्दयितुमाह' इति दुर्घटार्थमिवावतरणं गङ्गाधरटीकायाम्।

प्रियतमस्यावसानेऽपि प्रणयं न मुञ्चन्ति कुलललना इति हि नारीणां दृढप्रणयतां प्रतिपादयन्ती काचित् प्रियतमे शृण्वति सखीं प्रत्याह-

**निर्वाप्यते हि दहनो गृहपतिसुतयातिविस्तृतशिखोऽपि।**

**अनुमरणघनालिङ्गितदयितसुखस्वेदशिशिराङ्ग्या।।७।।**[1]

अतिविस्तृताः शिखा ज्वाला यस्य सः। दहनो दाहकस्वभावोऽपि ज्वलनोऽग्निः। अनुमरणसमये घनमालिङ्गितस्य दयितस्य सम्बन्धि यत्सुखं तज्जनितेन स्वेदेन शिशिरीभूतशरीरया गृहपतिसुतया निर्वाप्यते शान्तीक्रियते। स्वेदजलेन प्रज्वलितोऽपि वह्निः शाम्यतीत्यर्थः। प्राकृते पूर्वनिपातानियमात् 'घणालिङ्गणपिअअमसुह' इत्यस्य प्रियतमघनालिङ्गनसुखमित्यर्थयोजनम्। मत्कृतच्छायायां तु न तत्क्लेशः। प्राकृतपदाङ्कानुसरणश्रद्धायां तु आलिङ्गितमिति भावे क्तेन तत्पूर्तिर्विधेया। आलिङ्गनजातेन स्वेदोद्गमसात्त्विकभावेन तस्मिन्नपि समये तासामनुरागातिशयो न न्यूनीभवतीति व्यज्यते। तथा च- कुलयुवत्यो वयमेवं दृढानुरागा इति निजसौभाग्यं बहु मन्यस्वेति शृण्वन्तं दयितं प्रत्यभिद्योत्यते।

एनमेवार्थमुपपतिमनोरञ्जनार्थं प्रकारान्तरेण सखीं प्रति काचिदाह-

---

१. **विज्जाविज्जइ जलणो गहवइधूआइ वित्थअसिहो वि।**

**अणुमरणघणालिङ्गणपिअअमसुहसिज्जिरङ्गीए।।७।।**

[निर्वाप्वते ज्वलनो गृहपतिदुहित्रा विस्तृतशिखोऽपि।

अनुमरणघनालिङ्गनप्रियतमसुखस्वेदशीताङ्ग्या।।]

**उपपतिचितासमुद्भवभूतिसुखस्वेदसलिलसिक्ताङ्ग्याः।**
**अभिनवकापालिक्या उद्धूलनमेव पूर्यते न किल॥८॥**[1]

उपपतिचितासमुद्भवाया भूतेर्भस्मनः स्पर्शजनितेन सुखेन जातं यत्स्वेदजलं तेन सिक्तं स्नातमङ्गं यस्याः। अभिनवकापालिक्याः गृहीताभिनवकापालिकव्रताया वियोगिन्याः उद्धूलनमेव शरीरे भस्मालेपनमेव न समाप्यते। उद्धूलनसमये उपपतिचिताभस्मनः स्पर्शसुखेन स्वेदोद्गमो भवति, तच्छोषणाय पुनर्भस्मना विच्छुरयति सा, ततश्च पुनरपि उपपतिचिताभस्म-स्पर्शात्स्वेदोद्गमो भवतीत्येवमुद्धूलनावसानमेव न भवतीति भावः। उद्धूलनमेवेत्येवकारेण कापालिकव्रतालम्बनेऽपि न निर्वाहो यतः प्रारम्भसम्पाद्यं भस्मधारणमेव न तत्र सम्पूर्यते किमग्रे सम्पत्स्यत इति विवशतातिशयेन प्रेमातिरेको व्यज्यते। आरम्भपदाभावेऽपि तदर्थोऽत्र प्रतीयत इति ज्ञेयं सुधीभिः। 'जरा-श्मशान' पदयोरश्लीलतया संस्कृतबन्धशय्यायां न गुम्फः समुचित इति तत्परिवर्तनं बोध्यम्।

प्रसवानन्तरं महिलानां प्रणयबन्धनमन्यादृशं भवतीति निदर्शयन्ती काचित्सखीं प्रत्याह-

**प्रस्नौति स्तन एकः परः पुलकितोऽस्ति नखमुखालिखितः।**
**पुत्रस्य च प्रियस्य च मध्यगताया हि दयितायाः॥९॥**[2]

प्रस्नोति सुतप्रेम्णा स्तन्यं प्रस्रवति। परो द्वितीयः स्तनः प्रियतमकृतनखालेखनेन रोमाञ्चयुक्तो भवति। सुतं प्रति वात्सल्यस्य प्रियं प्रति चानुरागस्य युगपदुदयेन भावद्वयसमावेशो बोध्यः। तथा च प्रियसमागममहिम्नैव समवाप्तसुतस्नेहसुखाः सुदृशः प्रसन्नान्तःकरणः सत्यः प्रियतमे सुबहुलमनुरज्यन्ति, त्वयापि तथैव समनुष्ठेयमिति नायिकां प्रति सख्याभिव्यज्यते।

---

१. **जारमसाणसमुब्भवभूइसुहप्फंससिज्जिरङ्गीए।**
**ण समप्पइ णवकावालिआइ उद्धूलणारम्भो॥८॥**
[जारश्मशानसमुद्भवभूतिसुखस्पर्शस्वेदशीलाङ्ग्याः।
न समाप्यते नवकापालिक्या उद्धूलनारम्भः॥]

२. **एक्को पह्नुअइ थणो बीओ पुलएइ णहमुहालिहिओ।**
**पुत्तस्स पिअअमस्स अ मज्झणिसण्णाएँ घरणीए॥९॥**
[एकः प्रस्नौति स्तनो द्वितीयः पुलकितो भवति नखमुखालिखितः।
पुत्रस्य प्रियतमस्य च मध्यनिषण्णाया गृहिण्याः॥]

'तत्तत्कारणसान्निध्यादेकस्मिन्ननेके भावा भवन्तीति निदर्शयन्कोऽपि सहचरमाह' इति गङ्गाधरः। जारं प्रत्यनवसरप्रकटनपरं दूत्या वचनमिदमिति केचित्।

बालायां ग्रामनायकतनयायां बद्धसाभिलाषदृष्टिः कश्चन सहचरमाह–

**एतावत्यपि मोहं जनयति बाल्येऽपि वर्तमानेयम्।**
**विषकन्दलीव कुर्याद् ग्रामणिदुहिता हि वर्द्धितानर्थम्।।१०।।**[१]

एतावत्यपि एतावन्मात्रवयस्कैव। अपिरेवार्थे। मोहं जनयति चित्तं मोहयति। अग्रे वर्धिता वृद्धिं गता इयं ग्रामणीदुहिता विषकन्दलीव विषाङ्कुर इवानर्थं कुर्यात्। विषकन्दली पूर्वं लघ्व्यपि अग्रे यथानर्थं करोति तथेयमपि यौवने कामुकानां विषमविषमशरविवर्धितं वेदनातिशयमुत्पादयेदित्यर्थः। ग्रामणिदुहितेत्यत्र इको ह्रस्वो ङ्यः इति ह्रस्वः पूर्वमप्युक्त एव। यौवने जनिष्यमाणं ग्रामणीसुतायाः शोभातिशयं भावनाद्वाराधुनैवानुमाय बद्धाभिलाषस्यास्य रसिकशिरोमणेरुक्तौ रसाभासता कथञ्चित्समाधेया।'ग्रामणीपुत्र्यां साभिलाषः कोऽपि प्रहसनमाह' इत्यवतरणमात्रेणैव गङ्गाधरस्तु सङ्कटगङ्गामुल्लङ्घितवान्।

कामकलाकुशलेन तेन सह कथमिव रात्रौ सुरतमभूदिति रहस्यान्तर्भुक्तया वयस्यया पृष्टा काचिद्धरिनमस्कारापदेशेन सपरिहासमाह–

**अप्रभवद्भूमितले हरेर्नभःसंस्थितं सुचिरम्।**
**ताराकुसुमप्रकराञ्चितमिव चरणं तृतीयमानमत।।११।।**[२]

भूमितले अप्रभवत् असम्मात् (शत्रन्तम्)। तारारूपेण पुष्पप्रकरेणाञ्चितम्। हरेस्त्रिविक्रमस्य। भूतलं पातालं च परिमाय गगनपरिमाणाय नभसि उच्छ्रितं तृतीयं चरणम् आनमत।

---

१. **एत्ताइच्चिअ मोहं जणेइ बालत्तणे वि वट्टन्ती।**
**गामणिधूआ विसकन्दलिव्व वड्ढीआ काहिइ अणत्थम्।।१०।।**
[एतावत्येव मोहं जनयति बालत्वेऽपि वर्तमाना।
ग्रामणीदुहिता विषकन्दलीव वर्धिता करिष्यत्यनर्थम्।।]

२. **अपहुप्पन्तं महिमण्डलम्मि णहसंठिअं चिरं हरिणो।**
**तारापुप्फप्पअरञ्चिअं व तइअं पअं णमह।।११।।**
[अप्रभवन्महीमण्डले नभःसंस्थितं चिरं हरेः।
तारापुष्पप्रकराञ्चितमिव तृतीयं पदं नमत।।]

पर्यन्ते तु–हरेः परदारापहारिणस्तस्योपपतेः स्कन्धोपरि गत्वा नभः स्थितम्। ऊर्ध्वमुच्छ्रितं तारा–(नेत्रकनीनिका–)– रूपेण पुष्पप्रकरेणाञ्चितं तृतीयं चरणमानमत सम्मानेन बहु मानयतेति व्यङ्ग्योऽर्थः। तथा च त्रैविक्रमबन्धेन सुरतमभूदिति सख्याः प्रश्नस्योत्तरं ध्वनितमभूत्। त्रैविक्रमबन्धस्तु– 'स्त्रियोङ्घ्रिमेकं विनिधाय भूमावन्यं स्वमौलौ, निजपाणियुग्मम्। पृष्ठे समाधाय रमेत भर्ता त्रैविक्रमाख्यं करणं तदा स्यात्।' इत्यनङ्गरङ्गे। सुचिरमित्यनेन बहुकालं यावत्स रमितवानिति तत्सामर्थ्यमभिव्यज्यते।

रात्रेस्तृतीययामं यावज्जागरेण खेदमनुभवन्तीं विरहोत्कण्ठितां प्रति स्वपिहीति सखीभिः प्रोक्ते सा सखीः प्रति तदुत्तरमाह–

**स्वपिहि तृतीयोऽपि गतो याम इति हि मां नु किमिति किल भणथ।**

**शेफालिकासुगन्धः स्वप्तुं न ददाति मे, स्वपित यूयम्।।१२।।**[1]

शेफालिकानां नीलनिर्गुण्डीनां सुगन्धो मम शयितुं न ददाति, मह्यं शयनावसरं न ददाति। एवं च अर्धरात्रो जातस्तथापि दयितो नायात इति चिन्तोत्कण्ठाभ्यां नायिकानिष्ठरतेरतिशयो ध्वन्यते। प्रसिद्धं किलार्धरात्रोत्तरं शेफालिकानां विकसनम्– ''शेफालिकां विदलितामवलोक्य तन्वी, प्राणान्कथञ्चिदपि धारयितुं प्रभूता। आकर्ण्य सम्प्रति रुतं चरणायुधानां किं वा भविष्यति न वेद्मि तपस्विनी सा।।'' साहित्यदर्पणे। 'शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा' इत्यमरः।

एवं निरनुक्रोशमपि तं कथं स्मरसीति सख्या प्रोक्ता विरहोत्कण्ठिता सखीमाह–

**संस्मर्यते स न कथं तथास्थितान्यङ्गकानि सखि यो मे।**

**सुरतरसिक इव निर्वर्तितेऽपि निध्यायति हि सुरते।।१३।।**[2]

---

१. **सुप्पउ तइओ वि गओ जामोत्ति सहीओं कीस मं भणह।**
**सेहालिआणँ गन्धो ण देइ सोत्तुं सुअह तुह्मे।।१२।।**
[सुप्यतां तृतीयोऽपि गतो याम इति सख्यः किमिति मां भणथ।
शेफालिकानां गन्धो न ददाति स्वप्तुं स्वपित यूयम्।।]

२. **कहँ सो ण संभरिज्जइ जो मे तह संठिआइँ अङ्गाइं।**
**णिव्वत्तिए वि सुरए णिज्झाअइ सुरअरसिओव्व।।१३।।**
[कथं स न संस्मर्यते यो मम तथासंस्थितान्यङ्गानि।
निवर्तितेऽपि सुरते निध्यायति सुरतरसिक इव।।]

सुरते निर्वर्तितेऽपि परिसमापितेऽपि सुरतासक्तो यो ममाङ्गकानि तथास्थितानीव सुरत-कालिकसन्निवेशयुक्तानीव निध्यायति पश्यति। सुरतसमाप्तावपि मय्यासक्तिवशान्मानसिक-भावनया तथासंस्थितानीव सुरतसंलग्नानीव पश्यतीत्यर्थः। तथासंस्थितानीत्यनेन अनुभवैक-मात्रसंवेद्योऽङ्गानां सन्निवेशविशेषो ध्वन्यते। एवं च मयि एतावदाहितानुरागः स किल प्रियतमः कथं वा स्मृतिपथे नोदयेदित्याशयः।

उपपतिं प्रति काचिदन्यापदेशेन सङ्केतस्थलं निर्दिशति-

**शुष्यद्बहलितकर्दमघर्मलुठन्मीनकमठपाठीनम्।**
**दृष्टं ह्यदृष्टपूर्वं कालेन तलं तडागस्य।।१४।।**[1]

शुष्यन् बहलितः कर्दमो यस्मिंस्तत्, धर्मेण ऊष्मणा लुठन्तः परिखिद्यमानाः मीनाः कमठाः पाठीनाश्च यस्मिंस्तच्चेति बहुव्रीहिं कृत्वा कर्दमान्तस्य पाठीनान्तेन सह कर्मधारयः। बहलितेत्यत्र बहल इवाचरित इति आचारक्विबन्तात्कर्तरि क्तः। पाठीनो बृहन्मत्स्यः 'सहस्रदन्ष्ट्रः पाठीन उलूपी शिशुकः समौ' इत्यमरः। कालवशाददृष्टपूर्वं तडागस्य तलं दृष्टम्। पूर्वं जलाद्या-हरणार्थमासील्लोकानां यातायातसम्भवः, इदानीं न तद्भयमिति निःशङ्कमागम्यतामित्युपपतिं प्रति ध्वन्यते। पूर्वमतिसमृद्धस्य पश्चात्कालेन दरिद्रतामापन्नस्य कस्यचिदन्यापदेशविधया काचिदनुशोचनं करोत्यनया गाथयेति केचित्। 'अहं तत्र गता त्वं तु नागतः' इति जारं प्रति कयाश्चिदुक्तिरित्यन्ये। चिररमणार्थं सुरतश्रान्तं कान्तमन्यमनस्कं करोतीति वा।

निभृतमभिसारे गच्छन्तीं काञ्चित्सचाटुपरिहासमाह काचित्प्रौढा-

**मा पुत्रि चौर्यसुरतश्रद्धाशीले भ्रमान्धकारेऽस्मिन्।**
**दीपकशिखेव निबिडे तमसि निकामं निरीक्ष्यसे नूनम्।१५।।**[2]

---

१. **सुक्खन्तबहलकद्दमघम्मविसूरन्तकमठपाठीणम्।**
**दिट्ठं अदिट्ठउव्वं कालेण तलं तडाअस्स।।१४।।**
[शुष्यद्बहलकर्दमघर्मखिद्यमानकमठपाठीनम्।
दृष्टमदृष्टपूर्वं कालेन तलं तडागस्य।।]

२. **चोरिअरअसद्धालुइ मा पुत्ति ब्भमसु अन्धआरम्मि।**
**अहिअअरं लक्खिज्जसि तमभरिए दीवसीहव्व।।१५।।**
[चौर्यरतश्रद्धाशीले मा पुत्रि भ्रमान्धकारे।
अधिकतरं लक्ष्यसे तमोभृते दीपशिखेव।।]

चौर्यसुरतश्रद्धालुके! इति विशेषणेन गृहे तव सुरतसौकर्ये सत्यपि आग्रहेण त्वमभिसार-परासीति नायिकां प्रति सूच्यते। अन्धकारे यथा दीपाखिा तथा त्वमपि स्पष्टतरं संलक्ष्यसे। त्वमात्मानं निगूहितुमन्धकारे प्रयासि परं शरीरलावण्येनान्धकारे द्विगुणं प्रकाशस इत्यर्थः। पुत्रीतिसम्बोधनेन-त्वमन्धकारे भूरितरं गप्ता भूत्वाभिसरसि, परमेतावत्कालं दृष्टबहुव्यतिकराया मम तु पुरस्तादेतद् गोपनमसम्भवमेव, परमन्येऽपि संलक्षयितुमलमित्यात्मगौरवम्, मा भैषीर्नाहं ते रहस्यभेदिनीति पक्षपातश्च ध्वन्यते। 'तमभरिए' इत्यत्र तमोभृते (प्रदेशे) इति विशेष्याक्षेपक्लेशो मत्कृतच्छायायामेवमपासित इति सुधीभिरालोच्यम्।

इयं सङ्केतस्थानदाहाद्दुःखितेति निजमार्मिकतां प्रकटयितुं कश्चित्सहचरमाह-

**कुप्यत्येकैकस्य प्रतिवचनं नो ददाति संलपिता।**
**असती कार्येण विना प्रदीप्यमाने नदीकच्छे।।१६।।**[1]

नदीकच्छे नदीतटनिकटवर्तिनि सजलदेशे प्रदीप्यमाने दावाग्निना दह्यमाने। 'जलप्राय-मनूपं स्यात्पुंसि कच्छस्तथाविधः' इत्यमरः। असती कुलटा कार्येण विना आवश्यकतां विनापि। प्रत्येकपुरुषस्य रुष्यति। सङ्केतस्थानभङ्गादेतस्या इयं दशेत्यहमिङ्गितेनैव ज्ञातवानिति सहचरं प्रत्यभिव्यज्यते। मर्मान्तिकवेदनायास्त्वन्या कथा, परं मनोविनोदनोपायविघट-नाज्जायमानेन दुःखेन व्याकुलचेतसो जनस्य किञ्चिन्मात्रेणैव विचारलीन ताभङ्गे सति क्रोधोदयो भवति, सेयमेव स्वाभाविकी मानसी दशा गाथयाऽनया सूच्यते। ततश्च प्रत्येकपुरुषं प्रति कोपस्य सूचकं चात्र वचनाऽप्रदानमेवेति कोपोत्तरमेव मद्गाथायां तन्निबन्धनम्। मर्मान्तिकदुःखग्रस्तस्य तु उन्माद-प्रलय-निर्वेदादीनामुदय इति गूढमनुसन्धेयम्।

गुप्तमसतीव्यवहारमाचरन्त्या कयाचिन्निजप्रतिवेशिनी कुलटेत्याक्षिप्ता। तत्प्रत्युत्तरं स्वभावोक्तिविलक्षणरूपेणावतारयति गाथाकारः-

**आम्, कुलटा वयमपसर पतिव्रते ते न मलिनितं गोत्रम्।**
**न च कामयामहे किल जनस्य जायेव चन्दिलं तु पुनः।।१७।।**[2]

---

१. **वाहित्ता पडिवअणं ण देइ रूसेइ एक्कमेक्कस्स।**
**असई कज्जेण विणा पइप्पमाणे णईकच्छे।।१६।।**
[व्याहृता प्रतिवचनं न ददाति रुष्यत्येकैकस्य।
असती कार्येण विना प्रदीप्यमाने नदीकच्छे।।]

२. **आम असइ ह्म ओसर पइव्वए ण तुह मइलिअं गोत्तम्।**
**किं उण जणस्स जाअव्व चन्दिलं ता ण कामेमो।।१७।।**
[आम असत्यो वयमपसर पतिव्रते न तव मलिनितं गोत्रम्।
किं पुनर्जनस्य जायेव नापितं तावन्न कामयामहे।।]

आम् इति सकोपमीर्ष्यापुरस्सरं स्वीकारे। वयं कुलटा एवेति तुष्यतु दर्जनन्यायेन साधिक्षेपं स्वीकारः। त्वं तु पतिव्रतासि! इति साकूतमाक्षेपः। अत एव हे पतिव्रते! अपसर अस्मत्तो दूरे तिष्ठ। तव गोत्रमर्थात् नाम न मलिनितम्, तव नामनि न कश्चित्कलङ्कः (भवेत्!)। वयं कुलटाः अत एव अस्त्सविधे समागमने तव गोत्रे मालिन्यं भवेदिति। अथवा तव गोत्रभस्माभिर्न मलिनितम्, अस्माभिरस्माकमेव नामनि कलङ्क आपादितस्तव तु गोत्रं न मलिनितम्! अत एव त्वमपसरेत्याक्रोशोक्तिः। इदानीम् आक्षिपन्त्या उपर्याक्षेपमाक्षिपति– पुनर्वयं जनस्य सामान्यनरस्य स्त्रीव, अथवा जनसामान्यस्य जायेव वारवधूरिव। चन्दिलं तु नापितं तु न कामयामहे। वयं कुलटास्तथाप्युत्तमनायकासक्तास्त्वं तु नापितद्वारा सतीत्वं हारितवती। अत्र कुलटाकलहस्वभावोक्तिरलङ्कारो वाच्यस्तेनापि च– 'अस्माभिः केवलं निजनामैव कलङ्कितं त्वया तु 'गोत्रम्' कुलमेव कलङ्कितम्' इति गोत्रपदशक्तिसमुत्थेनानुरणनेन वक्त्रीं प्रति भूयानाक्षेप ईर्ष्या चाभिव्यज्यते। चन्दिलशब्दो नापितार्थवाचको देशीति कुलबालदेवः। प्राप्तार्धचन्द्रः सर्वनिर्वास्यो दुर्दैवो नीच इत्यर्थः। कदाचन न भवेत्! यस्य जय पुरीयभाषायां 'चांदडा' 'करमचांदडा' इति हि सुमधुरो व्यपदेशः!! ध्वनिकारस्तु– 'आम् असत्यो वयम्' इत्यत्र काक्वा 'न वयमसत्यः' इति व्यङ्ग्यार्थप्रतीतिः, सा किल वाच्यार्थसहभावेनैव स्थिता। अयं भावः– यावत्किल काक्वा प्रतीयमानस्य व्यङ्ग्यार्थस्य न बोधो भवेत्तावद्वाच्यार्थस्यैव सङ्गतिर्न भवेदत एव व्यङ्ग्यस्य वाच्याश्रयतया स्वातन्त्र्याभावान्न ध्वनित्वव्यपदेशः। किं तु गुणीभूतव्यङ्ग्यत्वव्यपदेशः। तत्परिगृहीतोऽत्र पाठः– अपसरेति स्थाने उपरमेति। 'गोत्रम्' इति स्थाने 'शीलम्' इति।

नायकं प्रति स्वानुरागं परमदाक्षिण्येन प्रकटयन्ती काचिदाह–

**निद्रां भजन्ति, कथितं शृण्वन्ति च गद्गदं न जल्पन्ति।**
**न विलोकितोऽसि याभिः सुखितास्ता एव ननु सुभग।।१८।।**[१]

यास्त्वां न विलोकितवत्यस्तासामनिद्रा, अन्यमनस्कता जडतादयो व्याधयो वा न भवन्ति, अतएव ताः सुखिताः। अस्माकं तु त्वद्विलोकनादारभ्यैव निद्राभङ्गादयो जाताः। विलोकनमात्रादेव मादृशीनां मनो हरस्यहो ते सुभगतेति नायकचाटुः सुभगेत्यामन्त्रणसहकारेण

---

१. **णिद्दं लहन्ति कहिअं सुणन्ति खलिअक्खरं ण जम्पन्ति।**
**जाहिँ ण दिट्ठो सि तुमं ताओ च्चिअ सुहअ सुहिआओ।१८।।**
[निद्रां लभन्ते कथितं शृण्वन्ति स्खलिताक्षरं न जल्पन्ति।
याभिर्न दृष्टोऽसि त्वं ता एव सुभग सुखिताः।।]

ध्वन्यते। तव विलोकनमात्रादेव त्वदासक्तचेतसो वयमभूम, तत्फलमद्यावध्यस्माभिरैन्द्रियं विचित्ततादिस्वेदजनकमेव लब्धं न किञ्चिन्निर्वृतिजनकमत एव सम्प्रति सुखयास्मानिति भावावेदनं चरमं व्यङ्ग्यम्।

दूती कस्याश्चिन्निरुपाधिकमनुरागमतिवैदग्ध्येन नायकं प्रति सोपालम्भमेवमाह–

**बालक भवता दत्तां कर्णे कृत्वा तु बदरसङ्घाटीम्।**

**लज्जालुरपि वधूः सा प्रतियाता ग्रामरथ्यया भवनम्।।१९।।**[१]

बदरसङ्घाटीं बदरयोः सङ्घातम्, एकवृन्ते बदरफलद्वयमित्यर्थः। कर्णे कृत्वा भूषणरूपेण कर्णे सन्धार्यं। लज्जाशीलापि सा, ग्रामरथ्यया यस्यां सर्वेऽपि ग्रामजना यातायातं कुर्वन्ति तया रथ्यया भवनं गता। त्वद्दत्तेन बदरसङ्घातमण्डनेन मण्डिताया अस्यास्तथा हर्षो जातो यथेयमात्मानं धन्यम्मन्यमानतया सर्वे जना एनां पश्येयुस्तत्कृते ग्रामरथ्यया भूत्वा गृहं जगामेति नायिकायाः प्रणयबहुमानातिशयो ध्वन्यते। वधूपदेन–स्नुषापदमधिष्ठिताया अस्या बहुलजनाकीर्णायां ग्रामरथ्यायामेवं गमनमनुचितं तथापि हृदयावेगं सोढुमशक्नुवतीयं स्वतो जगामेति आवेगातिशयो ध्वन्यते। लज्जालुरिति विशेषणेन साधारणदशायां स्वभावतो लज्जाशीलापि सेयं भवदर्थे एवमाविष्कृतभावास्तीति तदतिशयो व्यज्यते।'बालक' इत्यामन्त्रणेन तु– सा त्वय्येवमनुरक्ता जाता यत्त्वत्करप्रदत्तमसारं वस्त्वपि सबहुमानमलङ्काररूपेण कर्णयोर्धत्ते। त्वं तु पिशुनजनवचनजातं कर्णयोः कृत्वा तथा निरपेक्षोऽसि यदेनां न बहु मन्यस इत्यहो ते उचितानभिज्ञतेत्युपालम्भो ध्वन्यते। याभ्यां कर्णाभ्यां हृदयनिर्वृतिकरी पूर्वं त्वद्गुणसङ्कथा उपस्थापिता तयोः कर्णयोः कृत एव पूर्वं पुरस्कारो दत्त एतत्सूचनाय 'कर्णे कृत्वा' इति, एतदाद्यपरिसीमं व्यङ्ग्यजातं सुधीभिरनुसन्धेयमित्यलम्।

कलहान्तरितादशामनुभूय प्रियानुनयस्मरणेन गलितमाना काचिदनुशयाना सखीः प्रति सकोपानुतापमाह–

---

१. **बालअ तुमाह दिण्णं कण्णे काऊण बोरसंघाडिम्।**
**लज्जालुइणी वि वहू घरं गआ गामरच्छाए।।१९।।**
[बालक त्वया दत्तां कर्णे कृत्वा बदरसङ्घाटीम्।
लज्जालुरपि वधूर्गृहं गता ग्रामरथ्यया।।]

**अगृहीतानुनयोऽसौ विलक्षहृदयो ह्यभव्यया तु मया।**
**परवाद्यनर्तिनीभिर्युष्माभिरुपेक्षितो निर्यन्।।२०।।**[१]

बहुतरमनुनीतवतोऽपि दयितस्यानुनयाऽग्रहणात् अभव्यया अभाग्यया मया अगृहीतानुनयः न गृहीतः अनुनयः पदप्रणामादिर्यस्य, अत एव विलक्षहृदयो लज्जाकोपाक्रान्तहृदयः स दयितः। परम् अन्यं पुरुषं वाद्यपूर्वकं नर्तयन्तीभिर्युष्माभिः, निर्यन् भवनान्निर्गच्छन् उपेक्षितः बहिर्गमनतो न निवारितः। यूयं तथाविधाः स्थ यद् वाद्यं वादयित्वा अपरस्य नर्तनकौतुकं पश्यथ। अत एव भवतीभिः पूर्वं मह्यं मानशिक्षा दत्ता, इदानीं त्वावयोरिमां कलहकेलिं कौतुकरूपेणावलोकयथ। एतस्मादेव कारणद्भवनान्निर्गच्छन्नसौ युष्माभिर्न वारित इत्याशयः। नर्तिनीभिरित्यत्र नर्तयन्तीति णिजन्तात्ताच्छील्ये णिनिर्बोध्यः। परस्य वाद्यपूर्वकं नर्तनमिति लोकोक्तेरनुसरणम्, अत एव छेकोक्त्यलङ्कारस्य विषयः। उक्तमप्पयदीक्षितेन– 'छेकोक्तिर्यदि लोकोक्तिः स्यादर्थान्तरगर्भिता'। एवमनुनयेन प्रकाशितस्नेहोऽपि वल्लभोऽवधीरितो मयका, अहो मे दौर्भाग्यमिति अभव्यापदसहकारसूचितोऽनुतापस्तु चरमं व्यङ्ग्यम्। अभव्यया सया तूपेक्षित एव परं युष्माभिरप्युपेक्षित इति सूचयितुं पूर्वार्धे 'तु' पदनिबन्धनं मच्छायायाम्। उत्तरार्धे 'अपि' पदस्य तु नापेक्षा 'यूयं कलहं कारयित्वा कौतुकदर्शिन्यः स्थ अतएवोपेक्षित इत्यर्थोपरि दाढर्यप्रकाशनार्थं तस्यानावश्यत्वात्।

विदग्धतागर्वशालिनी काचिदात्मानुगुणं कान्तमलीमाना तत्प्राप्त्युत्कण्ठासूचनाया सखीमाह–

**दृष्टोऽपि नयनसुखदः करसंस्पर्शेन निर्वृतिं जनयन्।**
**न प्राप्यतेऽर्थितोऽपि हि दयितो विधुरिव कलानिलयः।।२१।।**[२]

---

१. **अह सो विलक्खहिअओ मए अहव्वाएँ अगहिआणुणओ।**
**परवज्जणच्चरीहिं तुह्मेहिँ उवेक्खिओ णेन्तो।।२०।।**
[अथ स विलक्षहृदयो मया अभव्यया अगृहीतानुनयः।
परवाद्यनर्तनशीलाभिर्युष्माभिरुपेक्षितो निर्यन्।।]

२. **दीसन्तो णअणसुओ णिव्वुइजणओ करेहिँ वि छिवन्तो।**
**अब्भत्थिओ ण लब्भइ चन्दो व्व पिओ कलाणिलओ।।२१।।**
[दृश्यमानो नयनसुखो निर्वृतिजननः कराभ्यां [अपि] स्पृशन्।
अभ्यर्थितो न लभ्यते चन्द्र इव प्रियः कलानिलयः।।]

विधुरिव चन्द्र इव दृष्टोऽपि दृश्यमानोऽपि नयनयोः सुखकरः। दर्शनमात्रेण सुखकार-कत्वं दयिते चन्द्रे चोभयत्र समानम्। करयोर्हस्तयोः संस्पर्शेन निर्वृतिमलौकिकं सुखमुत्पादयन् दयितः। चन्द्रस्तु कराणां किरणानां संस्पर्शेन निर्वृतिं शैत्यसुखं जनयन्। कलानां चतुःषष्टिक-लानामालय आश्रयश्चतुःषष्टिकलासम्पन्न इत्यर्थः। चन्द्रपक्षे तु षोडशकलाश्रयः पूर्ण इति यावत्। एवंविधो दयितोभ्यर्थितोऽपि न प्राप्यते। तथा च- अहं यावद्वैदग्ध्यशालिन्यस्मि तदनुरूपस्य सकलकलाप्रवीणस्य दयितस्य लाभो मदर्थे हस्ताभ्यां चन्द्रप्राप्तिरिवास्तीत्यात्मनः परमैवदग्ध्याभिमानः, प्राप्स्यमाने दयिते सकलकलासम्पत्तेरावश्यकता चाभिव्यज्यते। ततोऽपि च, पूर्णचन्द्रस्य यथा प्रार्थनेऽपि सर्वदा न लाभस्तथा तादृशो मदनुगुणो दयितोऽपि यदा कदाचिल्लप्स्यते, न प्रार्थनासमकालमेवेति निजगुणगौरवख्यापनमेव प्रधानं व्यङ्ग्यमिति सुधीभिरालोच्यम्।

कालस्य सर्वङ्कषतां प्रतिपादयन्ती काचिन्नियतसङ्केतस्थानस्य विघटनमुपपतिं प्रति सूचयति-

**ये किल नदीतटेऽस्मिन् मधुकरभरभग्नगुच्छका आसन्।**
**कालेन वञ्जुलास्ते प्रियसख हे स्थाणवो जाताः।।२२।।**[१]

मधुकरभरेण भग्ना गुच्छका येषाम्। वञ्जुला अशोकाः 'वञ्जुलोऽशोके' इत्यमरः। वेतसास्तु न ग्राह्या अपुष्पत्वात्। स्थाणवो निष्पत्रविटपा जाताः। मधुकरनिकरनिपातद्वारा गुच्छकभङ्गेन वृक्षाणां घनच्छायत्वं भ्रमरकदम्बसम्पातेनान्धकारित्वं च सूच्यते। एवंविधाः पुष्पफलनिचिता अपि तरवः स्थूणावशेषा अभवन्नित्यहो कालमाहत्म्यमिति भावः। पर्यन्ते तु-नदीतटे वञ्जुलनिकुञ्जो योऽस्माकं सङ्केतस्थानमभूत्तस्य शुष्कीभूतत्वेन लोकानां दृष्टिपातभयान्नेदानीं तत्र समागमः साधयितुं शक्यत इति शृण्वन्तमुपपतिं प्रति ध्वन्यते।

अस्थिरस्नेहान्नायकादुद्विग्ना काचिच्छृण्वन्तं कञ्चन मनोहरं जनमवसरप्रदानेनोत्कण्ठयन्ती रहस्यान्तर्भुक्ताया मातृष्वसुः संलापव्याजेनाह-

---

१. **जे णीलब्भमरभरग्गगोछआ आसि णइअडुच्छङ्गे।**
**कालेण वञ्जुला पिअवअस्स ते थण्णुआ जाआ।।२२।।**
[ये नीलभ्रमरभरभग्नगुच्छका आसन्नदीतटोत्सङ्गे।
कालेन वञ्जुलाः प्रियवयस्य ते स्थावणो जाताः।।]

**हे मातृष्वसरधुना प्रेम्णा क्षणभङ्गुरेण दूनाः स्मः।**
**स्वप्ने निधिलम्भेनेव दृष्टनष्टेन लोकेऽस्मिन्।।२३।।**[१]

स्वप्ने निधिलाभेनेव दृष्टनष्टेन, दृष्टिपथमागत्य लुप्तेन। क्षणभङ्गुरेण प्रणयेनाधुनाऽस्मिंल्लोके दूना व्यथिताः स्मः। अहं त्वत्प्रणयं निधिलाभमिव परमबहुमानभाजनं मंस्ये परं स स्थिरो भवेदन्यथा तु पूर्ववन्मे मानसोद्वेगकर एव भविष्यतीति शृण्वन्तं कान्तं प्रत्यभिव्यज्यते। अधुनेत्यनेन पूर्वं नासीन्मे तावान्प्रणयस्थैर्यपरिचयः, इदानीं तु क्षणभङ्गुरादहमुद्विजामीति प्रणयपरिचयचतुरायां मयि साम्प्रतं प्रतारणाप्रयत्नो विफल एव भवेदिति व्यज्यते।

धूर्तेन नायकेन नातिचिरेणैव खडितप्रणयां नायिकां प्रतिबोधयन्ती सखी अन्यापदेशेनाह–

**चापः स्वभावसरलं क्षिपति शरं किल गुणेऽपि निपतन्तम्।**
**ऋजुकस्य च वक्रस्य च सम्बन्धः किं चिरं भवति।।२४।।**[२]

चापो धानुः स्वभावेन सरलमृजुकम्, गुणे प्रत्यञ्चायां निपतन्तमपि सम्बध्यमानमपि शरं बाणं क्षिपति दूरं परिचालयति। एतत्समर्थनायार्थान्तरन्यासमाह–ऋजुकस्य कुटिलस्य च सम्बन्धः किं चिरकालं यावद्भवति, नेत्यर्थः। प्रस्तुतेऽर्थे तु–स्वभावेन सरलं निष्कटपटम्, गुणे सौन्दर्यादौ निपतन्तमनुरागेणाभिमुखीभवन्तमपि ऋजुकं जनं कुटिलः परिहरतीत्यर्थः। तथा च– पूर्वं बहुतरं प्रतिबोधितापि त्वं कुटिलहृदये तस्मिन्प्रणयमाहितवती, तदिदानीमनुभव तत्परिभवफलमिति सख्या सूच्यते।

घनपीनपयोधरायाः कस्याश्चित्कुचकलशदेशविश्रान्तां रोमावलिवल्लीमालोक्य जाताभिलाषः कश्चित्तच्छोभातिशयमेवमाह सहचरम्–

---

१. **खणभङ्गुरेण पेम्मेण माउआ दुम्मिअह्म एत्ताहे।**
**सिविणअणिहिलम्भेण व दिट्ठपणट्ठेण लोअम्मि।।२३।।**
[क्षणभङ्गुरेण प्रेम्णा मातृष्वसः दूनाः स्म इदानीम्।
स्वप्ननिधिलम्भेनेव दृष्टप्रनष्टेन लोके।।]

२. **चावो सहावसरलं विच्छिवइ सरं गुणम्मि वि पडन्तम्।**
**वङ्कस्स उज्जुअस्स अ समबन्धो किं चिरं होइ।।२४।।**
[चापः स्वभावसरलं विक्षिपति शरं गुणेऽपि पतन्तम्।
वक्रस्य ऋजुकस्य च सम्बन्धः किं चिरं भवति।।]

**प्रथमं वामनविधिना पश्चाद्विहितो विजृम्भमाणेन।**

**स्तनयुगलेनैतस्या मधुमथनेनेव वलिबन्धः।।२५।।**[१]

प्रथमं वामनो लघुर्विधिः प्रसरप्रकारो यस्य तेन। पश्चाद्विजृम्भमाणेन वृद्धिं गतेन एतस्याः स्तनयुगलेन मधुमथनेनेव विष्णुनेव वलेस्त्रिवल्या बन्धः सम्बन्धः कृतः। प्रवृद्धयोरस्याः स्तनयोः परिसरपर्यन्तं त्रिवली विश्रान्तेत्यर्थः। मधुमथनेनापि पूर्वं खर्वरूपधारिणा पश्चादत्यन्तं प्रवृद्धेन सता बलेस्तन्नामकस्य दैत्यराजस्य बन्धो विहित इत्यर्थोऽनुसन्धेयः। श्लेषोत्थापित-यानयोपमयामधुमथनेन यथा त्रैलोक्यमायत्तीकृतमेवमियमपि सर्वान् वशीकरिष्यतीति नायिकासौन्दर्यातिशयो ध्वन्यते।

गुणगणशालिनीमपि नायिकामन्यस्याः कृते व्यथयन्तं धूर्तनायकमुपालभमाना नायिकासखी निजसखीमन्यापदेशेनाह-

**कुसुमानि मालतीनां दग्ध्वा मावेहि निर्वृतः शिशिरः।**

**कर्तव्या विगुणानां कुन्दानामपि समृद्धिरथ।।२६।।**[२]

मालतीनां मालतीवृक्षाणाम्। शिशिरः शीतर्तुः। निर्वृतः सुखित इति मा अवेहि जानीहि। अथ अद्यापि। गन्धगुणरहितानां कुन्दानाम्। अनेन च- सौन्दर्यानुरागादिगुणशालिनीमिमां हित्वा बाह्यरूपमात्रसारायामन्यस्यां तवासक्तिर्नोचितेति शृण्वन्तं नायकं प्रत्यभिव्यज्यते। मालतीनामिति बहुवचनेनइयं मत्सख्येव त्वया व्यलीकचेष्टितैर्नोपताप्यते, किन्तु पूर्वमन्या अपि त्वया एवमेव क्लेशमनुभाविता इति गूढोपालम्भो ध्वन्यते। कुन्दानामिति बहुत्वेन मत्सखीसपत्न्यामेकस्यामेव

---

१. **पढमं वामणविहिणा पच्छा हु कओ विअम्भमाणेण।**
**थणजुअलेण इमीए महुमहणेण व्व वलिबन्धो।।२५।।**
[प्रथमं वामनविधिना पश्चात्खलु कृतो विजृम्भमाणेन।
स्तनयुगलेनैतस्या मधुमथनेनेव वलिबन्धः।।]

२. **मालइकुसुमाइँ कुलुञ्चिऊण मा जाणि णिव्वुओ सिसिरो।**
**काअव्वा अज्जवि णिग्गुणाणँ कुन्दाणँ वि समिद्धी।।२६।।**
[मालतीकुसुमानि दग्ध्वा मा जानीहि निर्वृतः शिशिरः।
कर्तव्याद्यापि निर्गुणानां कुन्दानामपि समृद्धिः।।]
सं. गा. १९

ते सम्प्रति नानुरागोऽन्यत्रापि बहुत्र व्रजसीत्याक्षिप्यते। 'दुष्टो न केवलं साधूनामपकारमात्रं करोति, किं त्वसाधूनामुपकारमपीति कोऽप्यन्यापदेशेनाह' इति गङ्गाधरावतरणम्। 'न केवलं तव दौर्भाग्यं मया कृतं किं तु त्वत्सपत्नीनां सौभाग्यमपि मया विधेयमित्यप्रियवादिनीं नायिकां प्रति कुपितनायकेन ध्वनिमिति केचित्।

गलितयौवनायाः स्तनाववलोक्य निजवाक्चातुर्यं तां प्रति कौतुकं च प्रकटयितुं सपरिहासवैदग्ध्यं कश्चित्सहचरमाह–

**निबिडनिरन्तरयोरुन्नतयोर्व्रणलब्धशोभयोः सरसम्।**
**कृतकार्ययोः पतनमपि रम्यं भटयोरिव स्तनयोः।।२७।।**[१]

निबिडनिरन्तयोः विशेषेण अन्योऽन्यलग्नयोः पीनत्वात्, उन्नतयोरुत्तुङ्गयोः काठिन्यात्, सरसं सुरतकेलौ सप्रमोदं व्रणैर्नखक्षतजातैर्लब्धशोभयोः, अत एव कृतकार्ययोः स्तनयोः, परस्परं बलादिसाम्यान्निर्विशेषयोः, मानोन्नतयोः समरव्रणशोभितयोरत एव कृतकार्ययोः कृतवैरिपराजययोर्भटयोरिव योधपुरुषयोरिव पतनमपि रम्यं श्रेष्ठम्। त्वया यौवने भूरिसुखान्यनुभूतानि, कृतकार्यासीति गलितयौवनां प्रत्यभिव्यज्यते।

शृण्वतीं नायिकां प्रति निजसहृदयतां परिहासं च प्रकटयितुं कश्चित्प्रगल्भः कुचवर्णना-प्रस्तावमेवमाह–

**गुरवः परिमलनसुखा अलब्धविवराः सलक्षणाभरणाः।**
**न लगन्ति कस्य हृदये काव्यालापा इव स्तना एते।।२८।।**[२]

गुरवः पीनोन्नताः, परिमलनसुखा मर्दनसुखकारकाः, अलब्धविवराः परस्परमिलितया नीरन्ध्राः, लक्षणैः श्रीफलादिसादृश्य-तिलचिह्नादिभिः आभरणैर्हारादिभूषणैश्च सहिताः, इमे

---

१. **तुङ्गाणँ विसेसनिरन्तराणँ [ सरस ] वणलद्धसोहाणम्।**
**कअकज्जाणँ भडाणँ व थणाणँ पडणं वि रमणिज्जम्।।२७।।**
[तुङ्गयोर्विशेषनिरन्तरयोः [सरस] व्रणलब्धशोभयोः।
कृतकार्ययोर्भटयोरिव स्तनयोः पतनमपि रमणीयम्।।]

२. **परिमलणसुहा गुरुआ अलद्धविवरा सलक्खणाहरणा।**
**थणआ कव्वालाव व्व कस्स हिअए ण लग्गन्ति।।२८।।**
[परिमलनसुखा गुरुका अलब्धविवराः सलक्षणाभरणाः।
स्तनकाः काव्यालापा इव कस्य हृदये न लगन्ति।।]

स्तनाः काव्यालापा इव कस्य हृदये न लगन्ति, सर्वस्यापि हृदयं प्रीणयन्तीत्यर्थः। काव्यालापा अपि गुरवो गभीरार्थाः, परिमलनेन पुनः पुनर्विचारेणानन्दजनकाः, अलब्धविवरा दूषणावकाश-रहिताः, शास्त्रीयलक्षणैरुपमाद्यलङ्कारैश्च सहिताभवन्ति। त्वत्कुचकलशशोभामालोक्या-नुरक्तहृदयोऽस्मीति शृण्वतीं नायिकां प्रत्यभिव्यज्यते। सर्वानेव रमयसीति तां प्रति परिहासोऽपि च द्योत्यते। परिमलनमित्यत्र 'मलमल्ल' धारणे इति मलधातुः। धातूनामनेकार्थत्वादर्थसङ्गतिः, चुलुम्पतीत्यादिसङ्गृहीतं धात्वन्तरं वा। कुचपक्षे-परिमलनेन सुगन्धसम्बन्धेन सुखाः इत्यप्यर्थः सम्भवेत्, परिमलशब्दाण्णिचा तद्रूपसिद्धेः। यद्वा धारणमेवार्थः, हृदये धारणे सुखकारका इति पक्षद्वयेऽपि तदर्थोपपत्तेरित्यलं रसकथासु शुष्कविचारेण।

शृण्वतीं काञ्चन नायिकामुपलक्ष्य निजसहृदयतां प्रकटयन्कश्चित्सहचरमाह-

**स्तनमण्डलात्तरुण्यो हारमपास्यन्ति रमणपरिरम्भे।**
**गुणिनो महितगुणा अपि लाघवमुपयान्ति कालेन।।२९।।**[१]

रमणपरिरम्भे दयितालिङ्गनसमये। अपास्यन्ति दूरमपनयन्ति। महितः प्रशस्तो गुणो येषामीदृशा गुणिनः। कालवशाल्लाघवं पराभवमुपयान्ति। गुणिपदं श्लिष्टम् गुणः सूत्रं शौर्यादिकं च। 'उपादेयोऽर्थः कदाचिदनुपादेयतां यातीति निदर्शयन्कश्चिदाह' इति गङ्गाधरः। 'क्षिप्यते' इति शृङ्गारे न मनोहराण्यक्षराणीति कर्तृवाच्येन परिवर्तितम्। यदि तु मूलपदाङ्कानुसरण एवाग्रहस्तर्हि 'स्तनमण्डलाद्युवतिभिर्हारः क्षिप्येत' इति पाठ्यम्।

मनोऽभिलषिते नायके आत्मनोऽनुरागं मन्मथव्यथां चाभिव्यञ्जयन्ती काचित्सखीमाह-

**अन्यः कोऽपि निसर्गो मन्मथशिखिनो हला हताशस्य।**
**निर्वाति नीरसानां हृदि सरसानां ज्वलति झटिति।।३०।।**[२]

---

१. **खिप्पइ हारो थणमण्डलाहि तरुणीअ रमणरिरम्भे।**
**अच्चिअगुणा वि गुणिनो लहन्ति लहुअत्तणं काले।।२९।।**
[क्षिप्यते हारः स्तनमण्डलात्तरुणीभी रमणपरिरम्भे।
अर्चितगुणा अपि गुणिनो लभन्ते लघुत्वं कालेन।।]

२. **अण्णो को वि सुहावो मम्महसिहिणो हला हआसस्स।**
**विज्झाइ णीरसाणं हिअए सरसाणँ झत्ति पज्जलइ।।३०।।**
[अन्यः कोऽपि स्वभावो मन्मथशिखिनो हला हताशस्य।
निर्वाति नीरसानां हृदये सरसानां झटिति प्रज्वलति।।]

निसर्गः स्वभावः। हला हे सखि, 'हण्डे हञ्जे हलाह्वाने' इत्यमरः। हताशस्येति कामाग्निं प्रतीर्ष्यासूचनार्थम्। मन्मथशिखिनः कामाग्नेः। नीरसानामनुरागरहितानां शुष्काणां च। निर्वाति प्रशान्तो भवति। सरसानामनुरागिणामर्द्राणां च। अग्निः किल शुष्के ज्वलति, आर्द्रे च निर्वाति। कामानलस्य तु तद्विपरीत एव स्वभाव इत्यर्थः। विरोधो वाच्योऽलङ्कार'ः। नीरसानां हृदि शुष्कतारूपकारणसत्त्वेऽपि ज्वलनकार्यानुदयाद्विशेषोक्तिः। सरसानां हृदि शुष्कतारूपस्य ज्वलनकारणस्याभावेऽपि कार्योदयाद्विभावना वा। बद्धानुरागाहं मनोऽभिलषितेन तेन नायकेन विना बाढमान्तरव्यथामनुभवामीति व्यङ्ग्यम्।

अन्यत्रासक्तस्य मन्दस्नेहस्य नायकस्य प्रणयभङ्गं सूचयन्ती काचिद्रहस्यान्तर्भुक्तां मातुलानीमाह–

**मानपरिवर्धितस्य हि चिरप्रणयबद्धमूलस्य।**
**मातुलि रवोऽपि पततः श्रुतोऽस्य न प्रेमवृक्षस्य।।३१।।**[१]

मानेन प्रणयबहुमानेन परिवर्धितस्य। चिरप्रणय एव बद्धं दृढं मूलमस्य। प्रेमरूपस्य वृक्षस्य पततः रवोऽपि न श्रुतः। मानपरिवर्धितस्य प्रकाण्डपरिमाणानुसारं वर्धितस्य दृढमूलस्य वृक्षस्य प्रायः पतनमेव दुर्घटम्, दैवाद्यदि पतनं भवेत्तथापि शब्दस्त्ववश्यं भवेत्। सोऽप्यत्र नास्तीति भावः। तथा च–चिरान्मयि दृढसक्तोऽपि वल्लभोऽन्यत्रासक्त्या प्रेमभङ्गं कृतवान्, न चैतद्विषयिणी काचिच्चर्चाप्यश्रूयतेति मातुलानीं प्रति सूच्यते। 'कापि मानग्रहिलायाः सख्याः खडितं सौभाग्यं मातुलान्यां सविस्मयमाह' इति गङ्गाधरः।

अगृहीतानुनयां मानिनीं सखी सखेदमाह–

**गणितो न पादपतितो भणितो विप्रियमपि प्रियं जल्पन्।**
**न निरुद्धो निर्यन्नपि वद कस्य कृते कृतो मानः।।३२।।**[२]

---

१. **तह तस्स माणपरिवड्ढिअस्स चिरपणअवद्धमूलस्स।**
**मामि पडन्तस्स सुओ सद्दो वि ण पेम्मरुक्खस्स।।३१।।**
[तथा तस्य मानपरिवर्धितस्य चिरप्रणयबद्धमूलस्य।
मातुलानि पततः श्रुतः शब्दोऽपि न प्रेमवृक्षस्य।।]

२. **पाअपडिओ ण गणिओ पिअं भणन्तो वि अप्पिअं भणिओ।**
**वच्चन्तो वि ण रुद्धो भण कस्स कए कओ माणो।।३२।।**
[पादपतितो न गणितः प्रियं भणन्नप्यप्रियं भणितः।
व्रजन्नपि न रुद्धो भण कस्य कृते कृतो मानः।।]

पादयो: पतितोऽपि न गणितो नावेक्षित:। (प्रिय इत्यर्थत आक्षिप्यते)। प्रियं जल्पन्नप्यप्रियं भणित:। केलिभवनान्निर्गच्छन्नपि न निरुद्ध:। कस्य कृते कस्यार्थे। त्वया मान: कृत इति वद। दम्पत्यो: प्रणयपरिपाकजनितो मान: पादपतनादिकं फलमुपलभ्य परिसमाप्यते। ततश्च पादप्रणामोत्तरमपि तवायं मान: किंनिमित्त इति भाव:। 'कस्य कृते' इत्यनेन पादपतनोत्तरमपि यद्यधिकं मानग्रहिला भविष्यसि तर्हि प्रियस्त्वयि विरक्तो भवेत्। तथा च प्रियप्रणयभङ्गे सति कीदृशोऽयं ते मान:, अनुचितमेव ते मानग्रहिलत्वमिति सख्याभिव्यज्यते। अथवा- कस्य कृते कं वा युवानं रमयितुं त्वया मानग्रहिलतयाऽयमवसर: सम्पादित इति सकोपोपालम्भं सख्या वचनमिति केचिदाहु:। मानिनीमनुनेतुमेतावदनुधावनमनौचित्यं जनयेदत: पूर्वोक्ताशय एव सम्यगिति साम्प्रदायिका:।

कस्याश्चन मुग्धाया निभृतचेष्टितं कस्माच्चन स्थानात्पश्यन्नागरिक: सहचरमाह-

**क्षणमुञ्छति मार्जयति क्षणमुद्धुवति क्षणं न तद्विदती।**
**मुग्धवधू: स्तनपृष्ठे दत्तं दयितेन नखरपदम्।।३३।।**[१]

मुग्धा वधू:। नखरपदं नखक्षतम्। तत् न विदती, तस्य नक्षक्षतस्य याथार्थ्यं न जानतीत्यर्थ:। क्षणम् उञ्छति प्रोञ्छति वस्त्रादिनापमार्ष्टीत्यर्थ:। क्षण मार्जयति जलेन क्षालयति। क्षणमुद्धुवति वस्त्रादिना प्रस्फोटयति ('फटकारना' 'झडकारना' हिन्दी भाषायाम्) 'स्वेनेभाजिनपल्लवेन रभसात्प्रस्फोटयद्धूर्जटि:' इत्यनर्घराघवे मुरारि:। स्तनपृष्ठे नक्षतं दृष्ट्वा किमिदमिति हस्तेन पूर्वं प्रोञ्छति। हस्तेन तदपनयनाभावे क्षालयति। ततोऽपि नापयाते तस्मिन् वस्त्रादिना प्रस्फोटयतीति मुग्धचेष्टितैर्नायिकाया: सारल्यातिशयो व्यज्यते। स्तनपृष्ठ इति पृष्ठपदेन कन्दुकाकारयो: स्तनयो: कठोरता व्यज्यते। 'सपत्न्या दुश्चरितं सूचयितुं कापि सोपालम्भमाह' इति गङ्गाधर:। नायकमुत्कण्ठयितुं नायिकाया नवयौवनं प्रतिपादयन्त्या दूत्या इयमुक्तिरित्यपि केचित्।

निबिडघनघटाच्छन्नतयाऽन्धकारितदशदिगन्तरासु वर्षासु नियतसङ्केतनिकुञ्जेऽभिसारसुखमनुभूतवती काचित्प्रावृट्समाप्तौ तस्यासौकर्यं बोधयन्ती शरद्वर्णनप्रस्तावमवतारयति-

---

१. **पुसइ खणं धुवइ खणं पप्फोडइ तक्खणं अआणन्ती।**
**मुद्धवहू थणवट्टे दिण्णं दइएण णहरवअम्।।३३।।**
[प्रोञ्छति क्षणं लाक्षयति क्षणं प्रस्फोटयति तत्क्षणमजानती।
मुग्धवधू: स्तनपदे दत्तं दयितेन नखरपदम्।।]

**यौवन इव नववर्षाकाले प्रोन्नतपयोधरे याते।**

**प्रथमैककाशकुसुमं पलितमिवालोक्यते भूमेः।।३४।।**[१]

प्रोन्नताः पयोधरा मेघा यस्मिन् ईदृशे वर्षाकाले। प्रोन्नतौ पयोधरौ स्तनौ यस्मिन्नेवं विधे नवयौवन इव व्यतिक्रान्ते सति। प्रथममेकं काशपुष्पं भूमेः पलितमिव वार्धक्यजातं केशशौक्ल्यमिवालोक्यते। तथा च, वर्षाकाले यावती शृङ्गाररसोपकरणसामग्री न तावती शरत्समये इति वर्षाणां प्रियकरत्वं व्यज्यते। जरत्याः सम्मुखे शृङ्गारचेष्टाप्रकाशनानौचित्येन वनभूमौ नेदानीमभिसरणं भविष्यतीति वक्त्र्या ध्वन्यते। 'आत्मनः सङ्केतस्थानगमनं जारं प्रति श्रावयन्ती कापि शरद्वर्णनमाह' इति गङ्गाधरः। यद्वा– न केवलं मामेव वार्धकं ग्रसते, पश्य धरण्या अपीमामेवावस्थामिति हसन्तं विटं प्रति जरद्वेश्यायाः कस्याश्चिदियमुक्तिः।

एवंविधे समये तव विदेशगमनमनुचितमिति नायकं सूचयन्ती काचिद्वर्षासमयं वर्णयति–

**कुत्र गतं रविबिम्बं नष्टाः किल चन्द्रतारकाः कुत्र।**

**नभसि बलाकापङ्क्तिं होरामिव कर्षति हि कालः।।३५।।**[२]

घनघटाच्छन्नत्वात्सूर्यचन्द्रतारका दृष्टितो लुप्ताः। अत एव कालस्तेषां सूर्यादीनां प्रतिसाधनार्थं नभसि आकाशे बलाकापङ्क्तिं बकस्त्रीराजिं होरामिव कठिनी– (खटिका 'खडिआ')– रेखामिवाकर्षति विदधाति। अन्योऽपि ज्योतिर्वित् सूर्यादिग्रहप्रतिसाधनार्थं (स्पष्टीकरणार्थम्) रजआच्छादितायामवनौ कठिनीरेखामाकर्षति। यथा हि गणिताध्याये भास्कराचार्यः– ''समायामवनौ ग्राह्यार्धप्रमाणेन सूत्रेणेष्टस्थानकल्पितबिन्दोर्वृत्तं लिखित्वा

---

१. **वासारत्ते उण्णअपओहरे जोव्वणे व्व वोलीणे।**

**पढमेक्ककासकुसुमं दसइ पलिअं व धरणीए।।३४।।**

[वर्षाकाले उन्नतपयोधरे यौवन इव व्यतिक्रान्ते।

प्रथमैककाशकुसुमं दृश्यते पलितमिव धरण्याः।।]

२. **कत्थ गअं रइबिम्बं कत्थ पणट्ठाओं चन्दताराओ।**

**गअणे वलाअपन्तिं कालो होरं व कड्ढेइ।।३५।।**

[कुत्र गतं रविबिम्बं कुत्र प्रणष्टाश्चन्द्रतारकाः।

गगने बलाकापङ्क्तिं कालो होरामिवाकर्षति।।]

तस्मादेव बिन्दोर्मानैक्यखण्डप्रमाणेन सूत्रेणान्यद्वृत्तं कृत्वा तस्य बिन्दोरुपरि प्राच्यपरं याम्योत्तरं च सूत्रं खटिकया रजसा च रेखे कार्ये' इति। आकाशे दृश्यमानेयं बलाकापङ्क्तिर्नास्ति, किन्तु नष्टानां सूर्यादीनां प्रतिसाधनार्थं ज्योतिर्विदा इव कालेन कठिनीरेखेयमङ्कितास्तीति भावः। 'होरा लग्नेऽपि राश्यर्धे रेखाशास्त्रभिदोरपि' इति मेदिनी। एवं च कालोऽप्यस्मिन् घनघटाच्छन्नतमे गगने सूर्याचन्द्रमसोरन्वेषणं कुरुते। भवानेवंविधेऽन्धकाराच्छन्नतयाऽनुपलब्धपथे कामोन्मादमये समये कुत्र गमिष्यतीति कान्तं ध्वन्यते। वर्षासु पङ्क्तिबन्धेन गगने बलाकानामवस्थानं प्रसिद्धम्। यथ– 'गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः' इति कालिदासः। बलाका अपि वर्षास्वेवं सज्जास्तिष्ठन्ति, अहं तु त्वत्प्रस्थाने सर्वमिदं विसर्जयिष्यामीत्येतदपि यदि बुद्धौ स्फुरति तर्हि व्यज्येत।

शङ्काकुलस्योपपतेः शङ्कापनयनाय प्रबलवर्षाझङ्कारमेवं वर्णयति काचित्–

**अविरलनिपतन्नवजलधाराघनरज्जुनिबिडसङ्घटिताम्।**

**अप्रभवन्नुत्क्षेप्तुं रसतीव महीं घनो विलोकयत।।३६।।**[१]

घनो मेघः। अविरलं निपतन्त्यो नवजलधारा एव घनाः सान्द्रा रज्जवस्ताभिर्निबिडं सङ्घटितां बद्धां महीम् उत्क्षेप्तुम् ऊर्ध्वमाक्रष्टुम् अप्रभवन् अशक्नुवन् सन्निव रसति शब्दायते इति विलोकयत। इमा निरन्तरासारा जलधारा न सन्ति किन्तु पृथिवीमूर्ध्वमाकर्ष्टुं बद्धा निबिडा रज्जवः सन्ति। तद्द्वारा महीमुत्क्षेप्तुमशक्नुवन्निवायं जलधरः श्रमविनोदार्थं शब्दायत इत्युत्प्रेक्षा। अन्येऽपि बृहत्पाषाणादिकं रज्जुभिर्बध्वा ऊर्ध्वमुत्क्षिपन्तो भारवाहाः शब्दं कुर्वन्तीति भावः। तथा च– एवं मुशलधारावर्षं वर्षति वारिधरे न कस्यापि जनस्यात्र सञ्चारशङ्का, तन्निःशङ्कं रम्यतामित्युपपतिं प्रत्यभिव्यज्यते। घनो रसतीत्यनेन मेघगर्जनशब्दाद्रमणसमये कङ्कणादिशब्दोऽपि न कस्यापि कर्णगोचरो भवेदिति ध्वन्यते। नवजलधारा इत्यनेन प्रथमवर्षाजलस्य स्वास्थ्यविघातकत्वाद् वर्षाभिरनुद्विजन्नपि पुरुषो न बहिर्निर्गमिष्यतीति द्योत्यते। बद्धामित्यनुक्त्वा सङ्घटितामित्यनेन सङ्ग्रथनं सूच्यते, तेन रज्जुद्वारा परितः सङ्ग्रथ्योर्ध्वकर्षणोत्प्रेक्षणाज्जलधाराणां सान्द्रत्वातिशयो ध्वन्यते।'रसतीव' इति रसतीत्यनेन सह इवशब्दसम्बन्धस्तु गङ्गाधरादिप्रदर्शितो न मनोरमः। गर्जनस्य स्वतो जायमानत्वेनोत्प्रेक्षणाभावात्, किन्तु तत्रोत्क्षेप्तुमप्रभवनमेव हेतुत्वेनोत्प्रेक्ष्यमिति सुधीभिरनुसन्धेयम्।

---

१. **अविरलपडन्तणवजलधारारज्जुघडिअं पअत्तेण।**
**अपहुत्तो उक्खेत्तुं रसइ व मेहो महिं उअह।।३६।।**
[अविरलपतन्नवजलधारारज्जुघटितां प्रयत्नेन।
अप्रभवन्नुत्क्षेप्तुं रसतीव मेघो महीं पश्यत।।]

कान्तवियोगस्य सम्प्रति दुःसहत्वं सूचयन्ती काचित्प्रियाऽऽनयनत्वरार्थं हृदयोपालम्भ-व्याजेनात्मपीडां श्रावयति-

**अयि हृदयावधिदिवसं प्रतिपद्य तदा हि दयितस्य।**
**विस्रम्भघातकाकुल किमिदमकस्मात्त्वया समारब्धम्।।३७।।**[१]

अयि हृदय! तदा प्रवासगमनसमये अवधिदिवसं दयितस्य प्रतिपद्य दयितसमक्षं स्वीकृत्य। अकस्मादाकुल सहसैव व्याकुलतामनुभवत्! अत एव हे विस्रम्भघातिन् विश्वा-सघातिन्! त्वया इदं किं समारब्धम्। यदा प्रियतमसविधे अवधिदिनं नियमितं तदा तावत्पर्यन्तं विश्वासः कर्तव्य आसीत्त्वया तु मध्य एव व्याकुलताङ्गीकृता, सोऽयं ते विश्वासघात इति भावः। अहं तावत्पर्यन्तं प्राणान्धारयितुं न प्रभविष्याम्येवं मे व्याकुलतेति दयितानयनत्वरार्थं सखीं प्रति ध्वन्यते। किमिदमारब्धमित्यनेन- मम हृदये तावती वेदना यामहं सम्यक्तया न परिच्छिनद्मीति विकलतातिशयो ध्वन्यते। हृदयामन्त्रणेन 'न मे वशः, अकस्मादेव हृदये तादृशी पीडाभूदि'ति निजपारतन्त्र्यं सूच्यते। आरब्धमिति भूतकालिकक्तप्रत्ययेन 'सेयं व्याकुलता बहोः कालादारब्धैव, इदानीमेतस्या अपनयनमेव चिन्त्यतां नान्यः प्रत्युपायः' इति द्योत्यते।

सुरतव्यतिकरेण भग्नवलयायाः कस्याश्चन सुदृशो रहस्यगोपनाऽपाटवं सर्वतः सूचयन्ती काचित्साकूतमाह-

**नावैति योऽपि तस्यापि वदति भग्नानि तेन वलयानि।**
**ऋजुकाधिकं वराकी, दयितो वास्या हताशायाः।।३८।।**[२]

---

१. **ओ हिअअ ओहिदिअहं तइआ पडिवज्जिऊण दइअस्स।**
**अत्थेक्काउल वीसम्भघाइ किं तइ समारद्धम्।।३७।।**
[हे हृदय अवधिदिवसं तदा प्रतिपद्य दयितस्य।
अकस्मादाकुल विस्रम्भघातिन् किं त्वया समारब्धम्।।]

२. **जो वि ण आणइ तस्स वि कहेइ भग्गाइँ तेण वलआइँ।**
**अइउज्जुआ वराई अह व पिओ से हआसाए।।३८।।**
[योऽपि न जानाति तस्यापि कथयति भग्नानि तेन वलयानि।
अतिऋजुका वराकी अथवा प्रियस्तस्या हताशायाः।।]

भग्नकरवलयैव प्रकटं स्थिता सेयम्– योऽपि नावैति न जानाति, तस्यापि तेन मे वलयानि भग्नानीति वदति। भग्नवलयौ करौ वहन्ती सेयं स्वमुखेनेव जारकृतकङ्कणभङ्गं वदतीत्यर्थः। अत एव सेयं वराकी अतिऋजुका, रहस्यस्यागोपनात्। अथवा हताशाया अस्या दयितः अतिऋजुकः, यो गोपनीयसुरतप्रसङ्गेऽपि वलयभङ्गादि रतप्रकाशककार्यमविचारात्कृत-वानिति भावः। वराकीपदेन वलयपदगोपनरूपं सामान्यकार्यमपि कर्तुमशक्नुवतीं प्रति दयनीयतया पक्षपातो ध्वन्यते। येन वलयानि भग्नानि तं दयितं प्रति आक्रोशमप्रयुज्य 'अस्या हताशायाः' इत्यत्र हताशापदेन तां वराकीं प्रत्येवाक्रोशप्रदर्शनात् 'अनया दयित एवैतादृगुपलब्धो यो रहस्यगोपनं न वेत्ति, एतेन चास्या एव लज्जा गच्छति न तस्य' इत्युपालम्भो ध्वन्यते। 'रतप्रवृत्तजारभग्नवलयायाः सपत्न्याश्चारित्रखण्डनं प्रकाशयन्ती काचिदाह' इति गङ्गाधरः। प्राकृतवत् संस्कृतेऽपि अतिऋजुकेति निःसन्धिकः प्रयोगस्तु गङ्गाधरस्याप्रयुक्त एवेति मच्छायायाम् 'ऋजुकाधिकम्' इति निरवर्त्यत।

कस्याश्चन कपोललावण्यलक्ष्मीं वर्णयन्कश्चिदात्मनश्चुम्बनाभिलाषं प्रकाशयति–

**श्यामाया गुरुयौवनविशषभरिते कपोलमूलेऽस्मिन्।**
**पीयत इव लावण्यं न्यङ्मुखकर्णावतंसेन।।३९।।**[१]

श्यामाया उत्तमनायिकायाः। षोडशवार्षिक्या इति केचित्। गुरुणा पूर्णेन यौवनेन विशेषतो भरिते (मांसले) कपोलमूले न्यङ्मुखेन अधोमुखेन कर्णाभरणेन लावण्यरसः पीयत इव। अन्योऽपि कपोलाभिमुखं न्यञ्चितमुखः सन्कपोलं चुम्बति, एवमेवाधोऽमुखोऽसौ कर्णाव-तंसो यौवनेन मांसलतया समीपागते कपोलमूले लावण्यरसं पिबतीति भावः। अहमप्यनेन प्रकारेण चेदिमं रसं गृह्णीयां तर्हि भाग्यभिनन्देयमिति नायकेनाभिव्यज्यते। अत्रापि इवकारस्य पीयते अनेन साकमेव सम्बन्धः, पानस्यैवोत्प्रेक्ष्यमाणत्वात्। पीयते अत्र लावण्यकर्मकस्य पानस्य बाधितत्वाद् ग्रहणे लक्षणा। तेन लावण्यरसस्य निरतिशयमनुभवं करोतीति बहुमानाति-शयो ध्वन्यते।

अतिशयितेनानुरागेण बाह्यज्ञानशून्यायाः कस्याश्चिदवस्थाविशेषं सखीं प्रति काचिदाह–

---

१. **सामाइ गरुअजोव्वणविसेसभरिए कवोलमूलम्मि।**
**पिज्जइ अहोमुहेण व कण्णवअंसेण लावण्णम्।।३९।।**
[श्यामाया गुरुकयौवनविशेषभृते कपोलमूले।
पीयतेऽधोमुखेनेव कर्णावतंसेन लावण्यम्।।]

**स्वेदार्द्रितसर्वाङ्गी गोत्रग्रहणेन तस्य सुभगस्य।**
**तस्यैव भवनमाप्ता दूतीं प्रस्थापयन्ती सा।।४०।।[१]**

दूतीं प्रस्थापयन्ती प्रेषयन्ती सा। गोत्रग्रहणेन नामग्रहणेन। स्वेदार्द्रितसर्वाङ्गी स्वेदेनार्द्रीकृतानि सर्वाण्यङ्गानि यस्याः एवंविधा सती तस्य भवनमेव गृहाङ्गणमेव प्राप्ता। नामनिर्देशसमये तन्नाम्ना तदङ्गसंस्थानस्य भावनावशात्सात्त्विकभावस्य स्वेदस्योद्गमो जात इत्यर्थः। अनेन सततं तद्गतचित्तायास्तस्या औत्सुक्यातिशयो व्यज्यते। दूतीं प्रेषयन्त्याः स्वयं गृहाङ्गणस्यैव प्राप्त्या वेद्यान्तरशून्यता सूच्यते। तया च मोहानुगुणा दशा व्यज्यते। सर्वाङ्गस्वेदवर्णनेन-नामग्रहणे नायकस्मरणात् समागमसमयतदङ्गावसक्तनिजसर्वाङ्गाणामध्यासस्तस्या जात इति सततं नायककर्मकभावनाविशेषो व्यज्यते। स्वेदाद्यनुभावैः, औत्सुक्यमोहादिभिः सञ्चारिभिश्च नायकालम्बनाया नायिकानिष्ठरतेः परिपोषो ध्वन्यत इत्यलम्। 'अत्यासक्त्या बाह्यम-संवेदयन्त्याः कस्याश्चिद्वृत्तं कापि सखीशिक्षार्थमाह' इति गङ्गाधरटीका।

दुःसहया विरहवेदनया निजपर्यवसानं सूचयन्ती काचिद्दयितानयनाय सखीजनं त्वरयितुं कुसुमशरनमस्कारभङ्गीमेवमङ्गीकरोति-

**जन्मान्तरेऽपि चरणौ जीवेन मदन तवार्चयिष्यामि।**
**यदि तमपि तेन विध्यसि विद्धाहं येन विशिखेन।।४१।।[२]**

हे मदन! येन बाणेनाहं विद्धा, तेन यदि तमपि कान्तमपि विध्यसि, तर्हि अस्मिन् जन्मन्येव किम् जन्मान्तरे अग्रिमे जन्मन्यपि, अन्वस्तुद्वारा किं जीवेन निजजीवितद्वारा तव

---

१. **सेडल्लिअसव्वङ्गी गोत्तग्गहणेण तस्स सुहअस्स।**
**दूइं पट्ठाएन्ती तस्सेअ घरङ्गणं पत्ता।।४०।।**
[स्वेदार्द्रीकृतसर्वाङ्गी गोत्रग्रहणेन तस्य सुभगस्य।
दूतीं प्रस्थापयन्ती (सन्दिशन्ती वा) तस्यैव गृहाङ्गणं प्राप्ता।।]

२. **जम्मन्तरे वि चलणं जीएण खु मअण तुज्झ अच्चिस्सम्।**
**जइ तं पि तेण बाणेण विज्झसे जेण हं विज्झा।।४१।।**
[जन्मान्तरेऽपि चरणौ जीवेन खलु मदन तवार्चयिष्यामि।
यदि तमपि तेन बाणेन विध्यसि येनाहं विद्धा।।]

चरणावर्चयिष्यामि। येन बाणेनाहं विद्धा तेनेत्यनेन–तव पञ्चशरत्वेऽपि यो बाणो मद्हृदये यादृशीं पीडां चकार नान्यो बाणस्तथा कुर्यादत एव तेनैव बाणेन विध्य, तदन्येषां चतुर्णामन्यतमेन नेति, पीडातिशयस्यानुभवो ध्वन्यते। जीवेनार्चयिष्यामित्यनेन–विरहवेदनावसन्नसर्वाङ्ग्याः प्रियनिवेदितचित्ताया मे निवेदनोचितं जीवितमेवावशिष्टमिति ध्वन्यते। जन्मान्तरेऽपीत्यनेन–वियोगानलदग्धदेहाया मे समाप्तप्रायमिदं जीवितम्, अत एव तवेममुपकारं जन्मान्तरेऽपि मानयिष्यामीति मर्मान्तिकं विरहदुःखं ध्वन्यते। तथाच–कामशरजर्जरितहृदयाया मे असह्यवेदनया गमनोन्मुखाः प्राणाः, तत्त्वरितं कान्तसमागमोपायश्चिन्त्यतामिति सखीजनं प्रति ध्वन्यते।

अतिबालायां रतोन्मुखं कञ्चिदिङ्गितेनावबुध्य, कञ्चित्कालं यावद् रतसंरम्भं स्थगयितुम, अत्युत्कण्ठायामुत्फुल्लकरणविशेषेण सावधानं रन्तुं वा, काचिद्विदग्धवनिता मधुकरव्यपदेशेन शिक्षयति–

**निजपक्षारोपिततनुभरमतिनिपुणं रसं लिहता।**
**परिपीयते विकास्य हि मधुकरयूनेह मालतीकलिका।।४२।।**[१]

निजपक्षयोरुपरि आरोपितस्तनुभरः शरीरभारो यस्मिन्कर्मणि यथा भवति तथा, अतिनिपुणमतिसावधानं च यथा स्यात्तथा रसं लिहता पुष्परसमास्वादयता। पक्षाभ्यामुड्डीयमानतया पक्षार्पितशरीरभारेण सता, अतिसतर्कं रसं लिहतेत्यर्थः। मधुकरयूना मालतीकलिका विकास्य पीयते। अत्यन्तमवहितः सन् विकासोत्तरमेव परमचातुर्येण मालतीकलिकागतं रसमास्वादयति मधुकरो न विकासात्प्राक्। तथा च–नेदानीं बालायामस्यां रतारम्भस्ते समुचितः, किन्तु यौवनेन रजोविकासे सत्यपि प्रथमरतेऽति सतर्कतया त्वया रन्तव्यमिति नायकं प्रत्यभिव्यज्यते। पक्षान्तरे (अत्युत्कण्ठायां विकासात्प्रागेव रतपक्षे) तु–मधुकरो यथा पक्षाभ्यामुड्डीयमानः शनैः शनैर्विकासिताया मालतीकलिकाया रसमतिचातुर्येणास्वादयति, तथा असमर्पितभारमतिदाक्षिण्येन बालाया अस्या जघनमुत्फुल्लकेन विवार्य मृदुतमं रन्तव्यमिति ध्वन्यते।'शिरो निपात्योर्ध्वं जघनमुत्फुल्लकम्' इति वात्स्यायनः।'जघनशिरोभागमधस्ताच्छय्यायां विनिपात्योत्तानमूर्ध्वं जघनं कुर्यात्। अतिविस्तारणार्थमुपर्युपरि स्थितहस्तपृष्ठे त्रिकभागं विनिवेशयेत्। एवं जघनस्योर्ध्वं विस्तृतत्वादुत्फुल्लमिवोत्फुल्लकमिति' तट्टीका। 'पिबता' इति

---

१. **णिअवक्खारोविअदेहभारणिउणं रसं लिहन्तेण।**
**विअसाविऊण पिज्जइ मालइकलिआ महुअरेण।।४२।।**
[निजपक्षारोपितदेहभारनिपुणं रसं लभमानेन।
विकास्य पीयते मालतीकलिका मधुकरेण।।]

नोक्त्वा लिहतेति कथनेन ईषदीषच्चुम्बनादिना बाह्यरतानन्दो ग्राह्य इति ध्वन्यते। मालतीकलिकाया रसः पीयते इति वक्तव्ये मालतीकलिका पीयते इत्यनेन यावन्नेयं विकसति तावदियं कलिकामात्रमेव नास्यां रसः, तथा च सेयमेव उपर्युपरित उत्फुल्लकेन सङ्गन्तव्या, रसस्तु नोपलभ्येतेति ध्वन्यते। मधुकरयूनेति युपपेदन-त्वं यथा रसपरिज्ञानशालीं तथा नेयम्, अत एव विकासं यावत्प्रतीक्षा कर्तव्येति सूच्यते। परिपीयते इत्यत्र पर्युपसर्गेण-विकासोत्तरं पूर्णं रसं लप्स्यस इति प्ररोचनाभिव्यज्यते प्रथमे पक्षे। यद्वा-त्वामपीडयन्नेवसौ रमयिष्यतीति नवव-धूमाश्वासयितुं नायकस्य नववधूसम्भोगकौशलमन्यापदेशेन प्रतिपादयन्त्या दूत्या इयमुक्तिः।

प्रवासार्थ कृतोद्यमं कान्तं प्रति वसन्ते सम्भवन्तीं पान्थानां दशां दर्शयन्ती नायिका आह-

**कुरुनाथ इव हि पथिको व्यथते किल माधवस्य मिलितेन।**
**स्पृष्टो यदृच्छयायं दक्षिणवातेन भीमेन।।४३।।**[१]

अयं पथिको माधवस्य वसन्तस्य वैशाखस्य वा मिलितेन सङ्गतेन। भीमेन भयानकेन विरहितवेदनादायकत्वात्। दक्षिणवातेन दक्षिणपवनेन यदृच्छाया स्पृष्टः कुरुनाथ इव व्यथते दूयते। कुरुनाथो दुर्योधनोऽपि माधवस्य भगवतः कृष्णस्य मिलितेन सङ्गतेन भीमेन भीमसेनेन स्पृष्टो व्यथते। प्राकृते 'दाहिणवाएण' इत्यस्य दक्षिणपादेनेति छायया दक्षिणचरणेन स्पृष्टो दूयत इत्यर्थः। एवं च माधवकृतसाहाय्येन भीमसेनेन दक्षिणचरणद्वारा स्पृष्टो दुर्योधनो व्यथत इति पूर्णोऽर्थः। तथाच-विरहजनदुरन्तेऽस्मिन्वसन्ते मलयमारुतस्पर्शकरम्बितगात्राणां पान्थानां कीदृशी व्यथेति विचारयता भवता प्रवासः प्रत्याख्येय इति नायिकया प्रियं प्रति सूच्यते। 'चिरविरहिणीं युवतीं सखी समाश्वासयि-तुमाह' इत्यवतरणम्, 'वसन्तभयादचिरादेवागमिष्यति ते प्रिय इति' तद्भावं चाह गङ्गाधरः।

अनवाप्तयौवनया जायया सह रममाणं नायकं प्रणयिनी काचिद्विदग्धा सस्नेहपरिहासं मधुकरव्यपदेशेनाह-

---

१. **कुरुणाहो व्विअ पहिओ दूमिज्जइ माहवस्स मिलिएण।**
**भीमेण जहिच्छिआए दाहिणवाएण छिप्पन्तो।।४३।।**
[कुरुनाथ इव पथिको दूयते माधवस्य मिलितेन।
भीमेन यथेच्छया दक्षिणवातेन स्पृश्यमानः।।]

**ईषत्कोषविकासं यावन्नाप्नोति मालतीकलिका।**
**मकरन्दपानलोलुप मधुकर किं तावदेव मर्दयसि।।४४।।**[१]

मालतीकलिका कोषस्य कुड्मलस्य विकासमुन्मीलनम्। यावत् ईषत् किञ्चिन्नाप्नोति, मकरन्दस्य पुष्परसस्य पाने लोलुप लोभिष्ठ। मधुकर तावदेव एतस्मिन्नन्तराल एव किं मर्दयसि किमिति दलयसि। अन्तःकोषस्य विकासे सत्येव कुसुमे रसोद्भवः स्यात्, एवं सत्यपि रसपानेऽत्यन्तलालसत्वात्तावदेव तां मर्दयसीत्यनुचितम्। तथा च सदि रसग्रहणे लालसा तर्हि तावत्प्रतीक्षणीयमिति भावः। एवमर्थप्रतीत्यनन्तरं शब्दशक्तिवशात्–'अकुसुमिततया कलि-कोपमा इयं नायिका यावत्कोषविकासं वराङ्गकुड्यलविकासं नाप्नोति, रसिसुखलम्पटतया तावेदव किमेनां मर्दयसि' इत्यपरार्थो ध्वन्यते। यावत्किल कोषविकासो न भवेन्न तावल्लभ्येत रतिसुखम्। तथापि मधुकरस्वभावात् (रतिरसलम्पटतानिसर्गात्) त्वमेनामेतिस्मिन्नेवान्तराले यन्मर्दयसि तत्ते रतिसुखलम्पटतया तावत्कालप्रतीक्षणासहत्वं सूचयति। अत एव त्वं मकरदलोलुपोऽसि! परं त्वया मनस्यभिलष्यमाणं सुखं विकासोत्तरमेव लभ्यमिति नायकं प्रति सवैदग्ध्यं सस्नेहं सपरिहासं च सूच्यते। तथा चैवंविधामप्राप्तयौवनां काञ्चित्कालं परिहाय अस्मद्विधासु विदग्धवनितासु प्रवर्तितव्यं येनाभिलष्यमाणसुखसमवाप्तिर्भवेदिति नायकं प्रति गूढं ध्वन्यते। किम् इति विशेषपदमनङ्गीकृत्य अविकलं मूलानुसरणे तु ''मधुप त्वं तावदेव मर्दयसि'' इति पाठो बोध्यः। एवं पाठे तु–यावदियमुन्मीलितमनोभवविलास न भवति तावदीषन्मर्दनीयैव, चेद्रतिरसलालसोऽसि। एवमुपचारेणैव किशोरीणामन्तःकोषाविकासो भवति, ताश्चानुरज्यन्तीति निर्भयमिममपूर्वरसमुपभुञ्जीथा इति नायकं प्रति सख्या वचनं बोद्धव्यम्। अस्मिन्पाठे–मालतीकलिकावन्मुग्धा दयनीया च सेयं नायिका यावद्वराङ्गकुड्मलविकासं नाप्नोति हंहो मकरन्दपानलम्पट भ्रमर! तावदेव एतावदन्तराल एव मर्दयसि बलादामर्दनेन निर्दलयसि! (काकुः)। रतिरसलम्पटस्त्वं तावत्कालं प्रतीक्षणासहिष्णुरस्यामसमये प्रवर्तसे,

---

१. **जाव ण कोसविकासं पावइ ईसीस मालईकलिआ।**
**मअरन्दपाणलोहिल्ल भमर तावच्चिअ मलेसि।।४४।।**
[यावन्न कोषविकासं प्राप्नोतीषन्मालतीकलिका।
मकरन्दपानलोभयुक्त भ्रमर तावदेव मर्दयसि।।]

एषा ते दुर्विदग्धतैवेति कस्याश्चन विदग्धप्रणयिन्या उक्तिरपि सम्भवतीति बोध्यम्। किमितिपदेन सोऽयमर्थो यथावदात्मलाभं लभत इत्येव मद्ग्रथितमूले समगृह्यत[१]।

---

१. अस्या गाथायाः 'नहि पराग नहि मधुर रस नहि विकास इहिँ काल। अली कलीही सौँ बँध्यो आगें कौन हवाल।।' इति हिन्दीमहाकविविहारिपद्येन सह तुलनां तन्वानाः केचन अस्या गाथायां वक्तुस्ताटस्थ्यरूपां भावरूक्षतामाक्षिपन्ति। साधयन्ति च यद्विहारिपद्ये विषयासक्तं सुहृदं प्रति भाविनोऽनर्थस्य चिन्तया व्याकुलता, एकान्तहितैषिता, परिणामदर्शिता, चेति सुहृज्जनोचिता भावा वक्तुः प्रकटं खेलन्ति, गाथायां तु न तथा। प्रत्युत ताटस्थ्येन स्नेहशून्यतेव प्रतीयत इति। अत्र तावद्विचारणीयं यत्तदिदं ताटस्थ्य प्रतीयते न वा। प्रतीयमानमपि तद् गाथाया उद्देश्यस्य प्रतिकूलमनुकूलं वा? यावत्किल विकासोन्मुखाया अस्या मालतीकलिकाया अन्तःपरागकोषस्य विकासो न भवति तावदेव त्वमेनां रसलोलुपतया किमिति मर्दयसीति सुमधुरमाक्षेपोक्तौ कथं व ताटस्थ्यं प्रतिभातीति वयं नाजानीम। स्पष्टं किल गाथायां निवेदितप्रायं यद्रसलोलुपस्त्वं कोषविकासात्प्रागेवास्यां प्रवृत्तोऽसि परं नास्याः सकाशाद्रसप्राप्तेराशा। प्रत्युत असमये मर्दनवशादग्रेऽपि रसप्राप्तेर्मार्गो रुध्यत इति मालतीकलिकायाः कोमलत्वमवेक्ष्य तत्कदर्थनेन व्यथितमानसतया हितचिन्तकताभावात्तत्पक्षमलम्ब्य सावेगं तत्कर्मतो वर्जनरभसः प्रकटितोऽस्ति। एतदपि किं ताटस्थ्यम्? 'नहि पराग नहि मधुर.' पद्ये एकान्तहितैषितादयो भावाः कदाचन केवलं "आगें कौन हवाल" अस्मादेव प्रतीयेरन्। एवमत्रापि 'मकरन्दपानलोलुप तावदेव किं मर्दयसि' इति पदैः 'रतिरसलम्पटतया रसविकासात्प्रागेव किमेनां कदर्थयसि' इति सहानुभूतिप्रदर्शनपरेऽस्मिन् वाक्ये हितचिन्तकताभावः कथं नाभ्युदेति? मकरन्दपानलोलुपेत्यामन्त्रणेन अविकसितकलिकाया विकासपर्यन्तं प्रतीक्षणीयतामालक्ष्यापि मकरन्दपानलोभान्धतया तदप्रतीक्षणात्सुमधुर उपालम्भोऽप्युपस्थाप्यते। 'न हि परागेति' पद्य 'सम्प्रति परागादेरभावेऽपि कलिकायामेवानुरक्तो मधुपः" इति दशामात्रमावेद्य वक्ता दूरमवतिष्ठते। गाथायां तु अविकासदशामावेद्य मकरन्दरसान्धतया माऽसौ प्रवर्ततामिति भयात् हितचिन्तकताबुध्या 'किं कदर्थयसीति' सदैन्यखेदप्रदर्शनं तन्निवारणमप्युपदिश्यते। ततः कथङ्कारं स्नेहशून्यतेहाऽऽक्षिप्यते?

अस्तु. तुष्यत दुर्जनन्यायेन यदि ताटस्थ्यमेवात्र स्वीकुर्मस्तथापि तद् गाथाया उद्देश्यस्य पोषकमेव न दूषकम्। अत्र हि प्राचां टीकाकाराणामवतरणस्य गाथाव्यङ्ग्यभङ्ग्याश्चानुसारेण "नायकं प्रति सानुरागा काचिदनवाप्तयौवनया नायिकया सह रममाणं तमभिवीक्ष्य मधुकरव्यपदेशेन सस्नेहपरिहासमाह" इति प्रसङ्गः स्थाप्यते। एवं स्थितौ–अविकसितमन्मथकोषा सेयं भवता विकासात्पूर्वमेव आमर्द्यते, अहो ते रसपानलम्पटता! रसस्तावद्विकासात्पूर्वमलभ्य एव। तथा च अस्मद्विधं युवतिजनं विहाय अस्थाने क्लिश्यसीति सानुरागमावेद्य नायको निवर्त्यतेऽस्मात्कर्मणः। ततश्च हितमुपदिशन्वक्ता 'त्वं चेद्वारितोऽप्यस्मिन्कर्मणि प्रवर्तसे तर्हिं न त्वयि मे सम्मतिः' इति विरोधं व्यञ्जयन्स्वस्य ताटस्थ्यमेव सूचयेत्। अत एव च वैमत्यभयात्कर्ता तस्मात्कर्मतो निवर्तते। तथा च तदिदं ताटस्थ्यं प्रतिकूलमनुकूलं वेति मार्मिकैरन्तः प्रविश्य परीक्षणीयमित्यलं पल्लवितेन।

भूयस्तरामनुरागं प्रदर्श्य पश्चान्मन्दस्नेहतामुपगतं नायकमनुकूलयितुं सवैदग्ध्यमुपालभमाना काचिदाह–

**अकृतज्ञ तव कृते यः प्रावृड्रजनीषु बहु मया क्षुण्णः।**
**अयि निरपत्रप पश्याम्यद्यापि ग्रामपङ्कं तम्।।४५।।**[१]

तव कृते घनान्धकारासु वर्षारात्रिषु यो बहुतरं गाहितः, अयि निरपत्रप अलज्जाशील! तं ग्रामकर्दममद्यापि पश्यामि। नाधुना भूयान् समयो व्यतीतो यत्र मया त्वदर्थं भूयान्सा: क्लेशा अनुभूताः, त्वं तु तत्सर्वं विस्मृतवानसीत्यहो ते अकृतज्ञतेति भावः। अद्यापि ग्रामपङ्कमित्यनेन–नाधुना स पङ्कोऽपि शुष्को यो मदनुभूतक्लेशसहनस्य साक्षीति स्वल्पकाल एव तव स्नेहो मन्दीबभूवेति नायकं प्रत्युपालम्भोऽभिव्यज्यते।'प्रावृड्रात्रिषु' इत्यनेन–जलधरान्धकारितदिगन्तरासु प्रावृड्रजनीषु रसपरवशस्त्वं मय्यनुरक्तोऽभूः परं प्रावृड्जनितपङ्को यावन्न शुष्यति तावदेवान्यासक्तोऽप्यभूरित्यहो तेऽस्थिरस्नेहस्य स्वार्थपरायणतेति 'निर्लज्ज' पदसहकारेण ध्वन्यते। मच्छायानिविष्टेन 'बहु' पदेन मासद्वय एव मया त्वदर्थं प्रावृड्रात्रिष्वपि कतिवारमभि–सारः स्वीकृतः, त्वं तु एतावत्स्वल्प एव समये मामन्यासक्ततया विस्मरसीत्याक्षेपातिशयो व्यज्यते। क्षुण्ण इत्यनेन त्वदासक्तचेतनाया मम मार्गगमनेऽपि नासीदवधानं येन पङ्किलं मार्गं सावहितमुल्लङ्घयेयम्, अत एवाहं कर्दमं गाहमानैवाचलमिति आवेगातिशयः सूच्यते। उत्पश्यामीति मूलपाठानुरोधेन– 'निह्रीकोत्पश्याम्यहमद्यापि ग्रामपङ्कं तम्' इति पाठः। अत्र उत्पश्यामीत्यस्य उत्प्रेक्षे, स्मरामीति वाऽर्थः। अहं त्वदर्थं सोढानि पूर्वकष्टान्यद्यापि भावयामि परं त्वं तथाप्युदासीनो भवसीति नायकं प्रति पूर्वप्रणयं संस्मार्य आनुकूल्यसम्पादनप्रयत्नः प्रदर्श्यते।

आत्मनो रसिकतां सूचयितुं नागरिकः सहचरं प्रति कस्याश्चन पुरुषायितं वर्णयति–

**राजति विगलत्कुन्तलविचलत्कुण्डलविलोलहारलता।**
**अर्द्धोत्पतिता विद्याधरी व पुरुषायिता बाला।।४६।।**[२]

---

१. **अकअण्णुअ तुज्झ कए पाउसराईसु जं मए खुण्णम्।**
**उप्पेक्खामि अलज्जिर अज्ज वि तं गामचिक्खिल्लम्।।४५।।**
[अकृतज्ञ तव कृते प्रावृड्रात्रिषु यो मया क्षुण्णः।
उत्पश्याम्यलज्जाशील अद्यापि तं ग्रामपङ्कम्।।]

२. **रेहइ गलन्तकेसक्खलन्तकुण्डलललन्तहारलआ।**
**अद्धुप्पइआ विज्जाहरि व्व पुरुसाइरी बाला।।४६।।**
[राजते गलत्केशस्खलत्कुण्डलललद्धारलता।
अर्धोत्पतिता विद्याधरीव पुरुषायिता बाला।।]

विगलन्तः शिथिलबन्धत्वेन विस्रंसमानाः कुन्तला यस्याः, विचलती सुरतसंरम्भेण कम्पमाने कुण्डले यस्याः सा। बहुव्रीहिगर्भः कर्मधारयः। पुरुषायिता बाला अर्द्धोत्पतिता किञ्चिदुड्डीना विद्याधरीव राजते। भुवं विहाय किञ्चिदेवोत्पतने उत्पतनप्रथमसंरम्भेण केशादीनां विगलनं यथा भवति तथा विपरीतरतं कुर्वन्त्या बालाया अपि भवतीति भावः। अमराप्सरः-प्रभृतिमन्यां खेगामिनीं देवजातिमनुक्त्वा विद्याधरीपदेनसेयं सुरतचातुरी न यया कयाचिल्लभ्या किन्तु या इमां विद्यां जानाति तयैव सम्यक् सम्पाद्येति तदभिज्ञायाः कामनीयत्वातिशयो ध्वन्यते। 'उद्धुप्पइआ' इति पाठे ऊर्ध्वोत्पतितेत्यर्थो बोध्यः। 'विपरीतरते मुग्धवधूप्ररोचनार्थं नागरिकः कस्याश्चित्पुरुषायितं वर्णयति' इति गङ्गाधरः। मत्कृतच्छायायां विगलदित्यादि 'वि-ल' वर्णयोः प्रासः प्रेक्ष्यः। मूलानुरोधेन त्रिष्वपि शत्रन्तानुप्रासलिप्सायां तु ''ललत्सुहारलता' इति पाठो बोध्यः।

निजसौभाग्यगर्वेण सदर्पं सञ्चरन्तं कञ्चन युवानं गुणगर्विता कापि कृष्णान्योक्तिविधया सवैदग्ध्यमाह-

**भ्रमसि यदि भ्रम कृष्णैवमेव सौभाग्यगर्वितो गोष्ठे।**
**दोषगुणौ महिलानां क्षमोऽसि यदि वै विचारयितुम्।।४७।।**[१]

हे कृष्ण! यदि सौभाग्यगर्वितो भ्रमसि तर्हि एवमेव सुखं भ्रम, चेन्महिलानां गुणदोषौ विचारयितुं समर्थोऽसि। उत्तमस्त्रीणां गुणदोषाभिज्ञस्यैव सौभाग्यगर्वः समुचित इत्याशयः। तथा च- मादृश्या यदि गुणान्परीक्षितुं क्षमो भविष्यसि तदैव ते सौभाग्यं परिज्ञास्यते, दुर्लभा किल मादृशी गुणशालिनीति शृण्वन्तं कान्तं प्रत्यभिव्यज्यते। 'गोष्ठे' इत्यनेन गवां स्थाने यथाकृष्णो भ्राम्यति एवं भवानपि यत्र कुत्रचित्सुलभासु साधारणयोषास्वेतावन्तं कालं सञ्चरितवान्, नाद्यावधि विदग्धवनितासमागमो लब्ध इति गूढमाक्षेपो ध्वन्यते। बहुषु पुस्तकेषु 'महिलाणं दोषगुणविचारखमो अज्जवि ण होसि' इति पाठः। तथा च- गोष्ठ एवैतावत्कालं भ्रान्तवान्, महिलानां गुणदोषविचारक्षमोऽद्यापि त्वं न भवसीति पूर्वोक्तोऽर्थः स्फुटीभवति। 'श्रीकृष्णं सौभाग्यगर्विता बल्लवी काचिदाह' इति गङ्गाधरः।

अनुनयपराङ्मुखं कान्तं शम्भोः प्रणामापदेशेन सामयिककर्तव्यं बोधयन्ती मानिन्याः सखी आह-

---

१. **जइ भमसि भमसु एमेअ कह्न सोहग्गगव्विरो गोट्ठे।**
**महिलाणं दोसगुणे विचारअइउं जइ खमो सि।।४७।।**
[यदि भ्रमसि भ्रम एवमेव कृष्ण सौभाग्यगर्वितो गोष्ठे।
महिलानां दोषगुणौ विचारयितुं यदि क्षमोऽसि।।]

**सन्ध्यासमये जलपूरिताञ्जलिं विघटितैकवामकरम्।**
**गौर्यै हि कोषपानोद्यतमिव नमत प्रमथनाथम्।।४८।।**[१]

सन्ध्यानुष्ठानसमये। जलेन पूरितोऽञ्जलिर्यस्य तम् किन्तु विघटितैकवामकरम्, विघट्टितः पृथग्भूतः एको वामः करो यस्य। अर्धनारीश्वरत्वेन वामभागस्थितगौरीकस्यापि सन्ध्यासमये गौरीसम्बन्धी वामः करः पृथग्भूत इत्यर्थः। एकस्मिन् हस्ते आचमनार्थं गृहीतसलिलमिति यावत्। गौर्यै गौर्याः कृते कोषपानरूपं दिव्यं कर्तुमुद्यतमिव प्रमथनाथं शिवं नमत। अन्यस्यां मेऽनुरागो नास्तीति गौर्याः प्रत्ययार्थं सन्ध्याचमनव्याजेन दिव्यमेव करोतीत्यर्थः। तथा च– प्रणयिन्याः प्रसादनार्थं दिव्यमपि कर्तव्यं भवति, ततश्च त्वयापि सेयं शपथप्रणामादि-भिरनुनेतव्या, नात्र विप्रतिपत्तव्यमिति नायकं प्रति ध्वन्यते। प्रमथनाथमित्यनेन– सर्वेषां प्रमथा-नामधिपोऽपि शम्भुस्तेषामभिमुखं दिव्यकरणे न सङ्कुचति, भवान्स्तु प्रणयिन्याः सम्मुखम-नुनयेनैव लज्जत इत्याक्षेपगर्भं नायकप्रोत्साहनमभिव्यज्यते। कोषदिव्यं तु याज्ञवल्क्यस्मृतौ– 'देवानुग्रान्समभ्यर्च्य तत्स्नानोदकमाहरेत्। संस्नाव्य पाययेत्तस्माज्जलं तु प्रसृतित्रयम्।।' नारदस्तु 'पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च। सशूकस्याव्यसनिनः कोषपानं विधीयते।।'

सौभाग्यशालिनीं प्रति दयितस्य प्रणयोऽवसानसमयेऽपि न मन्दीभवतीति सखी नायिकां निदर्शयन्त्याह–

**ग्रामण्यः सकलास्वपि दयितास्वनुमृतिगृहीतवेषासु।**
**दृष्टिर्वलते मर्मच्छेदेष्वपि वल्लभाभिमुखम्।।४९।।**[२]

अनुमृतेः अनुमरणस्य गृहीतो वेषो याभिस्तासु। मर्मच्छेदेष्वपि मर्मान्तकदुःखेष्व-पीत्यर्थः। सर्वा एव दयिता अनुमरणाय वह्निं प्रवेक्ष्यन्तीः पर्यन्ततो वीक्षमाणस्य ग्रामनायकस्य

---

१. **संझासमए जलपूरिअञ्जलिं विहडिएक्कवामअरम्।**
**गोरीअ कोसपाणुज्जअं व पमहादिवं णमह।।४८।।**
[संध्यासमये जलपूरिताञ्जलिं विघटितैकवामकरम्।
गौर्यै कोषपानोद्यतमिव प्रमथाधिपं नमत।।]

२. **गामणिणो सव्वासु वि पिआसु अणुमरणगहिअवेसासु।**
**मम्मच्छेएसु वि वल्लहाइ उवरी वलइ दिट्ठी।।४९।।**
[ग्रामण्याः सर्वास्वपि प्रियास्वनुमरणगृहीतवेषासु।
मर्मच्छेदेष्वपि वल्लभाया उपरि वलते दृष्टिः।।]

मर्मच्छेदा भवन्तीति भावः। एवं दुःखातिरेके सत्यपि ग्रामण्यो ग्रामनायकस्य दृष्टिः। वल्लभाभिमुखं वल्लभायाः अत्यन्तप्रियायाः प्रियाया अभिमुखं वलते। सर्वाः प्रति इतस्ततो भ्रान्त्वा तत्रैव विश्राम्यतीत्यर्थः। सर्वा एवानुमरणार्थं सज्जास्तथापि स्नेहालम्बनभूतायाः सुभगाया एवोपरि वारं वारं दृष्टिः सञ्चरतीति भावः। एवं च प्रभूतधनगृहस्वामिनीत्वाद्यपेक्षया प्रियप्रणयपात्रत्वमेव समधिकं कामनीयम्, येनावसानसमयेऽपि दयितां दयितो न विस्मरतीति सख्या नायिकां प्रति सूच्यते। यद्वा-मरणदशामापन्नोऽपि सुभगामेव पश्यति, युष्मास्वद्यापि विरक्तस्तस्मादनुमरणान्निवर्तध्वं कुरुध्वं च जारमित्यभिप्रायेण कुट्टन्या इयमुक्तिरिति केचित्।

प्रियमधुरवादिनेऽपि कान्ताय किमिति कुप्यसीति वादिनीं मातुलानीं काचित्प्रत्याह-

**मातुलि समाक्षराणामप्यस्ति विशेष एष वचनानाम्।**
**अन्यः स्नेहमयानामन्यो ह्युपरोधगदितानाम्।।५०।।**[१]

हे मातुलि! समानि सदृशानि अक्षराणि येषु तेषामपि। वचनानामेष विशेषः- स्नेहमयानामन्यः, उपरोधेन कस्यचिदनुरोधेन गदितानामनुरोधमयानामिति यावत्, अन्यो भिन्नः। स्नेहाभावेऽपि अन्यं व्यामोहयितुं कितवजनो मधुराक्षराणि वचनान्युपन्यस्यति, परं तेषु वचनेष्वक्षरसाम्येऽपि अनुभवैकगम्यः स स्वरविशेषो न भवति यः किल स्नेहमयवचनेषु भवतीति भावः। तथा च मदनुरोधवशादयमुपरितो मधुरवचनोपचारेण मां प्रतारयति, नास्य हार्दिकः स्नेह इति मातुलानीं प्रति नायिकयाभिव्यज्यते। कुत्रचित्पुस्तकेषु 'मामि' इति स्थाने 'सुहअ' इति पाठ उपलभ्यते। तत्र 'सुभग' इति सम्बोधनानुरोधेन कथं मामवधीरयसीति वदन्तं नायकं प्रति नायिकाया इयमुक्तिर्बोध्या।

अन्यास्वासक्तमपि दाक्षिण्यवशान्मधुरं वदन्तं नायकं प्रति काचित्सरोषमाह-

**प्रसरन्ति हृदयदेशाद्यानि हि भिन्नानि तानि वचनानि।**
**अपसर कितव किमेतैरधरोत्तरमात्रभणितैस्ते।।५१।।**[२]

---

१. **मामि सरसक्खराणँ वि अत्थि विसेसो पअम्पिअव्वाणम्।**
**णेहमइआणँ अण्णो अण्णो उवरोहमइआणम्।।५०।।**
[मातुलानि सदृशाक्षराणामप्यस्ति विशेषः प्रजल्पितव्यानाम्।
स्नेहमयानामन्योऽन्य उपरोधमयानाम्।।]

२. **हिअआहिन्तो पसरन्ति जाइँ अण्णाइँ ताइँ वअणाइं।**
**ओसरसु किं इमेहिं अहरुत्तरमेत्तभणिएहिं।।५१।।**
[हृदयेभ्यः प्रसरन्ति यान्यन्यानि तानि वचनानि।
अपसर किमेभिरधरोत्तरमात्रभणितैः।।]

यानि हृदयदेशाद् हृदयाभ्यन्तरतः प्रसरन्ति बहिर्भवन्ति तानि वचनानि अन्यानि। अधरोत्तरमात्रभणितैः केवलं मुखतः प्रवृत्तैर्न तु हृदयतः प्रसृतैस्तव एतैर्गदितैः किम्। कितवेति सम्बोधनेन निर्व्याजस्नेहभाजनभूतास्वन्यासु दयितासु हार्दिकं प्रमाणं निदधासि, मयि तु मुखमात्रमधुरैर्वचनैरुपचारं प्रदर्शयसीति ते कपटचर्यामहमवैमीति नायिकायाः कोपो व्यज्यते। अपसरेत्यनेन उक्तिप्रत्युक्तिकया मां व्यामोहयितुं नात्र प्रयासः कर्तव्य इति तदतिशयो व्यज्यते।

अन्यस्यामासक्तिवशाद्गोत्रस्खलितं कान्तं धीरा नायिका सवैदग्ध्यमाह–

**त्वयि सौभाग्यगुणं सा निर्घृण कथमिव मया समं वहति।**
**ह्रियते हि नाम यस्या हृत्वापि च दीयते मह्यम्।।५२।।**[१]

हे निर्घृण हे निर्दय! त्वयि भवद्विषये मया समं सा सौभाग्यं कथं वहति। यस्या नाम अपह्रियते, हृत्वापि च मह्यं समर्प्यते। त्वामवलम्ब्य सा मम समाना सुभगा नास्ति, यस्याः संज्ञाप्यहृत्य मह्यं समर्प्यत इति भावः। विपरीतलक्षणया तु–सैव मत्तोऽधिकं सुभगा, यस्याः प्रतिक्षणमनुस्मरणेन मन्नामग्रहणस्थलेऽपि तस्या एव नाम भवन्मुखान्निःसरतीति प्रियं प्रत्याक्षिप्यते। निर्घृणेत्यामन्त्रणेन–अहो ते निरनुक्रोशत्वं यस्त्वमेकान्तमनुरागिणीं मामवधीर्य तस्यामनुरज्यसि, यस्य किल साक्षि ते गोत्रस्खलनमेवेति नायकं प्रति कोपोऽभिव्यज्यते। तमेतं कोपं स्पष्टमप्रकाश्य वैदग्ध्येन कथनान्नायिकाया धीरात्वं सूच्यते। केषाञ्चिन्मतेन गम्यार्थस्य भङ्ग्यन्तरेण कथनात्पर्यायोक्तं वाच्योऽलङ्कारः। तत्रापि च कोपस्य चरमव्यङ्ग्यत्वाद्ध्वनित्वमव्याहतमेवेत्यलम्।

प्रियतमस्य विरहवेदनया भृशं विक्लवचित्ता काचिदुद्भ्रान्तमानसतयोन्मुग्धेव विरहजनितमात्मनः कार्श्यमपि तत्त्वतोऽविदन्ती प्रोषितभर्तृका सखीमाह–

**पृच्छामः सद्भावादयि सखि वद किं समस्तमहिलानाम्।**
**दयिते गते नु वलयाः करस्थिता एव वर्द्धन्ते।।५३।।**[२]

---

१. **कहँ सा सोहग्गगुणं मए समं बहइ णिग्घिण तुमम्मि।**
**जीअ हरिज्जइ गोत्तं हरिऊण अ दिज्जए मज्झ।।५२।।**
[कथं सा सौभाग्यगुणं मया समं वहति निर्घृण त्वयि।
यस्या ह्रियते नाम हत्वा च दीयते मह्यम्।।]

२. **सहि साहसु सब्भावेण पुच्छिमो किं असेसमहिलाणम्।**
**वड्ढन्ति करठिआ व्विअ वलआ दइए पउट्ठम्मि।।५३।।**
[सखि कथय सद्भावेन पृच्छामः किमशेषमहिलानाम्।
वर्धन्ते करस्थिता एव बलया दयिते प्रोषिते।।]

सद्भावात्स्नेहात्पृच्छामः, नात्र किञ्चिदन्यथा बोद्धव्यम्। दयिते प्रोषिते सति किं समस्तमहिलानां वलयाः काचादिनिर्मिताः कङ्कणाः करस्थिता एव वर्द्धन्ते, उत ममैवेति वदन्त्या नायिकाया औन्मुग्ध्यं सूच्यते। करस्थिता एवेत्यनेन– विरहकार्श्यवशाद्धस्ताद् गलन्तोऽपि मया सौभाग्यचिह्नबहुमानेन कर एव स्थापिता न कथञ्चिदपि हस्ताद्बहिः कृतास्तथा च नायिकाया विरहकार्श्यातिशयः प्रियेऽनुरागबहुमानश्च सूच्यते। अपरिचितवाग्वैदग्ध्याया मुग्धायाः 'सद्भा-वात्पृच्छामः, केनचिदाकूतेन सेयं पृच्छतीति न मन्तव्यम्' इत्यादिवचनरचनानुपपत्त्या मुग्धा प्रोषितपतिका न शङ्क्या। यदि तु तदिदमपि स्वाभाविकं तर्हि अस्तु सा। करस्थितानां वलयानां वृद्धिकारणाभावेऽपि वृद्धिवर्णनाद्विभावना। पर्यन्तस्तु–कार्श्यरूपेणानुभावेन प्रियतमालम्बनाया रतेः परिपोष इति रसध्वनिरेव।

विषमदशामापन्नं स्वामिनमुपेक्ष्य परपुरुषाभिमुखीं स्वसखी निवारयितुं काचिदन्याप-देशविधयाह–

**भ्राम्यति परितः खिद्यत उत्क्षेप्तुं चास्य करमथोन्नयते।**

**करिणः स्नेहनिगडिता पङ्कनिमग्नस्य करिणीयम्।।५४।।**[१]

पङ्कनिमग्नस्य करिणः स्नेहनिगडिता करिणी। परितो भ्राम्यति, एकस्मिन्पार्श्वे दयित-स्योद्धारार्थमवकाशमलभमाना, अपरपार्श्वे भवेदवकाश इत्याशया चतुर्दिग् भ्रमतीत्यर्थः। अनेन दयितोद्धारार्थमावेगातिशयो व्यज्यते। परितो भ्रमणेनाप्युपायमलभमाना विवशा सती खिद्यते। खेदेऽपि दयितं सम्मुखे दुःखाकुलमालोक्य नोपायेभ्यो विरामः, अत एव प्रेमविह्वला सती अस्योत्क्षेप्तुम् इममुद्धर्तुं करमुन्नयते स्वशुण्डामूर्ध्वं प्रसारयति। पङ्कनिमग्नस्य तस्योद्धारार्थमात्म-नोऽसमर्थत्वेऽपि शुण्डोत्क्षेपणेन सर्वात्मना दयितगतचित्तत्वमभिव्यज्यते। स्नेहनिगडितेत्यत्र निगडितपदेन–पङ्कनिमग्नं वल्लभं विहाय यथान्ये यूथान्तर्भुक्ताः करिणो गतास्तथेयमपि अयास्यत्परं स्नेहेन सेयं निगडितेति पारवश्यातिशयः सूच्यते। तथा च– पशवोऽपि प्रियतम-प्रेमाणमेवमनुरुन्धन्ति यदाप्राणपातं तं न परित्यजन्ति प्रयतन्ते चास्य सुखोपलब्ध्यै। ततश्च–पूर्वमनुभूतपतिप्रणयसौभाग्यायास्तव विषमदशायामेतं प्रति वैमुख्यं पशुभ्योऽपि हीनतासूचकमि-त्याकूतविशेषो ध्वन्यते।

---

१. **भमइ पलित्तइ जूरइ उक्खिविउं से करं पसारेइ।**

**करिणो पङ्कक्खुत्तस्स णेहणिअलाइआ करिणी।।५४।।**

[भ्रमति परितः खिद्यते उत्क्षेप्तुं तस्य करं प्रसारयति।

करिणः पङ्कनिमग्नस्य स्नेहनिगडिता करिणी।।]

सलज्जावस्थायामपि प्रियतमप्रणयोन्मादाय चतुरमहिलाः स्नेहाभिव्यक्तिवैदग्ध्यं न विस्मरन्तीति सखीं शिक्षयन्ती काचित्पार्वत्या रहोवृत्तान्तं निदर्शयति–

**रतिसम्भ्रमहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य।**

**शम्भोस्तृतीयनयनं गिरिजापरिचुम्बितं जयति।।५५।।**[१]

रतिसम्भ्रमे रतिकेलौ हृतं निवसनम् (अर्थात्पार्वत्याः) येन स च, अवसनां मां मा द्राक्षीदिति लज्जावशात्पार्वत्या करकिसलयेन रुद्धं पिहितं नयनयुगलं यस्य स चेति बहुव्रीहिद्वयगर्भः कर्मधारयः। ईदृशस्य शम्भोस्तृतीयनयनं जयति सर्वोत्कर्षेण वर्तते। शम्भोर्द्वे नयने पार्वत्या द्वाभ्यां कराभ्यामाच्छादिते, पुनर्ललाटस्थं तृतीयलोचनं तु चुम्बनेन पिहितमिति लोचनद्वयस्थगनापेक्षया तृतीयलोचनस्यैव स्थगनं मनोहारि सम्पन्नमिति लोचनद्वयापेक्षया तृतीयमेव जयतीति भावः। अत्र शोभते इत्याद्यनुपादाय जयतीत्येतद्घटक'जि' धातुरूपप्रकृति-भागेनपिधानव्यापारसाम्येऽपि द्वयोर्नयनयोः पिधानं सर्वत्र पिधानकार्ये उपात्ताभ्यां कराभ्यां विहितमस्य तु पिधानोपकरणतया कुत्रचिदप्यप्रसिद्धेन अत एव अलौकिकपदवाच्येन चुम्बनेन कृतमिति तस्यैव सर्वोत्कर्ष इति धन्यजीवितत्वं सर्वाङ्गनेतृभूतनेत्रमध्येऽपि श्रेष्ठतमत्वं च ध्वन्यत इति काव्यप्रकाशकारः। तथा च– भगवती गिरिराजनन्दिन्यपि दयितमनः प्रसादसम्पा-दनार्थं प्रणयपरिपाकपरिनिष्ठितानि रसिकेचेष्टितानि निधुवनकर्मणि सावधानमनुरुन्धे, ततोऽस्मादृशीभिस्त्ववश्यमेव सर्वावस्थासु रसमार्गमञ्जुलतैवाश्रयणीयेति सखीं प्रत्यभिव्यज्यते। अत्र गाथायाम्– रतौ रसावेशवशात्सञ्जातो यः सम्भ्रमस्तद्वयात्पार्वत्या वसनमपनीतमिति शम्भोः कामावेगलोलतां ध्वनयितुं सम्भ्रमपदमुपात्तम्। यदि तु मूलपदाङ्कानुसरण एवाग्रहस्तर्हि– 'रतिकेल्यपहृतनिवस.' इत्यादि पाठ्यम्। मूलकारस्य रुद्रपदं तु–लोकत्रितयसंहारज्वलित-नेत्रज्वलनस्य भगवतो भर्गस्य भैरवतास्मारकं गिरीन्द्रनन्दिनीनिधुवनकेलिसमये सुतरामनुपयोगि, प्रत्युत रसमार्गविरोधीति शम्भुपदेन (शं रतानुकूल्यरूपं सुखं भावयतीति) परिवर्तितमिति तयोस्तारतम्यं सुधीभिरेवाकलनीयम्। पार्वतीगिरिजापदे तु समानार्थके एवेति न काचिद्विप्रति-पत्तिरित्यलमधिकसूक्ष्मविचारचर्चया।

---

१. **रइकेलिहिअणिअंसणकरकिसलअरुद्धणअणजुअलस्स।**
**रुद्दस तइअणअणं पव्वइपरिउम्बिअं जअइ।।५५।।**
[रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति।।]

क्रीडाभ्यन्तरे नवपलाशलतया ताडयतो हलिककिशोरस्य प्रहारान्सव्यपदेशमिच्छन्त्याः कस्याश्चिदनुरागं तं प्रति सूचयन्नागरिक आह–

**धावति पुरतः परितो भ्राम्यति तिष्ठति च दृक्पथेपीयम्।**

**तव नवलतारकस्य प्रहर वराकीं नु हलिकसुत कामम्।।५६।।**[1]

मूले 'दे' शब्दः सम्बोधने। हे हलिकसुत! नवलतिकां करे गृहीतवतस्तव इयं पुरतो धावति परितः तव पार्श्वयोर्भ्रमति, किञ्च ताडनभयान्न तिरोदधाति प्रत्युत तव दृष्टिपथे तिष्ठत्यपि। अत एव वराकीं कामं प्रहर। त्वत्प्रेमवशात्प्रहारमपि प्रतीच्छन्त्या अस्यास्त्वदनुगायास्ताडनं नोचितमिति वराकीपदेन ध्वन्यते। हलिकसुतेत्यनेन कैशोर्यं सूच्यते। कामं प्रहरेत्यनेन– इयं त्वय्यनुरक्ता, अस्माभिरपि चेदमभ्यूहितमिदानीं यथेच्छं प्रहरेति साकूतं सूच्यते। प्रियतमनाम पृच्छद्भिर्नवपलाशादिलतया यत्र प्रियो जनो हन्यते सा क्रीडा चूतलतिकेति सरस्वतीकण्ठाभरणे भोजः। यद्वा–नवलताकुञ्जं सङ्केतस्थानं त्वं गतो न त्वियमिति कृतापराधामेनां प्रहरेति सोपहासं कुट्टनीवचनमिदमिति गङ्गाधरः।

नायिकां कौमार्य एवोपभुक्तवन्तं कञ्चन विलासिनं पतिसदनेऽप्यभिसरन्तं वीक्ष्य तद्वृतान्तं निजवयस्याय कश्चिन्निदर्शयति–

**कृत्रिममानन्दपटं भ्रामितमभितो वधूवयस्याभिः।**

**हासोन्मिश्रितनयनं निरीक्षते किल कुमारिकाजारः।।५७।।**[2]

आनन्दपटः प्रथमप्रथमं वरेण सङ्गताया वध्वा वस्त्रम्। प्रथमसङ्गमे लग्नलोहितं वधूवस्त्रं वरसम्बन्धिनीभिर्महिलाभिर्लोकेषु प्रदर्श्यत इति देशविशेषे आचारः। ततश्च जारसङ्गमेन

---

१. **धावइ पुरओ पासेसु भमइ दिट्ठीपहम्मि संठाइ।**
**णवलइकरस्स तुह हलिअउत्त दे पहरसु वराइम्।।५६।।**
[धावति पुरतः पार्श्वयोर्भ्रमति दृष्टिपथे सन्तिष्ठते।
नवलतिकाकरस्य तव हलिकपुत्र हे प्रहरस्व वराकीम्।।]

२. **कारिममाणन्दवडं भामिज्जन्तं बहूअ सहिआहिं।**
**पेच्छइ कुमारिजारो हासुम्मिस्सेहिँ अच्छीहिं।।५७।।**
[कृत्रिममानन्दपटं भ्राम्यमाणं वध्वा सखीभिः।
प्रेक्षते कुमारीजारो हासोन्मिश्राभ्यामक्षिभ्याम्।।]

पूर्वमेव दृष्टशोणितत्वात्सम्प्रति अयथार्थत्वात्कृत्रिममानन्दपटं वध्वाः रहस्यभुक्ताभिः सखीभिरभितो भ्राम्यमाणं हासोन्मिश्राभ्यां नयनाभ्यां स जारः प्रेक्षत इत्यर्थः। अन्यस्य पराक्रमेऽपि अन्यकृतिं प्रख्याप्य अनवसरं सम्भ्रमदर्शनमिति जारस्य हास इत्याशयः। 'कृत्रिमं सर्वमुपहासास्पदं भवतीति निदर्शयन्कश्चित्स्वस्य वैदग्ध्यख्यापनाय सहचरमाह' इत्यवतरणम्, 'आनन्दपटः प्रथमपुष्पवतीवस्त्रम्। प्रथमरजोदर्शने जाते तद्वस्त्रं बन्धुभिर्लोकेषु प्रदर्श्यत इति देशविशेषे आचारः। जारसम्बन्धदृष्टशोणिताया अस्थानं सम्भ्रमदर्शनेन जारस्य हासः' इति गङ्गाधरकृतं तद्विवरणं च।

शिशिरसमये अधरोष्णिम्ना मधूच्छिष्टं लापयन्तीं तरुणीं वीक्ष्य कश्चिदात्मनो वैदग्ध्यप्रदर्शनाय सहचरमाह-

**शनकैः शनकैर्ललिताङ्गुल्या मदनपटलापनमिषेण।**

**व्रणिताधरे हि तरुणी धवलव्रणपट्टमिव निबध्नाति।।५८।।**[1]

मदनपटो मधूच्छिष्टम्, तस्य द्रवीकरणस्य व्याजेन। दयितदंशनेन व्रणिते अधरे।।

सुरते वस्त्रविमोकादिषु सुभृशं विप्रतिपद्यमानां नवीनां काञ्चिन्नायकप्रेरिता सखी शिक्षयति-

**सुरतविरामविलक्षा अनाप्तवसनाश्च सहसैव।**

**आच्छादयन्ति जघनं प्रियतमपरिरम्भणेन कुलवध्वः।।५९।।**[2]

---

१. **सणिअं सणिअं ललिअङ्गुलीअ मअणवडलाअणमिसेण।**

**बन्धेइ धवलवणवट्टअं व वणिआहरे तरुणी।।५८।।**

[शनकैः शनकैर्ललिताङ्गुल्या मदनपटलापनमिषेण।

बध्नाति धवलव्रणपट्टमिव व्रणिताधरे तरुणी।।]

२. **रइविरमलज्जिआओ अप्पत्तणिअंसणाओँ सहस व्व।**

**ढक्कन्ति पिअअमालिङ्गणेण जहणं कुलवहूओ।।५९।।**

[रतिविरामलज्जिता अप्राप्तनिवसनाः सहसैव।

आच्छादयन्ति प्रियतमालिङ्गनेन जघनं कुलवध्वः।।]

पूर्वं रसाविष्टतया अजानन्त्योऽपि सुरतविरामे लज्जिताः, ततश्च सहसैव न प्राप्तं निवसनं याभिस्ताः। आच्छादयन्तीत्यनेन लज्जातिशयसूचकं येन केनापि प्रकारेण गोपनं व्यज्यते।

अत्युग्रस्वभावं बह्वासक्तमपि दयितं वशीकृतवत्याः सपत्न्याः सौभाग्यं काचिदन्यापदेशेन सासूयमाह–

**प्रकटितमतिसौभाग्यं पश्यत गोष्ठे गवा ह्यनया।**

**दुष्टवृषभस्य शृङ्गे कण्डूयन्त्या नयनपुटम्।।६०।।**[1]

'गोष्ठे' पदेन नारीमण्डलेऽपि सत्यनयैव वशीकृत इति संसक्तबहुनारीकोऽयमिति ध्वन्यते। 'गवा अनया' इत्यनेन 'उपरितो मुग्धायितयापि अनया एतादृशोऽपि विषमशीलोऽयं वशीकृत इति साकूतं व्यज्यते। दृष्टवृषभस्येत्यनेन–नवोढासक्ततया आत्मानं परित्यक्तवन्तं नायकं प्रति असूया व्यज्यते। अतितीक्ष्णे शृङ्गे अतिसुरक्षणीयस्य नयनपुटस्य कण्डूयनोक्त्या अतिरहस्यप्रविष्टतया स्नेहाधिक्यं व्यज्यते। प्राकृते 'तम्बा' गौः। 'कापि कस्याश्चित्सौभाग्यमन्यापदेशेनाह' इति गङ्गाधरः।

कस्याश्चित्सुरतरसलम्पटतां नागरिकः सहचरमाह–

**रतिरसलम्पटया किल पश्य कुलटयात्र सम्भ्रमक्षिप्तम्।**

**नवरङ्गकं निकुञ्जे ध्वजमिव दत्तं ह्यविनयस्य।।६१।।**[2]

कुञ्जे सङ्केतस्थाने अविनयस्य दत्तं ध्वजमिव रतिरससम्भ्रमेण क्षिप्तं नवरङ्गकं कौसुम्भवस्त्र पश्य। 'जारप्रलोभनाय दूती कस्याश्चिद्रतलम्पटतामाह' इति गङ्गाधरः।

---

१. **पाअडिअं सोहग्गं तम्बाए उअह गोट्ठमज्झम्मि।**
**दुट्ठवसहस्स सिङ्गे अक्खिउडं कण्डुअन्तीए।।६०।।**
[प्रकटितं सौभाग्यं गवा पश्यत गोष्ठमध्ये।
दुष्टपृषभस्य शृङ्गे अक्षिपुटं कण्डूयन्त्या।।]

२. **उह सम्भमविक्खित्तं रमिअव्वअलेहलाएँ असईए।**
**णवरङ्गअं कुडङ्गे धअं व दिण्णं अविणअस्स।।६१।।**
[पश्य सम्भ्रमविक्षिप्तं रन्तव्यकलम्पटया असत्या।
नवरङ्गकं कुञ्जे ध्वजमिव दत्तमविनयस्य।।]

कस्याश्चिदनुरागातिशयं प्रकाश्य तदभियोगाय नायकं त्वरयन्ती वृद्धा दूती सापदेशमाह–

**प्रस्नौति जरद्गव्यपि हस्तस्पर्शेन दोहकगुणेभ्यः।**

**अवलोकप्रस्नवनीं पुत्रक पुण्यैरवाप्स्यसि क्वापि।।६२।।**[१]

दोहकस्य गुणेभ्यः दोहकगुणहेतुवशात् तस्य हस्तस्पर्शेन जरती गौरपि प्रस्नुतपयोधरा भवति। अवलोकनमात्रेण प्रस्नवनशीलां पुण्यैरेव कुत्रापि प्राप्स्यसि। इयं तव गुणाऽश्रवणेऽपि केवलमवलोकनादेव त्वय्यनुरक्ताऽभवदिति भवद्भाग्यवैभवेन स्वभावतोनुरागिणी सेयं त्वरितमेव सम्भावनीयेति व्यज्यते। 'पुत्रक' इत्यामन्त्रणेन–कृतभूर्यनुभवा त्वां विश्रम्भवशाद्बोधयामीति विश्वसनीयत्वं द्योत्यते। गुणेभ्य इति हेतौ तृतीया। बहुत्वेन हस्तमार्दव– अङ्गुष्ठपर्वनिष्पीडनपाट–वादिगुणबाहुल्यं द्योत्यते। मूलानुसरणाग्रहे तु 'दोहदगुणेन' इति पाठो बोध्यः।

मन्दं चलन्तीं काञ्चित्सुन्दरीं वीक्ष्य उक्तिप्रत्युक्तिकया नागरिकौ सपरिहासमात्मा–भिलाषप्रकाशनमुपक्रमाते–

**मसृणमपि चङ्क्रमन्ती पदे पदे किमिति वहति मुखभङ्गम्।**

**नूनं मेखलिकास्या जघनगतां स्पृशति नखपङ्क्तिम्।।६३।।**[२]

मसृणमपि चङ्क्रमन्ती मन्दमपि पादन्यासं कुर्वती। चङ्क्रमन्तीति यङ्लुगन्ताच्छतृ–प्रत्ययः। मुखभङ्गं मुखविकारम्। पद्यपूर्वार्धमेकस्य प्रश्नः, उत्तरं तूत्तरम्। मेखलिकेति स्वल्पार्थे कन्। तेन च तनुमेखलास्पर्शेऽपि जघनगतनखरक्षतेषु पीडोदयात्तेषां सान्द्रत्वमार्द्रत्वं च सूच्यते। ततश्च–सबाह्योपचारं सकौशलोत्साहं च सुरतमासेवमानायास्ते स्वल्प एव कालोऽतीत इति ज्ञातमस्माभिः। किमेवमस्मास्वपि दयिष्यस इत्यभिलाषप्रकाशनं चरमं व्यङ्ग्यम्।

---

१. **हत्थप्फंसेण जरग्गवी वि पह्नहइ दोहअगुणेण।**
**अवलोअणपह्नुइरिं पुत्तअ पुण्णेहिँ पाविहिसि।।६२।।**
[हस्तस्पर्शेन जरद्गव्यपि प्रस्नौति दोहदगुणेन।
अवलोकनप्रस्रवनशीलां पुत्रक पुण्यैः प्राप्स्यसि।।]

२. **मसिणं चङ्कम्मन्तीं पए पए कुणइ कीस मुहभङ्गम्।**
**णूणं से मेहलिआ जहणगअं छिवइ णहवन्तिम्।।६३।।**
[मसृणं चङ्क्रम्यमाणा पदे पदे करोति किमिति मुखभङ्गम्।
नूनं तस्या मेखलिका जघनगतां स्पृशति नखपङ्क्तिम्।।]

सपत्नीचरणलाक्षालाञ्छितकरं दयितं खण्डिता साकूतमाह–

**ददता संवाहनसुखरससन्तुष्टेन तव करे लाक्षाम्।**
**विक्रमनरेन्द्रचरितं चरणेन हि शिक्षितं तस्याः।।६४।।**[१]

त्वत्कृतसंवाहनस्य सुखरसात् सन्तुष्टेन अत एव तत्परिवर्ते तव करे निजनिष्ठां लाक्षाम् (अलक्तकम्) ददता सङ्क्रामयता तस्याश्चरणेन विक्रमादित्यस्य चरितं शिक्षितम्। सपत्नीपद-संवाहनेन त्वत्करे तस्या लाक्षा सङ्क्रान्ता, तदिदं मया ज्ञातमिति साकूतं सूचयति। विक्रमादि-त्योऽपि 'संबाहणस्स' सम्बाधनस्य सुखात्सन्तुष्टः सन् भृत्यस्य करे 'लक्खं' लक्षं ददाति। भृत्यकर्तृकेन शत्रुसम्बाधनेन तुष्टो विक्रमादित्यो भृत्यस्य करे लक्षं समर्पितवानिति तच्चरिते श्रूयते। प्राकृते संवाहणं सम्बाधनम् लक्खं लक्षम्। सुखोत्तरं रसपदसन्निवेशेन–त्वया तथा संवाहनं कृतं यथा तत्सुखेन स्पर्शामोदजनितस्तस्या भूयानानन्दो जातः। एवं च सपत्नीमनोऽ-नुकूलानुवर्तनेन सानुरागत्वं सूचतिम्। सन्तुष्टपदेन संवाहनसेवायाः पूर्णता सूचिता। अत एव प्रसादसूचिका लाक्षा पुरस्काररूपेण प्राप्तेति सपत्न्याः साभिलाषानुवर्तनीयत्वमाक्षिप्यते। चरणेन विक्रमनरेन्द्रवदाचरितमित्येन 'त्वं तां तथा सभयमनुवर्तसे यथा सा आत्मनि राजवदुपसेव्यत्व-मभिमन्यते' इत्याक्षेपो ध्वन्यते। एवं च– त्वदनुवर्तनं कुर्वंतीं मां विहाय तस्याः सभयानुवर्तनं त्वं बहु मन्यसे अत एव पादसंवाहनसेवया सन्तोष्य लाक्षानुरञ्जनमवाप्नोषीति साकूतमुपालम्भो ध्वन्यते।

अनुनयं विनैव परित्यक्तमानां सखीं शिक्षयितुं मानस्य सुखकरकता काचित्समर्थयते–

**मुग्धे पदपतनानां रभसबलाम्कारचुम्बितव्यानाम्।**
**अवलोकमात्रतुष्टे! बहुलसुखानां हि वञ्चितैषासि।।६५।।**[२]

---

१. **संवाहणसुहरसतोसिएण देन्तेण तुह करे लक्खम्।**
**चलणेण विक्कमाइत्तचरिअँ अणुसिक्खिअं तिस्सा।।६४।।**
[संवाहनसुखरसतोषितेन ददता तव करे लाक्षाम्।
चरणेन विक्रमादित्यचरितमनुशिक्षितं तस्याः।।]

२. **पाअपडणाणँ मुद्धे रहसबलामोडिचुम्बिआव्वाणम्।**
**दंसणमेत्तपसण्णे चुक्कासि सुहाणँ बहुआणम्।।६५।।**
[पादपतनानां मुग्धे रभसबलात्कारचुम्बितव्यानाम्।
दर्शनमात्रप्रसन्ने भ्रष्टासि सुखानां बहुकानाम्।।]

दयितस्यावलोकनमात्रेण प्रसन्ने हे मुग्धे! अनुनयनिमित्तानां पादपतनानाम्, रभसेन (वेगेन) बलात्कारेण च चुम्बनानाम्, एतदादीनां बहुलसुखानाम् एषा त्वं वञ्चितासि। पञ्चम्यर्थे षष्ठी। पादपतनादिभ्यो बहुभ्यः सुखेभ्यो भ्रष्टासीत्यर्थः। एषा त्वं वञ्चितासीत्येतत्पदेन-पूर्वं दत्तशिक्षापि प्रत्यक्षं त्वमधुना मानपरित्यागस्य दुष्फलमनुभवसीति निजवक्तव्ये बलमभिसूच्यते। मुग्धे इत्यामन्त्रेण- स्वसुखमवधीरयन्ती साम्प्रतमपि त्वं मुग्धैवासीत्युपालम्भः सूच्यते। सुखानामित्यादौ चतुर्थ्यर्थे षष्ठीति तु गङ्गाधरोक्तिर्विचारणीयैव।

मानवतीं सुदतीमनुनयन्नायक आह-

**सुतनु प्रसीद सम्प्रति पुनरपि सुलभानि रोषितव्यानि।**
**उत्सवरजनी सेयं मृगाक्षि मृगलाच्छनोज्जला गलति।।६६।।**[१]

रोषितव्यानि रोषाः। रोषाः पुनरपि सहजमेव कर्तुं शक्याः परम् अकस्मादेव मृगलाञ्छेन (चन्द्रेण) उज्जवलाः इयमनिर्वचनीयमनोहरा क्षणरात्रिरुत्सवरात्रिर्न पुनः प्राप्येत्याशयः। व्यत्येतीत्यादिस्थाने गलतीत्युक्त्या-हस्तगतापि निरर्थकं व्यतिगच्छतीति व्यज्यते। त्वं मृगाक्षीति मृगसम्बन्धवशान्मृगालाञ्छनस्यानुरोधोऽवश्यं परिपाल्य इति मृगाक्षीत्यमान्त्रणेन सूच्यते। 'छणराई' इति मूलपदाङ्कानुरोधे तु 'क्षणरजनी वत सैषा' इति पाठ्यम्। कुत्रचित् 'दे सुअणु' इति स्थाने 'दे सुहअ' इति पाठः। तत्र पूर्वार्धे नायकम् उत्तरार्धे नायिकां चेति अन्योऽन्यगृहीतमानौ द्वावप्यमान्त्र्य दूती प्रतिबोधयतीति व्याख्येयम्।

ग्रन्थान्तःपतितां गाथाकोषाकारस्य प्रशंसां नैपुण्येनाह-

**आपन्नानि कुलानि द्वावेव हि विदतरुन्नतिं नेतुम्।**
**गौर्याश्च हृदयदयितोऽथ शालिवाहननरेन्द्रश्च।।६७।।**[२]

---

१. **दे सुअणु पसिअ एह्णिं पुणो वि सुलहाइँ रूसिअव्वाइं।**
**एसा मअच्छि मअलञ्छणुज्जला गलइ छणराई।।६६।।**
[हे सुतनु प्रसीदेदानीं पुनरपि सुलभानि रोषितव्यानि।
एषा मृगाक्षि मृगलाञ्छनोज्जला गलति क्षणरात्रिः।।]

२. **आवण्णइँ कुलाइं दो व्विअ जाणन्ति उण्णइं णेउम्।**
**गोरीअ हिअअदइओ अहिवा सालाहणणरिन्दो।।६७।।**
[आपन्नानि कुलानि द्वावेव जानीत उन्नतिं नेतुम्।
गौर्या हृदयदयितोऽथवा शालिवाहननरेन्द्रः।।]
सं. गा. २१

'आवण्णाइं' इति प्राकृतस्य 'आपर्णानि' 'आपन्नानि' इत्युभयमप्यर्थः। ततश्च–अपर्णा पार्वती, तत्सम्बन्धीनि कुलानि उन्नतिं गमयितुं गौरीदयितो जानाति। आपन्नानि आपद्ग्रस्तानि कुलान्युन्नमयितुं च शालिवाहननरेन्द्रो जानातीत्यर्थः। 'कामार्तायास्तस्याः प्रतीकारं कर्तुं त्वमेव शक्त इत्यन्यापदेशेन दूती कमप्याह' इति गङ्गाधरावतरणम्। एवंविधेषु पद्येषु 'अमृतं प्राकृत–काव्यम्' इति प्रतिज्ञावशाद्बलेन शृङ्गारार्थकल्पनमिति पूर्वमुक्तमेव मया।

भीषणजनावस्थितां काञ्चिदधमां नायिकां कामयमानं कश्चन निवर्तयन्ती दूती अन्याप–देशेनाह–

**निष्काण्डदुरारोहां पुत्रक मा पाटलिं सामारोह।**
**आरूढनिपतिताः के न कृता अनया हताशया हन्त।।६८।।**[1]

काण्डं वृक्षस्कन्धोऽवसरश्च। तथा च–स्कन्धरहिताम् अत एव दुःखेनारोहणीयां पाटलिम् (वृक्षम्) मा आरोह। अनया बहवो जनाः आरूढा एव निपतिताः कृता इति वाच्योऽर्थः। भीषणजनरक्षितत्वाद् अनवसराम् अत एव दुःखकरसमागमां तां नायिकां नाभिसर, अनया बहवो जना निष्फलमेव निन्दाभाजनं कृता इति कामुकं प्रति व्यङ्ग्योऽर्थः। पुत्रकेत्यामन्त्रणेन स्वस्य विश्वसनीयत्वं व्यज्यते। हताशयेत्यनेनत्वन्मनोरथानुवर्तिन्यप्यहम् तस्या अवसराभावात् आशां विहतां भावयामीति सूच्यते।

ग्रामनायकवनितासक्तः पुत्रो निवार्यतामिति दाक्षिण्येन सूच्यन्ती काचिच्छ्वश्रूमाह–

**एकैव पाटलास्मिन् ग्रामे ग्रामणिगृहे किल श्वश्रु।**
**बहुपाटलं च शीर्षं न सुन्दरं देवरस्यैतत्।।६९।।**[2]

---

१. **णिक्कण्ड दुरारोहं पुत्तअ मा पाडलिं समारुहसु।**
**आरूढणिवडिआ के इमीअ ण कआ हआसाए।।६८।।**
[निष्काण्डदुरारोहां पुत्रक मा पाटलिं समारोह।
आरूढनिपतिताः के अनया न कृता हताशया।।]

२. **गामणिघरम्मि अत्ता एक्क व्विअ पाडला इह ग्गामे।**
**बहुपाडलं च सीसं दिअरस्स ण सुन्दरं एअम्।।६९।।**
[ग्रामणिगृहे श्वश्रु एकैव पाटला इह ग्रामे।
बहुपाटलं च शीर्षं देवस्य न सुन्दरमेतत्।।]

सम्पूर्णेऽस्मिन्ग्रामे ग्रामनायकस्य गृहे एकैव पाटला (वृक्षः) अस्ति। देवस्य मस्तकं च बहूनि पाटलापुष्पाणि यस्मिंस्तादृशमस्ति एतत्सुन्दरं नेत्यर्थः। अनुरक्तया ग्रामणीगृहिण्या पाटलापुष्पाणि दत्तानि, यानि तद्बहुमानादनेन शीर्षे मण्डितानीत्याशयः। ग्रामणीपदेन–ग्रामस्य स नायक इत्यनुपसर्पणीयात्तद्गृहाद्दुर्लभानि तानि पुष्पाण्युपायान्तरेणालभ्यानीति सूच्यते। तथा च– चिह्नैरनुमाय भयापवादजनकोऽयं देवरस्य ग्रामणीगृहाभिसारो निरोद्धव्य इति श्वश्रूं प्रत्यभिव्यज्यते।

कस्याश्चित्कटाक्षदाक्षिण्यं सहजानुरागं च सम्प्रकाश्य नायकं प्रलोभयन्ती दूती सुमधुर- माह–

**सन्ति मुखेऽन्यासामपि पक्ष्मलधवलानि दीर्घकृष्णानि।**

**नयनानि सुन्दरीणाम्, तदपि द्रष्टुं न जानन्ति।।७०।।**[1]

इतोऽन्यासामपि सुन्दरीणां मुखे पक्ष्मलत्वादिगुणविशिष्टानि नयनानि यद्यपि सन्ति तथापि तानि नयनानि दर्शनचातुर्यं न जानन्ति। इयमेव कटाक्षवीक्षणे प्रगल्भेत्याशयः। सहजा अपि नयनगुणा भ्रूविलासादि वैदग्ध्यं विना विफलीभूता इति भावः। किञ्च द्रष्टुं न जानन्तीत्यनेन–अन्याः सुन्दर्यो दीर्घाभ्यामपि नयनाभ्यां न सम्यक् पश्यन्ति, या अगुणज्ञेषु अन्येषु जनेष्वनुरज्यन्ति। परम् मत्प्रस्तुता सेयं नायिकैव द्रष्टुं जानाति, या भवन्तं सकृद् दृष्ट्वैव परिचितवती। ततश्च–सहजस्नेहा सेयं नायिका त्वरितमनुसर्तव्येति नायकं प्रत्यभिव्यज्यते।

गाथाकोषनिर्मापकस्य शालिवाहननरेन्द्रस्य ग्रन्थान्तःपतितां स्तुतिमभिव्यनक्ति–

**तव रणजलदसमयभयचलविह्वलपक्षकैरनुस्त्रियते।**

**परिशेषितपद्माशैर्हंसैरिव मानसं रिपुभिः।।७१।।**[2]

---

१. **अण्णाणँ वि होन्ति मुहे पम्हलधवलाइँ दीहकसणाइं।**

**णअणाइँ सुन्दरीणं तह वि हु दट्ठुं ण जाणन्ति।।७०।।**

[अन्यासामपि भवन्ति मुखे पक्ष्मलधवलानि दीर्घकृष्णानि।

नयनानि सुन्दरीणां तथापि खलु द्रष्टुं न जानन्ति।।]

२. **हंसेहिँ व तुह रणजलअसमअभअचलिअबिहलवक्खेहिं।**

**परिसेसिअपोम्मासेहिँ माणसं गम्मइ रिऊहिं।।७१।।**

[हंसैरिव तव रणजलदसमयभयचलितविह्वलपक्षैः।

परिशेषितपद्माशैर्मानसं गम्यते रिपुभिः।।]

रण एव जलदसमयस्तद्भयाच्चञ्चलाः अत एव विह्वलाः पक्षाः सहायाः येषां तैः। परिशेषिता पद्मायाः (लक्ष्म्याः) आशा यैः। ईदृशैः रिपुभिर्हंसैरिव तव मानसं (मनः) अनुस्रियते अनुवृत्यते। विजिताः शत्रवस्त्वां त्वन्मनोऽनुसारं सेवन्ते इत्याशयः। हंसैरपि-रण- (स्तनित)-युक्तानां जलदानां समये भयाच्चला विह्वलाः कम्पमानाश्च पक्षाश्छदा येषां तैः, परिशेषिता पद्मानां कमलानाम् आशा यैः (वर्षासु कमलानां विलोपात्), ईदृशैः सद्भिर्मानससरोवरमनुगम्यते। रणयुक्ता जलदाः रणजलदा इति मध्यमपदलोपिसमासः। प्राकृते तु रणज्जलदा इत्यप्यर्थो भवति। हंसैरिवेत्युपमयावैरिणोऽपि तव शौर्यप्रतापाद्विवशं निरस्तकल्मषबुद्धयस्त्वां सेवन्ते, किमन्ये सुहृत्-सूरिप्रभृतय इति सर्वोपसेव्यत्वेन महाप्रभावत्वं राज्ञो व्यज्यते।'दण्डयात्रोद्यतस्य राज्ञः प्रतिषेधाय राजस्तुतिव्याजेन वर्षाकालं राज्ञी वर्णयति' इति गङ्गाधरटीकावतरणम्।

दुर्गतेऽपि दयिते नितान्तमनुरक्तासौ धनवैभवादिना न साध्येति दूती कस्याश्चित्सुचरित-माह-

**दुर्गतगेहे गृहिणी रक्षन्ती पत्युराकुलीभावम्।**

**अपि पृष्टदोहदेयं कथयति पुनरप्युदकमेव।।७२।।**[१]

पृष्टो दोहदः (गर्भिण्यवस्थासम्बन्धी अभिलाषः) यस्याः ईदृशीयं गृहिणी पत्युर्व्या-कुलत्वं रक्षन्ती सती पुनरपि प्रश्ने उदकमेव कथयति। दुर्लभवस्तुप्रार्थनायां दीनोऽसौ व्याकुलो भविष्यतीति विचार्य वारंवारं पृष्टापि उदकमेव प्रार्थयते इत्यर्थः। गृहिणीपदेन-सैव गृहस्य स्वामिनी, ततश्च गृहदारिद्र्यं सम्यग् विजानातीति सूच्यते। दुर्गतस्य गृहिणीत्यनुक्त्वा दुर्गतगेहे गृहिणीत्यनेन-सम्पूर्णं गृहमेव दुर्गतिग्रस्तमित्यतिशयो व्यज्यते।'अनायाससाध्यमेव प्रार्थनीयमिति सखीं शिक्षयन्तीं-काचिदाह' इति गङ्गाधरः।

ग्रीष्मापराह्णे स्नातवतीनां युवतीनां कामिजनमनोहारिणी काचित्सुषमेति नागरिकः सहचरमाह-

---

१. **दुग्गअघरम्मि घरिणी रक्खन्ती आउलत्तणं पइणो।**

**पुच्छिअदोहलसद्धा पुणो वि उअअं विअ कहेइ।।७२।।**

[दुर्गतगृहे गृहिणी रक्षन्ती आकुलत्वं पत्युः।

पृष्टदोहदश्रद्धा पुनरप्युदकमेव कथयति।।]

**आताम्रलोचनानामार्द्रांशुकलक्षितोरुजघनानाम्।**
**अपराह्णमज्जिनीनां कृते न कामो धनुर्वहति।।७३।।**[१]

सद्यः स्नानाद् ईषदरुणनयनानाम्, आर्द्रांशुके लक्षितम् (प्रकटम्) ऊरुजघनं यासां ईदृशीनामपराह्णस्नानशीलानां महिलानां कृते कामो धनुर्न धारयति। ताः स्वयमेव कामिनां मनः क्षोभयितुमलम्, न तदर्थं कामचापस्यापेक्षेत्याशयः। मज्जिनीति ताच्छील्ये णिनिः। ततश्च– प्रतिदिनं सायाह्ने स्नानं यासां स्वभाव इत्युक्त्या स्वाभाविकी शृङ्गाररुचिः सूच्यते। गङ्गाधरस्त्वत्र विचित्रमेवाह– 'ईदृगवस्थानां युवतीनां रक्षणार्थमेव कामश्चापं वहति। अन्यथा निरर्थकत्वात्यक्तमेव स्यादिति भावः'। सोऽयमर्थः 'कृतेन' इति तृतीयान्तपाठे कथञ्चित्सङ्गतः स्यात्परं सरस्वती–कण्ठाभरणादिषु (५ परिच्छेदः) नायं पाठः सम्मन्यते। यदि स्यात्तदापि– 'ईदृगवस्थानां युवतीनां कृतेन, एवंविधयुवतीनामर्थ एव कामो धनुर्वहति। यद्येवंविधा युवतयो न भवेयुस्तर्हि कामिसम्मोहनस्य विषयाभावात्का नाम धनुर्धूननस्यापेक्षेत्याशयः कल्पनीयः।

वारवधूनां व्यामोहकतां वर्णयन्कोऽपि वयस्यमाह–

**उर्वरिताः के, के वा न खण्डिताः, के न लुप्तगुरुविभवाः।**
**नखराणि वेशयोषा गणनारेखा इव वहन्ति।।७४।।**[२]

के उर्वरिताः विमोहनादवशिष्टाः, अनाकृष्या इति यावत्। के वा न खण्डिताः केषां वा व्रतखण्डनं न कृतमित्यर्थः। के वा लुप्तो गुरुर्विभवः (धनसम्पत्तिः) येषामीदृशा न कृता इति गणनारेखा इव नखराणि कामुकदत्तनखक्षतानि वेश्या धारयन्तीत्यर्थः। यद्वा– 'णहराइं'

---

१. **आअम्बलोअणाणं ओल्लंसुअपाअडोरुजहणाणम्।**
**अवरह्णमज्जिरीणं कए ण कामो वहइ चावम्।।७३।।**
[आताम्रलोचनानामाद्रांशुकप्रकटोरुजघनानाम्।
अपराह्णमज्जनशीलानां कृते न कामो वहति चापम्।।]

२. **के उव्वरिआ के इह ण खण्डिआ के ण लुत्तगुरुविहवा।**
**णहराइं वेसिणिओ गणणारेहा उव वहन्ति।।७४।।**
[के उर्वरिताः के इह न खण्डिताः के न लुप्तगुरुविभवाः।
नखराणि वेश्या गणनारेखा इव वहन्ति।।]

नखराजिम्। नखक्षतपङ्क्तिमित्यर्थः। कामुकदत्तनखक्षतपङ्क्तिव्याजेन के उर्वरिता इत्यादिगणनारेखा वहन्तीति भावः। के के खण्डिताः, के के वा लुप्तविभवा इत्यादिविधिमुखेन गणनामकृत्वा निषेधमुखेन गणनायास्तात्पर्यं तु- सम्मोहनसामर्थ्यातिशयात् वशीकृतानां कामिनां गणना तु विस्तारवशादुःसम्भवा। गणनायामपि वशीकृतस्यैकस्य कामिनो गणनार्थमेकस्या नखक्षतरेखाया आवश्यकतया तावन्नखक्षतरेखानामवकाश एव न स्यात्। अत एव अवशीकृतानामेव गणनार्थं रेखाकल्पनमिति। ततश्च-चातुर्योपभोग्यतया दृश्यमानविरलनखक्षतत्वाद्विरला एव तासां चक्रात्सुरक्षिता इति व्यज्यते। किंवा सर्वं जगदेव वेश्या वशीकर्तुं कामयन्ते, अत एव ये मोहितास्तदर्थं गणनारेखाया नावश्यकता, किं तु ये नाकृष्टास्तद्गणनमेवावश्यकमिति तासां वशीकरणातिशयः सूच्यते। नखक्षतानां गणनीयतावर्णनेन तानि स्पष्टं दृश्यन्त इति सूच्यते। तथा च- स्तन-कपोलादीनां प्रकटप्रदर्शनेन कामिमोहनहेतुको वेश्यास्वभावो व्यज्यते।

प्रवासादागतं दयितं प्रति निजानुभूतं विरहदुःखं सवैदग्ध्यमावेदयिति काचित्-

**हृदयं दुग्धोदधिमिव विमथ्य विरहेण मन्दरेणेव।**
**उन्मूलितानि कष्टं रत्नानीवेह नः सुखानि किल।।७५।।**[१]

दुग्धोदधिपदेन हृदयस्य निर्मलता सुखरूपरत्नानामाकरता चाभिव्यज्यते। उदिधिपदेन गभीरता च सूच्यते। ततश्च-सहनशीलतयैव मम हृदयं सर्वामपि वेदनां विसोढवदिति ध्वन्यते। मन्दरो यथा मूलपर्यन्तं प्रविश्य समुद्रं मथितवाँस्तथा विरहो मम हृदयान्तस्तलमुन्मथितवानिति द्योत्यते। रत्नानीव अतिस्पृहणीयानि नः सुखानि मूलादुत्खातानीति कष्टम्। 'अव्वो' इति कष्टसूचकमव्ययम्। 'अव्वो सम्बुद्धिदुःखयोः' इति देशीकोषः। अनया च समुद्रमथनोपमया- 'समुद्राद्यानि रत्नानि निर्गतानि न तानि पुनः परावृत्तानि, तथा त्वद्विरहे यानि सुखान्यन्तर्हितानि न तानि पुनर्लभ्यानि, ततश्च नाग्रे विरहदुःखमनुभावनीयम्' इति प्रियं प्रत्यभिव्यज्यते।

प्रियतमस्य सर्वदा मनोऽनुकूलमेव केलौ वर्तितव्यमित्युपदिशन्तीं सखीं प्रति पत्युर्वैदग्ध्यमीर्ष्यां च काचिदेवमाह-

---

१. **विरहेण मन्दरेण व हिअअं दुद्धोअहिं व महिऊण।**
**उम्मूलिआइँ अव्वो अम्हं रअणाइँ व सुहाइं।।७५।।**
[विरहेण मन्दरेणेव हृदयं दुग्धोदधिमिव मथित्वा।
उन्मूलितानि कष्टमस्माकं रत्नानीव सुखानि।।]

**ऋजुकरतेऽपि न तुष्यति वक्रेऽपि तदागमं विकल्पयति।**

**अत्र मया विधिहतया प्रिये प्रियं कथमु कर्तव्यम्।।७६।।**[१]

ऋजुकेरते हावभावादिरहिते रते। वक्रे हावभावमणितसीत्कृतदन्तक्षतनखक्षतचुम्बना-सनविशेषादियुक्ते। कुतोऽनया शिक्षितमिति तादृशरतस्यागमम् (प्राप्तिम्) विकल्पयति सन्दिह्यति। अत्र एतादृशे (रतिविदग्धे सन्देहशीले च) प्रियतमे प्रियं कथं नाम कर्तव्यम्? ततश्च प्रियस्य प्रियकरणविषये अहमेव अभव्येति भावः। 'आगमम्' इत्यस्य स्थाने 'आशयम्' इति क्वचित्पाठः। तत्र आशयं स्वमनोभावं परिवर्तयतीति तात्पर्य सङ्गमनीयं स्यात्।

नायिकाया रतिचातुर्यदर्शनेन अन्यथाभावशङ्किनं नायकं प्रति सखी काचिदाह-

**बहुविधविलासरसिके सुरते कः शिक्षकोऽस्ति महिलानाम्।**

**स्नेहानुबन्धगन्धादशिक्षितान्यपि हि शिक्षते सर्वः।।७७।।**[२]

बहुविधेषु विलासेषु रसिके सुरते। सुरतस्यैव विलासरसिकेति विशेषणात्-सुरतमेव निसर्गतो नानाविधमदनविलासानां रसानुवर्तीत्यर्थः। ततश्च एतस्य क उपाऽयायो भवेत्? स्नेहानुबन्धस्य गन्धादपि लेशादपि (किं पुनः पूर्णप्रकर्षात्!) सर्वो जनः अशिक्षितान्यपि कौशलानि शिक्षते। प्रेमवशात्स्वयमेव कामकलाकौशलमनुवर्तत इत्याशयः।

नायकस्यासाधारणसुन्दरतां संसाध्य काञ्चन नायिकां तेन सङ्घटयितुमिच्छन्ती दूती प्ररोचयितुमाह-

---

१. **उज्जुअरए ण तूसइ वक्कम्मि वि आअमं विअप्पेइ।**
**एत्थ अहव्वाएँ मए पिए पिअं कहँ णु काअव्वम्।।७६।।**
[ऋजुकरते न तुष्यति वक्रेऽप्यागमं विकल्पयति।
अत्राभव्यया मया प्रिये प्रियं कथं नु कर्तव्यम्।।]

२. **बहुविहविलासरसिए सुरए महिलाणँ को उवज्झाओ।**
**सिक्खइ असिक्खिआइँ वि सव्वो णेहाणुबन्धेण।।७७।।**
[बहुविधविलासरसिके सुरते महिलानां क उपाध्यायः।
शिक्ष्यते अशिक्षितान्यपि सर्वः स्नेहानुबन्धेन।।]

**वर्णवशिते! त्वया न स सम्भावित इह विकत्थसे सत्यम्।**
**न भवन्ति वीक्षितेऽस्मिन् स्वस्थावस्थानि चाङ्गानि।।७८।।**[1]

वर्णो गुणवर्णनं तन्मात्रेण वशीकृते! इति सम्बोधनम्। 'वर्णो द्विजादिशुक्लादियशोगुणकथादिषु' इति मेदिनी। त्वया सत्यमेव स नायको न सम्भावितो न दृष्टः। केवलं विकत्थसे, 'मया दृष्टः सः' इत्यात्मश्लाघां कुरुषे। अत्रोपपत्तिमाह– अस्मिन्नायके वीक्षिते सति वीक्षितुः अङ्गानि स्वस्थावस्थानि न भवन्ति, किन्तु स्वेदकम्परोमाञ्चजृम्भाङ्गभङ्गादिभावाकुलानि भवन्ति। यदि त्वं तमद्रक्ष्यस्तर्हि नैवं स्वस्थतया स्थातुमशक्ष्य इति तत्सौन्दर्यमहिमा सूच्यते। दृष्ट इत्यर्थे सम्भावित इत्युक्त्या 'तादृशगुणशाली दर्शनमात्रेण तु सोऽवश्यं सत्कर्तव्य आसीत्' इति नायकस्य गुणातिशयो ध्वन्यते। 'स तथा सौन्दर्यशाली यथा त्वं तद्वर्णनमात्रेण वशीभूता जाता, एवं च निसर्गसुन्दरस्त्वरितमेव सोऽनुसर्तव्यः' इति नायिकां प्रत्यभिव्यज्यते।

रतिकौशलवशीकृतोऽहं न त्वं कदाचिदपि हृदयादवधीरयितुं पारयेमिति चाटूनि कुर्वन्तं नायकं प्रति पुंसां स्वार्थप्रवणतां प्रमाणयन्ती काचिन्निदर्शनविधयाह–

**आसन्नविवाहदिनेऽभिनववधूसङ्गमोत्कचित्तस्य।**
**प्रथमगृहिण्याः सुरतं वरस्य सन्तिष्ठते न हृदि।।७९।।**[2]

विवाहदिने आसन्ने सत्येव। नववधूसङ्गमायोत्कण्ठितचित्तस्य वरस्य हृदि न सन्तिष्ठते। अभिनवप्राप्तेराशामात्रेणैव बहुकालमनुभूतमपि सुखं पुरुषैर्विस्मर्यते, किं पुनस्तत्प्राप्तौ सत्यामित्युपालम्भो ध्वन्यते। पूर्वत्र 'वधू' पदेन, उत्तरत्र 'गृहिणी' पदेन च 'अपरिचितशीलाया नववध्वाः सुखाशामात्रस्य कृते अनुभावितसर्वसौख्यायाः सम्पूर्णगृहस्य स्वामिन्या अपि सुष्ठुकृतं रतं विस्मर्यते' इत्युपालम्भातिशयो द्योत्यते। 'सन्तिष्ठते' इति 'सम्' उपसर्गेण–'यदि कदाचिद–

---

१. **वण्णवसिए विअत्थसि सच्चं विअ सो तुए ण संभविओ।**
**ण हु होन्ति तम्मि दिट्ठे सुत्थावत्थाइँ अङ्गाइं।।७८।।**
[वर्णवशितो विकत्थसे सत्यमेव स त्वया न सम्भावितः।
न खलु भवन्ति तस्मिन्दृष्टे स्वस्थावस्थान्यङ्गानि।।]

२. **आसण्णविआहदिणे अहिणववहुसंगमस्सुअमणस्स।**
**पढमघरिणीअ सुरअं वरस्स हिअए ण संठाइ।।७९।।**
[आसन्नविवाहदिने अभिनववधूसङ्गमोत्सुकमनसः।
प्रथमगृहिण्याः सुरतं वरस्य हृदये न सन्तिष्ठते।।]

प्राप्तनवसङ्गमदशायां परिणयप्रसङ्गेण पूर्वपत्न्याः किञ्चित्स्मृतिरपि भवेत्, परं सम्यक् सा हृदये न तिष्ठति' इति स्थैर्याभावो द्योत्यते। 'अभिनवविषयानुरक्तः पूर्वानुभूतमवधीरयतीति निदर्शयन्कोऽपि वयस्यमाह' इति गङ्गाधरावतरणम्।

दोषदर्शनेऽप्यतिरागाविष्टः कश्चिद्धृदयस्य दशां वयस्यं प्रत्येवमाह–

**यदि लोकनिन्दितं यद्यमङ्गलं यदि विमुक्तमर्यादम्।**
**पुष्पवतीदर्शनमिह ददाति हृदयस्य निर्वृत्तिं तदपि।।८०।।**[1]

यदि यद्यपीत्यर्थे। विमुक्तमर्यादम् उल्लङ्घितमर्यादं सदाचारविरुद्धमिति यावत्। 'अतिमदनाक्रान्तहृदयः कोऽपि दोषं जानन्नपि रागौत्कट्यात्प्रेयस्याः सहचरीमाह' इति गङ्गाधरः।

दोषदर्शनादुद्विजन्तमपि रागवशादुपरसन्तं कान्तं हाववती काचित्पुष्पवती सोपालम्भामाह–

**स्पृशसि न यदि पुष्पवतीं तिष्ठसि तत्किमिति वारितः पुरतः।**
**स्पृष्टोऽसि नः कराभ्यां धावित्वा चुलचुलायमानाभ्याम्।।८१।।**[2]

शास्त्रमर्यादया दोषाशङ्की त्वं यदि पुष्पवतीं मां न स्पृशसि तर्हि मया स्पर्शाय निवारितः सम्मुखे किमिति तिष्ठसि। इदानीं चुलचुलायमानाभ्यां त्वत्स्पर्शोत्कण्ठाया कण्डूयमानाभ्यां नः कराभ्यामेष त्वं धावित्वा स्पृष्टोऽसि। चुलचुलेत्युकण्ठातिशयसूचकमनुकरणम्। सरस्वतीकण्ठाभरणादिषु क्वचित् चुलचुलायमानाभ्यामित्यस्य स्पन्दमानाभ्यामिति च्छायोपलभ्यते। परं भावव्यञ्जनानुकूला प्राकृतशैली पालनीयेति न तथेहानुसृतम्। नायिकानिष्ठः सोऽयं हाव इति सरस्वतीकण्ठाभरणम्।'रागतः सहसा प्रवृत्तिहेतुश्चित्तोल्लासो हेला। वचनविन्यासेन सहिता हेलैव हावः' इति तद्वर्णितं लक्षणम्।

---

१. **जइ लोकणिन्दिअं जइ अमङ्गलं जइ विमुक्कमज्जाअम्।**
**पुप्फवइदंसणं तहवि देइ हिअअस्स णिव्वाणम्।।८०।।**
[यदि लोकनिन्दितं यद्यमङ्गलं यदि विमुक्तमर्यादम्।
पुष्पवतीदर्शनं तथापि ददाति हृदयस्य निर्वाणम्।।]

२. **जइ ण छिवसि पुप्फवइं पुरओ ता कीस वारिओ ठासि।**
**छित्तोसि चुलचुलन्तेहिँ धाविउण अम्ह हत्थेहिं।।८१।।**
[यदि न स्पृशसि पुष्पवतीं पुरतस्तत्किमिति वारितस्तिष्ठसि।
स्पृष्टोऽसि चुलचुलायमानैर्धावित्वास्माकं हस्तैः।।]

मुग्धायाः प्रोषितपतिकायाः सखी नायकसमीपगामिनं पान्थं प्रति नायकार्थं सोपालम्भं सन्दिशति–

**उज्जागरककषायितगुरुकाक्षी मोघमण्डनविलक्षा।**
**सा लज्जते वराकी सुभग सखीभ्योऽपि लज्जालुः।।८२।।**[१]

उज्जागरेण (सुभृशं जागरणेन) कषायिते गुरुके अक्षिणी यस्याः सा। त्वद्विरहगोपनार्थं सखीनामाग्रहाद्धारितेनापि त्वद्वियोगान्निष्फलेन मण्डनेन विलक्षा सा। विरहदुःखानुमितस्य त्वत्प्रणयस्य स्फुटीभावात्सखीभ्योऽपि लज्जते, किमुतान्येभ्यः। मण्डनादिना यद्यपि उपरितो बहुतरं गोपयति परं जागरणकषायिताभ्यां गुरुकाभ्यां नेत्राभ्यामेतस्या विरहदुःखं स्फुटीक्रियत इति स्वभावादेव लज्जालुः सा लज्जातिक्रमात्सुभृशं खिद्यत इति 'वराकी' पदद्योतितेन दैन्येन विरहातिशयः सूच्यते। सुभगेत्यामन्त्रणेन–सौभाग्यगर्वितस्त्वमेवमवस्थामपि न तां सम्भावयसीति नायकं प्रति त्वरार्थमुपालम्भः सूच्यते।

गर्भभरात्क्लाम्यन्तीं सखीमवलोक्य सखी सपरिहासमन्यां सखीमाह–

**नापि तथा हृदि ताम्यति गर्भस्य भरेण भूरिगुरुणापि।**
**विपरीतनिधुवनं पुनरप्राप्नुवती स्नुषा यथा दयिते।।८३।।**[२]

यथा दयिते ताम्यति दयितं प्रति खिद्यत इत्यर्थः। 'स्नुषा' पदेन नवतारुण्यं श्वश्रूप्रभृतिभिर्गर्भावस्थायां सुरक्षितत्वं च सूच्यते। गर्भिणीपीवरादीनां विपरीतसुरतस्य निषिद्धत्वादिति भावः।

---

१. **उज्जागरअकसाइअगुरुअच्छी मोहमण्डणविलक्खा।**
**लज्जइ लज्जालुइणी सा सुहअ सहीहिँ वि वराई।।८२।।**
[उज्जागरककषायितगुरुकाक्षी मोघमण्डनविलक्षा।
लज्जते लज्जाशील सा सुभग सखीभ्योऽपि वराकी।।]

२. **ण वि तह अइगरुएण वि तम्मइ हिअए भरेण गब्भस्स।**
**जह विपरीअणिहुअणं पिअम्मि सोह्ला अपावन्ती।।८३।।**
[नापि तथातिगुरुकेणापि ताम्यति हृदये भरेण गर्भस्य।
यथा विपरीतनिधुवनं प्रिये स्नुषा अप्राप्नुवती।।]

नायिकानुरागं प्रकाश्य नायकमुत्कण्ठयन्ती दूती सहजमाह–

**अगणितजनापवादं ह्यपहस्तितगुरुजनं वराक्याद्य।**
**तव विगलितदर्शनया तया वलित्वा चिरं रुदितम्।।८४।।**[१]

विगलितदर्शनया दर्शनाद्वियुक्तया। न गणितो जनापवादो यस्याम्, अपहस्तिताः अवमानिताः गुरुजनाश्च यस्यां क्रियायां यथा भवति तथेति क्रियाविशेषणद्वयम्। वलित्वा परावृत्त्य। अपहस्तितपदेन–प्रेमप्रतिरोधाय बलान्मध्यमापततोऽपि गुरुजना हस्ताभ्यामपसारिता इति प्रेमातिशयः पोष्यते। वलित्वा रुदितमित्यनेन–यावत्वद्गमनस्य दिशि लग्नाभूद्दृष्टिस्तावदा–सीदाश्वासः परं मुखपरावर्तने सोऽपि गत इति दुःखातिशयः सूच्यते। वराकीपदेन–जन–गुरुजन–सन्दंशपतितापि त्वत्प्रणयवशीकृता सेयं दीना किमिति नोपगम्यत इति दैन्योत्तेजित उत्कण्ठातिशयः पोष्यते।

प्रोषितपतिका तत्सखीं वा लेखमुखेन नायकमाह–

**हृदयं हृदये निहित चित्रालिखितेव तव मुखे दृष्टिः।**
**आलिङ्गनरहितानि हि केवलमङ्गानि हीयन्ते।।८५।।**[२]

हीयन्ते क्षीणानि भवन्ति। तव मुखे मद्दृष्टिश्चित्रलिखितेव निश्चला, सर्वदा मम दृष्टौ तव मुखं भ्रमतीत्याशयः। मम हृदयं तव हृदये स्थापितमित्यनेन–एकीभूतहृदयाया मम विरहवेदना किं न जानासि? ततश्च हृदयाभिज्ञस्त्वं विरहविकलां दुर्बलां मां त्वरितं सान्त्वयेति ध्वन्यते। प्रतिक्षणमेव त्वत्स्मरणस्योपस्थापनेन उत्कण्ठासम्बर्धकं हृदयं दृष्टिश्चेति द्वितयं तु विरहेऽपि सर्वदैवाक्षुण्णबलम्, हृदय–मुखाद्यनुकूलसमागमसौख्यात्। देहस्तु क्षीयते। तथा

---

१. **अगणिअजणाववाअं अवहत्थिअगुरुअणं वराईए।**
**तुह गलिअदंसणाए तीए वलिउण चिरं रुण्णम्।।८४।।**
[अगणितजनापवादमपहस्तितगुरुजनं वराक्या।
तव गलितदर्शनया तया वलित्वा चिरं रुदितम्।।]

२. **हिअअं हिअए णिहिअं चित्तालिहिअ व्व तुह मुहे दिट्ठी।**
**आलिङ्गणरहिआइं णवरं खिज्जन्ति अङ्गाइं।।८५।।**
[हृदयं हृदये निहितं चित्रालिखितेव तव मुखे दृष्टिः।
आलिङ्गनरहितानि केवलं क्षीयन्तेऽङ्गानि।।]

चोत्कण्ठोपबृंहणेन शतगुणसन्धुक्षितविरहवेदनं कथं मे जीवितं तिष्ठेदिति त्वमेव जानीहीति गूढमाकूतम्। 'शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे' इत्यादयो बह्व्यः सूक्तयोऽस्या गाथाया उपजीवन्त्यर्थमित्यलं मार्मिकेषु।

प्रियानयनाय त्वरयन्ती प्रोषितपतिका मर्माभिज्ञां सखीमाह–

**अहमिव वियोगतन्वी विराहाग्निर्दुःसहश्चलो जीवः।**

**अभिधीयतां नु सखि किं त्वमेव जानासि यद्युक्तम्।।८६।।**[१]

वियोगतनुतया शुष्कां विरहाग्निः सुभृशं दहतीति तन्वीपदोत्तरं विरहाग्निपदनिगुम्फनस्याकूतम्। एवं जीवन्त्या एव शरीरदाहे वराको जीव एव कथं तिष्ठेत्, तस्य वायुवच्चलत्वात्। एवमवस्थायां प्रियतमार्थं किं सन्दिश्यतामस्मिन्विषये यद् युक्तं तत्वमेव जानासि। अथवा– मया किमुच्यताम्। सम्प्रति यदुचितं तत्त्वं जानासि। यदि मे जीवितं कामनीयं तर्हि प्रियतमः समानेय इत्याशयः।

अन्यासक्ततया चिरकालदनुपसरन्तं नायकं नायिकाया विरहदुःखं प्रतिपादयन्ती दूती आह–

**तव विरहोज्जागरकः स्वप्नेऽपि ददाति दर्शनसुखं नो।**

**वाष्पेण यदवलोकनविनोदनं तदपि बत हतं तस्याः।।८७।।**[२]

विरहवशाज्जागरणं स्वप्नेऽपि तव दर्शनसुखं न ददाति। मार्गे गच्छतस्तव, गृहपृष्ठादितो यदवलोकनरूपं विनोदनं तदपि चिन्तौत्कण्ठ्यजनितेन वाष्पेण तस्या विहतम्। विनोदनपदेन–सम्प्रति विरहस्यैतावती विषमा वेदना यत्तस्यां त्वदवलोकनमेव विनोदनं नान्यः कश्चित्प्रतीकार

---

१. **अहअं विओअतणुई दुसहो विरहाणलो चलं जीअम्।**
**अप्पहिज्जउ किं सहि जाणसि तं चेव जं जुत्तम्।।८६।।**
[अहं वियोगतन्वी दुःसहो विरहानलश्चलं जीवम्।
अभिधीयतां किं सखि जानासि त्वमेव यद्युक्तम्।।]

२. **तुह विरहुज्जागरओ सिविणे वि ण देअ दंसणसुहाइं।**
**वाहेण जहालोअणविणोअणं से हअं तं पि।।८७।।**
[तव विरहोज्जागरकः स्वप्नेऽपि न ददाति दर्शनसुखानि।
वाष्पेण यदालोकनविनोदनं तस्या हतं तदपि।।]

इत्युत्कण्ठातिशयः सूच्यते। 'कलहान्तरिताया विरहदुःखं प्रतिपादयन्ती दूती नायकमाह' इति गङ्गाधरः। एतावच्चिरं यदि मानस्थितिः साधीयसी तर्हि सम्यगेवेदम्।

कुपितं दयितं किमिति न प्रसादयसीति वदन्तीं वयस्यां प्रति काचित्साकूतमाह–

**अन्यापराधकुपितः प्रसादमयते यथा तथा समयात्।**
**तं द्वेष्यतापराधे प्रसादयिष्ये कथं कुपितम्।।८८।।**[१]

अन्यः आज्ञोल्लङ्घनादिरूपो योऽपराधस्तेन कुपितः यथाकथञ्चित् समयान्तरे प्रसादं गच्छति। द्वेष्यता साहजिको द्वेषस्तद्रूपेण ममापराधेन कुपितं तु तं कथं प्रसादयिष्यामि? अहं तस्य सहजमेव द्वेष्यास्मि, एवमवस्थायां कथङ्कारमेनं प्रसादयिष्यामीत्यर्थः। 'अनुरक्तं कान्तं कापि सोपालम्भमाह' इति गङ्गाधरावतरणं तु विचारणीयमेव। अनुरक्तस्य तस्य कोपद्वेषयोर-समन्वयात्। कान्तं प्रत्येवोक्तौ तमिति परोक्षार्थस्यासम्बन्धाच्च।

बाह्योपचारचातुर्येण अन्यनायिकासक्तिं गोपयन्तं कान्तं प्रति काचित्सोपालम्भमाह–

**दृश्यस इह मधु जल्पसि सद्भावः सुभग पुनरियानेव।**
**हृदयं हि पाटयित्वा कः कस्मै कथय दर्शयति।।८९।।**[२]

इह दृश्यसे अस्मभ्यं दर्शनं ददासि, प्रियं जल्पसि, एतावानेव तु स्नेहः। दृश्यसे इत्यनेन–प्रयोजनैकमित्रस्य ते दर्शनदानमपि महानुपकार इत्याक्षेपः, केवलं दर्शनमात्रं ददासि, प्रणयोपलब्धिस्तु त्वत्तो दूरापस्तैवेत्युपालम्भो वा ध्वन्यते। मधुरस्य स्थाने 'मधु' इत्युक्तया-व्यामोहनार्थमनृतं माधुर्यातिशयं प्रदर्शयसि। स्पष्टं तदस्वाभाविकमित्याक्षिप्यते। इयानेवेति विपरीतलक्षणया बाह्योपचारमात्रं न सद्भाव इति सूच्यते। हृदयं तु विपाट्य को दर्शयतीत्यनेन

---

१. **अण्णावराहकुविओ जहतह कालेण गम्मइ पसाअम्।**
**वेसत्तणावराहे कुविअं कहँ तं पसाइस्सम्।।८८।।**
[अन्यापराधकुपितो यथातथा कालेन गच्छति प्रसादम्।
द्वेष्यत्वापराधे कुपितं कथं तं प्रसादयिष्यामि।।]

२. **दीससि पिआणि जम्पसि सब्भावो सुहअ एत्तिअ व्वेअ।**
**फालेइऊण हिअअं साहसु को दावए कस्स।।८९।।**
[दृश्यसे प्रियाणि जल्पसि सद्भावः सुभग एतावानेव।
पाटयित्वा हृदयं कथय को दर्शयति कस्य।।]

'बहिस्त एव त्वयतिमधुरोऽसि। हृदयं तु न त्वं प्रकाशयितुं समर्थः। तथा कृते तु कृत्रिमप्रणयस्य ते हृदयदशा स्पष्टा भवेदि'ति निभृत उपालम्भो ध्वन्यते। सुभगेत्यामन्त्रणेन-सौभाग्यदर्पितस्त्वम्, अत एव कृत्रिमोपचारैराकर्षणमिच्छसीति सूच्यते।

स्वल्पलाभेन दृप्यत्सु दुर्जनेषु घटमानां सूक्तिं सुमधुरमाह-

**उदकं लब्ध्वां केचिन्नितान्तमुत्तानिताननाः सन्तिः।**
**रिक्ता नमन्ति सुचिरं रहट्टघटिका इवेह कापुरुषाः।।९०।।**[१]

रहट्टो घटीयन्त्रं तत्सम्बन्धिनः क्षुद्रा घटा इव तुच्छपुरुषाः सन्ति। उदकं लब्ध्वा यथा घटिका ऊर्ध्वमुखा भवन्ति तथा दुर्जना अपि स्वल्पलाभ एव दर्पेण मस्तकमुन्नमयन्ति, रिक्ततयां च नम्रा भवन्ति। गङ्गाधरेण प्राचीनपद्यमिहोपन्यस्तम्-''जीवनग्रहणे नम्रा गृहीत्वा पुनरुन्नताः। किं कनिष्ठाः किमु ज्येष्ठा घटीयन्त्रस्य दुर्जनाः।।'' इति। 'काप्यस्थिरस्नेहं पतिमुपालब्धमन्या-पदेशेनाह' इति तट्टीकास्थमवतरणम्।

कलानिधिकलाकलापेन धवलितपर्यन्ते दिग्दिगन्ते प्रियतमसमागमवञ्चिता कृष्णाभिसारिका सखीं सखेदमाह-

**ज्योत्स्नाजलं नु कियदिव भग्नप्रियसङ्गमं नभःसरसि।**
**तिष्ठति न चन्द्रकिरणप्रणालनिर्झरनिवहनिपतत्।।९१।।**[२]

भग्नो मादृशीनां प्रियसङ्गमो येन, ईदृशं ज्योत्स्नारूपं जलं गगनरूपे सरसि कियदिव किंपरिमणामस्ति? अपरिमेयं भृतमस्तीत्याशयः। यतश्चन्द्रकिरणा एव प्रणालनिर्झरनिवहास्तेभ्यो निपतत् न तिष्ठति न समाप्यते। यदि ज्योत्स्नाजलं समाप्तं स्यात्तर्हि प्रियतममभिसरेयमित्याशयः। जले वर्षति यातायातनिरोधेन यथा प्रियसङ्गमो विहन्यते तथेदानीमपि। तथा च-जलाभेदरूपणेन ज्योत्स्नायाः सान्द्रत्वसूचनात्पर्यन्ततः प्रकाशातिशयो ध्वन्यते।

---

१. **उअअं लहिउण उत्ताणिआणणा होन्ति के वि सविसेसम्।**
**रित्ता णमन्ति सुइरं रहट्टघडिअ व्व कापुरिसा।।९०।।**
[उदकं लब्ध्वा उत्तानिताननाः भवन्ति केऽपि सविशेषम्।
रिक्ता नमन्ति सुचिरं रहट्ट (अरघट्ट) घटिका इव कापुरुषाः।।]

२. **भग्गपिअसंगमं केत्तिअं व जोह्णाजलं णहसरम्मि।**
**चॅन्दअरपणालणिज्झरणिवहपडन्तं ण णिट्ठाइ।।९१।।**
[भग्नप्रियसङ्गमं कियदिव ज्योत्स्नाजलं नभःसरसि।
चन्द्रकरप्रणालनिर्झरनिवहपतन्न निस्तिष्ठति।।]

नायकमुत्कण्ठयितुं नायिकानुरागं सूचयन्ती दूती आह–

**सुन्दरनवयुवजनसङ्कुलेऽपि तव दर्शनं विमार्गन्ती।**
**भ्रमति विपिन इव दृष्टिर्वराकिकायाः समुद्विग्रा।।९२।।**[1]

सुन्दरैर्नवयुवकजनैः सम्भृतेऽपि स्थाने केवलं तव दर्शनं वाञ्छन्ती तस्या वराक्या दृष्टिः अरण्य इव शून्य इव उद्विग्ना सती भ्रमति। त्वां विहाय अन्ये सर्वेऽपि नवयुवकास्तस्य दृष्टौ नोपगच्छन्ति, अत एव उद्विग्ना सती अरण्यमिव शून्यं तत्स्थानं पश्यतीत्याशयः। अरण्य-पदेन भयजनकत्वं सूच्यते। रूपशालिनोऽपि नवयुवानस्तस्या दृष्टौ न रोचन्ते, ततश्च त्वदेकमात्र-चित्ता सा नोपेक्षणीयेति व्यज्यते। वराकिकेत्यत्र कन् दयनीयत्वं सूचयति। यदा तस्या दृष्टिस्त्वद्दर्शनार्थं विकला भ्रमति तदा करुणा आयातीत्यर्थः। अथवा, एवमेकान्तानुरक्तचित्तापि सा तवोपेक्षापात्रमस्तीति सा दीनैवेतयाशयः। तव दर्शनं विमार्गन्तीत्यनेन-तव दर्शनं तत्कृते अन्वेषणीयमिति दुर्लभत्वं द्योत्यते। भ्रमतीत्यनेन-त्वामदृष्ट्वापि सा न निश्चेष्टा तिष्ठति, किन्तु त्वद्दर्शनार्थं विकला आहिण्डत इत्यनुरागातिशयो ध्वन्यते। 'अणुव्विण्णा' इति पाठे त्वद्दर्शन-कौतुकात् अनुद्विग्ना, अगणितखेदेत्यर्थः।

प्रोषितपतिकाया विरहवैकल्यं तत्प्रियतमसमीपगामिने पान्थाय सखी सन्दिशति–

**अतिकोपापि श्वश्रूर्विरोदिता व्युषितकान्तया स्नुषया।**
**पादपतनावनतया ह्युभयोरपि वलययोः पततोः।।९३।।**[2]

चरणवन्दनार्थमवनतया प्रोषितपतिकया स्नुषया, नमनसमये उभयहस्तविधृतयोर्वल-ययोः निपततोः सतोः अतिकोपनापि श्वश्रूः रोदिता। पदवन्दनसमये दौर्बल्यातिशयात्सहजमेव निपतन्तौ वलयावपि वराक्या न परिज्ञाताविति दृष्ट्वा निष्ठुराया अपि श्वश्र्वाः करुणाभूदित्याशयः।

---

१. **सुन्दरजुआणजणसंकुले वि तुह दंसणं विमग्गन्ती।**
**रण्ण व्व भमइ दिट्ठी वराइआए समुव्विग्गा।।९२।।**
[सुन्दरयुवजनसङ्कुलेऽपि तव दर्शनं विमार्गयन्ती।
अरण्य इव भ्रमति दृष्टिर्वराकिकायाः समुद्विग्ना।।]

२. **अइकोवणा वि सासू रुआविआ गअवईअ सोह्णाए।**
**पाअपडणोण्णआए दोसु वि गलिएसु वलएसु।।९३।।**
[अतिकोपनापि श्वश्रू रोदिता गतपतिकाया स्नुषया।
पादपतनावनतया द्वयोरपि गलितयोर्वलययोः।।]

वलययोरिति द्विवचनेन 'दौर्बल्याद्बहवो वलयास्तु कराद्विगलिता एव किन्तु सौभाग्यचिह्नमिति कृत्वा प्रत्येकहस्ते एकैको वलयो रक्षितः-' इति दौर्बल्यातिशयो व्यज्यते। रोदितेत्यनेन-अतिकोपापि सा केवलं मार्दवमेव न गता प्रत्युत विद्रुतहृदयापि जातेति स्नुषाया दयनीयत्वातिशयो व्यज्यते। ततश्च-एवंविधा सा दयनीया जाता यत्सर्वदा कोपकुटिलस्यापि जनस्य मनसि तां वीक्ष्य दया जाता, तत्किं दयितम्मन्यो भवानेव तां म्रियामाणामुपेक्षिष्यते? इति प्रियतमं प्रति ध्वन्यते।

प्रवासोद्यतं दयितं बहिर्गमनान्निवारयन्ती काचिद्ग्रीष्मातपस्य दुःसहतां वर्णयति-

**विरुदन्तीवारण्ये दुःसहरविरश्मिसन्तप्ताः।**
**अतितारझिल्लिविरुतैर्महीरुहो ग्रीष्ममध्याह्ने।।९४।।**[१]

सूर्यातपसन्तापादुःखिता वृक्षा अपि अतितारैः झिल्लीनां ('झींगुर') शब्दैः रुदन्ति इव। अरण्ये इत्यनेन अरण्यस्थानामपि यदेयं दशा तदा नागरिकस्य ते का दशा स्यादिति सूच्यते। वृक्षा रुदन्तीत्यनेन-अचेतना अपि एवमवस्थाः सञ्जाताः पुनश्चेतनानां तु भृशमेव भयमिति व्यज्यते। किञ्च गमनसमये रुदतां दर्शनेन अशकुनभयात्प्रवासरोधे तात्पर्यं व्यज्यते। 'यद्वा सङ्केतवनोपगतं लोकागमं शङ्कमानं कान्तं प्रत्यभिसारिकाया इयमुक्तिः। नायं जनचरणसञ्चरणचलितपत्रध्वनिः, किं तु झिल्लीध्वनिरिति निःशङ्कं रमस्वेति भावः' इति गङ्गाधरः।

सङ्केतितस्य तस्य सरसः कमलवनमहं गता, न त्वं दृष्ट इति नायकं श्रावयन्ती काचित्सखीमाह-

**प्रथमनिलीनमधुरमधुलुब्धालिकुलोन्निबद्धझङ्कारम्।**
**अहिमकरकिरणनिकुराभिचुम्बितं दलति कमलवनम्।।९५।।**[२]

---

१. **रोवन्ति व्व अरण्णे दूसहरइकिरणफंससंतत्ता।**
**अइतारझिल्लिविरुएहिँ पाअवा गिम्हमज्झह्णे।।९४।।**
[रुदन्तीवारण्ये दुःसहरविकिरणस्पर्शसन्तप्ताः।
अतितारझिल्लीविरुतैः पादपा ग्रीष्ममध्याह्ने।।]

२. **पढमणिलीणमहुरमहुलोहल्लालिउलबद्धझंकारम्।**
**अहिमअरकिरणणिउरम्बचुम्बिअं दलइ कमलवणम्।।९५।।**
[प्रथमनिलीनमधुरमधुलुब्धालिकुलबद्धझङ्कारम्।
अहिमकरकिरणनिकुरम्बचुम्बितं दलति कमलवनम्।।]

प्रथमं निलीनेन मधुरमधुलुब्धेन अलिकुलेन उत् (उच्चैः) निबद्धो झङ्कारो यस्मिन् तत्, अहिमकरस्य सूर्यस्य किरणनिकरेण अभिचुम्बितं सर्वतः परामृष्टम्। दलति विकसति। सुप्तस्य राज्ञः प्रबोधनाय वैतालिकस्येदं वचनमिति केचित्।'सान्ध्यो विधिरनुष्ठीयताम्, सुरभयो मुच्यन्ताम्, विक्रेयवस्तूनि प्रसार्यन्ताम्, नास्तीदानीं पिशाचादिभयम्, पथिक प्रतिष्ठस्वेत्यादि प्रस्तावदेशकालादिभेदात्पुनरनेकविधो व्यङ्ग्योऽर्थः सहृदयैस्स्वयमूहनीयः' इति गङ्गाधरः।

मानिन्या मानापनोदनाय नायकं त्वरयन्ती दूती तस्य सहचरमाह–

**प्रेयसि गोत्रस्खलनं श्रुत्वां क्षणवासरेऽद्य बत तस्याः।**

**वध्यमहिषस्य मालेव मण्डनं पश्यताभाति।।९६।।**[१]

अद्य क्षणवासरे उत्सवदिवसे। प्रेयसि प्रियतमे प्रियतमस्य मुखादिति यावत्। गोत्रस्खलनं श्रुत्वा तस्या मण्डनं देव्यै उपहारत्वेन कल्पितस्य महिषस्य मालेव प्रतीयते इति पश्यत। बलिदानाय नियमितस्य महिषस्य कृतमपि मण्डनम् आसन्नमरणतया यथा न शोभते तथा तस्य अपीत्यर्थः। प्रेयःपदेन–तस्यास्त्वमेतावत्प्रियोऽसि यत्तव मुखादन्यमहिलाया नामापि श्रुत्वा द्वेषवशात् सा मरणं व्यवस्यतीति सूच्यते। एवं च अभिमानिनी सा यावन्न म्रियते तावदेव त्वरितमनुनयेति प्रियतमं प्रत्यभिव्यज्यते। अनुभावेषु नायिकानिष्ठः सोऽयं सपत्नीं प्रति द्वेष इति सरस्वतीकण्ठाभरणम्।

काचिन्निजप्रियतमानयनाय सखीं त्वरयितुमात्मनो विषमां विरहवेदनामाह–

**मदयति मलयमरुन्मां स्थगयति भवनाच्च निर्यतीं श्वश्रूः।**

**अङ्कोटपरिमलेनापि यो मृतः स खलु मृत एव।।९७।।**[२]

मलयमारुतः अतिसौरभमुद्वमति, (महमहायते) अत एव मामुन्मत्तां करोति। श्वश्रूश्च 'मलयमारुतोद्दीपितमदना मदनाशुगवेदनावशात्सेयं दुरपनेयं दशान्तरं यास्यति' इति विचार्य मां गृहान्निर्गच्छन्तीं

---

१. **गोत्तक्खलणं सोऊण पिअअमे अज्ज तीअ खणदिअहे।**
**वज्झमहिसस्स माल व्व मण्डणं उअह पडिहाइ।।९६।।**
[गोत्रस्खलनं श्रुत्वा प्रियतमे अद्य तस्याः क्षणदिवसे।
वध्यमहिषस्य मालेव मण्डनं पश्यत प्रतिभाति।।]

२. **महमहइ मलअवाओ अत्ता वारेइ मं घराणेन्तीम्।**
**अङ्कोल्लपरिमलेण वि जो क्खु मओ सो मओ व्वेअ।।९७।।**
[महमहायते मलयवातः श्वश्रूर्वारयति मां गृहान्निर्यान्तीम्।
अङ्कोटपरिमलेनापि यः खलु मृतः स मृत एव।।]

निवारयति। परम् गृहपुष्पितस्य अङ्कोटपादपस्य परिमलेनापि यो मृतः सोऽपि मृत एव। गृहाद्ब-हिरनुपसरणेऽपि अङ्कोटपरिमलोद्दीपितमदना यमसदनातिथिरहं भविष्यामीत्याशयः। 'अङ्कोटो गृहवाटिकासु बाहुल्येन भवतीति प्रसिद्धिः' इति गङ्गाधरः। 'अङ्कोटे तु निकोचकः' इत्यमरः।

इह ते प्रणयप्राप्तिप्रयत्नो विफल इति नायकं सूचयन्ती दूती कयोश्चिद्दम्पत्योः परस्परप्रणयमाह–

**मुखवीक्षकः प्रियोऽस्या इयमपि सविशेषदर्शनोन्मत्ता।**

**मन्येते द्वावपि भुवमयुवतियुवकामिव कृतार्थौ।।९८।।**[1]

प्रियतमः, अस्याः (भवता प्रक्रान्तप्रसङ्गाया) नायिकाया मुखवीक्षकः, इयमपि विशिष्य प्रियस्य दर्शनमात्रेण उन्मत्ता। एतावन्मात्रेण कृतकृत्यौ द्वावपि पृथिवीम् अमहिलाम् अपुरुषां च मन्येते। पृथिव्यामियमेकैव युवतिर्नान्येति प्रियः, अयं चैक एव युवक इति एषा नायिका मन्यत इत्याशयः। परस्परं निरन्तरदर्शनप्रणयितया द्वावप्यन्यत्र दृष्टिमपि न क्षिपतः किं पुनरन्यदिति द्वयोः प्रेमातिशयो ध्वन्यते।

प्रोषितपतिका कापि कस्याश्चित्कुशलप्रश्नस्योत्तरमाह–

**क्षेमं कुह भोः क्षेमं योऽसौ कुब्जाम्रको गृहद्वारे।**

**तस्य किल मौलिदेशात्कश्चिदनर्थः समुत्पन्नः।।९९।।**[2]

क्षेमं कुह क्वास्ति? अनर्थः मुकुलो निर्गत इत्यर्थः। रसालान्कुसुमयन्वसन्तकालः प्राप्त इति सूच्यते। कुब्जस्याम्रस्यापि इयं दशा तर्हि परितो मञ्जरितरसालपुञ्जपिञ्जरितदशदिगन्तेऽ-स्मिन्वसन्ते विरहिण्या मे क्षेमं दूरापास्तमेवेति ध्वन्यते।

प्रवासार्थमुद्यतं दयितं प्रति नायिकासखी प्रवासनिरासार्थं प्रसङ्गेन कस्यचित्प्रवसतो वृत्तान्तमाह–

---

१. **मुहपेच्छओ पई से सा वि हु सविसेसदंसणुम्मइआ।**
**दोवि कअत्था पुहइं अमहिलपुरिसं व मण्णन्ति।।९८।।**
[मुखप्रेक्षकः पतिस्तस्याः सापि खलु सविशेषदर्शनोन्मत्ता।
द्वावपि कृतार्थो पृथिवीममहिलापुरुषामिव मन्येते।।]

२. **खेमं कन्तो खेमं जो सो खुज्जम्बओ घरद्दारे।**
**तस्स किल मत्थआओ को वि अणत्थो समुप्पण्णो।।९९।।**
[क्षेमं कुतः क्षेमं योऽसौ कुब्जाम्रको गृहद्वारे।
तस्य किल मस्तकात्कोऽप्यनर्थः समुत्पन्नः।।]

**आपृच्छनविच्छायं जायाया मुखमवेक्षमाणेन।**

**निर्गन्तुमेव नेष्टं शोकनिगडितेन पथिकेन।।१००।।**[१]

आपृच्छनेन 'प्रिये! प्रवासार्थमनुमतिं देहि' इत्यादिप्रश्नेन विच्छायं मन्दशोभम्। आपृच्छनमित्यत्र वुञ्। गृहान्निर्गन्तुमेव न वाञ्छितम्। गृहादनिर्गच्छतोऽपि दयितस्य पथिकपद-निर्देशेन ''स हि निजमनसि पथिगमनस्य दृढविचारं कृत्वा आत्मनः पथिकत्वं निश्चितवाना-सीत्परं ततोऽपि स निवृत्तवान्'' इति प्रेमातिशयो ध्वन्यते। निर्गन्तुमेवेत्येवकारेण 'गृहान्निर्गमनस्यै-वेच्छा न भवति किं पुनर्बहुकालार्थं दूरदेशगमनस्येति प्रेमातिशयो द्योत्यते। इष्टमित्यनेन इच्छामात्रमपि न भवति किं पुनर्गन्तुमुद्योगस्य कथेति व्यज्यते। 'दयितायाः' इत्याद्यनुक्त्वा 'जायायाः' इति पदेन 'सामान्यतो भार्यामात्रमभिमन्यमानोऽपि पथिकस्तस्या मनःखेदमनभिल-षन्प्रवासं परिहरित। भवांस्तु एतां हृदयदयितां व्यपदिशन्नपि विदेशगमनार्थमुद्युङ्क्ते, अहो प्रणयः' इति साकूतमुपालभ्यते। 'प्रवासावसरमधिगम्य कस्यामप्यभियोक्तुर्जारस्य निरासार्थं दूत्याह' इति गङ्गाधरः।

शतकसमाप्तिमाह-

**रसिकजनहृदयदयिते कविवत्सलकुशलसुकविसंरचिते।**

**सप्तशतके समाप्तं पञ्चमगाथाशतकमेतत्।।१०१।।**[२]

**( इति पञ्चमं शतकम् )**

---

१. **आउच्छणविच्छाअं जाआइ मुहं णिअच्छमाणेण।**
**पहिएण सोअणिअलाविएण गन्तुं व्विअ ण इट्ठम्।।१००।।**
[आपृच्छनविच्छायं जायाया मुखं निरीक्षमाणेन।
पथिकेन शोकनिगडितेन गन्तुमेव नेष्टम्।।]

२. **रसिअजणहिअअदइए कइवच्छलमुहसुकइणिम्मइए।**
**सत्तसअम्मि समत्तं पञ्चमँ गाहासअं एअम्।।१०१।।**
[रसिकजनहृदयदयिते कविवत्सलप्रमुखसुकविनिर्मिते।
सप्तशतके समाप्तं पञ्चमं गाथाशतकमेतत्।।]

---------

# षष्ठशतकम्

भृशमुत्कण्ठितापि जनापवादभयात्प्रियतमं स्फुटमवलोकयितुमप्यपारयन्ती काचिद-सती निजवयस्यां सनिर्वेदमाह–

**सूचीवेधे मुसलं निक्षिपता दग्धलोकेन।**

**प्रिय एकग्रामेऽपि हि पूरितनयनं न दृष्टोऽपि।।१।।**[1]

सूचीवेधस्य सूक्ष्मे स्थाने मुसलं निक्षिपता, अल्पमपि दूषणं बहु कुर्वतेत्यर्थः। दग्धेन लोकेन। अस्य लोकस्य कारणेन, हेतौ तृतीया। एकग्रामेऽपि वर्तमानः प्रियः पूरितनयनमपि यथा स्यात्तथा न दृष्टः, स्पष्टमुन्मीलिताभ्यां नयनाभ्यामातृप्ति न दृष्ट इत्यर्थः। दग्ध इति लोकं प्रत्यसूयासूचनाय। मूले 'समअम्' इत्यस्य समाभ्यां सर्वाभ्यामित्यर्थः। पूर्णोन्मीलिताभ्यां न दृष्ट इति तत्तात्पर्यम्।'समं सदृशि सर्वस्मिन्' इति कोषः। न दृष्टोऽपीत्यपिना लोकदौरात्म्याद्दर्शन-मात्रेणाप्यहं वञ्चिता, कुतः किल समागमस्य सौभाग्यमिति लालसा व्यज्यते।'सूचीवेध' इति लोकोक्त्यलङ्कारः। अनेन च–मुधैव मां कलङ्कयन् लोकः प्रियसमागमे बाधकः। तद्विरहविक-लाया मम तु महदधैर्यमित्युत्कण्ठातिशयो ध्वन्यते।

प्रियतमे प्रोषिते मे प्राणानामपि संशय एवेति सूचयन्ती काचिद्रोदनान्निवारयन्तीं निजसखीमाह–

**अद्यैव तावदेकं मा मां प्रियसखि निवारये रुदतीम्।**

**कल्ये गते तु तस्मिन्न हि रोदिष्यामि यदि न मृता।।२।।**[2]

---

१. **सूईवेहे मुसलं विच्छहमाणेण दड्ढलोएण।**
**एक्कग्गामे वि पिओ समअं अच्छीहिँ विण दिट्ठो।।१।।**
[सूचीवेधे मुसलं निक्षिपता दग्धलोकेन।
एकग्रामेऽपि प्रियः समाभ्यामक्षिभ्यामपि न दृष्टः।।]

२. **अज्जं पि ताव एक्कं मा मं वारेहि पिअसहि रुअन्तिम्।**
**कल्लिं उण तम्मि गए जइ ण मुआ ता ण रोदिस्सम्।।२।।**
[अद्यापि तावदेकं मा मां वारय प्रियसखि रुदतीम्।
कल्ये पुनस्तस्मिन्गाते यदि न मृता तदा न रोदिष्यामि।।]

मूले अपिरवधारणे। अद्यैव, एकं दिनं यावत्, रुदतीं मां मा निवारयेः। यदि न मृता तदा न रोदिष्यामीत्यनेन–तद्गमने मम मरणमवश्यम्भावि, ततश्च रुदत्या मे निवारणस्यावश्यकतैव न भविष्यतीति भावः। 'यदि न मरिष्यामि तदा न रोदिष्यामि' इति 'मृ' धातोर्भविष्यत्प्रत्ययस्थलेऽपि 'मृता' इति भूतकालिकप्रयोगेण–'रोदनात्पूर्वं मे मरणं भूतकालिकं भविष्यति अर्थात् रोदनं पश्चाद्भविष्यति अहं तु ततः पूर्वमेव म्रियेय' इति व्यज्यते। एवं च–यदि मे जीवितं कामनीयं तर्हि प्रियः प्रवासोद्यमान्निवारणीय इति सखीं प्रत्यभिव्यज्यते। भोजेन तु सरस्वतीकण्ठाभरणे 'जइ ण मरिस्सं ण रोदिस्सम्' 'यदि न मरिष्यामि न रोदिष्यामि' इति पाठः स्वीकृतः।

चतुरमहिला दाक्षिण्येनैव गोपनीयमपि वृत्तं सूचयन्तीति निजसखीं शिक्षयन्ती काचिदाह–

**एहीति व्याहरति प्रेयसि बत पश्यतावनतमुख्या।**

**द्विगुणवेष्टितजघनस्थलया लज्जानतं हसितम्।।३।।**[१]

द्विगुणम् आह्वानसमये शाटकाञ्चलेन पुनरपि आवेष्टितं जघनस्थलं यया। लज्जया आनतं यथा स्यात्तथा, ईषदित्यर्थः। अन्यसमये यथा हास्यं भवति तदपेक्षयापि, ससङ्कोचं हास्यमिति यावत्। अवनतमुख्या तद् हसितं तत्पश्यतेति योजना। जघनस्थलवेष्टनपूर्वकं सलज्जहसितेन ऋतुमत्यहमस्मीति व्यञ्जितमित्याशयः।

कामपि कामिनीं कामयमानः कश्चित्कटाक्षच्छटावर्णनव्याजेन स्वाभिलाषं प्रकाशयति–

**मारयसि कं न मुग्धे ह्यनेन पर्यन्तरक्तविषमेण।**

**भ्रुकुटीचापविनिर्गततीक्ष्णतरार्द्धाक्षिभल्लेन ।।४।।**[२]

पर्यन्ते कोटौ रक्तं रुधिरं यस्य तादृशेन च विषमेण चेति भल्लपक्षेऽर्थः। कटाक्षविक्षेपे अर्द्धमीलितं यदक्षि तदेव भल्लः (अर्द्धचन्द्राकरो बाणः) तेन। 'मुग्धे! कं वा न मारयसि'

---

१. **एहि त्ति वाहरन्तम्मि पिअअमे उअह ओणअमुहीए।**
**विउणावेढ्ठिअजहणत्थलाइ लज्जाणअं हसिअम्।।३।।**
[एहीति व्याहरति प्रियतमे पश्यतावनतमुख्या।
द्विगुणवेष्टितजघनस्थलया लज्जावनतं हसितम्।।]

२. **मारेसि कं ण मुद्धे इमेण पेरन्तरत्तविसमेण।**
**भुलआचावविणिग्गअतिक्खअरद्धच्छिभल्लेण।।४।।**
[मारयसि कं न मुग्धे अनेन पर्यन्तरक्तविषमेण।
भ्रूलताचापविनिर्गततीक्ष्णताराधाक्षिभल्लेन।।]

इत्यनेन– अतिसंयमशीलोऽपि प्रवीणोऽपि च ते कटाक्षेण विक्षुब्धहृदयो भवति, ततोऽपि त्वं मुग्धा परिगण्यस इति साकूतमुपालभ्यते। विध्यसीत्याद्यनुक्त्वा भारयसीत्यनेन वेदनातिशयो ध्वन्यते। अनेनेत्यनेन अङ्गुल्या निर्दिश्यप्रत्यक्षं त्वं निहंसि, तस्य दृष्टान्तोऽहम्। तथापि त्वं मुग्धेत्याकूतम्। साधारणबाणः समः (सरलः) भवति, अक्षिबाणस्तु बाणत्वेऽपि विषम इति विषमपदसूचितो विशेषः। कटाक्षभल्लेन मारितं मां सङ्गमसञ्जीवनौषधेन सञ्जीवयेति तां प्रत्यात्मनोऽभिलाषोऽभिव्यज्यते। गङ्गाधरपरिगृहीतः 'रत्तन्ततिक्ख' इति पाठस्तु तीक्ष्णार्थपौन-रुक्त्याद्विचारणीय एवेत्यलम्।

नायिकायाः प्रणयातिशयं प्रकाश्य उपपतिमुत्साहयन्ति दूती तदभियोगार्थमाह–

**तव दर्शने सतृष्णा शब्दं श्रुत्वा विनिर्गता यानि।**
**तानि पदानि हि जाता वोढव्या त्वयि विनिर्याते।।५।।**[1]

तव दर्शनार्थं साभिलाषा सा तव कण्ठरवं श्रुत्वा यानि पदानि गृहाद्विनिर्गता, त्वयि दर्शनपथातीते सति तानि पदानि अन्यजनद्वारा वोढव्या उत्थापनीया जाता। त्वद्विरहान्नितान्तदुर्बला सा त्वद्दर्शनोत्साहेन निजक्लेशमजानती कानिचित्पदानि बहिरायाता, परं त्वामदृष्ट्वा भग्नाशा सा परावर्तनसमये अन्यजनैर्वहनीयाऽभवदित्यर्थः। तानि पदानीत्यत्यन्तसंयोगे द्वितीया। अवलम्बनीयेत्याद्यनुक्त्वा वोढव्येत्यनेन गतजीविता यथान्यैर्जनैर्वहनीया भवति तथा जाता, ततश्च त्वं तस्या जीवितस्थानीय इति ध्वन्यते। तथा च– एतादृशीमनुरागिणीमेतां किमित्युपेक्षसे, अभिसर सत्वरमिति चरमं व्यङ्ग्यम्।

किमेवं शरीरतः क्षीणासीति रहस्यभुक्तया मातुलान्या पृष्टा काचिदाह–

**ईर्ष्यामत्सररहितं मातुलि दृग्भ्यां विनिर्विकाराभ्याम्।**
**जनमिव जनोऽधुना नः पश्यति हीयामहे न कथम्।।६।।**[2]

---

१. **तुह दंसणे सअह्णा सद्दं सोऊण णिग्गदा जाइं।**
**तइ वोलीणे ताइं पआइँ वोढव्विआ जाआ।।५।।**
[तव दर्शने सतृष्णा शब्दं श्रुत्वा निर्गता यानि।
त्वयि व्यतिक्रान्ते तानि पदानि वोढव्या जाता।।]

२. **ईसामच्छररहिएहिँ णिव्विआरेहिँ मामि अच्छीहिं।**
**एह्णिं जणो जणम्मिव णिरिच्छए कहँ ण छिज्जामो।।६।।**
[ईर्ष्यामत्सररहिताभ्यां निर्विकाराभ्यां मातुलान्यक्षिभ्याम्।
इदानीं जनो जनमिव निरीक्षते कथं न क्षीयामहे।।]

जनः (प्रियतमः) नः अस्मान् जनमिव निःसम्बन्धं साधारणं जनमिव ईर्ष्यामत्सररहितं यथा स्यात्तथा भ्रूभङ्गादिविकाररहिताभ्यां दृग्भ्यां पश्यति, ततः कथं न क्षीयामहे। प्रणयसम्बन्धे सत्येव ईर्ष्यामत्सरादिकं भवति, ततश्च ईर्ष्यामत्सरशून्यया दृशा मां निर्विकारः पश्यतः प्रियतमस्य प्रणयभङ्गः स्पष्टं परिज्ञातः। ततः कथं क्षीणा न भवामीत्याशयः। प्रियतमाय जन इति निर्देशस्तु मातुलानीसविधे कौलीन्यलज्जां प्रकटयितुम्। अथवा–छन्दानुगामिनीमपि मां स यदि साधारणदृष्ट्या पश्यति तर्हि विवशतया ममापि स निःसम्बन्ध इवेत्यभिमानमाविष्कर्तुं वा।

यत्किञ्चिदपि दुहितुः सौभाग्यसूचकमालोक्य सुभृशमभिनन्दति मातेति शिक्षयन्तीव काचित्सहृदयं कञ्चिदाह–

**दशनपथेन हि वातोद्धतसिचयालक्षितोरुदृष्टेन।**

**तुष्यति जननी वध्वा निधानकलशाननेनेव।।७।।**[१]

वातोद्धते सिचये (वस्त्रे) आलक्षितो य ऊरुस्तस्मिन्दृष्टेन दशनपथेन दन्तक्षतेन। भूमिं खनन् जनो ह्यकस्मान्निधानकलशस्य मुखं दृष्ट्वा यथा हृष्यति तथा तुष्यतीत्यर्थः। दुहितुर्वधूत्वव्यपदेशेन तस्याः पतिसदने गत्वा तन्निरीक्षणं सूच्यते। ऊरुदेशे दन्तनखघातादयः कामशास्त्रानुमताः, ततश्च जामाता कामशास्त्रनिपुणो दुहितरि सुभृशमनुरक्तश्चेति ज्ञात्वा तन्मातुः परितोष इत्याशयः।

आत्मनः प्रणयातिशयं सूचयन्ती काचित्प्रियतमं प्रति सार्वदिकस्नेहानुवृत्त्यर्थं प्रार्थयते–

**हृदये वससि न कुरुषे मन्युं तदपीह रागभरिताभिः।**

**युवतिस्वभावविगलितधैर्याभिः शङ्क्यसेऽस्माभिः।।८।।**[२]

---

१. **वाउद्धअसिचअविहाविओरुदिट्ठेण दन्तमग्गेण।**
**बहुमाआ तोसिज्जइ णिहाणकलसस्स व मुहेण।।७।।**
[वातोद्धतसिचयविभावितोरुदृष्टेन दन्तमार्गेण।
वधूमाता तोष्यते निधानकलशस्येव मुखेन।।]

२. **हिअअम्मि वससि ण करेसि मण्णुअं तह वि णेहभरिएहिं।**
**सिङ्किज्जसि जुअइसुहावगलिअधीरेहिँ अम्हेहिं।।८।।**
[हृदये वससि न करोषि मन्युं तथापि स्नेहभृताभिः।
शङ्क्यसे युवतिस्वभावगलितधैर्याभिरस्माभिः।।]

हृदये वससि, त्वां सर्वदैव हृदि चिन्तयामि, सुभृशं मे त्वयि प्रणय इत्याशयः। त्वमपि सम्प्रति अन्योपगमनादिना मम मन्युं शोकं नोत्पादयसि। अथवा मदुपरि क्रोधं न करोषि। तथाप्यग्रे विरक्तो भविष्यसीति स्नेहभरिताभिरस्माभिः शङ्क्यसे। स्नेहः पापशङ्कीति कृत्वा सम्प्रति स्नेहं दर्शयत्यपि त्वयि अग्रे त्वं विरंस्यसे इति संशयो भवतीत्याशयः। मम प्रणयस्तावान्प्ररूढो यद् भविष्यत्काले प्रणयप्रतिदाने मनाक् त्रुटिशङ्कयापि धैर्यं विगलति। एवं च-मत्प्रणयमनुरुष्य भवतापि सर्वदा प्रणयपरेण भाव्यमित्यभिव्यज्यते। किं वा-त्वं मम सर्वदा हृदये निवससीत्येकान्तप्रियः। किं च सपत्नीसमागमादिभिर्मम क्रोधमपि न जनयसि। तथापि युवतिस्वभाववशादधीराभिरस्माभिः क्षणविलम्बेऽपि 'अन्यत्र तु न गतो भवेत्?' इति केवलं शङ्क्यसे। अत एव शङ्कावशास्वस्मासु प्रेमस्वभावोऽयमिति मत्वा न विमनायितव्य-मित्यर्थः। अस्माभिरिति बहुवचनेनममैव केवलं न, अपि तु सर्वासामेवानुरागिणीनां सोऽयं स्वभाव इति प्रणयं प्रत्याकूतमभिव्यज्यते।

आत्मनः प्रणयातिशयं संसूच्य भार्यापरतन्त्रं निजप्रियतमं साकूतमुपालभमाना काचिद् हृदयामन्त्रणव्याजेनाह-

**अन्यदपि किञ्चिदाप्स्यसि विमूढ मा ताम्य दुःखमात्रेण।**

**हृदय पराधीनजनं तव विमृगयमाण कियदेतत्।।९।।[1]**

हे हृदय! साम्प्रतं वियोगदुःखमात्रेण मा दूयेथाः। अग्रे किञ्चिदन्यदपि कथाशेषतामपि प्राप्स्यसि। परतन्त्रं जनं प्रार्थयमान हे मूढ विरहदुःखमिदं तव कृते कियत्? अतिन्यूनमित्यर्थः। विमूढेत्यामन्त्रणेन-प्रेमवशान्निर्बोधेन मम हृदयेन अन्यत्र दत्तहृदये जने प्रणयसमर्पणं कृतमिति प्रियं प्रतीर्ष्याभिव्यज्यते। हृदयस्य निन्दां कुर्वत्या नायिकया निजभार्यासक्तस्योपपतेर्निन्दा सूचितेति व्याजनिन्दालङ्कृतिः। अनया च- 'अहं त्वयि हृदयं समर्प्य प्राणापगमेऽपि प्रणयपाल-नार्थं सन्नद्धा। अन्यवशीकृतो भवांस्तथापि मे प्रणयं न परिज्ञातवान्' इति निभृतमुपालम्भो ध्वन्यते। कथाशेषतादिपर्यायैरपि मरणसङ्कीर्तनममङ्गलतां स्पृशतीति किञ्चित्पदेनोक्तम्। अहो दाक्षिण्यं गाथागुम्फितुः।

निर्भरानुरागिण्या मम प्रणयमनभिनन्द्य विरक्तायामन्यस्यामनुरक्तोऽसीति नायकमुपा-लभमाना काचित्सवैदग्ध्यमाह-

---

१. **अण्णं पि किं पि पाविहिसि मूढ मा तम्म दुक्खमेत्तेण।**
**हिअअ पराहीणजणं मग्गॅन्त तुह केत्तिअं एअम्।।९।।**
[अन्यदपि किमपि प्राप्स्यसि मूढ मा ताम्य दुःखमात्रेण।
हृदय पराधीनजनं मृगयमाण तव कियन्मात्रमिदम्।।]

**द्वेष्योऽसि हन्त यस्याः पांसुल सा वल्लभा तवाभ्यधिकम्।**

**इति विज्ञायापि मया दग्धप्रेम्णे न चेर्ष्यितं जातु।।१०।।**[१]

या त्वां द्वेष्टि सा मे सपत्नी तवाधिकतरं वल्लभा, इति प्रेम्णः असमीक्ष्यकारितां परिज्ञायापि मया अस्मै प्रेमहतकाय ईर्ष्या न कृता। अदूरदर्शि यद्धि प्रेम द्वेष्योऽप्यासक्तिं स्थापयति, अनुचितकारि तद्धि प्रेम मया ईर्ष्यितमासीत्परं मया ईर्ष्या न कृता। यतोऽहं त्वय्यासक्ता, अत एव मयेदं प्रेम अभिनन्दितमेव न जातुचिदीर्ष्यितमित्यर्थः। अथवा–दग्धप्रेम्णे प्रेमहतकस्य निमित्तं तुभ्यमीर्ष्या न कृता। त्वं द्वेषकारिण्यां तस्यां रक्तोऽसि, अनुरक्तायामपि च मयि विरक्तोऽसि, तथा च द्वेषकारके एव जने त्वमनुरज्यसीति त्वन्निसर्गं ज्ञात्वा तुभ्यमहमीर्ष्यामक-रिष्यम्, परं प्रणयपरवशा नेदं कर्तुमशक्नवमित्याशयः। 'पांसुल' इत्यनेन–एवमनुचितकारितया स्पष्टं त्वं दोषभागिति सूच्यते। अहमन्यासक्तहृदयेऽपि त्वयि भृशमनुरज्यामि। त्वं तु मत्प्रीतिप्रतिदानं दूरमास्ताम्, द्वेषिणीं तामनुवर्तमानः स्वस्य हिताहितमपि न परिचिनोषीति गूढ उपालम्भोऽभिव्यज्यते। गङ्गाधरेण तु प्राकृते चतुर्थ्यर्थिकां षष्ठीं संस्कृतेऽपि 'दग्धप्रेम्णः' इति यथास्थितं स्वीकृत्य चतुर्थीपञ्चम्योरर्थौ आकृष्टा इत्यलम्।

अन्यनायिकाया गुणादीन्प्रशंसन्तं कान्तं काचित्सेर्ष्यमाह–

**गुणरूपशोभिनी सा सत्यं सुभगास्मि निर्गुणा सत्यम्।**

**भण तस्या यो न समः किं स हि सर्वो जनो म्रियताम्।।११।।**[२]

मूले 'आम' इति ईर्ष्यासहितानुमतौ। संस्कृते काक्वा उच्चार्यमाणं सत्यपदं तदर्थं साधयति। हे सुभग सत्यम्! सा भवत्प्रेयसी गुणरूपशोभिनी। सत्यम्! अहं निर्गुणा। सुभगेत्या-मन्त्रणसहकारेण–यथा त्वमात्मानं सुभगं मन्यसे तथा तामपि गुणरूपशोभिनीं मां च निर्गुणां

---

१. **वेसोसि जीअ पंसुल अहिअअरं सा हु वल्लभा तुज्झ।**
**इअ जाणिऊण वि मए ण ईसिअं दड्ढपेम्मस्स।।१०।।**
[द्वेष्योऽसि यस्याः पाङ्सुल अधिकतरं सा खलु वल्लभा तव।
इति ज्ञात्वपि मया न ईर्ष्यितं दग्धप्रेम्णः।।]

२. **सा आम सुहअ गुणरूअसोहिरी आम णिग्गुणा अ अहम्।**
**भण तीअ जो ण सरिसो किं सो सव्वो जणो मरउ।।११।।**
[सा सत्यं सुभग गुणरूपशोभनशीला सत्यं निर्गुणा चाहम्।
भण तस्या यो न सदृशः किं स सर्वो जनो म्रियताम्।।]

मन्यसे, परं वास्तवे रागान्धो भवान् गुणरूपादिकं विवेक्तुमेव न जानाति। सा ह्यधमा। अहं च अन्यासक्तमपि भवन्तं निरन्तरमनुवर्तमाना शीलसौन्दर्यगुणादिभिर्युक्ता' इति ध्वन्यते। उत्तरार्धेन- तस्या बाह्यसौन्दर्यादिभिस्त्वं तथा मुग्धोऽसि, यथा मत्सांनिध्यमपि नाभिनन्दसीति सकोपोपालम्भो व्यज्यते।

लज्जाव्यतिक्रमनिवारणाय निजवधूं शिक्षयन्ती काचित्पुरन्ध्री पुत्रमुद्दिश्याह-

**सदसद्दुःखं च सुखं गृहस्य या जानते नूनम्।**
**ताः सन्ति पुत्र महिलाः शेषा हि जरा मनुष्याणाम्।।१२।।**[1]

या महिला गृहस्य गृहवर्तिनां जनानाम्, कीर्तिकरम् अकीर्तिकरं च दुःखं सुखं च जानन्ति ता एव महिला महिलापदवाच्याः, अर्थात् गृहिणीपदाधिकारिण्यः। अन्यास्तु वयःक्षयकरत्वाज्जरा एव। शरीरसम्बद्धा शनैः शनैः शरीरक्षयकारिण्यपि जरा यथा त्यक्तुं न शक्यते तथा कुलापकीर्तिं विचार्य यद्यपि सापि त्यक्तुं न शक्यते अथापि प्रतिक्षणं नाशहेतुत्वबुध्यावधीर्यत इति जरात्वरूपणेन ध्वन्यते। गृहस्येत्यनेन-न केवलं गृहपतेरेकस्य द्वयोर्वा सुखदुःखादिविचारो गृहवधूष्वायत्तः, अपि तु सम्पूर्णजनानामिति भारातिशयो द्योत्यते। 'दुर्लभाभिलाषिणीं स्वगृहवधूं प्रति वैराग्यजननार्थं कोऽपि पुत्रमाह' इत्यवतरणम्। 'सद्विद्यमानम्। असदविद्यमानं वस्तु' इति च गङ्गाधरकृता व्याख्या।

मानालम्बने कुलमहिलानां चरित्रं शिक्षयन्ती वयः प्रौढा सखी सखीमाह-

**हसितैश्चोपालम्भा अत्युपचारैश्च रोषितव्यानि।**
**अश्रुलवैः किल कलहा एष हि मार्गः सुमहिलानाम्।।१३।।**[2]

---

१. **सन्तमसन्तं दुक्खं सुहं च जाओ घरस्स जाणन्ति।**
**ता पुत्तअ महिलाओ सेसाओं जरा मनुस्साणम्।।१२।।**
[सदसद्दुःखं सुखं च या गृहस्य जानन्ति।
ताः पुत्रक महिलाः शेषा जरा मनुष्याणाम्।।]

२. **हसिएहिँ उवालम्भा अच्चुवचारेहिँ रूसिअव्वाइं।**
**अंसूहिँ मण्डणाइं एसो मग्गो सुमहिलाणम्।।१३।।**
[हसितैरुपालम्भा अत्युपचारैः खेदितव्यानि।
अश्रुभिः कलहा एष मार्गः सुमहिलानाम्।।]

यासां महिलानां हसितैरुपालम्भा भवन्ति न रोदनैः। आवश्यकतातोऽधिकैः कृत्रिमादरैः रोषा भवन्ति न गृहकार्यवैमुख्येन। अश्रूणां लेशैरेव प्रणयकलहा भवन्ति न वाग्वितण्डया। लवपदेन–अश्रूणां कैश्चिद्बिन्दुभिरेव ताः कलहं सूचयन्ति, न निरन्तररोदनेनेति मूलापेक्षयातिशयो द्योत्यते। 'रूसि-अव्वाइं' इति स्थाने 'खिज्जिअव्वाइं' इति पाठं स्वीकृत्य खेदितव्यानीति व्याख्यान गङ्गाधरस्य।

लोकापवादशङ्कयैव न संलपितवांस्ते प्रियतमस्तन्माऽन्यथा शङ्कीरिति सान्त्वयन्तीं दूतीं प्रति काचित्सप्रणयरोषमाह–

**उल्लापो मा क्रियतां लोकविरुद्धोऽयमिति कृत्वा।**
**दृष्टिं न पातयति को द्वेष्येऽपि हि सम्मुखापतिते।।१४।।**[१]

अयमुल्लापो लोकविरुद्ध इति कृत्वा विचार्य। द्वेष्येऽपि सम्मुखापतिते सति जनो दृष्टिं तु ददात्येवेत्यनेन 'स द्वेष्यतामपि मत्तः परिहरति, यतः सोऽप्येकः परस्परसम्बन्धः। ततश्च–स मया सह कञ्चिदपि सम्बन्धमेव न रक्षति' इति उपालम्भातिशयो द्योत्यते। मूलोपात्तं पादपूरकं 'णाम' पदमादाय 'नाम कृत्वा' 'नामग्रहणपूर्वकम्' इति गङ्गाधरकृतमर्थान्तरम्। अनावश्यकस्यापि तस्य यद्यनुरोधस्तर्हि–'लोकविरुद्धोऽस्ति नाम कृत्वेति' इति पठितव्यम्। लोकविरुद्धोऽस्ति इति कृत्वा उल्लापो मा क्रियतां नामेति तद्योजना। तस्मिन्नर्थान्तरे च नाम कृत्वा नामग्रहणपूर्वकमिति च सङ्गतिः। यद्वा–'परपुरुषभाषणं लोकविरुद्धमिति मा क्रियताम्, कथं पुनस्तमद्राक्षीरपि नेति साध्वीं प्रति कुट्टन्या इयमुक्तिरिति' केचित्।

प्रियतमायाः प्रणयं यथावदनुपलभमानं कञ्चिद्धनिकं प्रति स्वाधीनमीननयनः कश्चित्साभिमानमाह–

**स्वाधीनप्रियदयितो दीनोऽपि च मन्यते कृतार्थं स्वम्।**
**प्रियरहितः पुनरवनीमपि सम्प्राप्यास्ति दुर्गतो ह्येव।।१५।।**[२]

---

१. **उल्लावो मा दिज्जउ लोअविरुद्ध त्ति णाम काऊण।**
**सँमुहापडिए को उण वेसें वि दिट्ठिं ण पाडेइ।।१४।।**
[उल्लापो मा दीयतां लोकविरुद्ध इति नाम कृत्वा।
सम्मुखापतिते कः पुनर्द्वेष्येऽपि दृष्टिं न पातयति।।]

२. **साहीणपिअअमो दुग्गओ वि मण्णइ कअत्थमप्पाणम्।**
**पिअरहिओ उण पुहविं वि पाविउण दुग्गओ च्चेअ।।१५।।**
[स्वाधीनप्रियतमो दुर्गतोऽपि मन्यते कृतार्थमात्मानम्।
प्रियरहितः पुनः पृथिवीमपि प्राप्य दुर्गत एव।।]

स्वाधीना प्रिय दयिता यस्य सः। प्रियरहितः प्राणप्रियेण जनेन रहितः। 'अतिक्रान्त-सङ्केतसमयां प्रियां प्रति कोऽपि सोद्वेगमाह। यद्वा-किमेवं कृशोऽसीति पृष्टस्येच्छानुरूपां प्रियामलभमानस्य कस्यचिदियमुक्तिः' इति गङ्गाधरः।

हृदयानुकूलं दयितमप्राप्य अन्तरेव निर्मश्नताऽतृप्तप्रणयेन नानाविधं क्लेशमनुभवन्तीं काञ्चिद्रहस्याभिज्ञा सख्याह-

**किं रोदिषि किं शोचसि किं कुप्यसि सुतनु चैकैकम्।**
**विषमिव विषमं प्रेम हि रोद्धु शक्नोति कः कथय।।१६।।**[१]

एकैकं प्रत्येकजनं प्रति। इच्छानुरूपं दयितमनवाप्य असफलप्रणया त्वं प्रेमवशाद्दुःखिता भवसीत्यस्माभिरकथनेऽपि परिज्ञातम्, तद्वृथा कोपं वा गोपनायासं वा मा कार्षीरिति भावः। 'सुतनु' इति सम्बोधनेन 'आत्मनः सौन्दर्यं वृथैव परिगणयन्ती त्वं सुभृशं परितप्यसे' इति द्योत्यते। रक्तेन सह सर्वाङ्गे सङ्क्रान्तो विषवेगो दुर्निरोधतया यथाऽचिकित्स्यो भवति तथा प्रियप्राप्तिमात्रप्रतिकार्यः प्रेमापि प्रायोऽप्रतिरोध्यो भवतीत्याशयः।

काञ्चन नवीनामभिसारार्थमुत्तेजयन्ती वृद्धदूती निजानुभूतसौख्यानामतिक्रान्ततयाऽ-पुनर्लभ्यत्वमाह-

**ता ग्रामसंपदस्ते युवकास्तच्चापि नश्च तारुण्यम्।**
**आख्यानकमिव लोकः कथयति वयमपि च तच्छृणुमः।।१७।।**[२]

आख्यानकमिव पूर्वजातमितिहासमिव लोकः कथयति, वयं च शृणुमः। अस्माभि-रस्मत्तारुण्ये नानाविधविदग्धजनैः सह याः सौख्यसम्पदोऽनुभूतास्ताः अस्मासु वर्तमानेष्वेव

---

१. **किं रुवसि किं अ सोअसि किं कुप्पसि सुअणु एक्कमेक्कस्स।**
**पेम्मं विसं व विसमं साहसु को रुन्धिउं तरइ।।१६।।**
[किं रोदिषि च शोचसि किं कुप्यसि सुतनु एकैकस्मै।
प्रेम विषमिव विषमं कथय को रोद्धुं शक्नोति।।]

२. **ते अ जुआणा ता गामसंपआ तं च अम्ह तारुण्णम्।**
**अक्खाणअं व लोओ कहेहि अम्हे वि तं सुणिमो।।१७।।**
[ते च युवानस्ता ग्रामसंपदस्तच्चास्माकं तारुण्यम्।
आख्यानकमिव लोकः कथयति वयमपि तच्छृणुमः।।]

युगान्तरजाता इव सञ्जाता इत्याशयः। एवं च–अनुभवशालिन्या मे कथनमनुरुध्य अपुनर्लभ्या-त्तादृशविदग्धजनसमागमसुखान्न वञ्चयात्मानमिति नायिकां प्रत्यभिव्यज्यते।

शपथद्वारा निजप्रेमप्रतीतिं कारयित्वाऽनुनीयमानाया नायिकायाः सविषादं क्रोधवादं सखी सखीमाह–

**वाष्पौघभरितगण्डाधरया भणितं विलक्षविहसितया।**
**अद्यापि रुष्यते किं शपथाऽवस्थां गतं प्रेम।।१८।।**[1]

वाष्पौघभरितं गण्डाधरं यस्याः, विलक्षं विहसितं च यस्यास्तया भणितम्– 'भवतः प्रेम सम्प्रति शपथद्वारा प्रतीतियोग्यं जातं न पुनः कार्यरूपेणानुभवनीयम्। अत एवेदानीं किं रोषेण?' सत्ये प्रेमण्येव मानः शोभत इत्याशयः। 'अलीकदाक्षिण्येन त्वं प्रेम साधयितुमीहसे, अहो ते नैपुण्यम्' इति विलक्षहसितस्याकूतम्।

अन्यासक्त्या दयितस्य मन्दस्नेहतां सूचयन्ती काचित्सखीं सनिर्वेदमाह–

**वर्णघृतलिप्तवदनां यो मामत्यादरेण चुम्बितवान्।**
**भूषणविभूषितामपि सम्प्रत्यलसायते स्पृशन्नपि सः।।१९।।**[2]

पुष्पवतीत्वावस्थायां नियमानुरोधेन स्पर्शार्थं निषिध्यन्तीमपि, वर्णघृतेन लिप्तवदनतया अमनोहरामपि, मां पूर्वमत्यासक्त्या चुम्बितवानपि सोऽयम्– सम्प्रति मण्डनेन स्पष्टमभिव्यक्ता-भिलाषामपि रुचिरशरीरामपि मां स्पृशन्नपि सङ्कुचति, का पुनः समागमस्य कथा। तथा च–स्पष्टमस्याऽन्यस्यामासक्तिः सञ्जातेत्याशयः।

---

१. **वाहौहभरिअगण्डाहराएँ भणिअं विलक्खहसिरीए।**
**अज्ज वि किं रूसिज्जइ सवहावत्थं गअं पेम्मम्।।१८।।**
[वाष्पौघभृतगण्डाधरया भणितं विलक्षहसनशीलया।
अद्यापि किं रुष्यते शपथावस्थां गतं प्रेम।।]

२. **वण्णअघअलिप्पमुहिं जो मं अइआअरेण चुम्बन्तो।**
**एह्निं सो भूसणभूसिअं पि अलसाअइ छिवन्तो।।१९।।**
[वर्ण [क] घृतलिप्तमुखीं यो मामत्यादरेण चुम्बन्।
इदानीं स भूषणीभूषितामप्यलसायते स्पृशन्।।]
सं. गा. २३

अस्याः सहजसौन्दर्यं वीक्षस्व न पुनर्वस्त्रादिकमिति काञ्चन संयोजयितुमिच्छन्ती दूती कामुकमाह–

**नीलपटसंवृताङ्गीति मा किलैनां परिहरस्व।**

**पट्टांशुकमपि नद्धं व्यपनीयत एव सुखसुरते।।२०।।**[१]

नद्धं परिहितम्। सुखे सुखजनके सुरते। यदा पट्टवस्त्रमपि दूरीक्रियते तदा अस्य दूरीकरणे का बाधेति भावः। सहजो गुण एव स्त्रीणामुपादेयो न त्वाहार्य इत्याशयः। संवृताङ्गीत्यनेन निसर्गसुन्दराणामस्या अङ्गानां नीलपटस्यावरणमात्रेण प्रतारितो मास्याः समागम–सुखतो वञ्चितो भूरिति सूच्यते। सुखेति विशेषणेन–यदि त्वं वास्तवे सुरतसौख्यं वाञ्छसि तर्हि तु पटं प्रति दृष्टिं न करिष्यस्येव। अथ यदि केवलं रसिकमानितैव तदा तु सुखाद्वञ्चित एव त्वमिति व्यज्यते।

अतिग्रहिलमानां मानिनीं मानपरित्यागार्थं शिक्षयनती दूती सानुनयमाह–

**सत्यं कलहे कलहे सुरतारम्भाः पुनर्नवा भान्ति।**

**मानः पुनर्मनस्विनि गुरुकः प्रेमेह नाशयति।।२१।।**[२]

कलहकृतविच्छेदोत्तरं सुरते नवीनतेवाविर्भवतीति तत्र रसविशेषोऽनुभूयते। तथापि गुरुकः अतिग्रहिलो मानः इह प्रेमैव नाशयति। प्रेम्णि च गते को रसः सुरतेष्विति सम्प्रति मुञ्च मानमित्याशयः। मनस्विनीत्यामन्त्रणेन 'त्वमेवैका अपूर्वा मनस्विन्युत्पन्नासि, या सुभृशमनुन–येऽपि न मानं मुञ्चसीति' भूयानुपालम्भो ध्वन्यते।

अनुनयाऽस्वीकारात्कुपितविलक्षेण वल्लभेनावधीरिता कलहान्तरिता जनितानुतापं दूतीमाह–

---

१. **णीलपडपाउअङ्गी त्ति मा हु णं परिहरिज्जासु।**
**पट्टंसुअं पि णद्धं रअम्मि अवणिज्जइ च्चेअ।।२०।।**
[नीलपटप्रावृताङ्गीति मा खल्वेनां परिहर।
पट्टांशुकमपि नद्धं रतेऽपनीयत एव।।]

२. **सच्चं कलहे कलहे सुरआरम्भा पुणो णवा होन्ति।**
**माणो उण माणंसिणि गरुओ पेम्मं विणासेइ।।२१।।**
[सत्यं कलहे कलहे सुरतारम्भाः पुनर्नवा भवन्ति।
मानः पुनर्मनस्विनि गुरुकः प्रेम विनाशयति।।]

**मानोन्मदयाऽति मया ह्यकारणं कारणं प्रकुर्वत्या।**

**प्रेमाप्यदर्शनेन विनाशितं प्रौढवादेन।।२२।।**[१]

मानधारणार्थम् अति उन्मदया अत्युत्साहया, अत एव मानस्य न यत्कारणं तदपि कारणं कुर्वत्या मया अनुनयन्तं दयितं प्रत्यनवलोकनेन, प्रौढवादेन प्रतिज्ञापूर्वकं प्रत्यख्यानेन च प्रेमापि विनाशितम्।'मानावलम्बनेन प्रियप्रणयं परीक्षिष्ये' इति धृतोत्साहया मया मानकारणं विनैव तावान्मानः कृतो यत्प्रियोऽनुनयन्नपि नावलोकितः। इदानीं पराङ्मुखः प्रियो मां नावलोकयति, ततश्च सम्प्रति प्रियस्य दर्शनं विना स्नेह एवापगत इत्याशयः।

कृतापराधत्वेऽपि चाटूक्तिभिरनुनयन्तं कान्तं कापि सवैदग्ध्योपालम्भमाह–

**द्वेष्येऽपि वल्लभेऽपि च बहुवल्लभ वक्तुमेव मधुराणि।**

**कुपितं चाप्यनुनेतुं युष्मत्तः शिक्षते लोकः।।२३।।**[२]

बह्व्यो वल्लभा यस्य तत्सम्बुद्धौ। बहुषु कृतप्रणयोऽपि त्वं केवलं दाक्षिण्येनानुनेतुमिच्छसीत्येतदाकूतम्। द्वेष्येऽपि वल्लभेऽपि च जने मधुराण्येव वक्तुं तद्द्वारा च कुपितं लोकमनुनेतुं जनो भवत्सकाशात् शिक्षते। तव मधुरसंलापो हृदयवाह्यो यतस्त्वं द्वेष्येऽपि मधुरं लपसि। ततश्चालीकदाक्षिण्येन स्फुटापराधोऽपि त्वं केवलं मां प्रतारयसीति गूढोपालम्भो ध्वन्यते।

पूर्वं दर्शितप्रणयातिशयस्यापि साम्प्रतं मन्दस्नेहस्य दयितस्याकृतज्ञतां सूचयन्ती काचित्सखीमाह–

---

१. **माणुम्मत्ताइ मए अकारणं कारणं कुणन्तीए।**
**अद्दंसणेण पेम्मं विणासिअं पोढवाएण।।२२।।**
[मानोन्मत्तया मया अकारणं कारणं कुर्वत्या।
अदर्शनेन प्रेम विनाशितं प्रौढवादेन।।]

२. **अणुऊलं विअ वोत्तुं बहुवल्लह वल्लहे वि वेसे वि।**
**कुविअं अ पसाएउं सिक्खइ लोओ तुमाहित्तो।।२३।।**
[अनुकूलमेव वक्तुं बहुवल्लभ वल्लभेऽपि द्वेष्येऽपि।
कुपितं च प्रसादयितुं शिक्षते लोको युष्मत्तः।।]

**लज्जा त्यक्ता शीलं खण्डितमयशोविघोषणा दत्ता।**

**यस्य कृतेन प्रियसखि स एव सम्प्रति जनो जनो जातः।।२४।।**[1]

यस्य प्रियस्य कृतेन यस्य प्रियस्यार्थे। अयशसो विघोषणा डिण्डिमरवः, डिण्डिम-ताडनपूर्वकं सर्वत्र मया अपकीर्तिः प्रसारितेति भावः। स एव जनः (प्रियजनः) जनः उदासीनजनो जातः।

सख्याः शिक्षार्थं काचित्कुलवधूवृत्तमाह-

**हसितमदर्शितदशनं भ्रमितमनिष्क्रान्तदेहलीदेशम्।**

**दृष्टमनुत्क्षिप्तमुखं मार्गः सोऽयं कुलवधूनाम्।।२५।।**[2]

न उत्क्षिप्तम् उन्नमितं मुखं यस्मिन् ईदृशं दृष्टम् अवलोकनम्। अदृष्टेति स्थाने अदर्शितेत्युक्त्या-हास्यविषयेऽपि हास्योद्रेकं वशीकुर्वत्यस्ते दन्तदर्शनचापलं न प्रकटयन्तीति सूच्यते-उक्तं चान्यैरपि-'स्मितं कुलनतभ्रुवामधर एव विश्राम्यति'। न निष्क्रान्तः उल्लङ्घन-विषयीभूतो देहलीदेशो यस्मिन्, देहलीतो बहिर्न भ्राम्यन्तीत्यर्थः। तत्त्वतस्तु-न निष्क्रान्तः स्वस्माद्वियुक्तो दहलीदेशो यस्मिन्, अर्थात् गृहजना गृहदेहलीतस्तिरस्कुर्युरीदृशं तासां भ्रमणं न भवतीति यावत्। मार्ग इत्यनेन-राजमार्गवदनुट्टङ्कनीया निष्कण्टका तु सेयमेव रीतिः, अन्याः कामं पांसुला विशिखाः शतं भवेयुरिति ध्वन्यते। वधूपदेन-पितृगृहे एतदपेक्षया किञ्चित्स्वा-तन्त्र्यमभिव्यज्यते।

निष्परिच्छदतया कैश्चिदनादृतस्य नायकस्य गौरवं सूचयन्ती दूती शृण्वन्तीं नायिकाम-नुकूलयितुमन्यापदेशेनाह-

---

१. **लज्जा चत्ता सीलं अ खण्डिअं अजसघोसणा दिण्णा।**
**जस्स कए णं पिअसहि सो च्चेअ जणो जणो जाओ।।२४।।**
[लज्जा त्यक्ता शीलं च खण्डितमयशोघोषणा दत्ता।
यस्य कृतेन (कृते ननु) प्रियसखि स एव जनो जनो जातः।।]

२. **हसिअं अदिट्ठदन्तं भमिअमणिक्कन्तदेहलीदेसम्।**
**दिट्ठमणुक्खित्तमुहं एसो मग्गो कुलवहूणम्।।२५।।**
[हसितमदृष्टदन्तं भ्रमितमनिष्क्रान्तदेहलीदेशम्।
दृष्टमनुत्क्षिप्तमुखमेष मार्गः कुलवधूनाम्।।]

**धूलिमलिनोऽपि पङ्काङ्कितोऽपि तृणरचितदेहभरणोऽपि।**

**तदपि गजेन्द्रो ढक्कां गुरुकतया ह्यात्मनो वहति।।२६।।**[1]

तृणैः कृतं देहस्य भरणं पोषण येन। भरणपदेन–उदरपूरणमात्रसूचनेन भोज्यप्रकारेष्वौदरिकवदभिनिवेशाभावो व्यज्यते। आत्मनो गुरुकतया शरीरस्य महापरिमाणेन ढक्कां समरवाह्यं महाविशालं यशःपटहं वहति। गुरुकतया आत्मनौ गौरवेण (उत्कर्षेण) स्वस्य यशोडिण्डिमं घोषयतीत्यप्यर्थः। एवं च–निष्परिच्छदोऽपि सोऽयमात्मन उत्कर्षेण सर्वत्र यशोभाजनमस्ति, तन्माऽस्य समागमे विशङ्केथा इति नायिका प्रति द्योत्यते।

नैसर्गिकमहत्त्वशालिनां सङ्कटेऽपि मानसमुन्नतमेव भवतीति सखीं शिक्षयन्ती काचित्सुभटपत्न्याश्चौरेण सह संलापदृढतामाह–

**नो बन्दि गम्यते किं को गर्वो येन मसृणगमनासि।**

**जल्पितमदृष्टदशनं विहसन्त्या 'ज्ञास्यसे चोर'।।२७।।**[2]

'हे बन्दि मम निर्देशानुसारं मया सह किमिति न गम्यते? किंनिमित्तो गर्वो येन मसृणगमनासि मन्दगमनासि' इति चौरेणोक्ते सति, अदृष्टदन्तं यथा स्यात्तथा हसन्त्या मन्दस्मितं कुर्वत्येत्यर्थः। अदृष्टदन्तं हसनेन–'कुलमर्यादा आत्माभिमानश्च सूच्यते। मन्दस्थाने मसृणपदेन चिक्कणस्थलवत्स्थित्वा स्थित्वा गमनं सूच्यते, तेन विश्वसनीयशौर्यस्य दयितस्यागमनप्रतीक्षा व्यज्यते। कथनस्थाने जल्पनोक्तया–साभिमानोक्तिः सूचिता। चोरपदेन–'वीरस्य मम भर्तुरनुपस्थितौ मां हरतस्तव नेयं सुभटता, अपि तु सेयं तस्करतैव' इति तं प्रति तिरस्करो ध्वन्यते।

---

१. **धूलिमइलो वि पङ्कङ्किओ वि तणरइअदेहभरणो वि।**
**तह वि गइन्दो गरुअत्तणेण ढक्कं समुव्वहइ।।२६।।**
[धूलिमलिनोऽपि पङ्काङ्कितोऽपि तृणरचितदेहभरणोऽपि।
तथापि गजेन्द्रो गुरुकत्वेन ढक्कां समुद्वहति।।]

२. **करमरि कीस ण गम्मइ को गव्वो जेण मसिणगमणासि।**
**अदिट्ठदन्तहसिरीअ जम्पिअं चोर जाणिहिसि।।२७।।**
[बन्दि किमिति न गम्यते को गर्वो येन मसृणगमनासि।
अदृष्टदन्तहसनशीलया जल्पितं चोर ज्ञास्यसि।।]

प्रेमप्राबल्ये सति ऋतुकालेऽपि प्रियतमाया विरहो न शक्येते सोढुमिति सखीं प्रियतमप्रणयार्थमुत्तेजयन्ती काचित्कस्याश्चिद्वृत्तमाह–

**रुदितं हि पुष्पवत्याः सपदि सपत्नीभिरविरलैरस्त्रैः।**
**भुजशिखरं किल पत्युः प्रेक्ष्य शिरोलग्नवर्णघृतलिप्तम्।।२८।।**[१]

भुजस्य शिरसि उपरिभागे स्कन्ध इति यावत्। लग्नेन वर्णघृतेन लिप्तं पत्युर्भुजशिखरं प्रेक्ष्य पुष्पवत्याः सपत्नीभिः अविरलैरश्रुभिः रुदितम्। पुष्पवतीमपि तामसौ न त्यजतीति भावः। स्कन्धे घृतलेपेन तन्मुखमंसे निधाय रात्रौ सुष्वापेति नायिकालम्बनः प्रणयातिशयो द्योत्यते। तद्द्वारा च सपत्नीनामीर्ष्यातिशयः 'अविरलैः' इत्यश्रुविशेषणेन सूच्यते। 'तुप्पं वर्णघृतं तेन लिप्तं तुप्पलिअम्। कस्याप्यभियोगनिरासार्थं दूती नायिकाया ऋतुकालेऽप्यनवसरमाह' इति गङ्गाधरटीका।

अतिरागाविष्टः कोऽपि रजस्वलामाह–

**लोकस्ताम्यति ताम्यतु वचनीयं भवति भवतु तन्नाम।**
**एहि विनिमज्ज पार्श्वे निद्रा मे नैति पुष्पवति।।२९।।**[२]

लोकः सपत्न्यादिः ताम्यति खिद्यते। वचनीयं निन्दा। नायिकाया एकैका विप्रतिपत्ति–रनूद्य खण्ड्यते। पार्श्वे विनिमज्जेति स्फुटतया ग्राम्यायितोक्त्या नायकस्य कामाकुलत्वं व्यज्यते। प्रिये! इत्यादिपरिवर्ते पुष्पवतीत्यामन्त्रणेन–वारंवारं पुष्पवतीत्वं कारणीकुर्वाणा त्वमेवैका अपूर्वा पुष्पवती असीत्युपालम्भोऽभिव्यज्यते। पुरुषनिष्ठः सोऽयं हाव इति सरस्वतीकण्ठाभरणम्। 'रागतः सहसा प्रवृत्तिहेतुश्चित्तोल्लासो हेला। हेलैव सवचनविन्यासो हावः' इति तल्लक्षणम्।

पूर्वानुरागे लेखमुखेन नायिका नायकमाह–

---

१. **थोरंसुएहिँ रुण्णं सवत्तिवग्गेण पुप्फवइआए।**
**भुअसिहरं पइणो पेच्छिऊण सिरलग्गतुप्पलिअम्।।२८।।**
[स्थूलाश्रुभी रुदितं सपत्नीवर्गेण पुष्पवत्याः।
भुजशिखरं पत्युः प्रेक्ष्य शिरोलग्नवर्णघृतलिप्तम्।।]

२. **लोओ जूरइ जूरउ वअणिज्जं होइ होउ तं णाम।**
**एहि णिमज्जसु पासे पुप्फवइ ण इए मे णिद्दा।।२९।।**
[लोकः खिद्यते खिद्यतु वचनीयं भवति भवतु तन्नाम।
एहि निमज्ज पार्श्वे पुष्पवति नैति मे निद्रा।।]

**यां यां पश्यामि दिशं तत्र लिखित इव विलोक्यसे पुरतः।**
**प्रतिमापरिपाटीं तव सकलं वहतीव दिक्चक्रम्।।३०।।**[१]

प्रतिमापरिपाटीं प्रतिबिम्बपरम्पराम्। सर्वतस्त्वन्मूर्तिमेव विलोकयामीत्याशयः।'लिखित एव' इति गङ्गाधरकृता छाया।

तिर्यञ्चोऽपि कस्माच्चन पूर्वं कष्टमनुभूय तत्सदृशमन्यमभीष्टमपि पदार्थमुपाददतो बिभ्यति। तद्विरम तदुपसरणादिति नायकं शिक्षयन्ती दूती सापदेशमाह–

**अपसरति धुवति शाखां खोक्खामुखरः पुनः समुल्लिखति।**
**जम्बूफलं न हरति भ्रमर इति कपिः प्रथमदष्टः।।३१।।**[२]

धुवति कम्पयति। खोक्खा इति वानराणां शब्दस्तेन मुखरः, तां शाखां पुनः उल्लिखति नखैर्विलुनाति। परं भ्रमरेण प्रथमं दष्टः कपिस्तत्सदृशं जम्बूफलं न हरति गृह्णाति। तिरश्चामपि सेयं सतर्कता, त्वं तु प्रथममनुभूतभूरिनिग्रहोऽपि कथं पुनस्तामेव कामयसे इति नायकं प्रत्यभिव्यज्यते।'खोक्खा ध्वनिविशेषः' इति गङ्गाधरः।

पुनस्तमेवार्थं दृष्टान्तान्तरेणाह–

**न स्पृशति करेण कपिः कण्डूतिभयेन पत्रलनिकुञ्जे।**
**ईषल्लम्बितकपिकच्छुगुच्छसदृशं हि वानरीहस्तम्।।३२।।**[३]

---

१. **जं जं पुलएमि दिसं पुरओ लिहिअ व्व दीससे तत्तो।**
**तुह पडिमापडिवाडिं वहइ व्व सअलं दिसाअक्कम्।।३०।।**
[यां यां प्रलोकयामि दिशं पुरतो लिखित एव दृश्यसे तत्र।
तव प्रतिमापरिपाटीं वहतीव सकलं दिशाचक्रम्।।]

२. **ओसरइ धुणइ साहं खोक्खामुहलो पुणो समुल्लिहइ।**
**जम्बूफलं ण गेह्णइ भमरो त्ति कई पढमडक्को।।३१।।**
[अपसरति धुनोति शाखां खोक्खामुखरः पुनः समुल्लिखति।
जम्बूफलं न गृह्णाति भ्रमर इति कपिः प्रथमदष्टः।।]

३. **ण छिवइ हत्थेण कई कण्डूइभएण पत्तलणिउञ्जे।**
**दरलॅम्बिअगोच्छकइकच्छुसच्छहं वाणरीहत्थम्।।३२।।**
[न स्पृशति हस्तेन कपिः कण्डूतिभयेन पत्रलनिकुञ्जे।
ईषल्लम्बितगुच्छकपिकच्छुसदृशं वानरीहस्तम्।।]

पत्रले बहुलपत्रे निकुञ्जे लतामध्यतः प्रसारितं प्रियमपि वानरीहस्तम्, ईषल्लम्बमानं कपिकच्छोः (कोंछ इति भाषया व्यपदेश्यस्य वनस्पतिविशेषस्य) गुच्छकमाशङ्क्य कपिः कण्डूतिभयेन न स्पृशतीत्याशयः। प्राकृते पूर्वनिपातस्यानियमात् कपिकच्छुगुच्छसदृशमितिस्थाने 'गुच्छकपिकच्छुसदृशम्' इति जातम्। अथवा ईषल्लम्बितो गुच्छो यस्येति बहुव्रीहिर्वाच्यः स्यात्। अभिमतमपि मूढः प्रतिकूलबुध्या परिहरतीत्यन्यापदेशेन कोऽपि सहचरमाह' इति गङ्गाधरः।

अभिसरणार्थं नायकमुत्तेजयन्ती दूती नायिकाया विरहविकलतामाह-

**शुष्यत्येव च सरसाप्यवैति दुःखानि मुग्धहृदयापि।**
**रक्तापि पाण्डुरैव हि जाता विरहे तव वराकी।।३३।।**[१]

सरसापि त्वत्प्रेमणि साभिलाषापि परितापाच्छुष्यति। त्वत्प्रेम्णा व्यामूढहृदयापि विरहजानि दुःखानि अवैति जानाति। अनुरक्तापि विरहवेदनया पाण्डुरवर्णा जाता। सरसादिपदानां श्लेषेण आर्द्रताद्यपीत्यर्थः। ततश्च-आर्द्रस्य कथं शुष्कता, व्यामूढस्य (अचेतनस्य) कथं दुःखपरिज्ञानम्, अरुणवर्णस्य कथं पाण्डुतेति विरोधः। अनेन चालङ्कारेण 'सुखसाधनमपि सर्वं त्वद्विरहे तस्या दुःखसाधनं जातम्' इति वस्तु व्यज्यते। अनुभवतीति स्थाने जानातीत्युक्त्या-त्वयैव विरहं प्रदाय दुःखानां परिचयः कारितः, अन्यथा पूर्वं कीदृशानि दुःखानीति परिज्ञानमपि नासीदिति पूर्वमनुभूतसुखायाः साम्प्रतं नवदुःखानुभवेन वेदनातिशयो ध्वन्यते। वराकीपदेन च- 'विपरीतकारिणा दैवेन एवं व्यापद्यमाना साऽवश्यं दयनीया' इति त्वरितोपसर्पणं चरमं ध्वन्यते।

सीधुसेवनेनोद्रिक्तमन्मथतया जरन्तमप्यालिङ्गन्तीं काञ्चन नवयौवनां शरद्वर्णनप्रसङ्गेनोपहसन् सहृदयः कश्चित्सहचरमाह-

**जीर्णं कुब्जकमप्यारोहति यत्पश्य वेल्लिनी त्रपुसी।**
**शरदो दोषो नीलोत्पलपरिमलवासितायाः सः।।३४।।**[२]

---

१. **सरसा वि सूसइ च्चिअ जाणइ दुक्खाइँ मुद्धहिअआ वि।**
**रत्ता वि पण्डुर च्चिअ जाआ वरई तुह विओए।।३३।।**
[सरसापि शुष्यत्येव जानाति दुःखानि मुग्धहृदयापि।
रक्तापि पाण्डुरैव जाता वराकी तव वियोगे।।]

२. **आरुहइ जुण्णअं खुज्जअं वि जं उअह वल्लरी तउसी।**
**णीलुप्पलपरिमलवासिअस्स सरअस्स सो दोसो।।३४।।**
[आरोहति जीर्णं कुब्जकमपि यत्पश्यत वेल्लनशीला त्रपुसी।
नीलोत्पलपरिमलवासितायाः शरदः स दोषः।।]

वेल्लतीति वेल्लिनी वेष्टनशीला त्रपुसी ('आर्या, तेवरसी' इति ख्याता, कर्कटी-विशेष:) क्त् शुष्कं वक्रं वृक्षमप्यारोहति, एष फुल्लनीलकमलसौरभायाः शरदो विकारः। प्राकृते 'सरअस्स' इत्यस्य 'शरदः' 'सरकस्य' इत्युभयमप्यर्थः। ततश्च-'सरकोऽस्त्रीशीधुपाने शीधुपात्रेक्षुशीधुनोः' इति मेदिनीकोषात्- 'वेल्लिनी वेष्टिताख्यालिङ्गनशीला त्रपुसीव कोमला नवयौवना वृद्धं नायकं बन्धविशेषवशाद् यदारोहति, सोऽयं नास्या दोषः, किन्तु कमलसौर-भयुक्तस्य सरकस्य इक्षुमद्यस्य इत्यर्थान्तरमपि ध्वन्यते। तथाच-नवयौवनापि सेयं यज्जरन्तमिम-मालिङ्गति तत्र मधुपानमेव कारणमिति स्वस्य मर्माभिज्ञता सुहृदं प्रति प्रकटीकृता। गङ्गाधरस्तु-'कामपि गलितयौवनां शीधुपानेन जातमन्मथविकारां शरद्वर्णनच्छलेनोपहसन्नागरिकः सहचरमाह' इति प्रारम्भे अवतरणं विधायापि, मध्ये- 'कर्कट्याः पुनर्नवीकरणं जरत्याश्च युवतीकरणं विकारः' इति वृद्धायाः कस्याश्चित्कामविकारकथां जगौ। अन्ते च 'शरत्काले कर्कटीलता यदेव पुरः स्थितं शुष्कमार्द्रं वा सरलं वक्रं वा, तदेवारोहति, तथा लतेव लता नायिका वृद्धं वा तरुणं वा यद्व्रजते नायमस्या दोषः, किन्तु इक्षुमद्यस्येति' पुनर्युवत्याः वृद्धाश्रयणमालपितवानिति पूर्वापरविरुद्धः सन्दर्भः। 'त्रपुसी जीर्णं कुब्जकमारोहति' इति वाक्येन स्पष्टं नवयौवनाया जीर्णेन सह कामविकारः प्रतीयत इति सुधीभिर्विमृश्यम्।

प्रियतमेन साकं पूर्वं मधूत्सवमुखमनुभूतवती काचित्प्रियविरहे तस्यैवोत्सवस्य स्वरूपं वयस्यां प्रत्येवमाह-

**उत्पथधावितमनुजः प्रविजृम्भितकलकलः प्रहततूर्यः।**
**हंहो क्षणः स एव हि तेन विना ग्रामदाह इव।।३५।।**[1]

उत्सवप्रमत्ततया वह्निभयाच्च उत्पथेन धाविता जना यस्मिन्। उत्सवकालिकगानादिना रक्षार्थमार्तनादेन च प्रविजृम्भितः कलकलो यस्मिन्। गानसहकाराय वह्निनिर्वापणार्थं दूरस्थजना-ह्वानाय च प्रहतः तूर्यो यस्मिन्, ईदृशः क्षणो मधूत्सवः (साम्प्रतिको होलामहोत्सवः) तेन विना ग्रामदाह इव प्रतीयते। हंहो इति दुःखाभिनये। स एवेत्यनेन तद्विरहे मुखकरमपि सकलं दुःखजनकमभवत्, हंहो दुःखम्! इति दैवपरिवृत्तिः सूच्यते। 'ग्रामदाह' कीर्तनेन- सकलेऽपि ग्रामे अशान्तिरिव प्रतीयत इति नायिकायास्तन्मयता ध्वन्यते। होलिकादहनोत्सवे उत्सवमत्तानां जनानां ढक्कासहकारिगीतिकलकलमुखरो निर्मर्यादः सोऽयमानन्दोत्सवो ग्रामदाहे जातो विस्वरकोलाहलायितो नायिकायाः प्रतीतोऽभवदित्याशयः।

---

१. **उप्पहपहाविहजणो पविजिम्भिअकलअलो पहअतूरो।**
**अव्वो सो च्चेअ छणो तेण विणा गामडाहो व्व।।३५।।**
[उत्पथप्रधावितजनः प्रविजृम्भितकलकलः प्रहततूर्यः।
दुःखं स एव क्षणस्तेन विना ग्रामदाह इव।।]

खलसमागमं वारयन्ती काचित्सखीमाह–

**नोल्लापयमानेन स्तब्धेन च पार्श्वगेन कस्य स्यात्?।**

**शङ्का खलेन पितृवनतरुलम्बितचोरकेणेव।।३६।।**[१]

न उल्लापयमानेनेतिच्छेदः। उल्लापयमानेन स्वार्थाय वञ्चनार्थं भाषमाणेन अहङ्कारात् स्तब्धेन पार्श्वस्थितेन खलेन, श्मशानपादपलम्बितेन कुत्सितेन चोरेणेव, चोरादिति यावत्। कस्य शङ्का न स्यात्, अपि तु सर्वस्य स्यात्। चौरोऽपि उल्लापयमानः द्रावयन् (अभिभवन्) प्राकृतानुसारं 'पासट्ठिअः' पाशस्थितः प्राणदण्डार्थं वृक्षेऽवलम्ब्य दत्त गलपाशः, प्राणवायुनिर्गमोत्तरं स्तब्धश्च भवति। हेतौ तृतीया। अत एव भययोगा पञ्चमी न। अनया उपमया 'खलात्केवलं भयमेव, न तु काचित्सिद्धिः, (यथा मृत चौरदेहात्)' इति तस्य परिहरणीयत्वं ध्वन्यते।

प्रावृषि प्रवासं परिहृत्य प्रियतमाः प्रतिनिवर्तन्त इति प्रोषितापतिकां प्रियसखीं प्रबोधयन्ती प्रौढा कापि पितृष्वसारं प्रत्याह–

**असमाप्तगुरुककार्ये सम्प्रति पथिके गृहं समायाति।**

**हसतीव नवप्रावृट् पितृष्वसः कुटजहासेन।।३७।।**[२]

न समाप्तं गुरुकमावश्यकं कार्यं तस्य तस्मिन्, समायाति प्रतिनिवर्तमाने सति। 'मच्चिह्नदर्शनाद्भीतः प्रियाविरहं सोढुमशक्नुन्नकृतावश्यककार्य एवैष गृहं प्रत्यागतः' इति कुटजकुसुमविकासरूपेण अट्टहासेन हसतीव। नवप्रावृडिति नवपदेन–आरम्भ एव प्रेयसीसमाग–मोत्कण्ठः प्रतिनिवृत्त इति प्रावृष उद्दीपकत्वातिशयः सूच्यते। तथा च—'गुरुकार्याण्यपि त्वक्त्वा यदा प्रवासिनः समायान्ति तर्हि सामान्यकार्यगतः सो चिरात्समायास्यति। मा उत्ताम्य। आरम्भ एव सोयं प्रावृषः' इति नवपदसहकारेण सखीं प्रति ध्वन्यते।

---

१. **उल्लावन्तेण ण होइ कस्स पासट्ठिएण ठड्ढेण।**
**सङ्का मसाणपाअवलम्बिअचोरेण व खलेण।।३६।।**
[उल्लापयमानेन न भवति कस्य पार्श्वस्थितेन स्तब्धेन।
शङ्का श्मशानपादपलम्बितचोरेणेव खलेन।।]

२. **असमत्तगुरुअकज्जे एह्निं पहिए घरं णिअत्तन्ते।**
**णवपाउसो पिउच्छा हसइ व कुडअट्टहासेहिं।।३७।।**
[असमाप्तगुरुककार्ये इदानीं पथिके गृहं प्रतिनिवर्तमाने।
नवप्रावृट् पितृष्वसः हसतीव कुटजाट्टहासैः।।]

गृहगमनाय पथिकं त्वरयितुं काचित्प्रावृषि प्रोषितभर्तृकाया वृत्तान्तमुपक्रमते–

**उन्नमतो नवमेघान्विमुक्तनिजजीविताशया दृष्ट्वा।**
**पथिकगृहिण्या डिम्भो विरुदितमुख्या हि संदृष्टः।।३८।।**[१]

उन्नमतः शनैः शनैरुज्जृम्भमाणान् मेघान्दृष्ट्वा मुक्ता निजजीवनस्य आशा यया एतादृश्या पथिकगृहिण्या रुदत्या सत्या शिशुरवलोकितः। प्रावृषि विरहवेदनया मृतायां मयि अल्पवय–सोऽस्य का गतिः स्यात्? क इमं पालयेदिति चिन्तयेति भावः। 'उन्नमतः' इति वर्तमानार्थकेन शत्रा 'विमुक्ते' ति भूतार्थकेन क्तेन च 'शनैः' शनैर्जलदास्तु वर्द्धन्त एव, तथा चाग्रे न मे जीवितं भवेदिति उदयत्स्वेव मेघेषु जीवनाशा त्यक्ता' इति दुःखातिशयः सूच्यते। 'गृहिणी' पदेन गृहभारसञ्चालकतया स्वस्याभावे डिम्भस्य निराश्रयत्वं ध्वन्यते।

कस्याश्चिच्चिरप्रोषितपतिकायाः सखी तत्कान्तसविधगामिनं पथिकं प्रति सन्दिशति–

**स्थानमविधवालक्षणवलयं स्थानं विनयन्पुनः पुनर्गलितम्।**
**बलकारकः सखीगण एव हि जातो मनस्विन्याः।।३९।।**[२]

विरहदौर्बल्याद् गलितं जीवत्पतिकाया लक्षणभूतं वलयं पुनः पुनः स्वस्थानं नयन्, मनस्विन्याः सखीगण एव विरहनिर्बलतायामपि बलकारकः आश्वासप्रदानेन बलदायको जातः। अथवा 'बलआरओ' इत्यस्य गलितेऽपि वलये पुनः पुनर्वलयदानाद् 'वलयाकरः' जात इत्यर्थः। 'मनस्विन्याः' इत्यनेन–सखीगणदत्तसमाश्वासना सा केवलं मनोबलादेव साम्प्रतमात्मानं धारयति, इति सूच्यते। गङ्गाधरस्तु–'कलहान्तरितया कोपोज्झितभूषणयापि न त्यक्तानि वलयानिति तस्याः सुज्ञतां विरहकृशतां च सूचयन्ती सखी तत्कान्तमाह' इत्यवतरणं विधाय 'वलआरओ'

---

१. **दट्ठूण उण्णमन्ते मेहे आमुक्कजीविआसाए।**
**पहिअघरिणीअ डिम्भो ओरुण्णमुहीअ सच्चविओ।।३८।।**
[दृष्ट्वा उन्नमतो मेघानामुक्तजीविताशया।
पथिकगृहिण्या डिम्भोऽवरुदितमुख्या दृष्टः।।]

२. **अविहवलक्खणवलअं ठाणं णेन्तो पुणो पुणो गलिअम्।**
**सहिसत्थो च्चिअ माणंसिणीअ वलआरओ जाओ।।३९।।**
[अविधवालक्षणवलयं स्थानं नयन्पुनःपुनर्गलितम्।
सखीसार्थ एव मनस्विन्या वलयकारको जातः।।]

इत्यस्य 'वलयकारकः वलयपरिधापकः' इति व्याख्यामाह। विरहिणीप्रसङ्गे पठिताया अस्याः कलहान्तरिताविषयकत्वं तु स्वल्पकाल एव एतावत्कार्श्यादिसाधनोपपत्ति-काठिन्येन कष्टकल्पनप्रायमिति मन्मतिः।

वर्षासु विरहिणीनां वेदनातिशयं वर्णयन्कश्चिद् गृहमनाय पथिकं त्वरयितुमाह-

**पथिकवधूर्विवरान्तरगलितजलार्द्रे गृहेऽप्यनार्द्रमहो।**

**उद्देशमार्द्रयति पतदविरतवाष्पाम्बुनिवहेन।।४०।।**[1]

जीर्णस्य तृणगृहच्छदिषश्छिद्रान्तराद् गलितेन जलेनार्द्रे। अनार्द्रमपि उद्देशं स्थानम् अनवरतं पतता बाष्पसलिलेनार्द्रयति। विवरात्पतता जलेन दुःखिता शुष्के स्थाने स्थित्वापि प्रियस्मरणोत्कण्ठावशान्निरन्तरपतदश्रुतया तदपि स्थानमार्द्रं करोतीत्यर्थः।'वधू' पदेन नवयौवनात्वं गुरुजनलज्जावशाद् गृहान्तः स्थितिसापेक्षत्वं च सूचितम्। जीर्णगृहवर्णनात्-दुर्वहदारिद्र्याक्रान्तापि त्वत्प्रेमैकजीवना नाद्यापि मनोऽन्यत्र नयति, तत्त्वरितमिमां सम्भावयेति तद्दयितं प्रति सूच्यते।

कलहान्तरिताया दूती तत्कान्तमनुनयार्थं प्रोत्साहयन्ती कुलीनप्रशंसाप्रसङ्गेनाह—

**जिह्वायां कलयन्ति प्रियं हृदि च सन्ति निर्वृतिं नेतुम्।**

**जनयन्ति पीडिता अपि रसमिक्षुघनाः कुलीनाश्च।।४१।।**[2]

मधुररसत्वात्प्रियंवदत्वाच्च जिह्वायां प्रियम् आस्वादम्, अनुकूलं मनोरथं च कलयन्ति वदन्ति कुर्वन्ति च। 'कल' कामधेनुः। हृदये निर्वृतिम् ऊष्मजनिततापस्य उद्वेगस्य च प्रशमं कर्तु सन्ति भवन्ति प्रभवन्ति। पीड्यमानाः दन्तैर्निष्पीड्यमानाः निष्ठुरभाषणेन खेद्यमानाश्च इक्षुघनाः (घनाः इक्षवः) कुलीनाश्च यथाक्रमं रसं मधुरद्रवं प्रीतिं च जनयन्ति। 'जीहाइ' इति

---

१. **पहिअवहु विवरन्तरगलिअजलोल्ले घरे अणोल्लं पि।**
**उद्देसं अविरअवाहसलिलणिवहेण उल्लेइ।।४०।।**
[पथिकवधूर्विवरान्तरगलितजलार्द्रे गृहेऽनार्द्रमपि।
उद्देशमविरतवाष्पसलिललिनिवहेनार्द्रयति।।]

२. **जीहाइ कुणन्ति पिअं भवन्ति हिअअम्मि णिव्वुइं काउम्।**
**पीडिज्जन्ता वि रसं जणन्ति उच्छू कुलीणा अ।।४१।।**
[जिह्वायां (पक्षे-जिह्वया) कुर्वन्ति प्रियं भवन्ति हृदये निर्वृतिं कर्तुम्।
पीड्यमाना अपि रसं जनयन्तीक्षवः कुलीनाश्च।।]

प्राकृतस्य 'जिह्वायाम्' 'जिह्वया' चेत्युभयमप्यर्थः। कुलीनपक्षे जिह्वया अन्यस्य प्रियं कुर्वन्तीत्यर्थो गङ्गाधरेण छायायां कृतः। 'अनुनेतुमागतं प्रियवादिनं कान्तं कलहान्तरिता सपरितोषमाह' इति तत्रावतरणम्।

चिह्नैर्विनापि वसन्तागमः प्रतीयत एवेति तद्विषये विप्रतिपद्यमानां श्वश्रूं प्रति विवेकिनी वधूराह–

**श्वश्रु न च चूतमुकुलं विलोक्यते वाति न च मलयवातः।**
**प्राप्तं वसन्तमासं कथयत्युत्कण्ठितं चेतः।।४२।।**[१]

बाह्यैश्चिह्नैर्विनापि प्रियतमार्थमुत्पन्ना उत्कण्ठा वसन्तं सूचयतीति भावः।।

'नागतः सम्प्रति वसन्तः, आश्वसिहि' इति सान्त्वयन्तीं सखीं प्रति वसन्तागमं साधयन्ती नायिका आह–

**न विना कार्येणोत्सुकमाम्रवने भ्रमति मधुपकुलम्।**
**ज्वलनेन विना हि कुतो धूमस्य शिखाः प्रदृश्यन्ते।।४३।।**[२]

मधुपानशीलं मधुपकुलं कुसुमं विना नाम्रे भ्रमति। आम्रान्तः कुसुमोद्गमे जाते च वसन्तः समागत एवेति भावः। वह्निव्याप्यधूमेन यथा बह्नेस्तथा मधुगन्धलोभिनो मधुपकुलस्य भ्रमणेन सहकारे कुसुमोद्गमस्यानुमानम्, तेन च वसन्तसिद्धिरित्याशयः। अत एव भ्रमरपदा-पेक्षया मधुपपदमनुकूलम्। पीतेनाम्रकुसुमेन वह्नेः, उपरि भ्रमता श्यामेन भ्रमरकुलेन च उद्गच्छन्त्या धूमशिखायाः साम्यमपि समुचितमासूचितं ग्रन्थकारेण। तथा च– ज्वलन इव सहकारकुसुमं सम्प्रति मां दहेदिति प्रियतमाह्वानार्थमेव यतनीयं न मुधाऽऽश्वासनार्थमिति सखीं प्रति ध्वन्यते।

---

१. **दीसइ ण चूअमउलं अत्ता ण अ वाइ मलअगन्धवहो।**
**पत्तं वसन्तमासं साहइ उक्कण्ठिअं चेअम्।।४२।।**
[दृश्यते न चूतमुकुलं श्वश्रु न च वाति मलयगन्धवहः।
प्राप्तं वसन्तमासं कथयत्युत्कण्ठितं चेतः।।]

२. **अम्बवणे भमरउलं ण विणा कज्जेण ऊसुअं भमइ।**
**कत्तो जलणेण विणा धूमस्स सिहाउ दीसन्ति।।४३।।**
[आम्रवने भ्रमरकुलं न विना कार्येणोत्सुकं भ्रमति।
कुतो ज्वलनेन विना धूमस्य शिखा दृश्यन्ते।।]

मदनोत्सवे (होलिकोत्सवे) सुरतलुलितवेषां काञ्चन योषां बहुमन्यमानः कश्चन विदग्धः प्रसाधनपक्षपातिनं सहचरमाह–

**दयितकरग्रहलुलितो धम्मिल्लः सीधुगन्धितं वदनम्।**
**एतावदेव मदने प्रसाधनं हरति तरुणीनाम्।।४४।।**[१]

मदनोत्सवे एतावदेव तरुणीनां मण्डनं कामिनां मनो हरति। अथवा मदने सति कामोदये सतीत्यर्थः। सुरतानुकूलमेतावदेव मण्डनं मनोहारि, सुरतप्रतिबन्धकैः किमन्यैर्भूषणैरिति भावः। एतावदेवेत्येवकारेण अधारितैरपि हारकेयूरादिभिर्न प्रसाधनत्रुटिः। धारितैरपि कर्णावतं–सनासाभूषणादिभिश्च विशिष्य सुरतोपयोगाभावान्न मनोहरणमिति धम्मिल्लाद्योरेव असाधारण–भूषणतेत्यतिशयः सूच्यते। अत एव दृढमाबद्धो धम्मिल्लोऽपि न तस्मिन्समये मनोहारी, प्रत्युत विलुलितप्रयतया निधुवने ग्रहणसुकरः शिथिलबन्धन एवेति दयितकरग्रहलुलित–विशेषणेन व्यज्यते। तरुणीनामित्यनेन–नवागता बालाः काममितरद्भूरि भूषणं धारयन्तु नाम, परं सुरतरसिकानां प्रमदानां त्विदमेव मण्डनमित्यतिशयः सूच्यते। मण्डनादिस्थाने प्रसाधनपदेन–इदमेव प्रसाधनं सुरते प्रकृष्टं साधनमिति निरुक्तिः सूच्यते। अत्र गङ्गाधरस्तु– 'मदने इति निमित्तसप्तमी वा। मदननिमित्तमित्यर्थः।' इति वाचख्यौ। परं यदि निमित्तसप्तमीपदेन 'निमित्तात्कर्मयोगे' इत्यपि सप्तमी बुध्येत, तर्ह्यपि न गतिः। कर्मणो योगाभावात्। अस्तु। 'किलमलङ्करणेन, शीघ्रं कान्तमभिसर' इति दूतीवचनमिति कश्चित्। परमत्र अभिसारात्पूर्वमेव 'दयितकरग्रहलुलित' इति विशेषणं कष्टात्सङ्गच्छेत।

मदनोत्सवे ग्रामयुवत्योऽपि मनोहारिण्यो भवन्तीति तदुत्सवस्योन्मादकतां साधयन्कश्चित्सहचरमाह–

**ग्रामतरुण्यो हृदयं हरन्ति घनकुचभरा विदग्धानाम्।**
**मदने कुसुम्भरञ्जितकञ्चुलिकामात्रमण्डनाः सपदि।।४५।।**[२]

---

१. **दइअकरग्गहलुलिओ धम्मिल्लो सीहुगन्धिअं वअणम्।**
**मअणम्मि एत्तिअं चिअ पसाहणं हरइ तरुणीणम्।।४४।।**
[दयितकरग्रहलुलितो धम्मिल्लः सीधुगन्धितं वदनम्।
मदने एतावदेव प्रसाधनं हरति तरुणीनाम्।।]

२. **गामतरुणीओँ हिअअं हरन्ति छेआणँ थणहरिल्लीओ।**
**मअणे कुसुम्भरञ्जिअकञ्चु[इ]आहरणमेत्ताओ।।४५।।**
[ग्रामतरुण्यो हृदयं हरन्ति विदग्धानां स्तनभारवत्यः।
मदने कुसुम्भरागयुक्तकञ्चुकाभरणमात्राः।।]

घनकुचभराः निबिडस्तनभारवत्यः। प्राकृते पूर्वनिपातनियमाभावात् 'कञ्चुकमात्राभरणाः' इत्यस्य स्थाने 'कञ्चुकाभरणमात्राः' इति प्रयुक्तम्। विदग्धानामित्यनेन–मार्मिका एव सुन्दरीणां लावण्यपरीक्षकास्तदितरे तु गतानुगतिका एवेति व्यज्यते। कञ्चुलिकामात्रेत्यनेन लावण्ये न मण्डनापेक्षेति सूच्यते। हृदयं हरन्तीत्यनेन–रत्नाभूषणादिभिर्नेत्र मात्रामाह्रियते न तत्त्वज्ञानां मानसमिति द्योत्यते। मदनोत्सवे एतादृश्यो ग्रामतरुण्योऽपि हृदयहारिण्यो भवन्ति किं पुनरलङ्कृताः पौरसुन्दर्य इति तदुत्सवस्य निसर्गतो मादकता ध्वन्यते। त्रयोदश्यां कामदेवपूजामदनोत्सवे सेयमुदाहृता सरस्वतीकण्ठाभरणे (५ परि.)।

प्रथममेव प्रवासार्थं प्रस्थितस्य नवप्रवासिनः प्रियाविप्रयोगात्प्रवृत्तां पीडां प्रस्तुवन् कश्चित्प्रवासप्रतिषेधार्थमाह–

**पश्यन्दिशः श्वसन्किल गायन्विरुदंश्च जृम्भमाण मुहुः।**
**मूर्च्छन्स्खलन्विनिपतन्पथिक नु किं ते प्रवासेन।।४६।।**[१]

विरहचकितत्वाद्दिशोऽवलोकयन्, प्रेयसीस्मरणाच्छ्वसन्, दुःखविनोदाय गायन्, तदुत्कण्ठावशाद्रुदन्, मदनायासेन मुहुर्जृम्भमाण, प्रियतमैकान्तचित्तत्वान्मूर्च्छादिविकारान्प्राप्नुवन् हे पथिक ते प्रवासेन किं फलम्? यतः साम्प्रतमेव ते सेयं दशा, तर्हि विदेशावस्थितौ का ते दशा भाविनीति को जानीते। तस्मान्निवर्तस्वेति भावः। एवं च प्रवासः प्रियैकान्तचित्तानां दुःखायैवेति सूच्यते।

सख्या रहोवृत्तमनुसन्धातुं गता कथमेतावद्विलम्बेनागतासीति सख्या पृष्टा सखी तामाह–

**सन्दृश्य तरुणसुरतं विविधविलासैश्च करणपरिलसितम्।**
**दीपोऽपि तद्गतमना गतमपि तैलं न लक्षयति।।४७।।**[२]

---

१. **आलोअन्त दिसाओ ससन्त जम्भन्त गन्त रोअन्त।**
**मुच्छन्त पडन्त खलन्त पहिअ किं ते पउत्थेण।।४६।।**
[आलोकयन्दिशः श्वसञ्जृम्भमाण गायन्रुदन्।
मूर्छन्पतन्स्खलन्पथिक किं ते प्रवसितेन।।]

२. **दट्ठूण तरुणसुरअं विविहविलासेहिँ करणसोहिल्लम्।**
**दीओ वि तग्गअमणो गअं पि तेल्लं ण लक्खेइ।।४७।।**
[दृष्ट्वा तरुणसुरतं विविधविलासैः करणशोभितम्।
दीपोऽपि तद्गतमना गतमपि तैलं न लक्षयति।।]
सं. गा. २४

विविधविलासैरालिङ्गनचुम्बनादिभिरुपलक्षितम्। करणैर्विपरीतोत्तानकतिर्यगुत्थित-काद्यासनबन्धैः कामशास्त्रकथितैः शोभितम्। तरुणी च तरुणश्च तरुणौ तयोः सुरतं दृष्ट्वा। पुमान्स्त्रियेत्येकशेषः गतमपि तैलं न लक्षयतीत्यनेन-सुरतोत्सवे भूयान्विलम्बो जात इति व्यज्यते। दीपोऽपीत्यपिपदेन-अचेतनो दीपोऽपि यत्र स्पृहयालुरिव तदेकतानो भवति, तत्र मादृशो भुक्तभोगो जनः कथं कौतुकाद्विरमेदत एव तद्गतचित्ततया विलम्बोऽभवदिति भावः।

उद्भटसुरतरसिकां कामपि कामिनीमुत्कण्ठयितुं सुरतकाले पूर्वानुभूतां कामिनः कामशास्त्रकुशलतामन्यापदेशेन काचिदाह-

**पुनरुक्तकरास्फालनतटद्वयोल्लिखनपीडनशतानि।**

**यूथाधिपस्य मातः पुनरपि यदि नर्मदा सहते।।४८।।**[१]

पुनरुक्तं पुनः पुनर्यत्करेण शुण्डादण्डेन हस्तेन चास्फालनं जलादौ पृष्ठादौ च। तटद्वयस्य कूलद्वयस्य नितम्बद्वयस्य च दन्तद्वयेनोत्खननं नखैर्विलेखनं च। पीडनं जलपूरस्याव-रोधनं निर्भरालिङ्गनं च, एतदादीनां शतानि। यूथाधिपस्य गजपुङ्गवस्य गोष्ठीनायकस्य च, अर्थात्तत्कृतानि करास्फालनादीनि। नर्मदा नदी, नर्म सुरतसुखं ददातीति योगात्कामकलानुकूला नायिका च। यदि पुनरपि सहते, तदा तान्युपस्थितानीति शेषः। आश्चर्यसूचनार्थं मातरिति सम्बोधनं लोके प्रसिद्धम्। अथवा- 'कान्तसमीपं गच्छ' इति वदन्तीं सखीं प्रति नायिकायाः सेयमुक्तिः। सुरतदुर्मदस्य तस्य स्तनतटनखक्षतोरस्ताडननिर्भरालिङ्गनादीनि यदि सहेय तर्हि पुनरपि गच्छेयमिति साकूतं तस्या उत्तरमिति भावः। उल्लिखनमिति 'गाङ्कुटादिभ्य' इति सूत्रे कुटस्य आदिः कुटादिरिति समासेन लिखधातोरपि सङ्ग्रहाद् गुणनिषेधेन।

पूर्वसङ्केतितं कार्पासीक्षेत्रमगत्वा सम्प्रति गृह एव स्वच्छन्दमागन्तव्यमिति जारं सूचयन्ती स्वयंदूतिका सोद्वेगमाह-

---

१. **पुणरुत्तकरप्फालणउहअतडुल्लिहणवड्डणसआइं।**

**जूहाहिवस्स माए पुणो वि जइ णम्मआ सहइ।।४८।।**

[पुनरुक्तकरास्फालनोभयतटोल्लिखनपीडनशतानि।

यूथाधिपस्य मातः पुनरपि यदि नर्मदा सहते।।]

**दुष्टशुनको विपन्नः श्वश्रूर्मत्ता पतिः किलान्यस्थः।**

**कार्पास्यपि परिभग्ना महिषेण हि वदतु कस्तस्य।।४९।।**[1]

वोडो दुष्टछिन्नकर्णो वा। 'वुड्ढसुणओ' इति पाठे वृद्धशुनक इत्यर्थः। यः श्वा रात्रौ गृहरक्षामकरोत्स विपन्न इति तात्पर्यम्। मत्ता उन्मादरोगिणी। पतिपदेन–केवलं रक्षक एव सः, न मे उपभोक्ता परं सोऽपि अद्य अन्यस्थः अन्यदेशस्थः। महिषेण कार्पासी कार्पासकृषिर्भग्ना इति तस्य (पत्युः) कः कथयतु? नान्यो गृहे पुरुष इति। ततः स्वच्छन्दमिहानन्दोऽनुभूयतामिति नायकं प्रति द्योत्यते।

मधुरतरेणोपायेन मानिन्या मानमपनयतः कस्यचिद्विदग्धस्य रहस्यं प्रत्यक्षं प्रदर्शयन्नागरिकः सहचरमाह–

**प्रियमुखदत्तां सकचग्रहरभसोत्तानितानना पिबति।**

**स्तोकं स्तोकं रोषौषधमिव मदिरां नु मानिनी, पश्य।।५०।।**[2]

प्रियेण सकचग्रहं रभसेन उत्तानितम् (ऊर्ध्वीकृतम्) आननं यस्याः सा मानिनी प्रियेण स्वमुखेन दत्तां मदिरां रोषनिवारकमौषधमिव स्तोकं स्तोकम् ईषदीषत्पिबति इति पश्य। कटुतिक्तास्वादमौषधं यथा स्वल्पं स्वल्पं पीयते तथा मानवशादत्यनुनयेन किञ्चित्किञ्चित्पिबतीति भावः।

जनसञ्चारवञ्चितेऽस्मिन् ग्रीष्ममध्याह्ने नायकमभिसरेति सूचयन्ती दूती निदाघतापस्य दुःसहतां वर्णयति–

---

१. **वोडसुणओ विअण्णो अत्ता मत्ता पई वि अण्णत्थो।**
**फलिहं व मोडिअं महिसएण को तस्स साहेउ।।४९।।**
[दुष्टशुनको विपन्नः श्वश्रूर्मत्ता पतिरप्यन्यस्थः।
कार्पास्यपि भग्ना महिषकेण कस्तस्य कथयतु।।]

२. **सकअग्गहरहसुत्ताणिआणणा पिअइ पिअमुहविइण्णम्।**
**थोअं थोअं रोसोसहं व उअ माणिणी मइरम्।।५०।।**
[सकचग्रहरभसोत्तानितानना पिबति प्रियमुखवितीर्णाम्।
स्तोकं स्तोकं रोषौषधमिव पश्य मानिनी मदिराम्।।]

**गिरिनिर्झर इति भुजगं सन्तप्तो लेढि जिह्वया महिषः।**
**कृष्णप्रस्तरझर इति सर्पो महिषस्य पिबति किल लालाम्।।५१।।**[१]

कृष्णप्रस्तरस्य झरो निःस्यन्दः। कृष्णे महिषे कृष्णपाषाणभ्रान्तिः। 'नार्तस्तत्त्वविचार-क्षमो भवतीति मध्याह्नवर्णनच्छलेन प्रदर्शयन्नागरिकः सहचरमाह' इति गङ्गाधरावतरणम्।

शारिकया लोकानां सविधे रहस्याख्यानतो विलक्षीकृता कापि कुलवधूरन्तरङ्गां मातुलानीमाह-

**पञ्जरशारीं मातुलि नापनयसि किं नु रतिगृहादस्मात्।**
**विस्रम्भजल्पितानि प्रकटयतीयं हि लोकानाम्।।५२।।**[२]

पञ्जरशारीं पञ्जरबद्धां शारिकाम्। किमिति नापसारयसि। विस्रम्भजल्पितानि रतिसम-योदितानि प्रेमवचनानि। लोकानां लोकेभ्यः। अथवा लोकानां विस्रम्भजल्पितानि सेयं प्रकटयतीति निभृतं स्वस्य प्रियतमस्य च वचनानां सूचना दत्ता।

दन्तधावनाद्यर्थं सङ्केतितस्य करञ्जनिकुञ्जस्य पल्लवपुञ्जभञ्जकं ग्रामे भिक्षामटन्तं कञ्चन धार्मिकं पल्लवभङ्गाद्वारणाय भीषयन्ती काचित्कुलटा आह-

**ग्रामेऽपीयन्मात्रे न पतति भिक्षेति किमिति मां भणसि।**
**धार्मिक करञ्जभञ्जक यज्जीवसि तदपि ते बहुकम्।।५३।।**[३]

---

१. **गिरसोत्तो त्ति भुअंगं महिसो जीहइ लिहइ संतत्तो।**
**महिसस्स कह्णवत्थरझरो त्ति सप्पो पिअइ लालम्।।५१।।**
[गिरिस्रोत इति भुजङ्गं महिषो जिह्वया लेढि सन्तप्तः।
महिषस्य कृष्णप्रस्तरझर इति सर्पः पिबति लालाम्।।]

२. **पञ्जरसारिं अत्ता ण णेसि किं एत्थ रइहराहिन्तो।**
**वीसम्भजम्पिआइं एसा लोआणँ पअडेइ।।५२।।**
[पञ्जरशारीं मातुलानि न नयसि किमत्र रतिगृहात्।
विस्रम्भजल्पितान्येषा लोकानां प्रकटयति।।]

३. **एद्दहमेत्ते गामे ण पडइ भिक्ख त्ति कीस मं भणसि।**
**धम्मिअ करञ्जभञ्जअ जं जीअसि तं पि दे बहुअम्।।५३।।**
[एतावन्मात्रे ग्रामे न पतति भिक्षेति किमिति मां भणसि।
धार्मिक करञ्जभञ्जक यज्जीवसि तदपि ते बहुकम्।।]

करञ्जभञ्जनागत धार्मिक! इयन्मात्रे ग्रामेऽपि भिक्षा न पतति न मिलति इति किं भणसि। एवंस्थितावपि भैक्ष्यभोजनेन यज्जीवनयात्रां निर्वहसि तदपि बहु गणयेति वाच्योऽर्थः। करञ्जभञ्जनापराधे दृष्टेऽपि यत्त्वं प्राणैर्न वियुक्तोऽसि, तत्ते बहुभाग्यमिति व्यङ्ग्योऽर्थः। तथा च-यदि जीवितुं कामयसे तर्हि करञ्जकुञ्जस्य पल्लवपुञ्जभञ्जनाद्विरमेति तं प्रति सूच्यते।

श्लेषचातुर्येणानुरागं सूचयन्ती काचित्कृतगुडवेतनमिक्षुयन्त्रवाहकमाह-

**यान्त्रिक गुडं विमार्गसि न वाहयसि यन्त्रमिच्छया च मम।**
**अरसिक जानासि न किं न रसेन विना गुडो भवति।।५४।।**[१]

यान्त्रिक यन्त्रकर्मकारक! वेतनत्वेन नियमितं गुडं विमार्गसि अन्विष्यसि वाञ्छसीति यावत्। इक्षुपीडनार्थं कृतं यन्त्रं (चर्खी) ममेच्छानुसारं च न चालयसि। पक्षान्तरे सुरतसाधनं यन्त्रम्। रसः इक्षुद्रवः, अनुरागश्च। तथा च हे अरसिक इक्षुद्रवविधानानभिज्ञ! किं न जानासि यत् रसेन इक्षुद्रवेण विना गुडो न भवति नोत्पद्यते। पक्षान्तरे च- हे अरसिक! अनुरागेण विना गुडो न भवति न प्राप्यते इत्यर्थः। मय्यनुरक्तो यावन्ममेच्छानुसारं रतनिरतो न भविष्यसि तावन्न ते गुडवेतनं दीयेतेति भावः।

सद्यः स्नातां श्यामाङ्गीं कामयमानः कश्चित् शृण्वन्त्यां तस्यां स्वसहचरमाह-

**प्राप्तनितम्बस्पर्शाः श्यामाङ्ग्याः स्नानसक्तायाः।**
**बन्धस्येव भयेन हि रुदन्ति जलविन्दुभिश्चिकुराः।।५५।।**[२]

स्नानसमये पृष्ठे लम्बमानतया सुन्दरीनिबिडनितम्बस्पर्शसुखमवाप्तवन्तः कुन्तलाः स्नानोत्तरं धम्मिल्लबन्धनेन तत्सुखविलोपशङ्क्या प्रस्रवत्स्नानसलिलबिन्दुच्छलेन सम्प्रति रुदन्तीवेत्यर्थः। तथा च- नैषां बन्धनं भवेत्तथेमे वाञ्छन्ति। अर्थात् मयि सुरतासक्ता सती एतेषां पुनरपि विमुक्ततासुखं सम्पादयेति निगूढाभिप्रायो व्यज्यते।

---

१. **जन्तिअ गुलं विमग्गसि ण अ मे इच्छाइ वाहसे जन्तम्।**
**अणरसिअ किं ण आणसि ण रसेण विणा गुलो होइ।।५४।।**
[यान्त्रिक गुडं विमार्गयसे न च ममेच्छया वाहयसि यन्त्रम्।
अरसिक किं न जानासि न रसेन विना गुडो भवति।।]

२. **पत्तणिअम्वप्फंसा ण्हाणुत्तिण्णाएँ सामलङ्गीए।**
**जलबिन्दुएहिँ चिहुरा रुअन्ति बन्धस्स व भएण।।५५।।**
[प्राप्तनितम्बस्पर्शाः स्नानोत्तीर्णायाः श्यामलाङ्ग्याः।
जलबिन्दुकैश्चिकुरा रुदन्ति बन्धस्येव भयेन।।]

ग्रामनिकटावस्थितवटान्तिके सुघटान्यभिसारसुखानि विटाय सूचयन्ती रतिरसलम्पटा कुलटा वटानुवर्णनमाह–

**अनुलग्नस्ते ग्रामाङ्गणनिगडितकृष्णपक्ष वट दूरम्।**
**दौःसाधिकप्रतीक्षकभोग्यपि न ग्राम उद्विग्नः।।५६।।**[१]

ग्रामाङ्गणे निगडितः बद्धः [स्ववशे कृत्वा सर्वदा स्थापितः] कृष्णपक्षः [तत्कार्यभूतः अन्धकारः] येन तत्सम्बुद्धौ। एतादृश हे वट! तव दूरमनुलग्नः दूरदूरपर्यन्तं त्वच्छायामाश्रितः। दौःसाधिको द्वारपालः प्रतीक्षकः [ग्रामपतिसविधे नयनाय मार्गावेक्षकः] यस्य तादृशो भोगी भोगासक्तः कामुकजनो यस्मिन्नेतादृशोऽपि ग्रामो नोद्विग्नः। अनुपलक्षिताभिसारतया राजभयरहितत्वान्न भीतिं प्राप्त इत्यर्थः। अयं भावः– हे वट! तव निबिडतमच्छायायां सर्वदा कृष्णपक्षस्येव अन्धकारो भवति। ततश्च त्वदाश्रये अभिसाररताः कामिनो निर्भयं भोगान् भुञ्जते। ग्रामाधिपते रक्षकपुरुषास्तान् निग्रहीतुं प्रतीक्षमाणा एव तिष्ठन्ति परं त्वच्छायान्धकारे न तान् लक्षयितुं प्रभवन्ति। अत एव त्वदनुलग्नोऽयं ग्रामो नोद्विजते इति। दौःसाधिकस्य प्रतीक्षकाः [इदानीं द्वारपाल आयाति, अयमायात इति भयचकितं द्वारपालमार्गावेक्षकाः] भोगिनो यस्मिन्नित्यप्यर्थः सम्भवति। 'तित्तिल्लो' दौःसाधिकः। 'दौःसाधिको द्वारपालः' इति त्रिकाण्डशेषः 'तन्तिल्लपडिखरभोइओ वि' इति पाठे तु 'चिन्तापरप्रतिखरभोगिकोऽपि' इति च्छाया। चिन्तायुक्तः प्रतिखरोऽसहनः भोगी ग्रामभोक्ता अधिकारी यस्य ईदृशो ग्राम इत्यर्थः। ततश्च सर्वदा दुष्टदमनचिन्तायां लग्नोऽतितीक्ष्णश्चास्य ग्रामस्य भोक्ता प्रभुरस्ति, तथापि त्वत्प्रसादादयं ग्रामस्थः कुलटा–जनो नोद्वेगं प्राप्नोतीत्याशयः।

सपत्न्या दुश्चरितं पतिं प्रति सापदेशं सूचयन्ती सपत्नी सोपालम्भमाह–

**शूर्पं दग्धं चणका न भर्जिताः स च युवातिगतः।**
**श्वश्रूर्गृहेऽपि कुपिता भूतनामिव हि वादितो वंशः।।५७।।**[२]

---

१. **गामङ्गणणिअडिअकह्लवक्ख वड तुज्झ दूरमणुलग्गो।**
**तित्तिल्लपडिक्खकभोइओ वि गामो ण उव्विग्गो।।५६।।**
[ग्रामाङ्गणनिगडितकृष्णपक्ष वट तव दूरमनुलग्नः।
दौःसाधिकप्रतीक्षकभोगिकोऽपि ग्रामो नोद्विग्नः।।]

२. **सुप्पं डड्ढं चणआ ण भज्जिआ सो जुआ अइक्कन्तो।**
**अत्ता वि घरे कुविआ भूआणँ व वाइओ वंसो।।५७।।**
[शूर्पं दग्धं चणका न भृष्टाः स युवातिक्रान्तः।
श्वश्रूरपि गृहे कुपिता भूतानामिव वादितो वंशः।।]

चणकान् भर्जयन्त्या अनया अनवधानेन शूर्पं दग्धम्, परं चणका न भर्जिताः। यं युवानं द्रष्टुं चणकभर्जनकार्यं त्यक्त्वा इयं बहिर्निर्गता सोऽप्यतिक्रान्तः। भूतानां बधिराणामिवाग्रे वंशः (वेणुः) वादितः। बधिराणामग्रे वंशीवादनमिव गृहकार्यहानिं सम्पादयन्त्या अप्यस्याः सर्वः प्रयासो विफलीभूत इत्याशयः। गृहवस्तुहानिं परपुरुषपर्यालोचनप्रयासं च गृहाधिष्ठात्री त्वन्मातापि ज्ञातवती, अत एव कुपितास्ति। ततः पश्यऽस्या दुश्चरितमिति पतिं प्रति युक्त्या सूचना।

सलिलनिमग्नैः प्रियतमैरिमा निगूढमुपगूढा इत्यात्मनः प्रच्छन्नपरिज्ञानपाटवं प्रख्यापयन्नागरिकः सहचरं प्रति कामिननीनां जलकेलिमुपवर्णयति–

**शंसन्ति कामिनीनामम्बुनिलीनप्रियाङ्गसङ्गसुखम्।**
**पुलकितकपोलसंफुल्लनिश्चलाक्षाणि वदनानि।।५८।।**[१]

प्रियाङ्गस्पर्शेन पुलकितौ कपोलौ येषु तानि। तथा हर्षविशेषादुत्फुल्ले (विकसिते) स्तम्भाख्येन सात्त्विकभावेन निश्चले च अक्षिणी येषु तादृशानि कामिनीनां वदनानि, अम्बुनि निलीनस्य प्रियस्याङ्गसङ्गेन अवगूहनेन यत्सुखं तत्सूचयन्ति। जलनिलीनप्रियपरिरम्भणेन अङ्कुरितकामतया कामिनीनामिति व्यपदेशः।'निह्नुतमप्यर्थं विदग्धाबुध्यन्ते इति बोधयन्नागरिकः सहचरमाह' इति गङ्गाधरावतरणम्।'निश्चलाक्षीणि' इति पाठस्तु कदाचन लेखकप्रमाद एव भवेत्।

वनशोभादर्शनेनोत्कण्ठितचित्तायाः प्रियसख्या भाविनीं विरहवेदनां संसूच्य प्रावृषि प्रवासं चिकीर्षतो नायकस्य गमनाध्यवसायं निवारयन्ती नायिकासखी आह–

**श्यामायितेष्वभिनवप्रावृड्रसितेषु लसति दिवसेषु।**
**नृत्यं रभसोन्नामितशिरोधराणां मयूरवृन्दानाम्।।५९।।**[२]

---

१. **पिसुणेन्ति कामिणीणं जललुक्कपिआवऊहणसुहेल्लिम्।**
**कण्डइअकवोलुप्फुल्लणिच्चलच्छीइँ वअणाइं।।५८।।**
[पिशुनयन्ति कामिननीनां जलनिलीनप्रियावगूहनसुखकेलिम्।
कण्टकितकपोलोत्फुल्लनिश्चलाक्षीणि वदनानि।।]

२. **अहिणवपाउसरसिएसु सोँहइ साआइएसु दिअहेसु।**
**रहसपसारिअगीवाणँ णच्चिअं मोरबुन्दाणम्।।५९।।**
[अभिनवप्रावृरसितेषु शोभते श्यामायितेषु दिवसेषु।
रभसप्रसारितग्रीवाणां नृत्यं मयूरवृन्दानाम्।।]

अभिनवानि प्रावृषो रसितानि (मेघगर्जितानि)येषु तेषु। जलधरस्थगितदिनकरतया श्यामायितेषु श्यामा रजनी तत्सदृशेषु मयूरवृन्दानां नृत्यं शोभते। विरहिणां कृते रजनी किलानिर्वचनीयदु:खदायिनी, इह तु दिवसा अपि रजनीयन्ते। अत एवंविधे घनरसमये समये न गन्तव्यमिति ध्वन्यते। नवानि प्रावृड्रसितान्याकर्ण्य रभसेन मेघावलोकनार्थं मयूरैर्ग्रीवा उन्नाम्यन्ते, अत एव प्रसारितपदापेक्षया उन्नामितेति सम्यक्। दिवैव संकेतस्थानस्याभिसारयोग्यतां सूचयन्त्या दूत्या इयमुक्तिरिति कश्चित्। 'वनमयूरलसितं संकेतितलागृहमहं गता त्वं तु न गत इति जारं श्रावयन्ती कुलटा वर्षाप्रशंसामाह' इति गङ्गाधरावतरणम्।

महिषशालायां सुरतासक्ता काचित्कामिनो मनोविनोदाय दोषमपि गुणीकुर्वत्याह-

**महिषस्कन्धविलग्नं शृङ्गहतं सिमसिमायितं भ्रमति।**

**आहतवीणाझङ्कृतिशब्दमुखरितं मशकवन्दृम्।।६०।।**[1]

सिमसिमेत्यनुकरणम्। सिमसिमेति शब्दं कुर्वदित्यर्थः। कोणेन आहताया वीणाया यो झंकारशब्दस्तद्वन्मुखरम्। पूर्वं शृङ्गे स्थितिः, पश्चाच्छृङ्गताडनेन सिमसिमशब्दं कुर्वतां भ्रमणं मशकानां स्वभावः। अनेन स्वभावोक्तयलंकारेण 'वीणाझङ्कारेणेव प्रमोदितमनास्त्वं सुचिरं रमस्व' इति नायकं प्रति चिररमणाभिलाषो व्यज्यते।

निष्कुटकुमुदिनीशोभावर्णनेन प्रियतमाया मनः प्रमोदयन् कश्चिदाह—

**राजन्ति कुमुददलनिश्चलस्थिता मत्तमधुकरनिकायाः।**

**ग्रन्थय इव तिमिरस्य हि शशिकरनिःशेषनाशितस्येमाः।।६१।।**[2]

---

१. **महिसक्खन्धविलग्गं घोलइ सिङ्गाहअं सिमिसिमन्तम्।**

**आहअवीणाझंकारसद्दमुहलं मसअवुन्दम्।।६०।।**

[महिषस्कन्धविलग्नं घूर्णते शृङ्गाहतं सिसिमायमानम्।

आहतवीणाझंकारशब्दमुखरं मशकवृन्दम्।।]

२. **रेहन्ति कुमुअदलणिच्चलट्ठिआ मत्तमहुअरणिहाआ।**

**ससिअरणीसेसणासिअस्स गण्ठि व्व तिमिरस्स।।६१।।**

[राजन्ते कुमुददलनिश्चलस्थिता मत्तममधुकरनिकायाः।

शशिकरनिःशेषप्रणाशितस्य ग्रन्थय इव तिमिरस्य।।]

मधुकरस्वभावान्मधुपानेन मत्ताः अत एव मदजनितस्तम्भेन निश्चलं स्थिताः। शशिकिरणैर्नि:शेषं समापितस्य तिमिरस्य कुत्रकुत्रचित्पतिता इमा ग्रन्थय इव। निश्चलस्थित्या अचेतनाभिर्ग्रन्थिभिः साम्यम्। 'कुमुदसरस्तीरलतागृहे चन्द्रोदयपर्यन्तमहं स्थितः, त्वं तु न गतेति कुलटां श्रावयन्कश्चिदाह' इति गङ्गाधरः।

शालिक्षेत्रे रममाणा शालिगोपी क्षेत्रे शुकपतनशङ्कां सूचयन्त्यपि सुरतसत्वरं जारमन्य-मनस्कं कर्तुमाह—

**पङ्क्तिं तरुकोटिरतो निष्क्रान्तां पश्य पुंशुकानां हि।**
**शरदि द्रुमो ज्वरित इव सलोहितं पित्तमिव वमति।।६२।।**[1]

पित्तं हरितवर्णं तस्मिन् रक्तवर्णं शोणितमपि मिलितम्, तथैव हरितवर्णाः शुकास्तेषां चञ्चवो गलकण्ठिकाश्चारुणा इति द्वयोः साम्यम्। अत एव पुंशुकानां (नरशुकानाम्) पङ्क्ति-मित्युक्तम्।

रममाणस्योपपतेर्भयं त्वरां चापनयन्ती दुर्दिनाभिसारिका दुर्दिनं बहुकालावस्थायीति तल्लिङ्गान्याह—

**धाराविधौतवदना लम्बितपक्षा निकुञ्चितग्रीवाः।**
**वृतिवेष्टनेषु काकाः शूलाभिन्ना इव प्रदृश्यन्ते।।६३।।**[2]

ऊर्ध्वकृतमुखत्वात् जलधाराभिर्धाव्यमानं मुखं येषां ते। पक्षौ प्रसार्य ग्रीवां कुब्जतयाव-कुञ्च्य, क्षेत्राणां कण्टकवृतिषु काकास्तथा स्थिताः सन्ति यथा ऊर्ध्वमुखास्ते उन्नामितशूलाग्राकार-चञ्चुत्वात् शूलेन आ (समन्तात्) भिन्ना इव दृश्यन्ते। एवंरूपेण काकानां निर्भयमवस्थित्या दुर्दिनमपि चिरमवस्थायीति जारं प्रत्यभिव्यज्यते।

---

१. **उअह तरुकोडराओ णिक्कन्तं पुंसुवाणँ रिञ्छोलिम्।**
**सरिए जरिओ व्व दुमो पित्तं व्व सलोहिअं वमइ।।६२।।**
[पश्यत तरुकोटरान्निष्क्रान्तां पुंशुकानां पङ्क्तिम्।।
शरदि ज्वरित इव द्रुमः पित्तमिव सलोहितं वमति।।]

२. **धाराधुव्वन्तमुहा लम्बिअवक्खा णिउञ्चिअग्गीवा।**
**वइवेढनेसु काआ सूलाहिण्णा व्व दीसन्ति।।६३।।**
[धाराधाव्यमानमुखा लम्बितपक्षा निकुञ्चितग्रीवाः।
वृतिवेष्टनेषु काकाः शूलभिन्ना इव दृश्यन्ते।।]

मानिनीं नायिकां युक्तया स्वसम्भाषणाभिमुखीं कर्तुं नायकोऽन्तरङ्गसुहृदमाह—

**न तथा ह्यनालपन्ती मानिन्यधिकं दुनोति हृदयं नः।**

**दूरविजृम्भितगुरुकप्रकोपमध्यस्थभाषितैर्हि यथा।।६४।।**[1]

अनालपन्ती मानिनी हृदयं तथा न दुनोति, यथा दूरं विजृम्भितो गुरुकः प्रकोपोयेषु तादृशैः मध्यस्थभणितैरुदासीनवचनैर्दुनोति। मौनापेक्षया तटस्थपुरुषवत्प्रेमशून्यैर्वचनैरधिकं दुःखं भवतीति भावः। 'कलहान्तरितां सखीं शिक्षयन्ती काचिदाह' इति गङ्गाधरः। उदासीनवन्निष्ठुरं न वाच्यः प्रियतम इति विषये मातृगुप्ताचार्याणामुदाहृतं च तेन पद्यम् 'निष्ठुराणि न वक्तव्यो नातिक्रोधं च दर्शयेत्। न वाक्येर्वाच्यसम्मिश्रैरुपालभ्यो मनोरमः।।' इति। स्फुटमियं मानिनीपदाङ्किता गाथा कलहान्तरितायां क्लेशतोऽन्वेति। अत एव 'यत्नापनेयमाना धीरा यथेति प्रसङ्गे, निर्धारितविशेषप्रकारो विशेषवान् प्रेमा यथा' इत्यत्र चोदाहृता सेयं गाथा सरस्वतीकण्ठाभरणे (५. परि.)।

वर्षासु दुःखविप्रकर्षात्प्रियतमासमाप्तिमाशङ्कमानं पान्थमाश्वासयन्मार्गमिलितः कश्चित्कारुणिक आह–

**परिपक्वकदम्बानामाजिघ्रन्गन्धमश्रुभरिताक्ष ।**

**आश्वसिहि मा न गृहिणीमुखं निरीक्षिष्यसेऽयि पथिकयुवन्।।६५।।**[2]

अयि पथिकयुवन्! आश्वसिहि गृहिणीमुखं न निरीक्षिष्यसे इति मा, किं तु अवश्यं निरीक्षिष्यसे इत्यर्थः। पक्वकदम्बानामित्यनेन साम्प्रतं प्रावृषः पूर्णः प्रकर्षः, अत एव तदारम्भादेव दुःखमनुभवन्ती प्रतीक्षणपरा परासुर्भवेत्' इत्यनुमानं सूच्यते। आजिघ्रन्निति शत्रा ईषद्घ्राणस्य

---

१. **ण वि तह अणालवन्ती हिअअं दूमेइ माणिणी अहिअम्।**
**जह दूरविअम्भिअगरुअरोसमज्झत्थभणिएहिं।।६४।।**
[नापि तथानालपन्ती हृदयं दुनोति मानिन्यधिकम्।
यथा दूरविजृम्भितगुरुकरोषमध्यस्थभणितैः।।]

२. **गन्धं अग्घाअन्तअ पक्ककलम्बाणँ वाहभरिअच्छ।**
**आससु पहिअजुआणअ घरिणिमुहं मा ण पेच्छिहिसि।।६५।।**
[गन्धमाजिघ्रन्पक्वकदम्बानां वाष्पभृताक्ष।
आश्वसिहि पथिकयुवन् गृहिणीमुखं मा न प्रेक्षिष्यसे।।]

साध्यतायामेव उत्कण्ठोदयेन गृहिणीविनाशानुमानेन च बाष्पोद्गमो जात इत्यतिशयोक्तिः। युवन्नित्यनेन– 'यौवनसुलभया उत्कण्ठया कुण्ठितत्वादेवं भयाकुलोऽसि, किन्त्वनुभविनः प्रौढस्य ममाश्वासने विश्वसिहि' इति वक्तुः प्रौढिः सूच्यते।

गर्जितश्रवणेनोद्दीप्तविरहतया प्रियाविनाशमाशङ्कमानः पथिकः पयोदमाह–

**अयि गर्ज ममैवोपरि सर्वस्थाम्नापि लोहहृदयस्य।**

**जलधर लम्बालकिकां मा रे तां मारयिष्यसि वराकीम्।।६६।।**[1]

तादृशीं शिरीषमृदुलाङ्गीं विरहहुतवहे क्लेशितवत्त्वाल्लोहवत्कठोरहृदयस्य ममैवोपरि सर्वस्थाम्नापि सर्वबलेन गर्ज। तादृशक्रूरहृदयोऽहं त्वद्गर्जनं सोढुं समर्थः, विरहदुर्बलदेहा सा मृद्वङ्गी तु कथं जीवेदिति भावः। विरहवेदनावर्द्धकत्वात् 'रे' इत्याक्रोशसम्बोधनम्। लम्बाल–कशोभिनीं तां मा मारयिष्यसि। लम्बालकिकामित्यनेन– 'जलधारकत्वात्कृष्णवर्णस्त्वम् अस्या अपि मधुरमेचकमायतं च केशकलापमालोक्य ईर्ष्यावशादनिष्टं कुर्याः' इति सूच्यते। विरहक्लिष्टतया पूर्वमेव दयापात्रं सा। इदानीं त्वद्दत्तदुःखा सा सुतरां दयनीयेति वराकीपदेन लम्बालकिकामिति कप्रत्ययेन च ध्वन्यते।

शालिक्षेत्रस्याभिसारयोग्यतां सूचयितुं काचिदन्यापदेशेन हेमन्तोपक्रमं वर्णयति–

**क्षीरैकपायिना दत्तजानुपतनेन पङ्कमलिनेन।**

**पुत्रेणेव हि क्षालिक्षेत्रेणानन्द्यते हलिकः।।६७।।**[2]

'क्षीरं तण्डुलारम्भकं जलं दुग्धं च। जानु ऊरुपर्व, उपचाराद्धान्यनालग्रन्थिश्च।' गङ्गाधरः। दत्तं जानुभ्यां पतनं येन, जानुद्वारा कृतगमन इत्यर्थः पुत्रपक्षे। दत्तं कृतं जानुस्थानीयानां

---

१. **गज्ज महं चिअ उवरिं सव्वत्थामेण लोहहिअअस्स।**
**जलहर लम्बालइअं मा रे मारेहिसि वराइम्।।६६।।**
[गर्ज ममैवोपरि सर्वस्थाम्ना लोहहृदयस्य।
जलधर लम्बालकिकां मा रे मारयिष्यसि वराकीम्।।]

२. **पङ्कमइलेण छीरेक्कपाइणा दिण्णजाणुवडणेण।**
**आनन्दिज्जइ हलिओ पुत्तेण व सालिछेत्तेण।।६७।।**
[पङ्कमलिनेन क्षीरैकपायिना दत्तजानुपतनेन।
आनन्द्यते हालिकः पुत्रेणेव शालिक्षेत्रेण।।]

धान्यनालग्रन्थीनां ('पोटा') आरम्भणं येन, ततश्च–धान्यनालग्रन्थीनामारम्भो यस्मिन् जातस्तादृशमिति क्षेत्रपक्षे।

अन्यस्मिन्ननुरक्तां काञ्चन सुन्दरीं स्वानुगामिनीं कर्तुं खलनिन्दाव्याजेन कश्चित्पूर्वनायकनिन्दामुपक्रमेते–

**खलसङ्गो मे परिणतिकाले कथमिव भवेदिति ध्यायन्।**
**अवनतमुखः सशूकः शालिः किल रोदितीव नीहारैः।।६८।।**[१]

परिणतिकाले पक्वतादशायां पक्षान्तरे च वयः परिणामकाले। खलस्य धान्यमर्दनस्थानस्य (खलिहान), दुर्जनस्य च सङ्गः कथमिव न जाने कीदृशदुःखावहो भवेदिति चिन्तां कुर्वन्। परिपाकगुरुतया अवनतं शीर्षाग्रं यस्य सः, पक्षान्तरे च शोकेनावनतवदनः। शूकेन धान्यकण्टकेन सहितः पक्षान्तरे च कण्टकायितेन शोकेन सहितः। शालिः नीहारैः तुषारव्याजेन रोदितीव। अचेतनः शालिरपि परिणामे खलसङ्गेन रोदिति तर्हि अनुरक्तहृदययास्तव तु का दशा स्यादिति परिहर तत्सङ्गम्, अनुरज्यस्व मादृशे प्रणयिनि इति शृण्वतीं नायिकां प्रति ध्वन्यते। 'प्रातरेवाहं सङ्केतस्थानं शालिक्षेत्रं गता, त्वं तु न गत इति जारं श्रावयन्ती नीहाराभिसारिका शालेरपि खलसंयोगादुद्वेगमाह' इति गङ्गाधरः।

त्वा निह्नुतमपि दयितसमागमचिह्नं मया परिज्ञातमेवेति काञ्चिन्नववधूं श्रावयितुं सव्यपदेशं प्रदोषं वर्णयन्नागरिकः सहचरमाह–

**सन्ध्यारागस्थगितः प्रतिपच्चन्द्रो हि दृश्यते गगने।**
**रक्तदुकूलान्तरिता स्तननखलेखेव नववध्वाः।।६९।।**[२]

---

१. **कहँ मे परिणइआले खलसङ्गो होहिइ त्ति चिन्तन्तो।**
**ओणअमुहो ससूओ रुवइ व साली तुसारेण।।६८।।**
[कथं मे परिणतिकाले खलसङ्गो भविष्यतीति चिन्तयन्।
अवनतमुखः सशूको रोदितीव शालिस्तुषारेण।।]

२. **संझाराओत्थइओ दीसइ गअणम्मि पडिवआचन्दो।**
**रत्तदुऊलन्तरिओ थणणहलेहो व्व णववहुए।।६९।।**
[संध्यारागावस्थगितो दृश्यते गगने प्रतिपच्चन्द्रः।
रक्तदुकूलान्तरितः स्तननखलेख इव नववध्वाः।।]

सन्ध्यारागेण किञ्चिदन्तरितः प्रतिपत्तिथेश्चन्द्रः, रक्तदुकूलेनान्तरिता नववध्वाः स्तनगतनखलेखेव गगने दृश्यते। नववधूपदेन लज्जावशात्तस्या गोपनं सूच्यते। 'अभिसारस्थान-गमनाय प्रदोषाभिसारिकां त्वरयन्ती दूती प्रदोषवर्णनमाह' इति गङ्गाधरः।

अर्धचन्द्रावलोकनकुतूहलाद् गगनतलमालोकयन्तं देवरं कापि सपरिहासमाह-

**किमयि न देवर पश्यसि किं वाकाशं मुधा प्रलोकयसि।**
**जायाया भुजमूले परिपाटीमर्धचन्द्राणाम्।।७०।।**[१]

अयि देवर जायाया भुजमूले अर्धचन्द्राणाम् (नखक्षतजनितानाम्) परिपाटीं परम्परां किं न पश्यसीति योजना। वैदग्ध्येन गोपनीयोऽपि ते प्रियतमासमागमः स्फुटमेवं प्रकाशीभवतीति देवरं प्रति परिहासः। स्त्रियाः परिहासे उदाहृता सेयं गाथा सरस्वतीकण्ठाभरणे (५ परि.)।

प्रियतमं प्रति मत्सन्देश्यमेवं वक्तव्यमिति प्रियसमीपगामिनं पान्थं प्रति प्रोषितभर्तृका काचिदाह-

**किं भण्यतां नु वाचा कियदिव वा लिख्यते लेखे।**
**तव विरहे यद्दुःखं त्वमेव तस्यासि विदितार्थः।।७१।।**[२]

दुःखानामसीमत्वात्किं वक्तव्यं कियद्वा लेखितव्यमित्यर्थः। तव विरहे यन्मम दुःखं तस्य विदितार्थः (विदितः अर्थो येन) अर्थात् परिज्ञाता त्वमेवासि। अहर्निशं हृदये स्थितस्त्वमेव मम हृदयदुःखं ज्ञातुं प्रभवसीति भावः। अथवा मद्विरहे त्वया यावद्दुःखमनुभूतं तदनुमानेन ममापि दुःखं त्वया परिज्ञातव्यमित्याशयः। 'ज्ञाता' इत्याद्यनुक्त्वा 'विदितार्थः' इति पदेन 'किमर्थमिदं दुःखमित्येतस्य तत्त्वं त्वमेव जानासि, अर्थात् त्वत्कारणकमिदं दुःखं त्वरितमागतेन त्वयैवापनेयम्' इति द्योत्यते।

---

१. **अइ दिअर किं ण पेच्छसि आआसं किं मुहा पलोएसि।**
**जाआइ बाहुमूलम्मि अद्धअन्दाणँ परिवाडिम्।।७०।।**
[अयि देवर किं न प्रेक्षसे आकाशं किं मुधा प्रलोकयसि।
जायाया बाहुमूलेऽर्धचन्द्राणां परिपाटीम्।।]

२. **वाआइ किं भणिज्जउ केत्तिअमेत्तं व लिक्खए लेहे।**
**तुह विरहे जं दुक्खं तस्स तुमं चेअ गहिअत्थो।।७१।।**
[वाचया किं भण्यतां कियन्मात्रं वा लिख्यते लेखे।
तव विरहे यद्दुःखं तस्य त्वमेव गृहीतार्थः।।]

कस्याश्चित्केशपाशं साभिलाषं निर्वर्णयन्कश्चिद्वयस्यं प्रति प्रकाशं प्राह–

**जनदृष्टेः सम्मोहनपिच्छीमिव धूममिव च मदनाग्नेः।**
**यौवनविजयध्वजमिव वहते मुग्धा सुगन्धिचिकुरभरम्।।७२।।**[१]

लोकानां दृष्टेः सम्मोहनार्थां पिच्छिकामिव। ऐन्द्रजालिकोऽपि पिच्छिकाभ्रमणेन लोकानां दृष्टेर्मोहं करोति। मदनाग्नेर्धूमौपम्येन एतद्धूमसहचारी मदनवह्निर्विरहे दग्धुं प्रभवतीति नायिकाया आकर्षकतातिशयो ध्वन्यते।

यस्मिंस्त्वमनुरक्तासि तस्य ते दयितस्य वर्णय रूपमिति पृच्छन्तीं सखीमन्या काचिदाह–

**तद्रूपमुक्तमेव हि समस्तपुरुषे निवर्तिताक्षेण।**
**वाष्पार्द्रेणैतस्या अजल्पतापि च मुखेन सखि।।७३।।**[२]

हे सखि तदतिरिक्ते अशेषपुरुषे, अशेषपुरुषादिति यावत्। निवर्तिते निरुत्कण्ठतया परावर्तिते अक्षिणी येन। तस्मरणोत्कण्ठया सम्प्रति वाष्पार्द्रेण एतस्या मुखेन अजल्पतापि तस्य रूपमुक्तमेव। अन्यपुरुषनिरपेक्षं तदासक्तत्वात्तस्य परमसौन्दर्य कथितमेवेति भावः। अजल्पतापि कथितमिति विरोधेन 'अस्मत्तो रहस्यगोपनेच्छायामपि प्रेमपारवश्यान्नेयं प्रभवतीत्यनुरागसंवर्धको नायकगुणोत्कर्षो ध्वन्यते।

मनुजागमनसंरम्भेण स्वस्थानत्यागवशाद्विरुवन्मकरन्दमत्तमधुकरतया कमलवन-मेतत्कयोश्चित्सङ्केतस्थानमिति स्वाभिज्ञतां सूचयन् सहृदयः सहचरमाह–

---

१. **मअणग्गिणो व्व धूमं मोहणपिच्छिं व लोअदिट्ठीए।**
**जोव्वणधअं व मुद्धा वहइ सुअन्धं चिउरभारम्।।७२।।**
[मदनाग्नेरिव धूमं मोहनपिच्छिकामिव लोकदृष्टेः।
यौवनध्वजमिव मुग्धा वहति सुगन्धं चिकुरभारम्।।]

२. **रूअं सिट्ठं चिअ से असेसपुरिसे णिअत्तिअच्छेण।**
**वीहोल्लेण इमीए अजम्पमाणेण वि मुहेण।।७३।।**
[रूपं शिष्टमेव तस्याशेषपुरुषे निवर्तिताक्षेण।
वाष्पार्द्रेणास्या अजल्पतापि मुखेन।।]

**विकसदरविन्दमन्दिरमकरन्दानन्दिता मिलिन्दालिः।**

**मधुरमधुमासलक्ष्म्याः कृष्णा मणिमेखलेव शिञ्जाना।।७४।।**[१]

विकसत्तया बृहत् यद् अरविन्दमेव मन्दिरं तत्र मकरन्देनानन्दिता अत एव गुञ्जन्ती भ्रमरपङ्क्तिः। शिञ्जाना झण्झणितिरवमुखरा कृष्णमणिघटितत्वात् कृष्णा मणिमेखलेव भातीति शेषः। भ्रमराणां श्यामतया कृष्णमणीनां मेखलेत्युक्तम्। उद्दीपनविभावप्रतिपादनात्सङ्केतस्थानस्तुतिपरं दूत्या इदं वचनमिति केचित्। 'प्रियेण सह क्रीडारसादविदितनिशावसानां सखीं प्रबोधयन्तीं सखी प्रभातवर्णनमाह' इति गङ्गाधरः। यदीह 'झणझणायते' इत्यादिप्राकृतगुम्फानुरोधस्तर्हि 'कृष्णमणिमेखलेव हि मधुश्रियो झणझणायते नूनम्' इति पाठ्यम्।

कामोत्कलिकाकुलः कोऽपि कामुकः कामपि कामिनीं कथयति–

**बहुपुण्यफलैकतरोः प्ररोह इव कस्य किल करो हन्त।**

**मन्मथनिधानकलशे स्तनपरिणाहेऽत्र विश्रमिष्यति ते।।७५।।**[२]

बहूनां पुण्यफलानामेकमात्रस्य तरोः प्ररोह इव नवपल्लव इव कस्य जनस्य करः मन्मथनिधिकलशायिते तव स्तनपरिणाहे विश्रमिष्यति स्थानं प्राप्स्यति। परिणाहो विशालता। विशालस्तन इति यावत्, प्राकृते पूर्वनिपातानियमात्। पुरुषस्तरुस्थानीयः, तस्य करः प्ररोहस्थानीय इत्याशयः। पल्लवो यथा कस्मिंश्चिद्वृक्षे उत्पद्यापि यथा निधिकलशे शोभाशकुनार्थं स्थाप्यते, तथा कस्य वा सुकृतिनः करोऽत्र स्थास्यतीत्याशयः। कस्येत्यनेन–स पुरुषः अनिर्वचनीयः सुकृतीति सूच्यते। हन्तेत्यनेन–न मे तादृक्सौभाग्यमिति खेदातिशयः सूच्यते। 'निधानकलशे' 'विश्रमिष्यति' इति पदाभ्यां– 'धनान्वेषी करो यथा निधिकलशे गत्वा धनविषयेऽन्यानपेक्षित–

---

१. **रुन्दारविन्दमन्दिरमअरन्दाणन्दिआलिरिञ्छोली।**
**झणझणइ कसणमणिमेहल व्व महुमासलच्छीए।।७४।।**
[बृहदरविन्दमन्दिरमकरन्दानन्दितालिपङ्क्तिः।
झणझणायते कृष्णमणिमेखलेव मधुमासलक्ष्म्याः।।]

२. **कस्स करो बहुपुण्णप्फलेक्कतरुणो तुहं विसम्मिहइ।**
**थणपरिणाहे मम्महणिहाणकलसे व्व पारोहो।।७५।।**
[कस्य करो बहुपुण्यफलैकतरोस्तव विश्रमिष्यति।
स्तनपरिणाहे मन्मथनिधानकलश इव प्ररोहः।।]

त्वात्तत्र सुखं विश्राम्यति, तथा अन्यत्रान्यत्र सञ्चलन्नपि स करो विशालेऽत्र स्तने विश्रामं लप्स्यते नान्यत्र भ्रमिष्यति, एतत्सदृशान्यस्तनानुपलम्भात्' इति तदुत्कर्षो ध्वन्यते। निधानकल-शायित इति स्थाने कलश इत्युक्त्या-कलशसदृशास्तु अन्येऽपि कुहचिल्लभ्येरन् परमयं तु साक्षात्कामनिधानकलश एवेति तदुत्कर्षो व्यज्यते। प्राकृते तच्छायायां च बहुदूरान्वयादस्पष्टतरः श्लोकार्थः। इह तु न स क्लेशः। 'निधानकलश इव स्तनपरिणाहे' इति इवपदं कलशेन साकं तु न योज्यम्, प्ररोहपदस्य तत्सापेक्षत्वादौचित्याच्च। सरस्वतीकण्ठाभरणे 'अनूढा कुमारी यथा' इत्युदाहृता सेयं गाथा। स्तनपरिणाहशालिन्या अपि कुमारीत्वं यौवनविवाहवादिनामनुकूलं स्यात्।

लाभलोभवन्तो विविक्तेऽनुसरन्तोऽपि मनोऽभिलषितां वनितां पतिजनितातङ्कशङ्कया कामुका नाभियुञ्जते नापि च परावर्तन्ते इति प्रदर्शयन्सहृदयः सहचरमाह-

**चोराः सभयस्तृष्णं पुनः पुनः प्रेषयन्ति बत दृष्टीः।**
**प्रौढपतिकास्तनेऽस्मिन्निधिकलश इवाहिरक्षिते सततम्।।७६।।**[१]

परधनहारकाश्चोरा यत्नशतेन गुप्तस्थानमवाप्ता अपि अहिना रक्षिते निधिकलशे यथा सर्पकारणात्सभयां निधिलोभाच्च सतृष्णां दृष्टिं पातयन्ति, तथा परदाहरहारकाश्चोराः प्रौढः शूरः पतिर्यस्या एवंविधाया नायिकायाः स्तने हन्त सभयस्तृष्णां दृष्टिं पातयन्तीत्यर्थः। पुनः पुनः पदेन 'भयमाशङ्क्य दृष्टिं निवर्तयन्ति पुनर्लोभाकृष्टास्ततो दृष्टि नयन्ती'ति चित्तान्दोलनं सूच्यते। 'दृष्टीः' इति बहुत्वेन-निभृतं प्रकाशं तिर्यगादिनानाप्रकाराः सतृष्णदर्शनस्य सूच्यन्ते। पश्यन्तीति स्थाने 'दृष्टिं प्रेषयन्ति' इत्युक्त्या-इच्छा तु हस्तप्रेषणस्यैवासीत्, परं भयवशात्सतृष्णां दृष्टिमेव पारवश्यात्प्रेषयन्तीति लौल्यातिशयो ध्वन्यते। अहिदृष्टान्तेन-अहिर्यथा निधेरुपयोगमकुर्वन् केवलं तदुपरि रक्षावहितस्तिष्ठति तथा 'पातीति पतिरिति' केवलं तद्रक्षामात्रव्यग्रः शूरतया बलापचयशङ्कया स्वयं भोगादिकं न करोतीति ध्वन्यते। सततमित्यनेनसर्पो यथा निरन्तरं तत्रावतिष्ठते तथायमपि स्वल्पमप्यवसरं न ददातीति ध्वन्यते। अस्मिन्निति साभिलषमङ्गुलिनिर्देशेन स्वस्याप्याकाांि सूचनात्स्तनस्याकर्षकतातिशयो व्यज्यते। 'यो यच्छीलः स सापायादपि तस्मान्मनो निवर्तयितुं न शक्नोतीति निदर्शयन्नागरिकः सहचरमाह' इति गङ्गाधरः। भयानुराग-भावयोः सङ्करसत्तायामपि उपमालङ्कारस्यैव प्राधान्यमिति विषये सेयमुदाहृता सरस्वतीकण्ठाभरणे (५ परि.)।

---

१. **चोरा सभअसतह्णं पुणो पुणो पेसअन्ति दिट्ठीओ।**
**अहिरक्खिअणिहिकलसे व्व पोढवइआथणुच्छङ्गे।।७६।।**
[चोराः सभयसतृष्णं पुनः पुनः प्रेषयन्ति दृष्टीः।
अहिरक्षितनिधिकलश इव प्रौढपतिकास्तनोत्सङ्गे।।]

विदेशं जिगमिषन्तं कान्तं प्रावृड्वर्णनच्छलेन ततो निवर्तयन्ती काचिदाह–

**अङ्गानि नवतृणाङ्कुररोमाञ्चविमण्डितानि संवहते।**
**प्रावृड्लक्ष्म्याः पीवरपयोधरप्रेरितो विन्ध्यः।।७७।।[१]**

नवतृणाङ्कुरा एव रोमाञ्चस्तेन मण्डितानि। पीवरैर्महद्भिः पयोधरैर्मधैः प्रेरित उत्तेजितः। अन्योऽपि कामुको गृहलक्ष्म्याः पीवरपयोधराभ्यां परिस्पृष्टो रोमाञ्चमावहतीति पयोधरपद-सांनिध्याद्ध्वन्यते। अत एव 'पयोधरैः प्रेरितः' इति व्यस्तबहुवचनान्तमनुक्त्वा समस्तं प्रायुज्यतेति सहृदयैस्तारतम्यं परीक्ष्येत। रोमाञ्चयुक्तानीति वक्तव्ये रोमाञ्चविमण्डितानीत्युक्त्या–तस्मिन्समये रसिकानां तदेव सर्वमण्डनेभ्योऽतिशयितं मण्डनमिति तदुत्कर्षः सूच्यते। तथा च 'अस्मिन्समये अचेतनो विध्योऽपि रसिकचर्यामनुरुन्धे, तर्हि रसिकमानी भवानेव किं वर्षासु विलासविमुखो भविष्यति' इति प्रवासप्रतिषेधश्चरमं व्यङ्ग्यम्। भोजस्तु विन्ध्यगतमेव रतिभावं मन्वानः 'गौणेषु सेयं रतिरिति' रसाभासविषये इमामुदाजहार (५ परि.)।

कोऽपि प्रियसुहृदं प्रति प्रियतमायाः प्रशंसामपरापदेशेनाह–

**आम् बहला विपिनाली मुखरा जलरङ्कवो जलं शिशिरम्।**
**अन्यनदीनामपि पुनरन्ये केचन गुणास्तु रेवायाः।।७८।।[१]**

आम् इति स्वीकारे। अन्यासां नदीनामपि–पर्यन्तविस्तृता वनपङ्क्तिर्निबिडा, जलपक्षिणो मधुरशब्दकराः, जलं शीतमस्ति, इति स्वीकुर्मः परं रेवाया गाम्भीर्यादयः केचन गुणाः पुनरन्ये एव इतरनदीविलक्षणा एव। अत्रार्थशक्तिसमुत्थेनानुरणनेन– 'अन्यासां महिलानामपि पर्यन्ततोऽङ्ग-विधृता शाटीप्रभृतिवसनसामग्री' विपुला, (मुखरजलरङ्कुपदेन सूचिताः) नूपुरादयोऽपि मनोह-

---

१. **उव्वहइ णवतणङ्कुररोमञ्चपसाहिआइँ अङ्गाइं।**
**पाउसलच्छीअ पओहरेहिँ परिपेल्लिओ विज्झो।।७७।।**
[उद्वहति नवतृणाङ्कुररोमाञ्चप्रसाधितान्यङ्गानि।
प्रावृड्लक्ष्म्याः पयोधरैः परिप्रेरितो विन्ध्यः।।]

२. **आम बहला वणाली मुहला जलरङ्कुणो जलं सिसिरं।**
**अण्णणईणँ वि रेवाइ तह वि अण्णे गुणा के वि।।७८।।**
[सत्यं बहला वनाली मुखरा जलरङ्कवो जलं शिशिरम्।
अन्यनदीनामपि रेवायास्तथाप्यन्ये गुणाः केऽपि।।]

रणाय सशब्दाः, अङ्गस्पर्शसुखमपि सुतरां निर्वापकमस्ति, तथापि तस्या नायिकायाः सौभाग्यादयो गुणा अन्यनायिकाविलक्षणा एवेति ध्वन्यमानोऽर्थः प्रतीयते। नायकप्ररोचनाय दूत्याः सेयमुक्तिरिति केचित्।

कोऽपि कामुकः कस्याश्चित्कुचौ साकामिंाकलयन्कमपि सुहृदं कथयति–

**परिणतमालूरसमावागच्छत पश्यत स्तनावस्याः।**

**उत्तुङ्गौ हृदयेऽपि च सत्पुरुषमनोरथाविवामान्तौ।।७९।।**[१]

पक्वतया पूर्णपरिणाहेन मालूरेण (बिल्वेन) सदृशौ। हृदये वक्षसि विशालतया अमान्तौ। पुण्यवतां मनोरथा अपि उन्नताः, हृदये चेतसि च न मान्ति, किन्तु बहिः प्रकटीभूय कार्यरूपे परिणमन्ति। किंवा–सत्पुरुषाणामकल्मषतया तेषां मनोरथाः सुहृत्सु प्रकटीभवन्ति। दुर्जनानां तु विचाराश्छद्मघटिततया हृदय एव गुप्ता भवन्ति। प्राकृते द्विवचनबहुवचनयोरैक्यादुभयत्र वचनसाम्यम्। अत एव वचनभेदनिबन्धन उपमादोषो नात्रेति बोध्यम। संस्कृते तूपमेययोः स्तनयोरनुरोधेन उपमाने मनोरथेऽपि द्वित्वमावश्यकमापतितम्। उपलक्षणं चेदं बहुवचनस्य। आगच्छत पश्यतेत्युक्तिरवसरोऽयमिति सूचनाय। हृदये अमानस्योक्त्या 'सुतरामवरुद्धोऽपि ममैतद्ग्रहणविषयो मनोरथः साम्प्रतं विवशतया स्फुटीभावोन्मुखः' इति सूच्यते।

वर्षासु विरहवेदनामधिकतमामासूचयन्ती कापि कान्तानयनत्वरार्थं सखीमाह–

**अहमहमिकया हस्ताहस्ति च वर्षागमेऽद्य किल मेघैः।**

**हंहो किमपि रहस्यं नभोऽङ्गणं छन्नमपि गलति।।८०।।**[२]

---

१. **एह इमीअ णिअच्छह परिणअमालूरसच्छहे थणए।**
**तुङ्गे सप्पुरिसमणोरहे व्व हिअए अमाअन्ते।।७९।।**
[आगच्छतास्या निरीक्षध्वं परिणतमालूरसदृशौ स्तनौ।
तुङ्गौ सत्पुरुषमनोरथाविव हृदये अमान्तौ।।]

२. **हत्थाहत्थिं अहमहमिआइ वासागमम्मि मेहेहिम्।**
**अव्वो किं पि रहस्सं छण्णं पि णहङ्गणं गलइ।।८०।।**
[हस्ताहस्ति अहमहमिकया वर्षागमे मेघैः।
आश्चर्यं किमपि रहस्यं छन्नमपि नभोऽङ्गणं गलति।।]

अहं पूर्वमहं पूर्वमिति स्पर्द्धया, हस्तेन हस्तेन च प्रगृह्य, परस्परं मिलितैरित्यर्थः। मेघैश्छन्नमपि नभोऽङ्गणं गलति पतति। यद्धि मेघैर्व्याप्तं तत्कथङ्कारं गलति, अत एव हंहो इत्याश्चर्ये, यदिदं किमपि रहस्यम्। 'गिलति' इति पाठे मेघैः स्थगितमपि विरहिणीं मां गिलितुमिव नभो धावतीत्यर्थः स्यात्।

बहुनारीणां वल्लभतया सुभगायितस्य दयितस्य अन्यनारीप्रवृत्तिं किमिति न वारयसीति वदन्तीं सखीं प्रति काचिदाह–

**सौभाग्यं दयितस्य भ्रमतो भविता कियन्मात्रम्।**

**महिलास्मरक्षुधाकुलकटाक्षविक्षेपगृह्यमाणं हि।।८१।।**[१]

भ्रमतः अन्यनारीषु भ्रमणशीलस्य दयितस्य। महिलानां मदनलक्षणया क्षुधया आकुलेन कटाक्षविक्षेपेण गृह्यमाणं विवशीक्रियमाणं सौभाग्यं कियन्मात्रं भविता भविष्यति। महिला एतस्मिन् मदनक्षुधाकुलतयैवाऽऽसज्यन्ति न सत्यप्रेम्णा। अयमपि च तथा भवन्नेव तद्वशो जातः। एवंस्थितौ मदनलक्षणक्षुदुत्कण्ठाशान्तौ ताः कियदासक्ता भवेयुः? कियन्मात्रं चास्य सौभाग्यं स्यात्? अस्थायि सर्वमिदमित्यर्थः। सर्वमेतदनुभूय स्वयमस्य मत्प्रणयपरिचयो भवेदिति भावः। 'कटाक्षध्वस्तधैर्यस्य खत एवास्य चाञ्चल्यं यास्यति। किमस्य प्रियाचरणेन' इति गङ्गाधरः। अस्पष्टमिवेदम्। ध्वस्तधैर्य एव चञ्चलो भवतीति अधैर्यस्य चाञ्चल्यापगमः कथम्।

सर्वदा परगृहेषु निलीय परनारीविलासलम्पटं निजदयितं रात्रिशेषे कुक्कुटरुतेन प्रतिबुध्य प्रतिदिनाभ्यासवशात्परवसतिशङ्कया पलायनेच्छुं काचिदाह–

**निजगृहिणीमुपगूहेर्झटिति प्रतिबुद्ध कुक्कुटरुतेन।**

**परवसतिवासशङ्किन्निजकेऽपि गृहेऽत्र मा भैषीः।।८२।।**[२]

---

१. **केत्तिअमेत्तं होहिइ सोहग्गं पिअअमस्स भमिरस्स।**
**महिलामअणछुहाउलकडक्खविक्खेवघेप्पन्तम्।।८१।।**
[कियन्मात्रं भविष्यति सौभाग्यं प्रियतमस्य भ्रमणशीलस्य।
महिलामदनक्षुधाकुलकटाक्षविक्षेपगृह्यमाणम्।।]

२. **णिअधणिअं उवऊहसु कुक्कुडसद्देन झत्ति पडिबुद्ध।**
**परवसइवाससङ्किर णिअए वि घरम्मि मा भासु।।८२।।**
[निजगृहिणीमुपगूहस्व कुक्कुटशब्देन झटिति प्रतिबुद्ध।
परवसतिवासशङ्किन्निजकेऽपि गृहे मा भैषीः।।]

उपगूहेः परिरभस्व। प्रार्थनायां लिङ्। परवसतौ परगृहे यो वासः अवस्थानं तच्छङ्किन्! मूल 'धणिआ' शब्दः स्वभार्यावाचको देशी। गृहिण्या अपि स्वमुखेन 'गृहिणीमुपगूहेः' इति कथनेन– 'प्रतिदिनाभ्यासवशात्त्वं सर्वत्र परनारीमेव विलोकयसि, किं त्वहं न तथा। पश्य माम्' इति प्रियवैलक्ष्यापादनं ध्वन्यते। किंवा गृहिणीपदेनत्वत्प्रतीक्षया शून्यगृहोषितां त्वद्गृहाधिकारिणीमपि त्वं सर्वदाऽवीहेलयसीत्युपालम्भो ध्वन्यते। 'उपगूहेः' इत्युक्त्या–प्रतिदिना–भ्यासवशात्तव दृष्टौ सर्वदा परनार्येव वसति। अत एव दर्शनं विहाय उपगूहनेन मामभिजानीहीति दयितविलक्षीकरणं व्यज्यते।

प्रवासं गच्छतो दयितस्य गमननिरोधार्थं कापि दुःशकुनं वा जलदकालस्य विरहिदुःसहत्वं वा सूचयितुं निजसखीमाह–

**खरमारुतगलहस्तितगिरिकूटापतनभिन्नदेहस्य।**
**कालजलदस्य पश्यत जीव इव हि धुकधुकायते विद्युत्।।८३।।**[१]

खरमारुतेन प्रचण्डपवनेन वेगाद् गलहस्तितः गलहस्तं प्रदाय प्रेरितः, अत एव गिरिकूटादू गिरिशृङ्गात् आपतनेन भिन्नदेहो विशीर्णगात्रो यः कालमेघस्तस्य जीव इव जीवितमिव (प्राणा इव) विद्युत् धुकधुकायते धुकधुकशब्दपूर्वकं कम्पते इत्यर्थः। अत्युच्चस्थानात्पतितस्य विशीर्णदेहस्य जनस्य यथा हृदये कम्पो भवति तथायं विद्युत्कम्प इत्याशयः। कालः श्यामः। पक्षान्तरे च यात्रासमये अकीर्तनीयनामा मृत्युः। तथा चैतन्नामग्रहणेन गिरिपतन–देहविशरणादि–चर्चाऽमङ्गलेन च यात्रायाः प्रतिरोधाकूतं ध्वन्यते। अथवा 'यदि वर्षासु विरहं मे आपादयसि तर्हि ममापीयं दशा भाविनी' इति दयितं प्रति व्यज्यते। धुकधुकायते इत्यनुकरणनिष्पन्नो नामधातुः। 'दुर्दिनाभिसारिका कान्तमन्यमनस्कं कर्तुमाह' इति गङ्गाधरः।

अपरयापि गाथया तत्संवादिनमेवार्थमाह–

**मेघमहिषस्य मन्ये ह्युदरे सुरचापकोटिभिन्नस्य।**
**अन्त्रमिव लम्बतेऽसौ सवेदनं क्रन्दतो विद्युत्।।८४।।**[१]

---

१. **खरपवणरअगलत्थिअगिरिऊडावडणभिण्णदेहस्स।**
**धुक्काधुक्कइ जीअं व विज्जुआ कालमेहस्स।।८३।।**
[खरपवनरयगलहस्तितगिरिकूटापतनभिन्नदेहस्य।
धुकधुकायते जीव इव विद्युत्कालमेघस्य।।]

२. **मेहमहिसस्स णज्जइ उअरे सुरचावकोडिभिण्णस्स।**
**कन्दन्तस्स सविअणं अन्तं व पलम्बए विज्जू।।८४।।**
[मेघमहिषस्य ज्ञायते उदरे सुरचापकोटिभिन्नस्य।
क्रन्दतः सवेदनमन्त्रमिव प्रलम्बते विद्युत्।।]

सुरचापस्य (इन्द्रधनुषः) काट्या तीक्ष्णकोणाग्रेण उदरे भिन्नस्य पाटितस्य अत एव सवेदनं क्रन्दतो मेघरूपमहिषस्य पाटनाद्बहिर्निर्गतम् अन्त्रमिव सेयं विद्युल्लम्बते इति मन्ये। मूले तु 'अन्त्रमिव लम्बते' इति ज्ञायते प्रतीयते इत्यर्थः। इन्द्रधनुषः सविधे गर्जितं कुर्वति श्यामे मेघे मध्यगता विद्युत्तथा प्रतीयते यथा धनुष्कोट्या पाटितस्य अत एव वेदनावशादार्तनादं मुञ्चतो महिषस्योदरे अन्त्रं लम्बते इत्याशयः।

प्रवासार्थमुद्यताय दयिताय वसन्तस्य विरहिदुरन्ततां द्योतयन्ती काचित्तदुपक्रमं सूचयति-

**नवपल्लवं विषण्णाः पथिकाः पश्यन्ति चूतवृक्षस्य।**
**लोहितसमूहराजितमुद्यत्कामस्य हस्तभल्लमिव।।८५।।**[१]

उद्यतः विरहिनिपीडनाय साम्प्रतमुज्जृम्भमाणस्य कामस्य लोहितसमूहराजितं रक्तभराक्तं हस्तविधृतं कुन्तमिव पश्यन्ति। भल्लाग्रे हस्तपदप्रयोगेण 'स भल्लः कामेन साम्प्रतं हस्ते धृतः' इति भल्लस्य भेदनकार्यव्यापृतता ध्वन्यते। लोहितसमूहेन लिप्तं युक्तमित्याद्यनुक्त्वा 'राजितम्' इति कथनेन कामभल्लस्य लोहितलिप्तता शोभेति विरहिवर्गार्थं क्रूरतातिशयो ध्वन्यते। विषण्णाः विषादं प्राप्तवन्तः पश्यन्तीत्यत्र भूतकालिकेन क्तेन सह वर्तमानकालिकस्य लटः सम्बन्धात् 'विरहिभीषकश्चूतपल्लवः पश्चाद्दृष्टौ पतति विषादस्तु ततः पूर्वमेवारब्धो भवतीत्यतिशयितविषादद्योतिका अतिशयोक्तिः सूच्यते। ततश्च-पथिकतां स्वीकुर्वतस्तवापि सेयं दशाऽनुपदभाविनीति प्रियतमं प्रति व्यज्यते। 'उप्पङ्ग' शब्दः समूहवाचको देशी।

विदेशगमनान्नायकं निवारयन्ती काचिन्निपुणनितम्बिनी निजसखीमाह-

**दोषोऽयं महिलानां यद्धि प्रवसन्ति गर्विताः पुरुषाः।**
**विरहान्तो नहि तावद्द्वित्रा यावन्म्रियन्ते नो।।८६।।**[२]

---

१. **णवपल्लवं विसण्णा पहिआ पेच्छन्ति चूअरुक्खस्स।**
**कामस्स लोहिउप्पङ्गराइअं हत्थभल्लं व।।८५।।**
[नवपल्लवं विषण्णाः पथिकाः पश्यन्ति चूतवृक्षस्य।
कामस्य लोहितसमूहराजितं हस्तभल्लमिव।।]

२. **महिलाणं चिअ दोसो जेण पवासम्मि गव्विआ पुरिसा।**
**दोतिण्णि जाव ण मरन्ति ता ण विरहा समप्पन्ति।।८६।।**
[महिलानामेव दोषो येन प्रवासे गर्विताः पुरुषाः।
द्वे तिस्र यावन्न म्रियन्ते तावन्न विरहाः समाप्यन्ते।।]

द्वित्राः द्वे तिस्त्र वा प्रोषितपतिका यावन्न म्रियन्ते तावद्विरहान्तो विरहसमाप्तिर्नेत्यर्थः। प्रियामरणं विलोक्यैव एते प्रवासं त्यक्ष्यन्तीति भावः। 'महिला' 'पुरुष'पदोपादानेन 'मह्यन्ते तस्मान्महिलाः' इति विनय-सहनशीलतादिगुणभाजनतया आत्मनःपूजनीयतागुणं रक्षन्त्यः स्त्रियः 'पुर' अग्रगमने इति धातुनिष्पन्नान् अत एव अग्रगामितागर्वेण अवलिप्तान्पुरुषान् शालीनतया ताः सहन्ते इति पुरुषान्प्रत्युपालम्भो ध्वन्यते। 'यावन्न मरिष्यन्ति तावद्विरहा न समाप्यन्ते' इति भविष्यत्स्थाने 'म्रियन्ते' इति वर्तमानोक्त्यातव विरहे मम मरणमदूरभावि विचारयेति ध्वन्यते।

नायिकासविधमुपगन्तुं नायकं त्वरयन्ती दूती आह-

**व्रज लघु बाल म्रियते वराकिकाऽलं विलम्बेन।**
**निःसन्देहं तव सा जीविष्यति दर्शनेनापि।।८७।।**[१]

'देः' शब्दः सानुनयसम्बोधने। तस्याः प्रेमपरिपाकानभिज्ञत्वाद् हे बालक! लघु शीघ्रं व्रज। त्वया परित्यक्तत्वात् शोचनीयतया वराकिका दीना सा म्रियते। 'क' प्रत्ययेन 'मरणसमयेऽपि न तां दयनीयां प्रत्यवेक्षसे' इति कारुण्यातिशयो ध्वन्यते। तवेत्यनेन 'अन्येषां पुनः पीयूषाद्यौषधप्रदानेनापि न जीविष्यति' इति सूच्यते। दर्शनेनापीत्यपिना-आलिङ्गनचुम्बना-धरपानादीनां तु किं वक्तव्यमिति सूच्यते। 'म्रियते' इति वर्तमानत्वोक्त्या- 'त्वदानयनार्थमि-हागमनसमये सा जीविताभूदिदानीमियता विलम्बेन सा म्रियमाणास्ति' इति व्यज्यते। 'मम तत्स्थानप्राप्तेः पूर्वमेव मृतायां तस्यां किं फलं गमनेनेति' चेद्धृदये सन्दिह्यसे, तदर्थमाह-जीविष्यतीति। यदि मृतापि भवेत्तदापि सा जीविष्यति, किं पुनर्म्रियमाणेति भावः।

विनाशकारणमपि मुग्धतया त्वं सुखहेतुं मन्यसे इत्यन्यापदेशेन कोऽपि निजसहचरं शिक्षयति-

**आताम्रविसरदनलज्वालावलिदीपिते वनाभोगे।**
**किंशुकवनमिति मत्वा निश्क्रामति मुग्धहरिणो न।।८८।।**[१]

---

१. **बालअ दे वच्च लहुं मरइ वराई अलं विलम्बेण।**
**सा तुज्झ दंसणेण वि जीवेज्जइ णत्थि संदेहो।।८७।।**
[बालक हे व्रज लघु म्रियते वराकी अलं विलम्बेन।
सा तव दर्शनेनापि जीविष्यति नास्ति सन्देहः।।]

२. **तम्मिरपसरिअहुअवहजालालिपलीविए वणाहोए।**
**किंसुअवणन्ति कलिऊण मुद्धहरिणो ण णिक्कमइ।।८८।।**
[ताम्रवर्णप्रसृतहुतवहज्वालावलिप्रदीपिते वनाभोगे।
किंशुकवनमिति कलयित्वा मुग्धहरिणो न निष्क्रामति।।]

आताम्रा प्रसरन्ती या अनलज्वालावलिः (वह्निशिखाश्रेणिः) तया दीपिते प्रज्वलिते वनप्रान्तरे। अतिताम्राभिर्वह्निशिखाभिर्व्याप्तं वनं रक्तवर्णैः किंशुकवृक्षैर्वलयितमिति मत्वा मुग्धतया हरिणो वनाद्बहिर्न गच्छतीति भावः। तथा चात्र स्वतःसम्भविना भ्रान्तिमदलङ्कारेण 'परललनाल-म्पटस्त्वमन्तःकोपकषायितैरपि बहिः प्रियदर्शनैर्जनैः परिवृते त्वत्प्रेयसीसदने अनिष्टहेतुमपि तत्सन्सर्गं सुधासदृशं मन्यमानो मोहमुग्धतया न तदावासं परित्यजसि' इति वस्तु व्यज्यते।

शृण्वन्तमुपपतिं प्रति काचिदात्मनः कामकलाकौशलं ख्यापयितुमन्तरङ्गसखीमाह–

**शारिकया गुरुपुरतो निधुवनशिल्पं तथा किलोल्लपितम्।**
**तां वेलामयि मातर्यथा व्रजामः कुतो न जानीमः।।८९।।**[१]

निधुवनशिल्पं सुरतवैचित्र्यम्। गुरुजनानां पुरतः अग्रतः। उल्लपितम् अर्थमपरिज्ञायापि यथा दृष्टं श्रुतं वा तथा जल्पितमित्यर्थः। अयि मातः तां वेलां तस्यां वेलायाम्। व्रीडावशात्कुत्र व्रजाम इति यथा न जानीमः। ह्रीणमात्मानं निह्नोतुं कस्मिन्स्थाने गच्छाम इत्यपि लज्जावशान्न स्फुरितमभूदित्याशयः। तां वेलामित्यत्यन्तसंयोगे द्वितीया। अयि मातरिति लोकशैलीसिद्धमान्तरिकानुतापसूचकं सम्बोधनम्।

विकासोन्मुखयौवनायां बालायामनुरक्तचित्तं दयितं काचिदन्यापदेशेनाह–

**प्रत्यग्रोत्फुल्लदलोल्लसन्मरन्दाधिपानसंलुब्धः ।**
**भ्रमरो वाञ्छति कर्तुं यन्न हि तन्नास्ति कुन्दकलिकायाः।।९०।।**[२]

प्रत्यग्रमुत्फुल्लानि दलानि यस्याः सा प्रत्यग्रोत्फुल्लदला, एवंविधायाः कुन्दकलि-कायाः उल्लसन्मकरन्दस्य अधिकं यथा तथा पाने लुब्धो भ्रमरो यत्कर्तुं न वाञ्छति तन्नास्ति। तां परितो भ्रमणं चाटूनि चुम्बनादीनि च सर्वं कर्तुमिच्छतीत्यर्थः। भ्रमरपदेन 'कलिकायां साम्प्रतं मधुजननाभावात्केवलं भविष्यदाशया साभिलाषं भ्रमणमेव करोति' इति सूच्यते। तेन

---

१. **णिहुअणसिप्पं तह सारिआए उल्लाविअं म्ह गुरुपुरओ।**
**जह तं वेलं माए ण आणिमो कत्थ वच्चामो।।८९।।**
[निधुवनशिल्पं तथा शारिकयोल्लपितमस्माकं गुरुपुरतः।
यथा तां वेलां मातर्न जानीमः कुत्र व्रजामः।।]

२. **पच्चग्गप्फुल्लदलुल्लसन्तमअरन्दपाणलेहलओ।**
**तं णत्थि कुन्दकलिआइ जं ण भमरो महइ काउम्।।९०।।**
[प्रत्यग्रोत्फुल्लदलोल्लसन्मकरन्दपानलुब्धः।
तन्नास्ति कुन्दकलिकाया यन्न भ्रमरो वाञ्छति कर्तुम्।।]

च 'नवयौवनविलासेनोपचिताङ्ग्या एतस्या बालाया भाविनि समागमसुखे बद्धाशस्त्वं साम्प्रतं तस्याः समन्ताद् भ्रमणं करोषि, परिज्ञातं मया ते मनोरहस्यम्' इति प्रियं प्रत्याकूतमभिव्यज्यते। अस्फुटयौवनायामप्येतस्यां त्वं तथा मुग्धोऽसि यत्सांप्रतमेव सर्वमात्ममनोरथं पूरयितुमुत्कण्ठसे। केवलमस्मदादिसङ्कोचादेव संयत इवासीति दयितं प्रति गूढोपालम्भश्चरमं व्यङ्ग्यम्।

नवोद्गतयौवनायां सपत्न्यां सम्प्रति कामिजनलक्ष्यता जातेति सेर्ष्योपालम्भं दयिताय सूचयितुं काचिदन्यापदेशेन मातुलीं लक्ष्यीकृत्याह–

**स हि कोऽपि गुणातिशयो मातुलि जाने न कुन्दलतिकायाः।**
**दृग्भ्यामेव निपातुं भ्रमरैरभिलष्यते येन।।९१।।**[1]

एतस्यां क एतादृशो गुणोऽस्ति येन परितः सुरक्षिततया सविधोपसरणानवसरात्केवलं नयनाभ्यामेव रसिककामुकैरियमभिवीक्ष्यते। तथा च 'सेयं बहुकामुकानामधुनैव लक्ष्यभूता जाता, अग्रे तु न जाने किं भावि' इति नायकं प्रति भ्रमरैरिति बहुवचनेन ईर्ष्याबीजं निभृतमुपक्षिप्यते। अथवा– 'अहं तु तादृशं गुणमस्या न जाने, तथापि त्वमहर्निशमेनामनवसरे केवलं नयनाभ्यामेव विलोकयसि। कोऽयमस्थाने संरम्भः' इति सपत्नीप्रणयिनं दयितं प्रत्युपालम्भो व्यज्यते। किंवा–नवोद्गतयौवनायाः कस्याश्चित्सौभाग्यं सूचयितुमियमन्यापदेशेनोक्तिः। तथा च– 'लतिका' इति कप्रत्ययेन कैशोर्यारम्भसम्भिन्नायामस्यां बालायां स कोऽप्यनिर्वचनीयो गुणोत्कर्षोऽस्ति यद्वशेन रसिकैर–वशतया केवलं दृग्भ्यामेव साभिलाषातिशयमीक्ष्यते, ईक्षणस्याप्यलाभे ईक्षितुमिष्यते वा। अर्थात् एतस्या आलोकनमात्रेऽपि रसिकानां तादृशी उत्कण्ठेति। 'इयं निपातुमिष्यते' इत्यनेन 'अन्यासां लतानां पुष्पं मुखद्वारा पीयते। इयं तु लतैव अक्षिद्वारा पीयते' इत्यन्यापेक्षयोत्कर्षो ध्वन्यते।

नायकमुत्कण्ठयन्ती दूती कस्याश्चित्सौन्दर्यातिशयमाह–

**एकैव हि रूपगुणं ग्रामणिदुहिता समुद्वहति।**
**अनिमिषनयनः सकलो यया हि देवीकृतो ग्रामः।।९२।।**[2]

---

१. **सो को वि गुणाइसओ ण आणिमो मामि कुन्दलइआए।**
**अच्छीहिं च्चिअ पाउं अहिलस्सइ जेण भमरेहिं।।९१।।**
[स कोऽपि गुणातिशयो न जानीमो मातुलानि कुन्दलतिकायाः।
अक्षिभ्यामेव पातुमभिलष्यते येन भ्रमरैः।।]

२. **एक्क च्चिअ रूअगुणं गामणिधूआ समुव्वहइ।**
**अणिमिसणअणो सअलो जीए देवीकओ गामो।।९२।।**
[एकैव रूपगुणं ग्रामणीदुहिता समुद्वहति।
अनिमिषनयनः सकलो यया देवीकृतो ग्रामः।।]

एका सैव ग्रामनायकस्य दुहिता तादृशं सौरूप्यगुणं धारयति यया अनिमिषनयनतया सकलोऽपि ग्रामो देवत्वं नीतः। न निमिषतीत्यनिमिषम्, अनिमिषं नयनं यस्य सः। रूपकौतु-कोल्लग्रचित्ततया सकलोऽपि ग्रामस्थो जनस्तां तथा पश्यति यथा न कस्यापि नयनयोर्निमेषोऽपि भवतीति भावः। सकल इति पदेन- 'सिद्धो वा अमरो वा एकस्य द्वयोर्वा स्वमाहात्म्येन देवत्वं कुर्यात्, इयं तु सकलस्य ग्रामजनस्य' इत्युत्कर्षो ध्वन्यते। एकैवेत्येवकारेण 'सा अद्वितीया रूपवती, ततश्च त्वरितमेव तत्प्राप्तये यतस्व' इति नायकप्रलोभनं ध्वन्यते।

चाटूक्तिभिः प्रियतमां प्रसादयन्कश्चिदधरपानलालसां सवैदग्ध्यमाह-

**आस्वाद एव मन्ये न प्राप्तः प्रियतमाधररसस्य।**
**हन्त समुद्धृतममृतं त्रिदशै रत्नाकराद्येन।।९३।।**[1]

'रत्नाकर' पदेन-रत्नानि यस्मादाविर्भूतानि तस्मात्सागरात् त्रिदशैः (यौवनमात्रदशाजुष्टैः सदा युवभिः) देवैरुद्धृतममृतमपि तदग्रे वृथेत्युत्कर्षो ध्वन्यते। 'हन्त' पदेन- 'अमृतोद्धरण-क्लेशस्तेषामस्थाने' इति तान् प्रति खेदो ध्वन्यते। एवेत्यनेन-यद्यास्वादः प्राप्तोऽभविष्यत्तर्हि अमृतोद्धरणक्लेशं नाकरिष्यन्निति सूच्यते। अथवा 'एव' इति अपेरर्थे। ईषत्स्वादोऽपि न प्राप्त इत्यर्थः।

पूर्वमतिदर्शितप्रणयं पश्चाच्चन्यासक्ततया दुर्लभदर्शनं नायकं निभृतमुपालब्धुं स्वप्रणयातिशयं सूचयन्ती काचिदन्यापदेशेनाह-

**आकर्णाकृष्टनिशितभल्लकमर्माहतहरिण्या।**
**भविता ह्यदर्शनः प्रिय इति नु वलित्वा चिरं दृष्टः।।९४।।**[2]

आकर्णमाकृष्टेन निशितेन भल्लकेन (बाणविशेषेण) मर्मणि आहतया हरिण्या। प्रियः अगे अदर्शनः (न विद्यते दर्शनं यस्य। दर्शनागोचरः) भविता भविष्यति इति कृत्वा।

---

१. **मण्णे आसाओ च्चिअ ण पाविओ पिअअमाहररसस्स।**
**तिअसेहिँ जेण रअणाअराहि अमअं समुद्धरिअम्।।९३।।**
[मन्ये आस्वाद एव न प्राप्तः प्रियतमाधररसस्य।
त्रिदशैर्येन रत्नाकरादमृतं समुद्धृतम्।।]

२. **आअण्णाअड्ढिअणिसिअभल्लमम्माहआइ हरिणीए।**
**अद्दंसणो पिओ होहिइ त्ति वलिउं चिरं दिट्ठो।।९४।।**
[आकर्णाकृष्टनिशितभल्लमर्माहतया हरिण्या।
अदर्शनः प्रियो भविष्यतीति वलित्वा चिरं दृष्टः।।]

वलित्वा कन्धरां परावर्त्य लालसोत्कण्ठाभ्यां चिर दृष्टः। बाणविद्धा मरणोन्मुखापि प्रियप्रणयं न व्यस्मार्षीदिति भावः। भवितेत्यनद्यतनार्थकभविष्यता 'अद्य यद्यपि दृग्गोचरोऽस्ति तथापि इतोऽग्रे अदर्शनो भविष्यति' इति विषादातिशयः सूच्यते। वलित्वेत्यनेन- 'मृत्युकष्टपतितयापि सम्मुखत्वाभावेऽपि यत्नपूर्वकमपि प्रियो दृष्टः' इति प्रणयातिशयो व्यज्यते। हरिण्येत्यनेन-तिर्यग्योनिगतानामपि स्त्रीणां पश्य प्रणयमिति शृण्वन्तं नायकं प्रति योषितां पुरुषातिशायीं प्रणयोऽभिव्यज्यते। तथा च- 'दुर्वचनविशिखैर्मर्माहताप्यहं यत्नशतैर्दर्शनार्थमुत्कण्ठिता त्वत्प्रणयमेवमनुपालयामि। भवान्स्तु तथा निर्मोहो यद्दर्शनमात्रमपि न ददाति' इत्युपालम्भसम्भृतं चरमं व्यङ्ग्यम्। 'प्राणात्ययहेतुरपि न तथा व्यथयति यथा प्रियविरह इत्यन्यापदेशेन स्नेहशिक्षार्थं कोऽपि प्रियमाह' इति गङ्गाधरः।

गाथारत्नकोषनिर्मातुः सातवाहननरेन्द्रस्य शौर्यं कीर्तयितुमेकां गाथामाह तत्स्तोता कविः-

**विषमस्थितपक्वैकाम्रदर्शने ते तु शत्रुगेहिन्या।**
**पथिकानां कः को वा न वाऽर्थितो रुदति डिम्भे हि।।९५।।**[१]

विषमे ग्रहणार्थमारोहणादिनातिदुर्गमे लघुतमविटपाग्रे स्थितस्य पक्वस्यैकस्याम्रफलस्य दर्शने सति। तत्प्राप्त्यर्थं क्षुधिते डिम्भे बालके रुदति सति पथिकानां मध्ये को वा को वा न प्रार्थितः, अपि तु सर्व एव प्रार्थितः। 'एक' पदेन-एकमाम्रफलमपि सुतरां दुर्लभमभूदिति शत्रुदुर्दशया राजशौर्योत्कर्षो ध्वन्यते। 'डिम्भ' पदेन-बालस्य स्वल्पवयस्कतया हठबाहुल्यं क्षुधातुरत्वं च सूच्यते। कः को वेत्यनेन-अप्रार्थनीयोऽपि प्रार्थता इति दैन्यातिशयो ध्वन्यते। पथिकानामित्यनेन-मार्गगामिनामसम्बन्धिनामपि सा दयनीया जातेति दारिद्र्यातिशयः सूच्यते। उक्त इति स्थाने अर्थित इत्यनेन-अतिदीनता प्रदर्शनपुरस्सरं तत्पातयितुं याचित इति द्योत्यते। शत्रुगेहिन्येति गृहिणीपदेन- 'या गृहिणी अकार्यशतैरपि सामान्यदीनस्यापि भर्तव्या स्मृत्यादावुक्ता, सापि त्वत्कोपवशाद्वैरिनरेन्द्रैरेवं कदर्थिता' इति वर्ण्यस्य राज्ञो महाप्रभावत्वं ध्वन्यते। गङ्गाधरेण ललितैरक्षरैरस्याशयोऽवर्ण्यत- 'त्वदागमनशङ्कासञ्जातवेपथुस्खलितचरणसञ्चारमशेषपरिवारं विहाय बालकमादाय तव शत्रुविलासिनी महारण्यं प्राविशत्। तत्र च घनघनायमानघनच्छदच्छायतरुनिकरनिराकृतदिनकरकरोत्करश्यामायिते वर्त्मनि गच्छन्ती क्षुत्पीडितस्य बालकस्याक्रन्दितमाकर्ण्य निपुणतरं निरीक्षमाणा विषमशाखान्तर्गतमेकमाम्रफलमद्राक्षीत्। तत्पातनार्थं च पान्थानयाचतेति'।

---

१. **विसमट्ठिअपिक्केक्कम्बदंसणे तुज्झ सत्तुघरिणीए।**
**को को ण पत्थिओ पहिआणं डिम्भे रुअन्तम्मि।।९५।।**
[विषमस्थितपक्वैकाम्रमदर्शने तव शत्रुगृहिण्या।
कः को न प्रार्थितः पथिकानां डिम्भे रुदति।।]

यौवन–वैदग्ध्यादिभिर्विलोभनीयया मालाकारस्त्रिया श्लेषभणितिभिरभिमुखीकृतः कश्चिद्रसिकः शृण्वन्त्यां तस्यां साभिलाषं निजसहचरमाह–

**युवहृदयानि लुनाति हि ललितोल्ललितोच्चबाहुमूलाभ्याम्।**
**कुसुमानि दर्शयन्ती सद्योलूनानि मालिनी सेयम्।।९६।।**[१]

सद्यस्त्रोटितानि कुसुमानि दर्शयन्ती सेयं मालिनी, ललिताभ्यां सुन्दराभ्याम् उल्ललिताम् उद्भृताभ्यां विशालाभ्यामिति यावत्। उच्चाभ्यां च बाहुमूलाभ्याम् (स्तनाभ्याम्) यूनां हृदयानि लुनाति व्याकुलयतीत्यर्थः।'उल्ललिताभ्यां चञ्चलाभ्यां बाहुमूलाभ्यामुपलक्षिता' इति गङ्गाधरः। 'सद्योलूनानि कुसुमानि दर्शयन्ती हृदयानि लुनाति' इत्युभयत्र लवनसादृश्येन 'यथा मया कुसुमानि लूनानि तथा युवहृदयान्यपि लवितुं समर्थाहम्' इति हृदयानां कुसुमसमानत्वं व्यङ्ग्यम्। ततश्च 'त्वया कानिचिद्रसिकहृदयानि पूर्वतः पाटितानि, येषां सद्यस्कतया विलम्बोऽपि न जातः, आर्द्रवेदनानीति यावत्। कानिचिञ्च अस्मादृशां हृदयानि साम्प्रतं लुनासि, बहुतरुणहृदय–निकृन्तकत्वादहो ते नैष्ठुर्यम्' इति साभिलाष आक्षेपो ध्वन्यते। किञ्च मालिनी मालाकारीतिपदेन–'पुष्पमालानां निर्माणार्थं यथा त्वं पूर्वमेव लवनक्लेशं विसोढवन्ति कुसुमानि सूच्या विद्ध्वा पुनः सूत्रप्रोतानि करोषि तथा यूनामस्मादृशां हृदयानि साम्प्रतं लुनासि (व्याकुलीकृत्य वशीकरोषि) पश्चाच्च निष्ठुरहृदयत्वाद्विरहवेदनारूपया सूच्या विद्धानि करिष्यसि, अहोनिर्दयत्वम्' इत्युपालम्भो ध्वन्यते।

नवयुवत्या व्याधस्त्रियाः स्तनोद्गमं साभिलाषं वर्णयन्कश्चित्सहचरमाह–

**मध्यः प्रियः कुटुम्बं पल्लीयवकाः सपत्न्यश्च।**
**क्षीयन्ते पञ्च तथा, व्याधगृहिण्याः स्तनौ यथैधेते।।९७।।**[२]

व्याधगृहिण्याः स्तनौ यथा यथा वृद्धिं गच्छतस्तथा तथा मध्यः कटिः (यौवनविकासात्) क्षीयते। प्रियः (यौवनोद्दीप्तकामतया सततसुरतदौर्बल्यात्) क्षीयते। कुटुम्बं गृहकर्तुर्व्याधस्य

---

१. **मालारी ललिउल्लुलिअबाहुमूलेहिँ तरुणहिअआइं।**
**उल्लूरइ सज्जुल्लूरिआइँ कुसुमाइँ दावेन्ती।।९६।।**
[मालाकारी ललितोल्ललितबाहुमूलाभ्यां तरुणहृदयानि।
उल्लुनाति सद्योऽवलूनानि कुसुमानि दर्शयन्ती।।]

२. **मज्झो पिओ कुअण्डो पल्लिजुआणा सवत्तीओ।**
**जह जह वड्ढन्ति थणा तह तह छिज्जन्ति पञ्च वाहीए।।९७।।**
[मध्यः प्रियः कुटुम्बं पल्लीयुवानः सपत्न्यः।
यथा यथा वर्धेते स्तनौ तथा तथा क्षीयन्ते पञ्च व्याध्याः।।]

नवयौवनायामस्यामासक्ततया अप्रत्यवेक्षणात् क्षीयते। तस्याः पल्ल्याः (भिल्लावासस्य) युवकाः तदुत्कण्ठया क्षीयन्ते। सपत्न्यस्तु ईर्ष्यया किंवा नवयौवनायामस्यामासक्ततया पतिकृतप्रणया-भावात् क्षीयन्ते। नवयौवनायामपि गृहिणीपदेननवयौवनवशात्तथासक्तोऽस्याः प्रियतमो यथा गृहकर्तृत्वं प्रायस्तस्यामेव तिष्ठतीति स्तनोत्कर्षातिशयो ध्वन्यते।

'अहं हि मालिनीकुचमालूरावलोकनलालसयैव भ्रमति, नास्य कार्यमन्यदिति निजस्य पराभिप्रायवेदनवैदग्ध्यं सूचयन्नागरिकः कश्चित्सहृदयमाह–

**मालाकार्याः सुन्दरभुजमूलविलोकने सतृष्णोऽयम्।**

**पांसुलयुवा ह्यलीकं कुसुमार्घविपृच्छको भ्रमति।।९८।।**[१]

पांसुलः परस्त्रीलम्पटः। कुसुमार्घस्य कुसुममूल्यस्य पृच्छकः सन् अलीकं भ्रमति। वेल्लहल इति सुन्दरार्थवाचको देशी। 'यो यदभिलाषुकः स छलेनापि स्वकार्यं साधयतीति निदर्शयन्कोऽपि सहचरमाह' इति गङ्गाधरः।

पूर्वसञ्ज्ञातसुरतसङ्केतस्थानादिकं विस्मृतवन्तं 'कस्तेऽहम्?' इति वदन्तं नायकं कापि सोपालम्भमाह–

**अकृतज्ञक घनवर्णं घनपर्णान्तरिततरणिकरनिकरम्।**

**यदि रे रे वानीरं रेवानीरं स्मरस्यपि न।।९९।।**[२]

कृतं न जानातीत्यकृतज्ञः कृतोपकारविस्मर्ता, तत्सम्बोधनम्। ततः कुत्सार्थे कन्। घनवर्णं मेघश्यामम्। घनैर्निबिडैः पल्लवैरन्तरित आच्छादितस्तरणिकरनिकरः सूर्यरश्मिसमूहो

---

१. **मालारीए वेल्लहलबाहुमूलावलोअणसअह्णो।**
**अलिअं पि भमइ कुसुमग्घपुच्छिरो पंसुलजुआणो।।९८।।**
[मालाकार्याः सुन्दरबाहुमूलावलोकनसतृष्णः।
अलीकमपि भ्रमति कुसुमार्घप्रश्नशीलः पांसुलयुवा।।]

२. **अकअण्णुअ घणवण्णं घणवण्णन्तरिअतरणिअरणिअरम्।**
**जइ रे रे वाणीरं रेवाणीरं पि णो भरसि।।९९।।**
[अकृतज्ञ घनवर्णं घनपर्णान्तरिततरणिकरनिकरम्।
यदि रे रे वानीरं रेवानीरमपि न स्मरसि।।]

येन, एवंविधं वानीरं वेतसकुञ्जं यदि न स्मरसि, मा स्मर तावत्। परं रेवाया नर्मदाया नीरं जलमपि न स्मरसि ? इति काकुः। तत्तु अवश्यं स्मर्तव्यमित्यर्थः। रे रे इति साक्षेपं सम्बोधनार्थम्।

उद्दीप्तमदनां ग्रामणीसुतां वैद्यव्याजेनोपगन्तुमयमवसर इति कामुकं श्रावयन्ती दूती ग्रामणीसुतायाः पीडया निजखेदं प्रदर्शयति–

**मन्दमपि हलिकनन्दन इह दग्धग्रामके न जानाति।**
**निर्वैद्ये कं ब्रूमो गृहपतितनया विपद्यते चाद्य।।१००।।**[1]

निर्वैद्ये वैद्यरहिते, अत एव दग्धग्रामके निन्दनीयेऽस्मिन् ग्रामहतके। अतिसन्तापपीडिता गृहपतितनया ग्रामनायकस्य सुता अद्य विपद्यते। हलिकनन्दनो गृहजामातातत्पतिश्च मन्दमपि स्वल्पमपि न जानाति, अज्ञ इत्यर्थः। इदानीं कं ब्रूमः कस्मै कथयामीत्यर्थः। हलिकनन्दनपदेन 'तत्पतिस्तु हलिकस्य पुत्रो हालिकः पशुकल्प एव। अत एव द्वितीयग्रामादागतो वैद्यो भूत्वा मदनतप्तायास्तस्याः साधीयसीं चिकित्सां कुरु' इति कामुकं प्रति व्यज्यते। गृहपतितनयापदेन– 'गृहे तस्याः प्रचुरं प्रभुत्वम्, अत एव चिकित्समानस्य ते न कस्मिन्नपि कार्ये बाधा भवेत्' इति सूच्यते। 'कापि गृहपतिसुताहलिकसुतानुरागं विरहवैधुर्यं च प्रतिपादयन्ती हलिकसुतोपालम्भपुरस्सरमाह' इति गङ्गाधरः। 'हलिकपुत्रनिमित्तममन्दपञ्चबाणबाणप्रहारजर्जरितहृदया ग्रामणीसुता विपद्यते। हलिकपुत्रश्च पशुकल्पः। अतः कस्मै कथयामीत्यर्थः' इति तट्टीका।

शतकसमाप्तिमाह–

**रसिकजनहृदयदयिते कविवत्सलकुशलसुकविपरिरचिते।**
**सप्तशतके समाप्तं षष्ठं गाथाशतकमेतत्।।१०१।।**[2]

**( इति षष्ठं शतकम् )**

---

१. **मन्दं पि ण आणइ हलिअणन्दणो इह हि डड्ढगामम्मि।**
**गहवइसुआ विवज्जइ अवेज्जए कस्स साहामो।।१००।।**
[मन्दमपि न जानाति हलिकनन्दन इह हि दग्धग्रामे।
गृहपतिसुता विपद्यतेऽवैद्यके कस्य कथयामः।।]

२. **रसिअजणहिअअदइए कइवच्छलपमुहसुकइणिम्मइए।**
**सत्तसअम्मि समत्तं सट्ठं गाहासहं एअम्।।१०१।।**
[रसिकजनहृदयदयिते कविवत्सलप्रमुखसुकविनिर्मिते।
सप्तशतके समाप्तं षष्ठं गाथाशतकमेतत्।।]

----------

# सप्तमशतकम्

पशुदम्पत्योरप्येवमन्योऽन्यप्रणयो भवति, न पुनस्तवेति मन्दप्रणयं नायकमुपालभमाना नायिकासखी साकूतमन्यापदेशेनाह–

**अन्योऽन्यरक्षणाय प्रहारसम्मुखकुरङ्गमिथुने हि।**
**व्याधेन मन्युविगलद्बाष्पविधौतं धनुर्मुक्तम्।।१।।**[1]

परस्पररक्षणनिमित्तं प्रहारसम्मुखे कुरङ्गमिथुने, मन्युना कारुण्येन विगलन् यो वाष्पस्तेन विधौतं धनुर्व्याधेन त्यक्तम्। 'मन्युर्दैन्ये क्रतौ क्रुधि' इति हैमः। अयं भावः– व्याधेन मृगद्वन्द्वं प्रति प्रहाराय यदा धनुषि बाणः सन्धातुमाहितस्तदा परस्परस्य रक्षणार्थं मृगद्वन्द्वे पर्यायेण लक्ष्यसम्मुखे सति [यदा मृगे प्रहाराय सन्धानं कृतं तदा तद्रक्षणनिमित्तं मृगी प्रहारस्य सम्मुखं स्थिताऽभूत्, यदा स्वयं सम्मुखमागतायां मृग्यां लक्ष्यं बद्धं तदा तद्रक्षणार्थं मृगः प्रहारस्य सम्मुखमवातिष्ठत इति] एवमन्योऽन्यानुरागमवलोक्योत्पन्नकारुण्येन व्याधेन धनुरेव त्यक्तमिति। आर्द्रमिति स्थाने विधौतमित्यनेन– कारुण्यजनितेनाश्रुणा तत्सिक्तमेव न किन्तु पशुवधपापपङ्किलं तद्धनुस्तद्दिने क्षालितकल्मषतया पवित्रमिवाभूत् इति ध्वन्यते। मुक्तमिति पदेन तद्दिनादारभ्य पशुवधपातकितमपि संसारे तत्कर्मतो मुक्तिं गतमभूदिति धनुष उत्कर्षः सूच्यते। 'नायकमुपा–लब्धुं दूती आह' इति गङ्गाधरः।

नायिकाया विरहविकलतां प्रदर्श्य मन्दस्नेहं नायकं तदुपगमाय त्वरयन्ती दूती आह–

**सुभग विलम्बस्व मनाग् भणामि कस्याश्चिदर्थमलमथवा।**
**न भणिष्याम्यविचारितकार्यसमारम्भकारिणी म्रियताम्।।२।।**[2]

---

१. **एक्कक्कमपरिरक्खणपहारसँमुहे कुरङ्गमिहुणम्मि।**
**वाहेण मण्णुविअलन्तवाहधोअं धणुं मुक्कम्।।१।।**
[अन्योऽन्यपरिरक्षणप्रहारसम्मुखे कुरङ्गमिथुने।
व्याधेन मन्युविगलद्बाष्पधौतं धनुर्मुक्तम्।।]

२. **ता सुहअ विलम्ब खणं भणामि कीअ वि कएण अलमह वा।**
**अविआरिअकज्जारम्भआरिणी मरउ ण भणिस्सम्।।२।।**
[तत्सुभग विलम्बस्व क्षणं भणामि कस्या अपि कृतेनालमथ वा।
अविचारितकार्यारम्भकारिणी म्रियतां न भणिष्यामि।।]

क्षणं विलम्बस्व तिष्ठेत्यर्थः। कस्याश्चिदर्थमहं भणामि, मम स्वार्थः कश्चिन्न। स्वार्थी तु कदाचन मृषापि भाषेत, परमहं तु द्वितीयस्याः कृते वदाम्यत एव तत्रावश्यं प्रत्ययः कर्तव्य इति भावः। अथवा लअम्, न भणिष्यामीत्यर्थः। अविचारितकार्यारम्भिणी सा (यस्याः कृते अहं वक्तुमिच्छामि) म्रियताम्, अहं तत्कृते किमपि न भणिष्यामि। तिष्ठेति स्थाने 'विलम्बस्व' इत्युक्त्या 'अन्यासक्तस्य ते साम्प्रतमपि तत्कोपभयेन शीघ्रगमनमावश्यकम्, परं परप्राणरक्षण-पुण्यार्थं क्षणं विलम्बमेव सहस्व' इति गूढमाक्षेपो ध्वन्यते। विचारणात्स्वयमुक्तस्यापि प्रतिषेधरूपेण प्रथमाक्षेपालङ्कारेण- 'त्वादृशस्य अस्थिरप्रणयस्य प्रणयपरिणाममविचार्यैव यया तुभ्यमात्मा समर्पितः, तस्या मरणमेव परिणामे भावि। ततो म्रियमाणायाः कृते को वा तवोपकारभारं गृह्णीयात्' इति अस्थिरस्नेहतोपालम्भो ध्वन्यते। सुभगेत्यामन्त्रणेन- 'बह्व्यस्त्वय्यनुरक्ताः, अत एव निजसौन्दर्यमूलकसौभाग्येनैव तव सोऽयं गर्वः' इति व्यज्यते। सत्यं प्रेमाणमपरिचिन्वता त्वया सह प्रणयं कुर्वत्यास्तस्याः कामं न भवेत्पश्चात्तापः, परं मादृशानां त्ववश्यमस्ति। ततश्चेदानीं स्त्रीवधपातकभयादेव त्वरितं तदन्तिके गन्तव्यमिति चरमं व्यङ्ग्यम्।

पूर्वं बद्धप्रणयेन हलिकसुतेन सम्प्रति प्रतिरुद्धप्रेमव्यवहारा काचित्तस्यान्यत्रानुरागं सूचयन्ती सेर्ष्यं सखीमाह-

**नवभोगिनीप्रदत्तप्रहेणकास्वादलम्पटो ह्यधुना।**

**अन्यप्रहेणकानां हलिकसुतश्छीति वहति वचः।।३।।**[१]

नवीनया भोगिन्या ग्रामव्यापारिकस्त्रिया दत्तानां प्रहेणकानां मोदकादिवायनकानामास्वादे लम्पटो लोलुपः (दुःशिक्षितः) हलिकपुत्रः अन्यप्रहेणकानां कृते इदानीं 'छी' इति वचो वहति ददाति। 'छी' इति सनासासङ्कोचं निन्दानुकरणं लोके प्रसिद्धम्। 'प्रहेणकं वायनकम्' इति हारावली। 'लाहिणा' इति जयपुरभाषा। हलिकसुतपदेन- 'हालिकप्रायोऽयं नवीनतया लोभनीयायां भोगिन्यामनुरक्तत्वेन गर्विष्ठः साम्प्रतमनुरक्तास्वप्यस्मादृशीषु विरज्यति' इति सूच्यते। व्यापारिकपत्नीपरमपि 'भोगिनी' दमनुरणनविधया- 'सा भोगलम्पटेति तस्यां भोगरसिकोऽय-मनुरक्तः' इति सूचयति। 'पूर्वमस्मास्वनुरक्ततया त्वं यत्किञ्चिदप्यस्माद्दत्तं वस्तु बह्वमन्यथाः। भोगिनीलम्पटस्त्वं न तादृशः' इति अधुनापदसहकारेण ध्वन्यते। 'छीवोल्लअम्' इत्यस्य छीवोल्लणं मुखविकार इत्यर्थ इति कुलवालदेवः। एतदनुसारं 'हलिकसुतश्छीति सङ्कुचति नासाम्' इति पाठः साधीयान् स्यात्।

---

१. **भोइणिदिण्णपहेणअचक्खिअदुस्सिक्खिओ हलिअउत्तो।**

**एत्ताहे अण्णपहेणआणँ छीओल्लअं देई।।३।।**

[भोगिनीदत्तप्रहेणकास्वादनदुःशिक्षितो हलिकपुत्रः।

इदानीमन्यप्रहेणकानां छी इति वचनं ददाति।।]

वने विहरन्तीं प्रयेसीं प्रातरम्भोजशोभावर्णनेन रमयन्कश्चिन्नागरिक आह–

**प्रत्यूषमयूखावलिपरिमलनसमुच्छ्वसद्दलपुटानाम्।**
**जितलोकश्री रजनीविरतौ किल महमहायतेऽब्जानाम्।।४।।**[१]

प्रत्यूषे या (आदित्यस्य) मयूखावलिः तस्याः परिमलनेन सम्बन्धेन प्रस्फुटत्पत्रपुटानाम् अब्जानाम्। जिताः लोकाः यया एतादृशी श्रीः, वशीकृतलोकेति यावत्। रजनीविरामे महमहायते सौरभेण सर्वत्र व्याप्नोतीत्यर्थः।'जिअलोअसिरी' इत्यस्य जीवलोकश्रीः (जीवलोके या शोभा) इति वार्थः। अतिसौरभस्य 'महक' इति व्यपदेशो हिन्दीभाषायामपि प्रसिद्धः। 'पञ्चूह' शब्द आदित्यवाचको देशीति कश्चित्। 'अज्ञातरजनिविरामां क्रीडाप्रसक्तां सखीं प्रबोधयितुं कापि प्रभातं वर्णयति' इति गङ्गाधरः।

ईर्ष्यालूनां सपत्नीनां मध्ये नायिकायाः सौभाग्यं व्याजेन सूचयन्ती काचित्प्रौढा सखी सपरिहासमाह–

**वातोद्वेल्लितवस्त्रे स्थगय स्फुटदन्तमण्डलं जघनम्।**
**चटुकारकं प्रियं मा जनपरिहास्यं कलय पुत्रि।।५।।**[२]

वातेन उद्वेल्लितवस्त्र उद्वर्तिताधोवसने! 'साउलीति' वस्त्रवाचको देशी। स्थगय आच्छादय। जनपरिहास्यं जनैरुपहसनीयं मा कलय मा कुरु। चाटुपरस्ते प्रियतमः प्रेमातिशयाज्जघने यच्चुम्बनदशनादिकं करोति तस्य सर्वाग्रे प्रकटनेन तं परिहासास्पदं मा कुर्वित्याशयः। 'भवतीः सम्भोगमात्रेऽपि परिहरति प्रियतमः। इमां तु केवलं चाटुबुद्ध्यैव एवंविधेष्वपि स्थानेषु चुम्बति, किं पुनर्मनसिजोन्मादमत्तः' इति सपत्नीः प्रति व्यज्यते।

---

१. **पच्चूसमऊहावलिपरिमलणसमूससन्तवत्ताणम्।**
**कमलाणँ रअणिविरमे जिअलोअसिरी महम्महइ।।४।।**
[प्रत्यूषमयूखावलिपरिमलनसमुच्छ्वसत्पत्राणाम्।
कमलानां रजनिविरामे जितलोकश्रीर्महमहायते।।]

२. **वाउव्वेल्लिअसाउलि थएसु फुडदन्तमण्डलं जहणम्।**
**चडुआरअं पइं मा हु पुत्ति जणहासिअं कुणसु।।५।।**
[वातोद्वेल्लितवस्त्रे स्थगय स्फुटदन्तमण्डलं जघनम्।
चटुकारकं पतिं मा खलु पुत्रि जनहास्यं कुरु।।]

नाधुना सेयं पूर्ववद्विलासपरेति कामुकजनान्सूचयन्ती दूती आह–

**दत्तो विस्रब्धहसितपरिक्रमाणां जलाञ्जलिः प्रथमम्।**

**पश्चाद्वध्वा मज्जन् कटुम्बभारो गृहीतो हि।।६।।**

परिक्रमः सविलासं चङ्क्रमणम्। प्राकृते 'परिसक्किअम्' परिक्रमणम्। मज्जन् अवनतिं गच्छन्। कुटुम्बभारानुरोधाद्विस्रब्धहसितादिरूपं चाञ्चल्यं परित्यज्य साम्प्रतं सा प्रौढचर्यामनुवर्तत इत्यर्थः।'वध्वा' इति पदेन–श्वश्रूप्रभृतिगुरुजनेषु वर्तमानेष्वपि कुटुम्बस्यावनतिं वीक्ष्य सैव सम्प्रति गृहस्य कर्त्री जातेति नात्र युष्माकमवकाश इति कामिजनान्प्रत्यभिव्यज्यते। जलाञ्जलिपदेन– दत्तजलाञ्जलिर्मृतपुरुषो यथा न पुनर्दृष्टिगोचरो भवति तथा सविभ्रमहासादयो विलासा न पुनर्भाविन इति सूच्यते।

परिहासव्याजेन नायिकायाः सौन्दर्यं सूचयन्ती सखी आह–

**यास्यसि तस्य समीपे सुन्दरि मोत्ताम्य वर्धतां चन्द्रः।**

**कः प्रेक्षते मुखं ते ज्योत्स्नायां दुग्धमिव दुग्धे।।७।।**[२]

मा उत्ताम्य, विलम्बेन मा खिद्यस्व। मा त्वरस्वेति यावत्। दुग्धे मिश्रितं दुग्धं यथा न पृथक् परिचीयते तथा तव मुखं चन्द्रिकातः पृथक् न परिचीयत इत्यर्थः। वर्धतां चन्द्र इत्यनेन गगनमध्यमलङ्कुर्वतः पूर्णचन्द्रस्य चन्द्रिकानुकारिणी ते मुखकान्तिरिति द्योत्यते। अत्र हि वाच्येनोपमामीलितसङ्करेण चन्द्रिकावदवदातस्य नायिकामुखस्य सौन्दर्यातिशयः 'सुन्दरि' इति सम्बोधनराहकासत्सुतरां सूच्यते। अभिसारिकाविषये सेयमुदाहृता गाथा सरस्वतीकण्ठाभरणे।

---

१. **वीसत्थहसिअपरिसक्किआणँ पढमं जलञ्जली दिण्णो।**
**पच्छा बहूअ गहिओ कुडम्बभारो णिमज्जन्तो।।६।।**
[विस्रब्धहसितपरिक्रमाणां प्रथमं जलाञ्जलिर्दत्तः।
पश्चाद्वध्वा गृहीतः कुटुम्बभारो निमज्जन्।।]

२. **गम्मिहिसि तस्स पासं सुन्दरि मा तुरअ वड्ढउ मिअङ्को।**
**दुद्धे दुद्धं मिअ चन्दिआइ को पेच्छइ मुहं दे।।७।।**
[गमिष्यसि तस्य पार्श्वे सुन्दरि मा त्वरस्व वर्धतां मृगाङ्कः।
दुग्धे दुग्धमिव चन्द्रिकायां कः प्रेक्षते मुखं ते।।]

ग्रामणीतनयं प्रति प्रवर्धमानं स्वानुरागं सूचयन्ती काचित्समानशीलां मातुलानीमाह-

**परलोकव्यसनिजनो मातुलि यदि ताम्यतीह ताम्यतु सः।**

**वदने दृष्टिर्वलते तदपि वलाद् ग्रामणीसूनोः।।८।।**

ग्रामणीसूनोर्वदने दृष्टिर्बलात् बलते, अवरुध्यमानापि इतस्ततः परिभ्रम्य विवशा पततीत्यर्थः। 'व्यसनि' पदेन- व्यसनी यथा लाभालाभावविचार्यैव रागान्धस्तत्रासज्यति तथा परस्परकटाक्षनिरीक्षणाद्यैहलौकिकसुखलाभमनिरीक्ष्यैव परलोकार्थं मुधा व्याग्रोऽयं लोकः, तथा च परलोकानपेक्षेव मे तस्मिन्नासक्तिरिति ध्वन्यते।

नायिकायाः प्रणयातिशयं प्रतिपादयन्तीं दूती नायकं प्रत्याह-

**गृहमिव वित्तविरहितं निर्झरकुहरं च सलिलशून्यमिव।**

**तद्वदनं तव विरहे गोधनरहितं हि गोष्ठमिव।।९।।**[२]

अस्तीति शेषः। अत एव न शोभत इति भावः। तद्वदनं तस्याः (नायिकायाः) वदनम्। 'कुहर' पदेन- जलप्रवाहाभावे निर्झरावकाशः केवलं भयानको गर्त एवेति सूच्यते। तथा च-गृहादिषु यथा वित्ताद्येव सर्वस्वम्। वित्तादीनामभावे तेषां गृहत्वादिकमेव न सिध्यति। तथा त्वमेव तस्याः सर्वस्वमिति प्रणयातिशयो ध्वन्यते।

लज्जापरतन्त्रतयैव सा निजमनोभावं न प्रकाशयितुं प्रभवति, न पुनरनुरागाभावेनेति नायकमुत्कण्ठयन्ती दूती आह-

---

१. **जइ जूरइ जूरउ णाम मामि परलोअवसणिओ लोओ।**
**तह वि बला गामणिणन्दणस्स वअणे वलइ दिट्ठी।।८।।**
[यदि खिद्यते खिद्यतां नाम मातुलानि परलोकव्यसनिको लोकः।
तथापि चलाद्ग्रामणीनन्दनस्य वदने वलते दृष्टिः।।]

२. **गेहं व वित्तरहिअं णिज्झरकुहरं व सलिलसुण्णविअम्।**
**गोहणरहिअं गोट्ठं व तीअ वअणं तुह विओए।।९।।**
[गृहमिव वित्तरहितं निर्झरकुहरमिव सलिलशून्यम्।
गोधनरहितं गोष्ठमिव तस्या वदनं तव वियोगे।।]

**लज्जालोरेतस्या ह्यनुरागो दर्शनेन तव जनितः।**
**दुर्गतसुमनोरथ इव याति हृदय एव परिणामम्।।१०।।**[1]

दरिद्रस्य (सु) उत्तमोऽपि मनोरथो धनाभावाद्यथा हृदय एव अवसानं गच्छति तथा तव दर्शनेन जनितो लज्जापरवशाया एतस्या अनुरागो हृदय एव पूर्णतां प्राप्नोति, लज्जावशात्तं बहिर्न प्रकटयतीत्यर्थः। तव दर्शनेन जनित उत्पादितः। पूर्वमस्या हृदि त्वद्विषयकोऽनुरागो नासीत्, सा त्वां यथैव दृष्टवती तथैव त्वद्दर्शनेन सोऽनुराग उत्पादितः। एवं च– त्वद्दर्शनमात्रेणैव सा यदा त्वय्यनुरक्तहृदयाऽभवत्तदा त्वत्समागमसुखस्य तु का कथेति नायकप्रोत्साहनं ध्वन्यते। अवर्तमानतया परोक्षाया अपि नायिकायाः कृते 'तस्याः' इत्यनुपादाय 'एतस्या' इति कथनेन– दृढानुरागा सा हृदयेन सदैव त्वामनुवर्तमानाऽस्तीत्यत एव 'त्वया सह प्रत्यक्षमिवोपस्थितां तां पश्यामि' इति तदनुरागातिशयो ध्वनितः। दुर्गतमनोरथोपमया–दुर्गतदशां गतस्य 'एवं चेद्भवेत्तर्हि एवमहं कुर्याम्' इत्याशया सुतरां हृदयपरितोषकसाभिलाषमात्रं यथा भवति तथैव लज्जालोरस्या– स्त्वत्समागमाद्याशाजनकतया सुतरामान्तरसन्तोषकोऽनुरागो हृदय एव सञ्चरतीति समागमो– त्कण्ठातिशयो ध्वन्यते। दरिद्रपदस्थाने 'दुर्गत' पदेन–यः पूर्वं धनिकोऽपि देवात् (दुः) दुष्टां दशां गतः, स पूर्वमनुभूतवैभवोत्कर्षतया उच्चानभिलाषान्करोति, धनाभावाच्च ते हृदय एव विलीयन्ते, इति पूर्वानुभूतविभवानन्दस्य तस्य दुःखातिशयो ध्वन्यते। दरिद्रस्य तु तावदुन्नता विचारा एव नोद्भवन्ति, अत एव न तस्य तद्वैफल्यदुःखमित्याकूतम्। ततश्च–'एवमनुरा– गोत्कण्ठितहृदयामपि कुलीनतया लज्जालुमिमां किं न बहु मन्यसे' इति नायकप्रोत्साहनं ध्वन्यते।

किमेवं कृशासीति प्रवासादागत्य सहासं पृच्छन्तमन्यानुरक्तं कान्तं प्रति विहरवे– दनाक्लिष्टहृदयाया नायिकाया गूढमन्युसूचकं वचनचातुर्यं काचित्सहचरीमाह–

**यत्पृच्छसि विहसन्मां तनूयते या कृते नु किं ते सा?।**
**'प्रकृतिरसौ मे ग्रीष्मे' हन्त भणित्वैवमवरुदिता।।११।।**[2]

---

१. **तुह दंसणेण जणिओ इमीअ लज्जाउलाइ अणुराओ।**
**दुग्गअमणोरहो विअ हिअअ च्चिअ जाइ परिणामम्।।१०।।**
[तव दर्शनेन जनितोऽस्या लज्जालुकाया अनुरागः।
दुर्गतमनोरथ इव हृदय एव याति परिणामम्।।]

२. **जं तणुआअइ सा तुह कएण किं जेण पुच्छसि हसन्तो।**
**अह गिम्हे मह पअई एव्वं भणिऊण ओरुण्णा।।११।।**
[या तनूयते सा तव कृतेन किं येन पृच्छसि हसन्।
असौ ग्रीष्मे मम प्रकृतिरिति भणित्वाऽवरुदिता।।]

या स्त्री दुर्बला भवति सा किं नु तव कृते त्वन्निमित्तम्? यन्मां दौर्बल्यकारणं सहासं पृच्छसि। या स्त्री दुर्बला भवति सा मन्निमित्तमेवेति तव हृदयेऽभिमानः, परं नेदं तथ्यमिति भावः। तर्हि कथं कृशता, तत्राह यदियं कृशता असौ ग्रीष्मे मम स्वभाव इत्येवं भणित्वा अवरुरोद। नायकविरहनिमित्तस्यापि कार्श्यस्यैवमपलापेन 'जानन्नपि त्वं कौतुकादिव निःक्लेशं प्रत्युत सहासं मां पृच्छसि, तर्हि किं ते तत्कथनेन' इति गूढकोपोऽभिव्यज्यते। 'तनूयते' इत्याचारार्थकक्यङा त्वं स्वयं कपटीति मनसि मन्यसे यद् वास्तवे तथा असत्यपि मत्प्रेमप्रदर्शनार्थम् उपरितः कृशेव आचरति इति, परमिदं दौर्बल्यमेव त्वत्कारणकं नास्ति यस्याभिनय आवश्यको भवेत्' इति गूढकोपोपालम्भो व्यज्यते। 'या दुर्बला भवति सा किं सर्वापि त्वन्निमित्तम्' इति कथनेन 'बह्वीषु तव प्रणयः, अत एव त्वद्विरहे तासां दौबल्येन त्वया ममापि दौर्बल्यं त्वत्कारणकमेवानुमितमेवं च बहुत्र विभक्तप्रणयत्वादेव निरनुक्रोशतया साम्प्रतमपि सहास्योऽसि' इति गूढोपालम्भो ध्वन्यते। भणित्वा न तु सम्भाष्य, तथा च रूक्षकथनेन कोपो व्यज्यते। विरहवेदनासहनेन प्रतीक्षणौत्सुक्यमर्षणेन च तनूकृतशरीरा पूर्वमेव क्लिष्टहृदयाभूत्, इदानीमेवंविधप्रश्नेन उदितस्य कोपस्य सुभृशं गोपनेऽपि स दुःखावेगो न सह्योऽभवदिति बलाद्रोदनमुदभवदिति नायिकाया हृदयमार्दवमभिव्यज्यते। 'एव्वम्' पदस्य 'इति' गङ्गाधरकृता छाया तु विच्छायैव। 'अह' इति 'असौ' अर्थे देशी।

अविश्रान्तं प्रियपरिरम्भमभिलषन्ती नितान्तं प्रणयपथमनुयान्तं कान्तं प्रत्यन्यापदेशविधयाह–

**वर्णक्रमरहितस्याऽप्येष गुणश्चित्रकर्मणो ह्येव।**

**मुञ्चति न निमिषमपि यत्प्रियो जनो गाढमुपगूढः।।१२।।**[१]

हरितपीतादिवर्णविन्यासरहितस्यापि, अर्थात् रङ्गविन्यासमकृत्वा केवलं मसीरेखाभिरेवोत्कीर्णस्यापि। चित्रकर्मण एव आलेख्यस्यैव केवलमयं गुणो यत् प्रियया गाढमुपगूढः प्रियः प्रियां निमेषमात्रमपि न मुञ्चति। चित्रे लिखितः प्रिययोपगूढः प्रियः प्रियां क्षमपि न मुञ्चतीत्याशयः। प्रियो न मुञ्चतीत्युक्त्या– अहं तु मानसा न मुञ्चाम्येव परं भवानपि मां न मुञ्चेदिति ममाभिलाष इति सार्वदिकगाढप्रणयार्थं प्रार्थनमभिव्यज्यते। चित्रकर्मण एव गुणस्तवनेन अयमभिलाषश्चित्रकर्मणैव पूरणीयो न भूत्वा प्रत्यक्षमपि परिणतो भवेदिति प्रियं प्रति गूढमाकूत–

---

१. **वण्णक्कमरहिअस्स वि एस गुणो णवरि चित्तकम्मस्स।**

**णिमिसं पि जं ण मुञ्चइ पिओ जणो गाढमुवऊढो।।१२।।**

[वर्णक्रमरहितस्याऽप्येष गुणः केवलं चित्रकर्मणः।

निमिषमपि यन्न मुञ्चति प्रियो जनो गाढमुपगूढः।।]

मभिव्यज्यते। 'यद्वा वर्णक्रमो गुणविशुद्धिपरम्परा तद्रहितस्य। चित्रस्य विचित्रस्य कर्मणः। धर्माधर्मादिरूपस्येत्यर्थः। आत्मा धर्माधर्मादिकं क्षणमपि न मुञ्चतीत्यर्थः। केचित्तु ब्राह्मणादिवर्णक्रमरहितस्यापि 'चित्तअम्मणो' चित्तजन्मनो मन्मथस्यायं कोऽपि गुणो येन प्रियः प्रियां क्षणमपि न त्यजतीत्यर्थ इति व्याचक्षते'' इति पूर्वार्धे अस्पष्टप्राया गङ्गाधरटीका।

दाक्षिण्येनोपभोग्यां नवोढां कश्चिदविदग्धो रमयतीत्यन्यापदेशविधया निजसहचरीं काचिदाह–

**अविभक्तसन्धिबन्धं प्रथमरसोद्भेदपानलोभिष्ठः।**

**नोद्वेल्लयितुं बोधति भनक्ति कलिकामुखं भ्रमरः।।१३।।**[1]

सर्वप्रथमो यो रसोद्भेदो मकरन्दोद्गमस्तत्पाने अतिलुब्धो भ्रमरः। न विभक्तः पत्रिकाणां सन्धिबन्धो यस्मिन्नीदृशं कुसुमकलिकाया मुखम् उद्वेल्लयितुं विकासयितुं तु न जानाति किन्तु तद्भनक्ति सरभसप्रवृत्त्या तत्खण्डयतीत्यर्थः। विकासाभावात्पत्रिकाणामपि ('पँखडी') यत्र सन्धिविभागो न जातस्तादृशं कलिकामुखं रसपानलालसाव्यग्रो मधुपः कदर्थयतीत्यर्थः। रसपानलोभिष्ठ इति वक्तव्ये रसोद्भेदपानलोभिष्ठ इत्युक्त्या प्रथमप्रथमं यो रसोद्भेदस्तत्समय एव रसपाने लुब्धः, अर्थात् उद्भिद्यमानावस्थायामेव रसपाने लोभस्तथा च रसस्य सद्यस्कतया लोभनीयतातिशयो व्यज्यते। अनेन च कलिकामधुपवृत्तान्तेन–'अन्तःसन्धीनां यत्र विभागो न जातस्तादृशं नवोढनायिकायाः गोप्यमङ्गं रत्यनुकूलतायामभिमुखीकर्तुं तु न जानाति किन्तु प्रथमरतिलालसान्धः केवलं पीडयतीति नायकवृतान्तो व्यज्यते। विकासयितुं न जानातीत्युक्त्या– 'रति विदग्धाः नवोढां बालामपि वैदग्ध्योपायैरपरिखेदरतियोग्यां विदधते' इति नायकवैदग्ध्यं सूच्यते। 'उद्वेल्लितुं विकासयितुम्' इति गङ्गाधरः। चलनार्थकस्याऽणिजन्तस्य केवलं 'वेल्ल' धातोरयमर्थो दुरुपपाद एव।

विपरीतरताभिलाषुकः कश्चित्प्रियतमामुत्साहयन्नाह–

---

१. **अविहत्तसंधिबन्धं पढमरसुब्भेअपाणलोहिल्लो।**
**उव्वेलिउं ण आणह खण्डइ कलिआमुहं भमरो।।१३।।**
[अविभक्तसन्धिबन्धं प्रथमरसोद्भेदपानलुब्धः।
उद्वेल्लितुं न जानाति खण्डयति कलिकामुखं भ्रमरः।।]

**दरवेपनोरुयुगलासु मुकुलिताक्षीषु लुलितचिकुरासु।**

**पुरुषायितासु कामः प्रियासु सज्जायुधो वसति।।१४।।**[१]

उरुयुग एव सकलभरसमर्पणात्– दरवेपनम् ईषत्कम्पनशीलम् ऊरुयुगं यासां तासु। वेपनमित्यत्र नन्द्यादित्वाल्ल्युः। सज्जायुधपदेन–मोहन–वशीकरणादिकामशराणां यत्फलं तदनुपदमेव भवतीति सूच्यते। तिष्ठति–विरहतीत्याद्यनुपादाय 'वसति' पदेन–गृहबुद्ध्या निर्वि–शङ्कमव्यभिचरितं चावस्थितिर्व्यज्यते। 'प्रिया' इत्युक्त्या 'एवंविधरतैः प्रियतमस्य हृदि सुतरां प्रीतिर्भवति, तथा च त्वं यदि मत्प्रीतिं कामयसे तर्हि स्वीकुरु मत्प्रार्थनामित्यात्माभिलाषो ध्वन्यते। पुरुषायितस्योदाहरणे परिगृहीतेयं गाथा सरस्वतीकण्ठाभरणे (५ परि.)।

'मम सुखानुकूलं नाचरसि' इत्याद्यन्यनायिकासक्ततया पदे पदे उपालभमानं प्रियतमं प्रति काचित्साकूतमाह–

**यद्यत्ते न हि सुखयति तत्तन्न करोमि यन्ममायत्तम्।**

**सुखयामि यदहमेव न सुभग नु तत्किं ममायत्तम्।।१५।।**[२]

अहमेव यत् यदि न सुखयामि सुखमुत्पादयामि हे सुभग! तत्किं नु ममाधीनम्? अपि तु नेत्यर्थः। सुभगेत्यामन्त्रणेन 'अन्यनायिकाप्रीतिमुपलभ्य सौभाग्यगर्वितस्य ते सम्प्रत्यहमेव चक्षुःशूलायिता' इत्युपालम्भो ध्वन्यते। ममाऽनधीनमित्युक्त्या–सम्प्रति नाहं तव प्रीतिकारिणी, ततोऽपि दैवपरतन्त्रा दुःखं जीवामीति गूढकोपोऽभिव्यज्यते।

दर्शनादिषु लज्जापरतन्त्रामपि मां कथालापस्ते सुखयतीति नायकं समुत्साहयन्ती काचिल्लज्जास्वभावमाह–

---

१. **दरवेविरोरुजुअलासु मउलिअच्छीसु लुलिअचिहुरासु।**
**पुरिसाइरीसु कामो पिआसु सज्जाउहो वसइ।।१४।।**
[ईषद्वेपनशीलोरुयुगलासु मुकुलिताक्षीषु लुलितचिकुरासु।
पुरुषायितशीलासु कामः प्रियासु सज्जायुधो वसति।।]

२. **जं जं ते ण सुहाअइ तं तं ण करेमि जं ममाअत्तम्।**
**अहअं चिअ जं ण सुहामि सुहअ तं किं ममाअत्तम्।।१५।।**
[यद्यत्ते न सुखायते तत्तन्न करोमि यन्ममायत्तम्।
अहमेव यन्न सुखाये सुभग तत्किं ममायत्तम्।।]

**व्यापारविसंवादं सकलाङ्गानां करोति हतलज्जा।**
**गुरुपुरतोऽपि श्रवसोः पुनर्नियोगं न निरुणद्धि।।१६।।**[१]

हतेयं लज्जा नेत्रादिसकलावयवानां व्यापारविघातं करोति। किन्तु गुरुजनानां सन्निधावपि श्रवसोः कर्णयोर्नियोगं व्यापारं न निरुणद्धि। गुरुजनानां लज्जावशाद्भवन्तं विलोकयितुमपारयन्त्यपि त्वत्कथाश्रवणे साभिलाषा तिष्ठामीत्याशयः। 'त्वदनुरक्तायाः पश्य मे हार्दिकं प्रणयम्' इति नायकं प्रति प्रोत्साहनमभिव्यज्यते। 'त्वदासक्ततया नेत्रादिव्यापारः सर्व एव विसंवादं प्राप्तः। केवलं श्वशुरादिसन्निधावपि त्वत्कथाश्रवणे श्रवणौ व्यापारयतीति नायकं प्रति दूतीवचनमिदमिति कश्चित्।

दयितसमागमनिमित्तमतितमामाश्वासिता विरहवेदनाव्यथिता प्रोषितभर्तृका काचित्सखीः प्रत्याह–

**किं भणथ मां नु सख्यो म्रियस्व मा द्रक्ष्यते स जीवन्त्या।**
**कार्यालापः सोऽयं भवति पुनः स्नेहमार्गो न।।१७।।**[२]

भवतीनामाश्वासनया दयितविरहेऽपि यदिदं दुःखदवदग्धं जीवनमतिनीयते सोऽयं केवलं कार्यपर्यालोचनस्य पन्थाः। ग्रहिलः स्नेहस्तु कार्यं न पर्यालोचयतीति भावः। तथा च– स्नेहमार्गविमुखामपि कार्यदृष्ट्या जीवितुं धारयन्तीं स्वार्थिनीं धिङ् मामित्यात्मावधीरणया दयितालम्बनो रतिप्रकर्षः प्रद्योत्यते। जीवन्त्या एव द्रक्ष्यते अनेन– 'मरणपर्यन्तमपि दयितस्यैवैकान्तभावनया मरणोत्तरं लोकान्तरे जन्मान्तरे वा तु सोऽवश्यं त्वया द्रष्टुमिष्ट एव परं 'मोत्ताम्य, आगतप्रायस्ते प्रेयान्, जीवन्ती एव तं द्रक्ष्यसि' इति जन्मजन्मान्तरानुवर्ती दृढः

---

१. **वावारविसँवाअं सअलावअवाणँ कुणइ हअलज्जा।**
**सवणाणँ उणो गुरुसंणिहे वि ण णिरुज्झइ णिओअम्।।१६।।**
[व्यापारविसंवादं सकलावयवानां करोति हतलज्जा।
श्रवणयोः पुनर्गुरुसन्निधावपि न निरुणद्धि नियोगम्।।]

२. **किं भणह मं सहीओ मा मर दीसिहइ सो जिअन्तीए।**
**कज्जालाओ एसो सिणेहमग्गो उण ण होइ।।१७।।**
[किं भणथ मां सख्यो मां म्रियस्व द्रक्ष्यते स जीवन्त्या।
कार्यालाप एष स्नेहमार्गः पुनर्न भवति।।]

स्नेहोऽभिव्यज्यते। 'द्रक्ष्यते' इत्यनेन विरहोत्तरं गृहागमने सङ्गमादि न वाञ्छित्वा दर्शनमात्रलालसया प्रियप्रेमातिशयः प्रकाश्यते।

दृढप्रणयामपि प्रेयसीमबहुमन्यमानं नायकमुपालभमाना नायिकासखी साकूतमन्यापदेशेनाह–

**एकाकिमृगो मृग्या तथा हि दृष्टः सतृष्णया दृष्ट्या।**
**प्रियजानेर्विनिपतितं व्याधस्य धनुर्यथा हस्तात्।।१८।।**[1]

एकाकी स्वविरहितः। प्रियजानेः प्रिया जाया यस्य तादृशस्य व्याधस्य हस्तात्। अयं भावः– मृगमिथुनं जिघांसतो व्याधस्य बाणलक्ष्यीभूतया मृग्या स्वमरणभयमप्यविगणय्य मृगस्तथा प्रेमपूर्णया सतृष्णया दृष्ट्या विलाकितो यथा स्वप्रणयिनीं स्मरतो व्याधस्य हस्ताद्धनुः स्वयमेव दयावशान्निपतितम्। मरणसमयेऽपि स्वचिन्तामकृत्वा प्रियतमैकचित्ताः स्त्रियो भवन्त्यहो स्त्रीजातेर्दृढप्रणयतेतिमृगीविलोकनेन स्वजायास्मरणात् व्याधस्य स्नेहदयोदयो जात इति भावः। अतिपामरो हिंस्रोऽपि व्याधः स्त्रीणां प्रणयपरिचयं प्राप्य प्रेयसीं बहु मन्यते, न पुनर्नागरम्मन्योऽपि त्वं तथेति नायकं प्रत्युपालम्भो व्यज्यते। 'मदस्नेहं निष्करुणं च नायकमुपालब्धुमन्यापदेशेन काचिदाह' इति गङ्गाधरः। मृगाश्चक्षुर्निभालनेनात्मीयप्रियाविलोचनमनुस्मरतो व्याधस्य हस्तात्करुणया धनुः पतितमित्यर्थः।' इति तट्टीका।

स्वस्वामिन्याः सौन्दर्यातिशयं सूचयन्ती दूती चलवृत्तं नायकमन्यापदेशेनोपालभमाना साकूतमाह–

**भ्रमसि नलिनीषु मृद्नासि सप्तलां मालतीं न मुञ्चसि यत्।**
**तरलत्वं तव मधुकर हंहो यदि पाटला हरति।।१९।।**[2]

---

१. **एक्कल्लमओ दिट्ठीअ मइअ तह पुलइओ सअह्णाए।**
**पिअजाअस्स जह धणुं पडिअं वाहस्स हत्थाओ।।१८।।**
[एकाकी मृगो दृष्ट्या मृग्या तथा प्रलोकितः सतृष्णया।
प्रियजायस्य यथा धनुः पतितं व्याधस्य हस्तात्।।]

२. **णलिणीसु भमसि परिमलसि सत्तलं मालइं पि णो मुअसि।**
**तरलत्तणं तुह अहो महुअर जइ पाडला हरइ।।१९।।**
[नलिनीषु भ्रमसि परिमृद्नासि सप्तलां मालतीमपि नो मुञ्चसि।
तरलत्वं तवाऽहो मधुकर यदि पाटला हरति।।]

'सप्तला नवमालिका' इत्यमरः। असति लाभो कासाञ्चिन्मण्डले भ्रमस्येव, सत्यवसरे काञ्चिन्मर्दयसि, काञ्चिच्च वचनादिनैव सम्बध्नासि, एतत्तव चाञ्चल्यं यदि सा सत्यं पाटलवर्णा (अतिशयितसौन्दर्या) तर्ह्यवश्यं हरेदिति भावः। नानानायिकासु भ्रमणशीलस्त्वं नैकत्र तृप्यसि, अहो ते चलवृत्तत्वमिति 'हंहो' पदसहकारेण ध्वन्यते। पर सर्वातिशायिनी मत्स्वामिनी त्वां वशीकरिष्यतीति नायिकागुणातिशयः सूच्यते। भ्रमसि मृद्नासीति लट्प्रत्ययेन–पूर्वानुवृत्तां चर्यां साम्प्रतमपि न त्यजसि, प्रत्यक्षमिदानीमप्यस्ति सेति व्यज्यते।

कञ्चुलिकाञ्चलात्किञ्चिदवलोक्यमानं कस्याश्चित्कुचयुगलमालोक्य साभिलाषः कश्चित् शृण्वन्त्यां तस्याः सहचरं प्रति सपरिहासमाह–

**द्व्यङ्गुलललितकपाटकपिनद्धसविशेषनीलकञ्चुलिका।**
**स्तनदेशवर्णिकामिव तरुणी परिदर्शयति युवजनेभ्यः।।२०।।**[१]

द्व्यङ्गुलपरिमितं ललितं कपाटकं यस्यां तथाविधा पिनद्धा नीला कञ्चुलिका यया सा। कपाटवत्पार्श्वद्वयदर्शकं यत्कञ्चुलिकाबन्धनस्य सन्धिमध्यस्थले रिक्तं स्थलं भवति तत्कपाटकमित्युच्यते। तथा च तत्र स्तनैकदेशदर्शनात्स्तनयोर्वर्णिकामिव दर्शयतीत्युत्प्रेक्ष्यते कस्यचिद्वस्तुनः परीक्षार्थं यद्वस्त्वेकदेशप्रदर्शनं तद्वर्णिकेत्युच्यते। 'बानगी' इति भाषा। अनया चोत्प्रेक्षया 'वर्णिकां प्रदर्श्य वणिग् यथा ग्राहकाननुकूलयति, तथा त्वमपि युवकानुत्कण्ठयसि, ततश्च त्वं ग्राहकान्वेषिणी भ्रमसीति' तां प्रति परिहासो ध्वन्यते। 'मामेवानुगृहाण' इत्यात्माभिलाषश्चरमं व्यङ्ग्यम्। 'कपाटकेन पिनद्धो नीलकञ्चुको यस्याः सा' इत्यादि तट्टीका।

कस्याश्चित्प्रोषितपतिकाया दशां तत्कान्तसमीपगामी पान्थो वर्णयति–

**रक्षति पुत्रं शिरसा पटलप्रान्तोदकं प्रतीच्छन्ती।**
**आर्द्रीभवन्तमश्रुभिरथ पथिकवधूर्न लक्षयति।।२१।।**[२]

---

१. **दोअङ्गुलअकवालअपिणद्धसविसेसणीलकञ्चुइआ।**
**दावेइ थणत्थलवण्णिअं व तरुणी जुअजणाणम्।।२०।।**
[द्व्यङ्गुलककपाटकपिनद्धसविशेषनीलकञ्चुकिका।
दर्शयति स्तनस्थलवर्णिकामिव तरुणी युवजनेभ्यः।।]

२. **रक्खेइ पुत्तअं मत्थएण ओच्छोअअं पडिच्छन्ती।**
**अंसुहिँ पहिअघरिणी ओल्लिज्जन्तं ण लक्खेइ।।२१।।**
[रक्षति पुत्रकं मस्तकेन पटलप्रान्तोदकं प्रतीच्छन्ती।
अश्रुभिः पथिकगृहिणी आर्द्रीभवन्तं न लक्षयति।।]

'ओच्छोअअम्' छदिः प्रान्तजलवाचको देशी। छदिः प्रान्तप्रस्नुतं वर्षाजलं निजशिरसा प्रतीच्छन्तीं सहमाना पथिकवधूः पुत्रं रक्षति। प्रियस्मरणोत्कण्ठाजनितैरश्रुभिरार्द्रीभवन्तं तु तं न लक्षयति। स्वयं वर्षाजलसहनेन निजशरीरोपर्ययत्नान्नायकविरहवेदनातिशयो व्यज्यते। अश्रुभिरार्द्रीभवन्तं न लक्षयतीत्यनेन–अङ्कारोपितपुत्रा प्रावृडागमनोद्वेलितचित्ततया निरन्तरं प्रियतममेव ध्यायन्तीं सर्वमन्यद्विस्मरतीति तस्या एकतानतातिशयो व्यज्यते। 'त्वदनुध्यानपरामेनां त्वरितमुपगच्छ' इति तद्दयितं प्रति चरमं व्यङ्ग्यम्। 'प्रतीकारोऽपि क्वचिदपकाराय भवतीति निदर्शयन्कश्चित्सखायमाह' इति गङ्गाधरः।

सङ्केतितस्य सरस्तीरस्य पथिकाक्रान्ततया सङ्केतान्तरमेव सम्प्रति सम्प्रधारणीयमिति जारं श्रावयन्ती कापि शरद्वर्णनव्याजेनाह–

**शरदि सरसीह पथिका जलानि नीलाब्जसुरभिगन्धीनि।**
**धवलाच्छानि सतृष्णाः पिबन्ति दयितामुखानीव।।२२।।**[1]

इह सरसि। 'कन्दोट्टं' नीलोत्पलम्। तत्सम्पर्काद् प्राणतर्पणगन्धानि, धवलानि च तानि स्वच्छानि च जलानि। सतृष्णाः सपिपासाः पथिकाः। नीलाब्जवत् सुरभिगन्धीनि, 'धवलाच्छाइँ' धवलाक्षाणि (धवलनयनानि) दयितानां मुखानीव सतृष्णः सलालसाः पिबन्ति। दयितामुखसमानगुणानि जलानि पिबन्तः पथिकाः प्रयासे सुदुर्लभं दयितामुखपानमध्यस्यन्ति, अत एव तेषां तत्समये सतृष्णता (साभिलाषता) भवतीति भावः।

कर्दमभयान्नायिकां नाभिसरन्तं नायकं प्रति मार्गस्य सुलभतां प्रतिपादयन्ती दूती तत्प्ररोचनाय नायिकायाः प्रणयातिशयं व्यङ्ग्यविधया प्राह–

**अप्यभ्यन्तरसरसाः प्रवातपरिबद्धकर्दमा उपरि।**
**चङ्क्रममाणे लोके समुच्छ्वसन्तीव किं रथ्याः।।२३।।**[2]

---

१. **सरए सरम्मि पहिआ जलाइँ कन्दोट्टसुरहिगन्धाइं।**
**धवलच्छाइँ सअह्णा पिअन्ति दइआणँ व मुहाइं।।२२।।**
[शरदि सरसि पथिका जलानि नीलोत्पलसुरभिगन्धीनि।
धवलाच्छानि सतृष्णाः पिबन्ति दयितानामिव मुखानि।।]

२. **अब्भन्तरसरसाओ उवरिं पव्वाअबद्धपङ्काओ।**
**चङ्क्मन्तम्मि जणे समुस्ससन्ति व्व रच्छाओ।।२३।।**
[अभ्यन्तरसरसा उपरि प्रवातबद्धपङ्काः।
चङ्क्रममाणे जने समुच्छ्वसन्तीव रथ्याः।।]

अभ्यन्तरे सरसा अपि, उपरि प्रवातेन प्रकृष्टवातेन परितो बद्धो दृढघनीभूतः कर्दमो यासु ताः रथ्याः। लोके जने यातायातं कुर्वति सति समुच्छ्वसन्तीव। अन्तरार्द्रत्वेऽपि उपरितः प्रवातेन विशुष्कबद्धपङ्कासु रथ्यासु लोकानां पदभारैरेकत्र निष्पीडितार्द्रभूभागतया अपरत्रोद्भिन्नेषु रन्ध्रेषु य ऊष्मा निस्सरति तत्रोच्छ्वासस्योत्प्रेक्षा। अत्र समासोक्तिविधया 'प्रवातप्रायगुरुजनभयेनोपरि रूक्षत्वेऽपि अभ्यन्तरे सानुरागा मे स्वामिनी भवदर्थमुत्कण्ठिता आह्वानाय मां सम्प्रेष्य साम्प्रतमुच्छ्वसिति, किमित्येनामविलम्बितं नो गच्छसि' इति नायकं प्रत्यभिव्यज्यते। 'चङ्क्रममाणे' इति प्राक्तनटीकाकृतामनुरोधादेव। अनुपसर्गादपि यङ्लुगन्तात्क्रमेरात्मनेपदे विचार एव।

पिष्टककणावकीर्णौ कस्याश्चित्कुचौ कामयमानः कश्चित्कामुकः सहचरं प्रति सकौतुकमेवं वर्णयति–

**मुखनलिनच्छायायां हंसाविव संस्थितौ निरीक्षध्वम्।**
**क्षणपिष्टकुट्टनोद्धतधूलिधवलितौ स्तनौ वहति।।२४।।**[१]

क्षणे उत्सवदिवसे पिष्टस्य गोधूमादिचूर्णस्य कुट्टनेनोच्छलितया धूल्या धवलौ स्तनौ, मुखकमलच्छायायां स्थितौ हंसाविव वहतीति निरीक्षध्वम। दिवसान्तरे तु कर्मकरादिभिरेवंविधकार्याणि क्रियन्ते परमद्योत्सवकार्यबाहुल्यादिदं स्वयं कर्तव्यमभूदिति 'क्षणपदेन सूच्यते। संस्थिताविति 'सम्' उपसर्गेण छायायां सम्यक् सुखपूर्वकं पृष्ठपरावर्तितकन्धरं पक्षपुटावाच्छादितमुखतया विश्रब्धमवस्थितिः सूच्यते। अत एव वर्तुलयोः स्तनयोः साम्यम्। हंसाविवेत्युपमया एवंविधयोर्हंसयोर्यथा ग्रहणे सौकर्यं तथानयोरपीत्यात्माभिलाषो व्यज्यते।

'अनयोरान्तरिकोऽनुरागो मया विदितः' इति स्ववैदग्ध्यं प्रथयन्नागरिकः कयोश्चित्परस्परावलोकनं वर्णयति–

**तेन तथा सा दृष्टा तयाऽपि दृक् प्रेषिता तथा तस्मै।**
**द्वावपि सममेव यथा निर्वृत्तरतौ नु सञ्जातौ।।२५।।**[२]

---

१. **मुहपुण्डरीअछाआइ संठिआ उअह राअहंसे व्व।**
**छणपिट्ठकुट्टणुच्छलिअधूलिधवले थणे वहइ।।२४।।**
[मुखपुण्डरीकच्छायायां संस्थितौ पश्यत राजहंसाविव।
क्षणपिष्टकुट्टनोच्छलितधूलिधवलौ स्तनौ वहति।।]

२. **तह तेणवि सा दिट्ठा तीअ वि तह तस्स पेसिआ दिट्ठी।**
**जह दोण्ह वि समअं चिअ णिव्वुत्तरआइँ जाआइं।।२५।।**
[तथा तेनाऽपि सा दृष्टा तयाऽपि तथा तस्मै प्रेषिता दृष्टिः।
यथा द्वावपि सममेव निर्वृत्तरतौ जातौ।।]

सममेव एककालमेव। निर्वृत्तरतौ पूरितरतसुखौ जातौ। इवार्थमिव सूचयन् 'नुः'। शृण्वति जारे स्वस्याभिसाररसिकतां सूचयन्ती काचित्कुलटा ग्रीष्मर्तुमेवमभिनन्दति–

**लघुवापिकाविशोषण निकुञ्जदलकरण सुलभसङ्केत।**
**सौभाग्यकनकनिकष क्षेष्यसि हे ग्रीष्म कथमपि मा।।२६।।**[१]

लघुवापिकानां विशोषक! निकुञ्जेषु पत्राणामुत्पादक! अत एव सुलभसङ्केत! अत एव कारणात्सौभाग्यरूपस्य कनकस्य परीक्षायै निकषपट्टस्थानीय हे ग्रीष्म! कथमपि या क्षीणो भविष्यसि। सुवर्णस्य परीक्षा यथा निकषपाषाणे भवति तथा लोकानां सौभाग्यस्य परीक्षा ग्रीष्मे भवति। सङ्केतसौकर्यसाधकेऽपि ग्रीष्मे यस्या न सुरतसुखसमुपलब्धिस्तर्हि न तस्याः सौभाग्यमिति भावः। एवं च सुरतसुखलौल्यमात्मनो ध्वन्यते। 'वाउलिआ' शब्दः स्वल्पखातिकायां देशी। 'स्वल्पखातिकानां परिशोषणेन निकुञ्जानां पत्रसम्पत्त्या च सुलभः सङ्केतो यत्र स तथेति ग्रीष्मसम्बोधनमिति' पूर्वार्धमेकं पदं मन्वानो गङ्गाधरभट्टः।

कायक्लेशपरीक्षणकपटेन कुटिलैः क्लेश्यमानं गुणिनं निजगुणज्ञतया प्रोत्साहयन्ती काचिदन्यापदेशेनाह–

**मरकत रत्नपरीक्षकपाशैर्घृष्टोऽसि प्रस्तरे तावत्।**
**का तव मूल्यकथा किल तिलमात्रं वर्तसे यावत्।।२७।।**[२]

रत्नपरीक्षकपाशैः अतत्वज्ञैर्दुर्विदग्धैश्च रत्नपरीक्षकम्मन्यैः। याप्ये पाशप्। यावत्त्वं तिलमात्रमप्यसि तावत्तवास्मिन्ग्रामे को वा मूल्यं निर्धारयितुं समर्थ इति भावः। तथा च 'एते न

---

१. **वाउलिआपरिसोसण कुडङ्गपत्तलणसुलहसंकेअ।**
**सोहग्गकणअकसवट्ट गिम्ह मा कह वि झिज्जिहिसि।।२६।।**
[स्वल्पखातिकापरिशोषण निकुञ्जपत्रकरण सुलभसङ्केत।
सौभाग्यकनककषपट्ट ग्रीष्म मा कथमपि क्षीणो भविष्यसि।।]

२. **दुस्सिक्खिअरअणपरिक्खएहिँ घिट्ठोसि पत्थरे जावा।**
**जा तिलमेत्तं वट्टसि मरगअ का तुज्झ मुल्लकहा।।२७।।**
[दुःशिक्षितरत्नपरीक्षकैर्घृष्टोऽसि प्रस्तरे तावत्।
यावत्तिलमात्रं वर्तसे मरकत का तव मूल्यकथा।।]

ते गुणान् जानते, अहं तु तव गुणान्परिचीय सुभृशमनुरक्तास्मि' इति गुणिनं प्रति द्योत्यते। 'दुर्जनसंसर्गादुद्विग्नगुणाशालिनं विदग्धा काप्यन्यापदेशेन प्रवृत्तिपाटवार्थमाह' इति गङ्गाधरः।

ग्रामनायकसूनोः शौर्यं प्रदर्श्य पराक्रमैकपक्षपातिनीं काञ्चिन्मानिनीमनुकूलयन्ती दूती आह–

**चिन्तति यथा परिजनस्तत्प्रतिपक्षो विशङ्कते च यथा।**

**ग्रामणीसुतेन गुप्ता बालेनापि हि तथा पल्ली।।२८।।**[१]

प्रबलष्वेतावत्सु प्रतिपक्षेषु कथमनेन बालेन रक्षा कर्तव्येति स्नेहवशः परिजनश्चिन्तयति। इदित्करणाद्वैकल्पिको णिच्। 'नायमस्मान्कदाचिदाक्रम्य परिभवेत्' इति प्रतिपक्षो विशेषेण शङ्कते। गुप्ता रक्षिता। बाल्येऽप्यस्यैतादृशं शौर्यमासीदिदानीं पूर्णयौवने तु किं वक्तव्यमिति नायिकां प्रत्यभिव्यज्यते। भूतकालिकघटनायामपि 'चिन्तति शङ्कते' इति वर्तमानप्रयोगस्तु 'सा घटनो मन्नयनयोरिदानीमपि वर्तमानेव' इति प्रत्यक्षद्रष्टुर्निजविश्वसनीयताप्रदर्शनार्थम्। 'पल्लीनिवासिन्या विलासिन्या दूती पल्ली–भङ्गशङ्कयानागच्छन्तं तत्कान्तं तत्समीपगमनायोत्साहयितुमाह' इति गङ्गाधरावतरणम्। 'कथमनेन बालेन रक्षा कर्तव्येति परिजनश्चिन्तयति। बालोऽयमस्माभिर्ग्राह्य इति प्रतिपक्षश्चिन्तयतीत्यर्थः' इति तट्टीका। भयं क्रोडे कुर्वतः 'आशङ्कते' पदस्य सोऽयमर्थो विचार्य एव।।

शृण्वतीष्वन्यासु व्याधरमणीषु निजसौभाग्यख्यापनाय प्रियतमस्य पराक्रमं प्रत्यावेद–यन्ती व्याधवधूश्चित्रमृगचर्म पृच्छन्तं पथिकं प्रत्याह–

**अन्येषु पथिक पृच्छ व्याधकपुत्रेषु पृषतचर्माणि।**

**अस्माकं व्याधयुवा हरिणेषु धनुर्न नामयति।।२९।।**[२]

---

१. **जह चिन्तेह परिअणो आसङ्कइ जह अ तस्स पडिवक्खो।**
**बालेण वि गामणिणन्दणेण तह रक्खिआ पल्ली।।२८।।**
[यथा चिन्तयति परिजन आशङ्कते यथा च तस्य प्रतिपक्षः।
बालेनाऽपि ग्रामणीनन्दनेन तथा रक्षिता पल्ली।।]

२. **अण्णेसु पहिअ पुच्छसु वाहअपुत्तेसु पुसिअचम्माइं।**
**अम्हं वाहजुआणो हरिणेसु धणुं ण णामेइ।।२९।।**
[अन्येषु पथिक पृच्छ व्याधकपुत्रेषु पृषतचर्माणि।
अस्माकं व्याधयुवा हरिणेषु धनुर्न नामयति।।]

दुर्बलानां हरिणकानां चर्मोत्पाटनद्वारा ये जीविकामर्जयन्ति ते व्याधा अपि वीर-व्याधापेक्षया कुत्सिताः, अत एव व्याधकास्तत्पुत्रेषु। तत्पुत्रेष्वित्युक्त्या-पितृद्वारा कीर्तनीय-त्वात्तेऽपि नोत्तमा इति अवहेला सूच्यते। पृषतः श्वेतबिन्दुयुक्तश्चित्रमृगः 'चीतल' इति भाषया ख्यातः। हे वणिगित्यादिस्थाने-पथिकेत्यामन्त्रणेन केवलं चर्मवाणिज्यमेव न तवोद्देश्यम् अपि तु पथिलङ्घनमपि ते कर्तव्यमेव, अत एव अन्यव्याधकुटुम्बप्रश्नार्थं मार्गवर्तिस्थानान्तरगमनेऽपि न ते क्लेश इति ध्वन्यते। व्याधयुवेत्यनेन-सर्वेष्वपि व्याधेषु शूरताश्रयतया अयमेव एकमात्रो युवेति बहुमानो ध्वन्यते। 'न नामयती' त्युक्त्या-बाणद्वारा हननेन जीविकोपार्जनस्य का कथा, निजधनुरपि न तदभिमुखीकरोतीति औदार्यातिशयो व्यज्यते। हरिणेष्विति जातिकीर्तनेन- 'त्वं तु पृषतानामेव कथां पृच्छसि परं स्वर्णमय एव किं न भवेदयं तु हरिणसामान्यमेव दयनीयं मन्यत इति मनस्वितातिशयो व्यज्यते। अन्येष्विति- 'एवंविधास्तुच्छाः केऽप्यन्य एव व्याधा भवेयुः, नायम्' इति गूढाभिमानसूचिका लोकोक्तिशैली। पृच्छेत्युक्त्या 'मृगचर्मक्रयणस्य तु का कथा तत्प्रश्नोऽपि नात्र वाञ्छितः, सोऽप्यन्यत्रैव करणीयः' इति ताटस्थ्यातिशयः सूच्यते। अस्माकमित्युक्त्या- 'समग्रव्याधजातेरभिमानस्थानमेकमात्रः सोऽयं युवा च अस्मत्सम्बन्धी, किं वा मदधीनः' इत्यात्मनः सौभाग्यं शृण्वतीरन्यव्याधरमणीः प्रति ध्वन्यते। 'व्याधकपुत्रेषु' इति ध्वनिदर्शकोऽप्ययं पाठो गङ्गाधरानुरोधात्। 'वाहकुडुम्बेसुं' इति पुस्तकान्तरप्रसिद्धप्राकृत-पाठानुसारी 'व्याधकुटुम्बेषु' इति तु बन्धानुगुणः।

निजसुतस्य सततमासञ्जनकरीं स्नुषामसूयन्ती व्याधमाता बन्धुजनमाह-

**गजवधुवैधव्यकरः पुत्रो मे ह्येककाण्डविनिपाती।**

**स्नुषया तथेक्षितः किल काण्डकरण्डं यथा वहति।।३०।।**[१]

एकं काण्डं बाणं विनिपातयति क्षिपति तच्छीलः, (ततोऽपि) गजवधूनां वैधव्यकारकः, गजानां निहन्तेत्यर्थः। 'गजवधु' इति 'इको ह्रस्वोऽङ्यो' इति ह्रस्वः। लक्ष्यं प्रति एकमात्र एव बाणो विमोक्तव्य इति शौर्यस्वभावशाली मत्पुत्रोऽयमेकेनैव बाणेन पूर्वं मत्तमातङ्गान्निजघान। सम्प्रति स्त्रीप्रसक्तस्तथा जातो यथा बाणसमूहं वहन्नपि न तस्मै कर्मणे प्रभुरित्याशयः। 'गजनिहन्ता' इति वक्तव्ये गजवधूवैधव्यकर इत्युक्त्या 'ये गजपुङ्गवा अन्यगजोत्पादने समर्थाः, येषां हनने च बह्व्यः करिण्यो वैधव्यमेव धारयन्ति न पुनरन्योपसर्पणे वाञ्छा भवति, तादृशान् यूथपतीन्

---

१. **गअवहुवेहव्वअरो पुत्तो मे एक्ककण्डविणिवाई।**

**तह सोह्लाइ पुलइओ जह कण्डकरण्डअं वहइ।।३०।।**

[गजवधूवैधव्यकरः पुत्रो मे एककाण्डविनिपाती।

तथा स्नुषया प्रलोकितो यथा काण्डसमूहं वहति।।]

यूथस्य सम्मुख एव हतवान्' इति शौर्योत्कर्षो ध्वन्यते। काण्डसन्धायीति स्थाने 'विनिपाती' इति कथनेन 'तादृशस्तस्याभ्यास आसीद्यथा सन्धानस्य का कथा, हेलया शरं पातयन्नपि गजान् हतवान्' इति तदतिशयो व्यज्यते। विनिपातीति ताच्छील्यार्थकणिनिना एकमात्रकाण्ड-त्यागस्तस्य स्वभाव आसीदिति शौर्यातिशयः सूच्यते। 'पुत्रो मे' इति मे प्रदप्रयोगेण 'ईदृशोऽयं शूरो मत्पुत्रः' इति ममापि तत्कृतोऽभिमान आसीदिति ध्वन्यते। 'ईक्षितः' इत्यनेन 'वशीकारिण्या दृष्ट्या तथा दृष्टो यथा दर्शनादारभ्यैव तत्प्रसक्तिं न परित्यजति' इति दृष्टेर्मोहकतातिशयो ध्वन्यते। वहतीत्यनेन बाणसमूहं भाररूपेण केवलं वहत्येव न तु तेन किञ्चित्कर्तुं समर्थ इत्यवहेला सूच्यते। समूहस्थाने करण्डपदेनापि 'सम्पूर्णाबाणाधानीमेव वहन्नपि निष्फल एव' इति पुत्रं प्रत्यसूया ध्वन्यते।

समरं विजित्य गृहागतस्य शस्त्रनिर्भिन्नस्य मनस्विनो भर्तुर्निजमानभङ्गस्य कथाश्रवणा-दपि मानवशान्मृत्युर्भवेदित्याशङ्कमाना ग्रामनायकमहिषी तन्निवारणाय पल्लीवासिलोकान्प्रत्याह-

**पल्ली विन्ध्यारोहं मा लपतु ग्रामणीः श्वसिति।**

**उज्जीवितोऽथ कथमपि शृणोति यदि जीवितं तदा त्यजति।।३१।।**[१]

पल्ली पल्लीनिवासिजनो दस्युभयाद्विन्ध्यारोहणस्य कथां न करोतु। यतोऽधुनापि ग्राम-नायकः श्वसिति।'यावच्छ्वासास्तावदाशा' इति कथनानुसारमस्मिन् जीवति लोकानां भयमेव कुत इति भावः। परं कथञ्चित्प्रत्युज्जीवितः प्रत्यागतप्राणो यदि विन्ध्यारोहणकथां शृणोति तदा स्वाश्रितजनपलायनश्रवणेन जनितमानभङ्गोऽसौ अवश्यं जीवितं त्यजति। 'पल्ली' पदेन 'समग्रोऽपि पाल्लीवासी जनोऽस्य रक्षणीय' इति सूच्यते। श्वसितीत्यनेन 'यावदेकोऽपि श्वासस्तावत्पल्लीरक्षणमयमात्मनः कर्तव्यं मन्यते' इति कर्तव्यनिष्ठा व्यज्यते। जीवितं त्यजेदिति सम्भावनार्थकलिङः स्थाने लट्प्रयोगेण 'जीवितत्यागस्य सम्भावनैव नास्ति प्रत्युत मानभङ्गे सति जीवितत्यागो निश्चितं वर्तमान एव' इति मनस्वितातिशयो ध्वन्यते।

स्निग्धो जनो निजस्नेहिनो हितमनुसन्धाय मरणदशायामपि भद्रमेवोपदिशतीति निदर्शयन् कश्चित्सहचरमाह-

---

१. **विञ्झारुहणालावं पल्ली मा कुण उ गामणी ससइ।**
**पच्चज्जिविओ जइ कह वि सुणइ ता जीविअं मुअइ।।३१।।**
[विन्ध्यारोहणालापं पल्ली मा करोतु ग्रामणीः श्वसिति।
प्रत्युज्जीवितो यदि कथमपि शृणोति तज्जीवितं मुञ्चति।।]

**शिक्षयति म्रियमाणः पुत्रं पल्लीपतिः प्रयत्नेन।**
**मम नाम्ना न यथा त्वं विलज्जसे सुत करिष्यसेऽङ्ग तथा।।३२।।**[१]

एवंविधप्रतापशालिन एवंविधो निर्गुणः पुत्र इति पितुर्नामग्रहणस्य पुत्रपक्षे लज्जाहेतुत्वम्। अथवा अमुकस्य पुत्रोऽयमिति पितृनाम्ना निर्गुण एव व्यपदिश्यते पूज्यते चेति नाम्नो लज्जाहेतुत्वम्। मत्पुत्र इति प्रसिद्ध्यन् यथा न लज्जितो भवसि तथा कार्याणि करिष्यसीत्यर्थः। आत्मगुणैः प्रसिद्धेन त्वया निजवंशमर्यादोचितान्येव कार्याणि कार्याणीति तात्पर्यम्। अङ्ग इति सम्बोधने। 'अप्पाहेइ' इत्यस्य शिक्षयति सन्दिशतीति वार्थः।

प्रियप्राणाः पतिव्रताः प्रणयपरिपाकेनैव प्रेतमपि प्रियतमं प्रत्युज्जीव्य पुनः प्राप्नुवन्ति तत्प्रणयप्रमोदं किं पुनस्तस्मिन्प्रोषिते इति विरहविह्वलां काञ्चिद्द्रढयन्ती काचिदाह–

**अनुमरणनिर्गतायाः प्रत्यागतजीवितेऽथ तद्दयिते।**
**वैधव्यमण्डनं कुलवध्वाः सौभाग्यकं जातम्।।३३।।**[२]

अनुमरणार्थं निर्गतायाः प्रस्थितायाः सौभाग्यकं सौभाग्यरूपं जातम्, सौभाग्यमण्डनं जातमिति यावत्। करुणानन्तरे अनुभवार्थोऽयं सम्भोग इत्युदाहृतेयं गाथा सरस्वतीकण्ठाभरणे। 'अनुकूले विधावमङ्गलान्यपि मङ्गलानि भवन्तीति निदर्शयन्कश्चिदाह' इति गङ्गाधरः।

अधरे दंशचिह्नमवलोक्य परस्त्रीसङ्गशङ्कया पशुकल्पानां पामरीणामपि निरपराधेऽपि पत्यौ प्रणयवशादीर्ष्या भवति। ततस्तु महाकुलीनायाः प्रकामग्रहिलप्रणयाया मनस्विन्यास्तस्याः प्रत्यक्षप्रेक्षितव्यलीके त्वयि तु किं वाच्यम्। अतः पदप्रणामेनैवैनां प्रसादय। न पुनः कालहरणं श्रेयसे इत्यनुनयपराङ्मुखं नायकं प्रति दूत्याह–

---

१. **अप्पाहेइ मरन्तो पुत्तं पल्लीवई पअत्तेण।**
**मह णामेण जह तुमं ण लज्जसे तह करेज्जासु।।३२।।**
[शिक्षयति म्रियमाणः पुत्रं पल्लीपतिः प्रयत्नेन।
मम नाम्ना यथा त्वं न लज्जसे तथा करिष्यसि।।]

२. **अणुमरणपत्थिआए पच्चागअजीविए पिअअमम्मि।**
**वेहव्वमण्डणं कुलवहूअ सोहग्गअं जाअम्।।३३।।**
[अनुमरणप्रस्थितायाः प्रत्यागतजीविते प्रियतमे।
वैधव्यमण्डनं कुलवध्वाः सौभाग्यकं जातम्।।]

**दष्टं मधुमक्षिकया मुखमुच्छूनोष्ठमैक्ष्य दयितस्य।**
**अन्यां वृक्षच्छायां गता पुलिन्दी किलेर्ष्यालु।।३४।।**[१]

आ–ईक्ष्य, दृष्ट्वा। दयितस्य न तु पत्युः। यस्या हि प्रियतमेऽत्यन्तं प्रणयो भवति तस्या एव अन्याभिषङ्गशङ्कयापि प्रणयकोपो भवति। ततश्च त्वयि दृढानुरागामिमां किमित्युपेक्षसे। प्रणयवतीमिमां सबहुमानमनुनयस्वेति प्रियं प्रत्यभिव्यज्यते। गत्या सह कृतकलहा त्वत्समागम–प्रतीक्षया निर्जने सा तिष्ठतीति जारं प्रति दूत्या इयमुक्तिरिति कश्चित्।

स्वयंदूतिका पथिकं सूचयन्ती सखीमाह–

**धन्या वसन्ति निःशङ्कमोहने बहलपत्रलावरणे।**
**वातान्दोलनविनमितवेणुविगहने गिरिग्रामे।।३५।।**[२]

बहलैर्निबिडैः पत्रलैर्बहुलपत्रयुक्तैः (वृक्षैः) आधरणं वेष्टनं यत्र। वातान्दोलनेन विनमितैर्वेणुभिर्गहने सम्बाधे। अत एव निःशङ्कं मोहनं सुरतं यत्र तथाभूते गिरिग्रामे (पर्वतोपरि निविष्टे ग्रामे) धन्या वसन्ति। यदि त्वमभिनन्दनीयभाग्योऽसि तर्हि वृक्षावरणवेष्टिते अपरिलक्ष–णीयसुचिरसुरतसौख्येऽस्मिन् ग्रामे मया सह विहरेति पान्थं प्रत्यभिव्यज्यते। 'गिरिग्राम–प्रशंसाच्छलेनाऽसती जारं प्रति स्वच्छन्दाभिसारस्पृहामाह' इति गङ्गाधरः।

दर्शितशोभाविप्रकर्षासु वर्षासु गिरिग्रामाणां रमणीयतातिशयं प्रतिपादयन्ती काचित्तेषु रमणाय रमणायेङ्गितं ददाति–

---

१. **महुमच्छिआइ दट्ठं दट्ठूण मुहं पिअस्स सूणोट्ठम्।**
**ईसालुई पुलिन्दी रुक्खच्छाअं गआ अण्णम्।।३४।।**
[मधुमक्षिकया दष्टं दृष्ट्वा मुखं प्रियस्योच्छूनोष्ठम्।
ईर्ष्यालुः पुलिन्दी वृक्षच्छायां गतान्याम्।।]

२. **धण्णा वसन्ति णीसङ्कमोहणे बहलपत्तलवइम्मि।**
**वाअन्दोलणओणविअवेणुगहणे गिरिग्गामे।।३५।।**
[धन्या वसन्ति निःशङ्कमोहने बहलपत्रलवृतौ।
वातान्दोलनावनामितवेणुगहने गिरिग्रामे।।]

**प्रोत्फुल्लघनकदम्बा निर्धौतशिलाः प्रमत्तकेकिकुलाः।**
**उत्साहयन्ति निर्यन्निर्झरमुखरा गिरिग्रामाः।।३६।।**[1]

प्रथमविशेषणेन सम्भोगस्योद्दीपनविभावः, द्वितीयेन सुरतसामयिकं शयनस्थलम्, तृतीयेन अन्यमनस्कतासम्पादनेन सुचिरसुरतसौकर्यं सम्भोगानन्तरं विनोदसम्भारो वा, चतुर्थेन स्वनितशिञ्जितमणितादिनिह्नवसौकर्यं च सूच्यते। ततश्च कामिजनमनोहरायामस्यां प्रावृषि गिरिग्रामेषु सर्वविधं रमणसौकर्यमिति स्वैरमभिसारस्तेष्वस्तु, इति प्रियतमं प्रत्यभिव्यज्यते।

नीरसापि सा कामकलाकोविदस्य तस्य सुरतोपचारचातुर्यचर्यया सम्प्रति समधिकं सरसान्तरा सहृदयहृदयावर्जिका च जातेति नायकस्य दाक्षिण्यं ख्यापयन्ती दूती काचित्कामिनीजनमनोरञ्जनार्थमन्यापदेशेनाह–

**नार्द्रयति हस्तमपि या गोपेन तथा नु तेन परिमलिता।**
**सैव हि धेनुरिदानीं पश्यत कुटदोहिनी जाता।।३७।।**[2]

या धेनुर्दोहनसमये स्वदुग्धेन दोग्धुर्हस्तमपि नार्द्रयति धारायास्तु का कथा, निपुणेन तेन गोपेन तथा परिमलिता स्तनपृष्ठादिपरामर्शेन तेन प्रकारेण परामृष्टा यथा सैव धेनुरिदानीं दुग्धघटपूरिका जातेति पश्यत। घटपरिमितं दुग्धं ददातीति भावः। कुटो घटः। व्यञ्जनया च–कामकलाचतुरेण नायकेन करिहस्तादिविन्यासेन तेन प्रकारेण परामृष्टा यथा पूर्वं किञ्चिदप्यद्रवन्ती सा सम्प्रति बहुतरं स्मरजलं क्षरतीत्यर्थः। रतिदाक्षिण्यदीक्षितेन तेन सह बद्धप्रणया भवत्योऽपि तच्चातुर्यपरिचयं प्राप्स्यथेति शृण्वतीः प्रत्यभिव्यज्यते।

सर्वातिशायि कस्याश्चित्सौभाग्यं सूचयन्ती सखी सपरिहासमन्यापदेशेनाह–

---

१. **पप्फुल्लघणकलम्बा णिद्धोअसिलाअला मुइअमोरा।**
**पसरन्तोज्झरमुहला ओसाहन्ते गिरिग्गामा।।३६।।**
[प्रोत्फुल्लघनकदम्बा निर्धौतशिलातला मुदितमयूराः।
प्रसरन्निर्झरमुखरा उत्साहयन्ति गिरिग्रामाः।।]

२. **तह परिमलिआ गोवेण तेण हत्थं पि जा ण ओल्लेइ।**
**स च्चिअ धेणू एह्णिं पेच्छसु कुडदोहिणी जाआ।।३७।।**
[तथा परिमलिता गोपेन तेन हस्तमपि या नार्द्रयति।
सैव धेनुरिदानीं प्रेक्षध्वं कुटदोहिनी जाता।।]

**धवलो जीवति तुभ्यं धवलाय च गृष्टयोऽपि जीवन्ति।**
**गौर्जीव जीवितेन हि गोष्ठमिदं नस्त्वदायत्तम्।।३८।।**[१]

धवलो वृषश्रेष्ठः तुभ्यं त्वदर्थं त्वां सुखयितुं त्वत्कृते इत्यर्थः, जीवति। धवलार्थं च गृष्टय एकवारं प्रसूता गोयुवत्यो जीवन्ति। अतो हे गौस्त्वं जीव। यतो जीवितेन (भवज्जीवितेन, हेतुना) नः इदं गोष्ठं त्वदायत्तं त्वदधीनम्, तव जीवनेनैव सर्वमिदं गोष्ठं जीवतीत्यर्थः। एकवारमात्रं प्रसूतानाम् अग्रे च प्रसवयोग्यानां युवतीनां गवां प्रसवादिकं सर्वमवरुध्यत इत्यतिशयं द्योतयितुं गृष्टिपदम्। सुखं तिष्ठतीत्यादिस्थाने जीवतीति कथनेन-जीवित-स्थितिरेव त्वदधीना का कथा सुखादेरित्यतिशयो व्यज्यते। तम्बा गौः। 'धवला गवि वृषश्रेष्ठे पुमान्' इति, 'अथ गृष्टिः सकृत्प्रसूतगवि' इति च मेदिनी। त्वामवलम्ब्यैव सर्वोऽयं परिकरः प्रचलतीति परिहासविधया नायिकां प्रत्यभिव्यज्यते।

पथि गच्छन्नपि पान्थः प्रियाप्रणयपरवशो निजप्रियतमावयवसमानतां यत्र कुत्रचिदवलोकयंस्तत्स्मरणोत्कण्ठावशाद्विवशं तत्रासज्यते। भवांस्तु अनुवर्तनपरामपीमामुपेक्षमाणः खेदयतीति गूढमुपालभमाना सखी नायकं प्रत्याह-

**स्पृशति विजिघ्रति चुम्बति हृदये निदधाति जनितरोमाञ्चः।**
**पथिको मधूकपुष्पं पश्यत जायाकपोलसमम्।।३९।।**[२]

पथिको जायकापोलसमं मधूकपुष्पं स्पृशतीत्यादि पश्यत। जायाकपोलसाम्यं दृष्ट्वा सोत्कण्ठः पूर्वं स्पृशति, ततो वर्धिताभिलाषस्तज्जिघ्रति, ततो विजृम्भितपूर्ववासनश्चुम्बति, ततोऽनुस्मृतप्रियाविरहः सविषादौत्सुक्यं प्रणयवशादुरसि निदधातीति क्रमशो भावविजृम्भितिः

---

१. **धवलो जिअइ तुह कए धवलस्स कए जिअन्ति गिट्ठीओ।**
**जिअ तम्बे अम्ह वि जीविएण गोट्ठं तुमाअत्तम्।।३८।।**
[धवलो जीवति तव कृते धवलस्य कृते जीवन्ति गृष्टयः।
जीव हे गौः अस्माकमपि जीवितेन गोष्ठं त्वदायत्तम्।।]

२. **अग्घाइ छिवइ चुम्बइ ठेवइ हिअअम्हि जणिअरोमञ्चो।**
**जाआकवोलसरिसं पेच्छइ पहिओ महुअपुप्फम्।।३९।।**
[आजिघ्रति स्पृशति चुम्बति स्थापयति हृदये जनितरोमाञ्चः।
जायाकपोलसदृशं पश्यत पथिको मधूकपुष्पम्।।]

सूचिता। ततश्च तत्साम्यमात्रेण पथिको मधूकपुष्पं बहु मन्यते मन्दानुरागस्त्वं तु समक्षोपस्थितामप्युपेक्षसे इति प्रियं प्रत्युपालम्भो ध्वन्यते। 'यो यस्य प्रियस्तस्य तदवयवानुकारिणि प्रीतिर्भवतीति निदर्शयन्कोऽपि सहचरमाह' इति गङ्गाधरः।

अन्तःकुटिलां तां मुधैवानुकूलामिव मन्वानो मोघमेवोपसेवसे इति नायकं कस्याश्चन सकाशान्निवर्तयितुं दूती अन्यापदेशेनाह–

**पश्य मुधार्द्रीक्रियते भुजङ्गकृत्तौ हि कटकलग्नायाम्।**
**निर्झरधाराश्रद्धालुकेन शीर्षं वनगजेन।।४०।।**[१]

प्रचण्डातपतप्तेन वनगजेन गिरिनितम्बलग्नायां भुजङ्गकृत्तौ (सर्पकञ्चुके) निर्झरधाराप्रतीतिमता सता निजशीर्षं मुधैव निरर्थकमेवार्द्रीक्रियते, आर्द्रीकरणमभिनीयते इत्यर्थः। भुजङ्गकृत्तिपदेन– 'भयङ्करजनसम्बन्धिनी सा नोपसर्पणे सुखावहा' इति जारं प्रति सूच्यते। वनगजेनेत्यनेन– अदाक्षिण्यादेव तां मोघमनुवर्तस इति व्यज्यते। ततश्च– अनागरिक इव त्वं निष्ठुरपरिजनायास्तस्याः सकाशान्मुधैव रसप्राप्तिमाशासे इति नायकं प्रत्यभिव्यज्यते। 'अप्पिज्जइ' इति पाठे 'अर्प्यते' इत्यर्थः। जारस्यान्यमनस्कतासम्पादनार्थं मध्याह्नाभिसारिकायाः सेयमुक्तिर्वा। 'नार्तस्तत्त्वविचारक्षमो भवतीति दर्शयन्कोऽपि मध्याह्नवर्णनमाह' इति गङ्गाधरावतरणम्।

गुणवत्यामपि पूर्वनायिकायामपरितुष्य गुणान्तरलालसया नायिकान्तरगामिनं नायकं सोपालम्भं शिक्षयन्ती काचिदन्यापदेशविधयाऽऽह–

**कमलं मुञ्चन्मधुकर पक्वकपित्थानुगन्धलोभेन।**
**पामर इव विज्ञास्यसि संस्पृश्यालेख्यलड्डुकं परतः।।४१।।**[२]

---

१. **उअ ओल्लिज्जइ मोहं भुअंगकित्तीअ कडअलग्गाइ।**
**ओज्झरधारासद्धालुएण सीसं वणगएण।।४०।।**
[पश्यार्द्रीक्रियते मोघं भुजङ्गकृत्तौ कटकलग्नायाम्।
निर्झरधाराश्रद्धालुकेन शीर्षं वनगजेन।।]

२. **कमलं मुअन्त महुअर पिक्ककइत्थाणँ गन्धलोहेण।**
**आलेक्खलड्डुअं पामरो व्व छिविऊण जाणिहिसि।।४१।।**
[कमलं मुञ्चन्मधुकर पक्वकपित्थानां गन्धलोभेन।
आलेख्यलड्डुकं पामर इव स्पृष्ट्वा ज्ञास्यसि।।]

अप्रतिबुद्धः पामरो यथा चित्रस्थं मोदकादिकमालोक्य तत्प्राप्त्याशया मनसि मोदमानो हस्तस्थितं भक्ष्यमसन्तोषात्परित्यज्य तल्लिप्सया गतः स्पृष्ट्वा तत्स्वरूपमवगत्य पश्चादनुतप्यते एवं त्वमपि नीरसस्य कर्कशस्पर्शस्य कपित्थस्य गन्धमात्रादाकृष्टचेताः सम्मुखोपनतं कमलं मुञ्चन् स्पर्शसमनन्तरमेव द्वयोरनयोरन्तरं परिज्ञायानुतापं प्राप्स्यसीति भावः। मधु सञ्चिन्वानस्त्वं पाषाणप्रायेऽस्मिन्प्रवर्तस इत्यहो ते आत्मानुरूपा प्रवृत्तिरिति गूढोपालम्भो मधुकरेत्यामन्त्रणेन ध्वन्यते। पक्वेति विशेषणेन– परिपाककालिकः सोऽयं गन्धः साम्प्रतिक एव, नाग्रतः स्थायीति वैगुण्यं सूच्यते। तथा च– पूर्णयौवनवशादेव तस्याः सेयमस्थायिनी लोभनीयता, न सहजेति नायकं प्रत्यभिव्यज्यते। अनुगन्धेत्यनुपदेन–सोऽयं गन्धोऽप्यनुगतमात्रो न सहज इति सूच्यते। आलेख्यलड्डुकेत्यनेन–उपरित एव दर्शनीयसौन्दर्या सा नान्तर्गुणवतीति मोघायामाशायां किं तामङ्कगतामुपेक्षस इति ध्वन्यते।

परिणयप्रसङ्गात्पूर्वमेव प्रोद्भूतप्रणयाया अस्याः साम्प्रतमस्मिन् यूनि प्रगाढप्रीतेश्चिह्नानि प्रत्यक्षं प्रादुर्भवन्तीति परिज्ञानपाटवं प्रथयन्कश्चित्सहचरमाह–

**माङ्गल्यगायिकाभिर्गीते वरगोत्रदत्तकर्णायाः।**

**श्रोतुमिव निर्गतः किल रोमाञ्चः पश्य भाविनववध्वाः।।४२।।**[१]

मङ्गलमेव माङ्गल्यम्। विवाहमङ्गलगायिकाभिर्गीते सति वरस्य गोत्रे नामनि दत्तकर्णाया भाविन्याः नववध्वाः रोमाञ्चः श्रोतुमिव निर्गतः किलेति पश्य। दत्तकर्णेति पदेन–नामश्रवणे दत्तावधानतया पतिप्रीतिपरिचयः प्रख्यायते। रोमाञ्चः श्रोतुमिव निर्गत इत्युत्प्रेक्षया–तस्या रोमरोमाऽपि गुणश्रवणलालसमिति प्रगाढा प्रीतिर्ध्वन्यते। भविष्यद्वध्वा इत्युक्त्या (उह्यते इति वधूः) इति परिभाषितं वधूत्वं सम्प्रति न जातं ततोऽपीदृशी प्रीतिस्तर्ह्यग्रतस्तु किं वाच्यमित्यतिशयो द्योत्यते।'काप्यासन्नविवाहायाः सखीजनं सपरिहासमाह' इति गङ्गाधरावतरणम्।

'मङ्गलगीतेषु किमिति सेयं सङ्कुचितेव तिष्ठतीति' विदितव्यभिचारायाः कस्याश्चन विवाहावसरे सनिभृतपरिहासमालपितः कश्चित्सहृदयः 'पूर्वतनसङ्केतवेतसनिकुञ्जालोकनेन मनस्येवमुत्प्रेक्षमाण सङ्कुचतीति' तदुत्प्रेक्षां निजसुहृदं प्रत्यनुवदति–

---

१. **गिज्जन्ते मङ्गलगाइआहिँ वरगोत्तदिण्णअण्णए।**
**सोउं व णिग्गओ उअह होन्तवहुआइ रोमञ्चो।।४२।।**
[गीयमाने मङ्गलगायिकाभिर्वरगोत्रदत्तकर्णायाः।
श्रोतुमिव निर्गतः पश्यत भविष्यद्वधूकाया रोमाञ्चः।।]

**मन्ये शृण्वन्तो मुहुरासन्नविवाहमङ्गलोद्गीतम्।**
**तैर्नवयुवभिः साकं हसन्ति मां वेतसनिकुञ्जाः।।४३।।**[1]

यैः समं सुरतसुखमनुभूतं तैः साकमित्यर्थः। स्वयं समनुभूतसङ्गमसौख्यास्ते युवानस्तु सम्प्रति सञ्जायमानं विवाहमालोक्य मनसि हसन्त्येव, परं तैः साकं साक्षिरूपेण ते सङ्केतवेतसकुञ्जा अपि पाण्डुरपुष्पविकासव्याजेन मां हसन्तीति भावः। 'आसन्नविवाहा व्यभिचारशीला काचित्पुष्पितं सङ्केतवेतसनिकुञ्जामालोक्योत्प्रेक्षते' इति गङ्गाधरः।

अचिरवृत्तविवाहयोरेव वधूवरयोः पश्य कीदृशी प्रीतिरिति परिहाससङ्कथासु नायिकासखी सखीः प्रत्याह–

**सपदि चतुर्थीमङ्गलभाविविरहभयविशेषलग्नाभ्याम्।**
**स्वेदाश्रुभी रुदितमिव वरस्य तस्याश्च हस्ताभ्याम्।।४४।।**[2]

सपदि शीघ्रमागामिनि चतुर्थीमङ्गले भाविनो विरहस्य भयात् विशेषतो लग्नाभ्यां सङ्घटिताभ्यां वरस्य तस्याश्च [नायिकायाः] हस्ताभ्यां स्वेदरूपाण्यश्रूणि विमुच्य रुदितमिवेत्यर्थः। भये उपस्थिते जनो रक्षणप्रत्याशयेव स्निग्धं जनं गाढमालिङ्गति। एवं च वियोगभयान्नि-बिडमाश्लिष्टयोः करयोः परस्परं स्नेहातिशयो ध्वन्यते। विवाहोऽयं पाणिपीडनमित्याख्यायते, ततश्चावयोरेव मिथोग्रहणेन सञ्जातव्यपदेशं वैवाहिकमिदं समागमसुखं हन्ताचिरादेव विरहदुःखे परिणंस्यत इति लज्जाखेदयोः कारणात् [अन्याङ्गेषु तिष्ठत्स्वपि] हसत इति हस्तौ इति परिभाषिताभ्यामपि हस्ताभ्यां रुदितमित्याशयः। मिथः करयोजने स्वेदरूपसाविकोदयात्परस्परं गाढानुरागः प्रतीयते। विवाहोत्तरं चतुर्थीहोमम् (नागवल्लीम्) कृत्वा जामाता स्वगृहं गच्छति। पुनर्यावद्द्विरागमनं द्वयोर्विरहो भवतीति लोकव्यवहारः।

---

१. **मण्णे आअण्णन्ता आसण्णविआहमङ्गलुग्गाइम्।**
**तेहिँ जुआणेहिँ समं हसन्ति मं वेअसकुडङ्गा।।४३।।**
[मन्ये आकर्णयन्त आसन्नविवाहमङ्गलोद्गीतम्।
तैर्युवभिः समं हसन्ति मां वेतसनिकुञ्जः।।]

२. **उअगअचउत्थिमङ्गलहोन्तविओअसविसेसलग्गेहिँ।**
**तीअ वरस्स अ सेअंसुएहिँ रुण्णं व हत्थेहिं।।४४।।**
[उपगतचतुर्थीमङ्गलभविष्यद्वियोगसविशेषलग्नाभ्याम्।
तस्या वरस्य च स्वेदाश्रुभी रुदितमिव हस्ताभ्याम्।।]

नववधूसङ्गमस्यालौकिकसुखकरत्वं प्रतिपादयन्कश्चित्सहचरमाह–

**न च दृष्टिं नयति मुखं स्प्रष्टुं न ददाति नालपति किमपि।**
**तदपि च किमपि रहस्यं प्रियो भवति नववधूसङ्गः।।४५।।**[१]

न पश्यतीति स्थाने 'मुखं प्रति दृष्टिं न नयति' इत्युक्त्या– 'भूमौ इतस्ततो वा प्रेर्यमाणतायां स्ववशाया अपि दृष्टेरुपरि अधिकारसत्त्वेऽपि भयसङ्कोचादिकारणात्तां न नयतीति' कश्चन विचित्रः साध्वसातिशयो द्योत्यते। तथापि च नववधूसङ्गः प्रियो भवतीति किमपि (अनिर्वचनीयम्) रहस्यमिति भावः। प्रियत्वहेतोर्दर्शनस्पर्शनादेरभावेऽपि प्रियत्वरूपं कार्यमिति विभावना।'विभावना विनापि स्यात्कारणं कार्यजन्म चेत्' इति लक्षणात्। किमपि रहस्यमित्यस्याविमर्शे तु नववधूसङ्गः प्रियो भवतीत्यत्र 'सा नववधूरिति तत्सङ्गः प्रियो भवति' तथा च प्रियतायां नवत्वं कारणमिति काव्यलिङ्गोऽपि बुद्धिस्थो भवति।

नवोढबालाया वाम्येन कुपितं नायकं प्रसादयितुं काचित्प्रौढा नववध्वाः स्वभावमाह–

**कृतकप्रसुप्तविवलति नववध्वा नववरेऽपि कम्पयुतः।**
**संवेष्टितोरुनियमितवस्त्रग्रन्थिं गतो हस्तः।।४६।।**[१]

नववरे कृतकप्रसुप्ते अलीकमेव प्रसुप्ते, अत एव विवलति साम्प्रतमपि स्पर्शादावनुकूला जाता न वेत्युत्कण्ठया वधूं प्रति किञ्चित्परावर्तमानेऽपि सति, भयेन कम्पमानो नववध्वा हस्तः संवेष्टिताभ्यामूरुभ्यां नियमितस्य सुदृढसंवृतस्य वस्त्रस्य ग्रन्थिं नीवीं प्रति गतः। वरस्य किञ्चिन्मात्रपरावर्तनेऽपि नीविमसौ नावसंस्रयेदिति–तस्या भयं भवतीति भावः। कृतकस्वापेन– 'विश्रब्धदशायां किमियमाचेष्टते' इति परिज्ञानाभिलाषः, 'अनुनयविनयौ कृत्वा दैन्येन प्रसुप्तखिन्ने

---

१. **ण अ दिट्ठिं णेइ मुहं ण अ छिविउं देइ णालवइ किं पि।**
**तह वि हु किं पि रहस्सं णववहुसङ्गो पिओ होइ।।४५।।**
[न च दृष्टिं नयति मुखं न च स्प्रष्टुं ददाति नालपति किमपि।
तथापि खलु किमपि रहस्यं नववधूसङ्गः प्रियो भवति।।]

२. **अलिअपसुत्तवलन्तम्मि णववरे णववहूअ वेवन्तो।**
**संवेल्लिओरुसंजमिअवत्थगण्ठिं गओ हत्थो।।४६।।**
[अलीकप्रसुप्तवलमाने नववरे नववध्वा वेपमानः।
संवेष्टितोरुसंयमितवस्त्रग्रन्थिं गतो हस्तः।।]

मयि साम्प्रतं कदाचिदनुमता स्यात्' इत्युत्कण्ठा वा सूच्यते। नववरेऽपि तस्या एतावद्भयं भवति किं पुनः प्रौढे प्रेयसीति नववरे इति पदेन ध्वन्यते। एवं च स्वभाव एवायं बालानां न पुनरयं कोपः, तस्माद्विस्रम्भणपूर्वकं धैर्येण प्रवर्तितव्यं न पुनः कोपेनेति नायकं प्रत्यभिव्यज्यते।

विस्रम्भणपूर्वकमेव नववध्वां प्रवर्तितव्यमिति नायकं शिक्षयन्तीं काचित्प्रौढा बलविचेष्टया कोपितायाः कस्याश्चिदवस्थामाह–

**न हि भणति पृच्छ्यमाना स्फुरति गृहीता च चुम्बिता रोदिति।**
**तूष्णीकाभिनववधूरुपगूढा किल कृतापराधेन।।४७।।**

हस्तादिषु गृहीता प्रस्फुरति, हस्तादिकं सरभसमवहेल्य दूरे विचलति। कृतापराधतायां विस्रम्भणमकृत्वा बलात्प्रवृत्तौ हि संलापादिषु वामैव सा भवतीति भावः। किंवा भयसङ्कोचा-दिवशादनिच्छन्त्यां तस्यां हस्तग्रहणादिकमेवापराधः। अत एव कृतताद्दशापराधेन तेन पृच्छ्यमाना न भणतीत्यादि। अथवा– पृच्छ्यमाना न भणति गृहीता स्फुरति इत्यादि नवोढायाः स्वाभाविकचेष्टामवलोक्य कृतापराधेन निपुणनायकेन तूष्णीका नव वधूरुपगूढा। तथा च सम्मतिमप्रतीक्ष्य स्वभावतरला नववधूर्बलादुपभोक्तव्येति नायकं प्रति प्रौढा दूती शिक्षयतीति सन्दर्भो बोध्यः। 'विसम्भणानभिज्ञेन कान्तेन कोपितायाः कस्याश्चिदवस्थां कापि सखीमाह' इति गङ्गाधरावतरणम्।

यस्मिन्यूनि सेयं बद्धभावा, गुणमुग्धतया पुनः पुनस्तस्यैव कथाः कुर्वतीरन्ययुवती-रालोक्य मनसीर्ष्याकषायिता काचिन्मातृभगिनीमाह–

**तत एव भवन्ति कथा विकसन्ति च तत्र तत्र पूर्यन्ते।**
**अपि मन्ये मातृष्वसरेकयुवाऽयं किमु ग्रामः।।४८।।**[२]

---

१. **पुच्छिज्जन्ती ण भणइ गहिआ पप्फुरइ चुम्बिआ रुअइ।**
**तुह्लिका णववहुआ कआवराहेण उवऊढा।।४७।।**
[पृच्छ्यमाना न भणति गृहीता प्रस्फुरति चुम्बिता रोदिति।
तूष्णीका नववधूः कृतापराधेनोपगूढा।।]

२. **तत्तो च्चिअ होन्ति कहा विअसन्ति तहिं तहिं समप्पन्ति।**
**किं मण्णे माउच्छा एक्कजुआणो इमो गामो।।४८।।**
[तत एव भवन्ति कथा विकसन्ति तत्र तत्र समाप्यन्ते।
किं मन्ये मातृष्वसः एकयुवकोऽयं ग्रामः।।]

ततस्तस्मादेव युवकात्कथा भवन्ति। तमवलम्ब्यैव कथानामारम्भ इत्यर्थः। तत्र विकसन्ति वृद्धिं प्राप्नुवन्ति। तत्रैव च समाप्यन्ते। ततश्च हे मातृष्वसः! एको युवा यस्मिन्नीदृशोऽयं ग्राम इति किमहं मन्ये? किमन्यः कश्चन युवा नास्ति यदेकस्य तस्यैव कथामुखरो लोक इति भावः। तस्यैव कथा भवन्तीति स्थाने 'तस्मादेव कथा भवन्ति' इत्यनेन 'परस्परं कथोपकथनस्यारम्भस्तं विषयीकृत्यैव भवति, इतः पूर्वं तु न तासु संलाप इति' तद्गुणमुग्धतातिशयो व्यज्यते। विकसन्तीति पुष्पधर्मताकथनेन 'तद्विषयीकरणं विना कथा मुकुलिता एव तिष्ठन्ति, तं वर्ण्यं कृत्वा तु तासां गुणसौरभप्रसारः' इत्यतिशयो ध्वन्यते। 'पुनः पुनः कस्यचित्कथाः कुर्वतीं कामप्युपहसन्ती कापि मातृभगिनीमाह' इति गङ्गाधरः।

गुणानुरक्ता काचित्प्रियवचनानां मनोवशीकारितामन्तरङ्गसखीं प्रत्याह–

**वचनानि यानि वयमपि जल्पामस्तानि जल्पति जनोऽपि।**
**तेन प्रजल्पितानि तु हृदयं सुखयन्ति तान्येव।।४९।।**[1]

जनोऽपीत्यनेन–केवलमस्माकमेव वचनानि सामान्यानि न, अस्मद्बहुमानभाजनमन्योऽपि जनस्तादृशान्येव संलपतीति सर्वजनवचनापेक्षया प्रियवचनानामुत्कर्षः सूच्यते। तान्येव वचनानि तेन प्रजल्पितानि तु हृदयहारीणीत्यनेन–शब्दासन्निवेशः स एव भवति परं तत्सम्बन्धित्वेन प्रियतया तेषां हृदयाकर्षकत्वं भवतीति प्रियं प्रति हार्दिकोऽनुरागो व्यज्यते।

कृतकलहतया पत्युः पराङ्मुखीं नायिकां जारसमागमायोत्साहयन्ती दूती प्रसङ्गानुगतमाह–

**सर्वादरेण मार्गत जनं प्रियं यदि सुखेन वः कार्यम्।**
**यो यस्य हृदयदयितस्तन्न सुखं तत्र यन्नास्ति।।५०।।**[2]

---

१. **जाणि वअणाणि अम्हे वि जम्पिओ ताइँ जम्पइ जणो वि।**
**ताइं चिअ तेण पजम्पिआइं हिअअं सुहावेन्ति।।४९।।**
[यानि वचनानि वयमपि जल्पामस्तानि जल्पति जनोऽपि।
तान्येव तेन प्रजल्पितानि हृदयं सुखयन्ति।।]

२. **सव्वाअरेण मग्गह पिअं जणं जइ सुहेण वो कज्जम्।**
**जं जस्स हिअअदइअं तं ण सुहं जं तहिं णत्थि।।५०।।**
[सर्वादरेण मृगयध्वं प्रियं जन यदि सुखेन वः कार्यम्।
यद्यस्य हृदयदयितं तन्न सुखं यत्तत्र नास्ति।।]

मार्गत अन्विष्यत। तथा च सहसा प्राप्तेरभावे, सयत्नमन्वेषणेनापि प्रियजनाः प्रेम्णा सङ्गन्तव्यः। स्वयं यत्र प्रणयी आगच्छति किं तत्र वक्तव्यमिति समधिकप्रोत्साहनं व्यज्यते। सर्वादरणेत्यनेन-यदि गुणाभिमानी स उपेक्षेत तर्ह्यपि नानाविधैरादरानुगमनैः स प्रसादनीयः। यदि च प्रियजनः स्वयमेवादरं कर्तुमुद्यतः सुबहु सौभाग्यं तत्राऽपि जारकृतादरः सूच्यते। यदि सुखेन कार्यमित्यनेन-'यद्यपि ते पतिरस्त्येव परं हृदयाननुकूलतया न तत्समागमेन सुखमिति' पत्युरुपजापो ध्वन्यते। यत्सुखं तत्र (हृदयदयिते) न भवेदीदृशं सुखमेव नास्ति, अपि तु सर्वं सुखं तत्रोपलभ्यत इत्यर्थः। तत्र सुखमित्यनेन यद्धि सुखमिति सर्वजनैरनुभूतं तत्तु सर्वमपि लभ्यते, यच्च यच्च न प्राप्येत तत्तत्सुखपदवाच्यमेव नेत्याकूतम्। 'वः' इति बहुत्वेन 'त्वामेव प्ररोचनाविधया नेदं कथयामि, अपि तु सामान्यतया सर्वानेव सुखलिप्सून् कथयामीत्य-पक्षपातो ध्वन्यते। प्राकृते लिङ्गादेरनियमात् यो यस्य हृदयदयित इति पुंस्थाने 'जं जस्स हिअअदइअं' इति क्लीबं प्रायाजीति बोद्धव्यम्। गङ्गाधरभ्रमानुसारं यथास्थितं नपुंसकमेव चेत्क्रियेत तर्हि-यद्वस्तु यत्सुखं वा यस्य हृदयदयितमिति गतिरवलम्ब्या भवेत्। परं पूर्वार्द्धे प्रियजनस्य स्पष्टं निर्देशेन दयितपदस्वारस्याभावेन गतिरवलम्ब्या भवेत्। परं पूर्वार्द्धे प्रियजनस्य स्पष्टं निर्देशेन दयितपदस्वारस्याभावेन च सेयमगतिरेवेत्यलम्।

अकृतप्रसाधनैव कथमुपस्थितासीति कान्तमुपगतां दुहितरं प्रति क्रुध्यन्तीं वेश्यामातरं वचनचातुर्येण कामुकः स्वयमाह-

**दृष्टिसुख ईक्ष्यमाणो विचिन्त्यमानो मनोरमः श्वश्रु।**
**श्रुतिसुख उदीर्यमाणः प्रियो जनो नित्यरमणीयः।।५१।।**[१]

दृश्यमानः प्रियजनो दृष्टेः सुखकारकः। उदीर्यमाणः सङ्कथासु कीर्त्यमानः। सर्वास्व-स्थास्वपि सर्वदैव सुखकारक इत्यर्थः। प्रियजनस्य ईक्षणं चिन्तनं कीर्तनं च सुखमिति कथनसौकर्येऽपि ईक्ष्यमाणः प्रिय इत्यादिना ईक्षणचिन्तनादिकं तत्सम्बन्धितयैव सुखकारकमतः स स्वयमेव सुखस्वरूपोऽस्तीत्यतिशयो व्यज्यते। एवं च- हृदयतोऽनुरज्यतो मम कृते किं वा प्रसाधनेनेति सवैदग्ध्यं स्वप्रणयः प्रकाश्यते। 'तथैवापरगाथामाह' इति निबध्नता गङ्गाधरेण नायिकोत्साहनार्था दूत्युक्तिरपि सेयं स्वीकृता, परमत्र 'श्वश्रु' इत्यामन्त्रणं न सम्बध्यते।

---

१. **दीसन्तो दिट्ठसुओ चिन्तिज्जन्तों मणवल्लहो अत्ता।**
**उल्लावन्तों सुइसुहो पिओ जणो णिच्चरमणिज्जो।।५१।।**
[दृश्यमानो दृष्टिसुखश्चिन्त्यमानो मनोवल्लभः श्वश्रु।
उल्लप्यमानः श्रुतिसुखः प्रियो जनो नित्यरमणीयः।।]

निःशेषितधनत्वात्पूर्वं दत्तार्द्धचन्द्रस्ततः पुनरुपार्जितधनत्वे दुहितृस्नेहमुपदर्श्य कुट्टन्यानुनीयमानो भुजङ्गः पूर्वदुर्वचनानि साकूतमभिध्वनयन्सोपालम्भप्रत्याख्यानमात्मनिन्दाव्यपदेशेनाह–

**उन्नत्या सन्त्यक्ताः स्थानभ्रष्टाश्च गलितपीवरताः।**

**स्थविरापयोधराविव वयं निषण्णा उदर एव।।५२।।**[१]

उन्नत्या तुङ्गत्वेन पक्षे उत्कर्षेण। स्थानभ्रष्टा भुजमूलरूपात् स्थानतः पतिताः, पक्षे स्वस्वरूपोचितपदतश्च्युताः। उदर एव निषण्णाः उदरोपरि लम्बमानाः, पक्षे उदरभरणायैव जीवन्तः। सन्त्यक्ताः स्थानभ्रष्टा इत्यादिविशेषणानां पयोधरावित्यनेन सह वचनविपरिणामेनाऽन्वयः। उपमायां वचनसाम्याग्रहे तु व्यक्तिबहुत्वात्पयोधरबहुत्वमवलम्ब्य 'स्थविरापयोधराः' इत्येव पठनीयम्। तथा च– 'उन्नतपुरुषा एवास्मादृशीनां व्यवहारोचिताः' इत्यादि भवत्या पूर्वमुक्तत्वात् निर्धनतयैव अवनताः पदभ्रष्टाश्च वयं न युष्माकमनुरूपाः, किमस्माभिरिति सोत्प्रासं प्रत्याख्यानमभिव्यज्यते। अनभिरुचितौ स्थविरापयोधरौ यथा न केनचिदुपगम्यौ तथा क्षीणधना वयमपि निःसार्या एव, किमस्माभिर्युष्माकं प्रयोजनमिति निगूढोपालम्भश्च ध्वन्यते। वयमिति बहुत्वेन 'अहमेव किम्, अस्मत्सदृशा बहवोऽपि भवादृशीभिरवधीरिता युष्मत्स्वरूपं परिचाायिताश्च' इति कुट्टनीं प्रति साकूतं व्यज्यते।

वाग्वैदग्ध्यमण्डिता काचित्खण्डिता प्रातरायान्तं कान्तं दिनकरनमस्कारव्यपदेशेनोपालभते–

**प्रत्यूषागत रञ्जितदेह प्रियालोकलोचनानन्द।**

**सन्नखमण्डनक नमो दिवसपतेऽन्यत्रनीतरजनीक।।५३।।**[२]

---

१. **ठाणब्भट्ठा परिगलिअपीणआ उण्णईअ परिचत्ता।**
**अम्हे उण ठेरपओहर व्व उअरे च्चिअ णिसण्णा।।५२।।**
[स्थानभ्रष्टाः परिगलितपीनत्वा उन्नत्या परित्यक्ताः।
वयं पुनः स्थविरापयोधरा इवोदर एव निषण्णाः।।]

२. **पच्चूसागअ रञ्जितदेह पिआलोअ लोअणाणन्द।**
**अण्णत्तखविअसव्वरि णहभूसण दिणवइ णमो दे।।५३।।**
[प्रत्यूषागत रक्तदेह प्रियालोक लोचनानन्द।
अन्यत्र क्षपितशर्वरीक नभोभूषण दिनपते नमस्ते।।]

प्रत्यूषे प्रातः काले आगतो द्वीपान्तरात्, पक्षे सपत्नीभवनात्। रञ्जितदेहः उदयसमये अरुणमण्डलः पक्षे सपत्नीसङ्क्रान्तालक्तकादिना रक्तशरीरः, सपत्न्यामनुरक्तमूर्तिर्वा। प्रियः आलोकः प्रकाशोऽवलोकनं वा यस्य सः। लोचनयोरानन्दस्वरूपपक्षे प्रियालोकलोचनानन्देत्येकं पदम्। प्रियालोकस्य अन्यमहिलाजनस्य लोचनयोरानन्दो यस्मात्सः। सन्नं निजस्याभावेऽवसन्नं शून्यं यत्खम् आकाशं तस्य मण्डनस्वरूप! नभोभूषणेत्यर्थः। पक्षे सत् उत्तमं सपत्नीदत्तनखान्येव मण्डनं यस्य सत्सम्बुद्धौ। सपत्नीदत्तनखक्षताद्यङ्कितेत्यर्थः। अन्यत्र अन्यद्वीपे नीता रजनी येन, पक्षे अन्यस्या गृहे नीता रजनी येन। दिवसपते हे सूर्य ते नमः। विदग्धाया नायिकाया वाच्यः सूर्यरूपोऽर्थः, परं शब्दशक्तिमूलानुरणनविधया अनुरक्तशरीराद्यर्थस्यापि प्रतीतेर्नायक-रूपोऽर्थोऽपि प्रतीयते। ततश्च सूर्यप्रसङ्गे नायकमनुकीर्तयन्त्याः प्रमत्तत्वं मा प्रसार्ीदिति द्वयोरुपमानोपमेयभावो व्यङ्ग्यत्वेन कल्प्यते। एवं च सूर्यो यथा दूरत एव प्रणम्यते न निकटमुप-गम्यते तथा त्वमपि दूरत एव वन्दनीयोऽसीति नायकं प्रत्युपालम्भश्चरमं व्यङ्ग्यम्। नायकपक्षे 'दिवसपते' इत्यामन्त्रणेन- त्वं मे दिवसकालार्थमेव पतिरसि। रात्रौ तु सपत्नीषु पत्नीत्वं कलयसीति गूढोपालम्भः सूच्यते। पतिपदेनापि- 'त्वं भोजनवस्त्राभ्यां मत्पालनमेव स्वकर्तव्यं मन्यसे' इत्याक्षेपो द्योत्यते। प्रियालोकेतिपदेन- यत्र रात्रयो नीयन्ते ता एव ते प्रियाः, अहं तु ते चक्षुः-शूलमिति सपत्नीं प्रत्यसूया व्यज्यते। लोके हि यं प्रति दूरसम्बन्धो वा सम्बन्धविच्छेदो वा सूचयितुमिष्यते तत्र 'त्वं सम्प्रति प्रणम्योऽसि' इति वक्रोक्तिविधया प्रोच्यते। तथा चात्रापि प्रणामेन 'प्रत्यहं व्यलीकशतैरनुभूतभूरिवेदनाहं साम्प्रतं त्वत्तो दूरमेव तिष्ठामि, धन्यस्त्वं मे स्वामी' इति गूढकोपोऽभिव्यज्यते। खण्डिताया उदाहरणे गृहीता सेयं गाथा सरस्वतीकण्ठाभरणे।

प्रवृत्तिशैथिल्यमवलोक्य 'किं गर्भवती'ति कान्तेन जिज्ञासिता काचिदाह-

**विपरीतसुरतलम्पट पृच्छसि मम किमिति गर्भसम्भूतिम्**

**अपवृत्ते कुम्भमुखे जललवकणिकापि तिष्ठति किम्।।५४।।**[१]

अपवृत्ते अधोमुखीकृते। कणिकापीत्यनेन- जललेशस्य का कथा, कणोऽपि न तिष्ठति। तथा च- रेतोबिन्दोरप्यसम्बन्धे गर्भगन्ध एव कीदृगिति सूच्यते। सम्भूतिपदप्रयोगेण एवं स्थितौ सम्भवोऽपि नास्तीति गूढमाकूतं व्यज्यते।

---

१. **विवरीअसुरअलेहल पुच्छसि मह कीस गब्भसंभूइम्।**

**ओअत्ते कुम्भमुहे जललवकणिआ वि किं ठाइ।।५४।।**

[विपरीतसुरतलम्पट पृच्छसि मम किमिति गर्भसम्भूतिम्।

अपवृत्ते कुम्भमुखे जललवकणिकापि किं तिष्ठति।।]

अभिरुचितेऽपि दयिते अतिदूरसम्बन्धानुरोधेनाप्रवर्तमानां नायिकां प्रोत्साहयन्ती दूती प्रसङ्गानुषङ्गेणाह–

**अत्यासन्नविवाहे प्रवर्द्धमाने तु तरुणगोपीभिः।**
**मधुमथने सम्बन्धा निह्नूयन्ते यशोदया साकम्।।५५।।**[१]

प्रवर्द्धमाने वयोवृद्धिं गच्छति मधुमथने अत्यासन्नो विवाहो यस्यैवम्भूते सति तरुणगो-पीभिः यशोदया सह ये सम्बन्धास्ते निह्नूयते। निकटसम्बन्धाभावे विवाहसम्बन्धो निष्प्रतिबन्धं स्यादिति भावः। तरुणपदेन– विवाहयोग्यता कृष्णेन सह प्रणयसम्बन्धश्च सूच्यते। तथा च– विवाहसम्बन्धार्थमप्येवंविधाः सम्बन्धा यदि नानुरुध्यन्ते तर्हि किमत्रैषां प्रतिबन्धकतागन्धोऽपीति नायिकां प्रत्यभिव्यज्यते। अत्यासन्नेत्यतिपदेन– अतित्वरितं चिकीर्ष्यमाणे विवाहे, एकत्र विवाहप्रतिबन्धकसम्बन्धेऽधिगतेऽन्यत्र स सम्बन्धः स्थिरीकृतो भवेदिति सूच्यते। 'कामार्ताः स्वाजन्यमप्यपलपन्तीति निदर्शयन्कश्चिदाह' इत्यस्पष्टार्थमिव गङ्गाधरावतरणम्।

दयितविषये भग्नमनोरथतया निर्वेदमुपगता काचित्सखेदं विधिमुपालभते–

**हृदयपटे किल यद्यन्मन आशावर्तिकाभिरालिखति।**
**तत्तत्प्रोञ्छति निभृतं बालक इव विधिरसौ विहसन्।।५६।।**[२]

मनः (कर्तृपदम्)। आशावर्तिकाभिः आशारूपाभिस्तूलकाभिर्यद्यत् आलिखति। मनसि नानाविधा आशाः कुर्वत्यहं यद्यत् निश्चिनोमि विधिस्तत्सर्वमतर्कितमेव लुम्पतीति भावः। आशावर्तिकाभिरिति बहुवचनेन–चित्रकारो नानाविधरङ्गार्थं नानाविधास्तूलिका यथा व्यवहरति तथाहमपि विविधा आशा हृदि धारयामीति ध्वन्यते। विहसनप्रोञ्छतीति खेलामुपयातस्य बालकस्य

---

१. **अच्चासण्णविवाहे समं जसोआइ तरुणगोवीहिं।**
**वड्ढन्ते महुमहणे संबन्धा णिह्लुविज्जन्ति।।५५।।**
[अत्यासन्नविवाहे समं यशोदया तरुणगोपीभिः।
वर्धमाने मधुमथने सम्बन्धा निह्नूयन्ते।।]

२. **जं जं आलिहइ मणो आसावट्टीहिँ हिअअफलअम्मि।**
**तं तं बालो व्व विही णिहुअं हसिऊण पम्हुसइ।।५६।।**
[यद्यदालिखति मन आशावर्तिकाभिर्हृदयफलके।
तत्तद्बाल इव विधिर्निभृतं हसित्वा प्रोञ्छति।।]

स्वभावचित्रणम्। एवं च– बालको यथापरस्य लाभालाभावविचारयन्नेव पटलिखितं प्रोञ्छति, सा चास्य नैसर्गिकक्रीडेति परिवर्ण्यते, तथैव विधिरपि मे सर्वमनुचिन्तितं मनोरथजातं क्रीडयेवापमार्ष्टीति द्योत्यते। विहसन्नित्यनेन–मम सर्वनाशं परिजानन्नपि विधिर्निर्दुःखमेव प्रवर्तत इति निष्ठुरता ध्वन्यते। निभृतमित्यनेन ममापरिज्ञातमेव सर्वं कार्यं विफलं भवतीति सहसा नैराश्यं सूच्यते। प्रोञ्छतिपदेन आलेख्यस्य हस्तेनापमार्जनेऽपि विरूपा अपि तद्गता रङ्गरेखा यथा प्रतीयन्त एव तथा मनोरथवैफल्येऽपि तेषां स्मृतिर्मां भृशमुद्व्यथयतीति दुःखस्मृति-रभिव्यज्यते। बालक इवेत्युपमया खेलाविलग्नबालकहठो यथा दुर्निवारस्तथेदं विधिविल-सितमिति विवशता ध्वन्यते। असाविति–समक्षमेव मे, मन्मनोरथानपहन्तीति दुःखकारणता द्योत्यते। मनो यद् (आ) ईषदेव लिखतीत्यनेन–आशापरम्पराया हृदये स्थानदानमात्र एव त्वरितमेव मे नैराश्यं भवतीति व्यज्यते।

सपाटवोपालम्भपण्डिता काचित्खण्डिता प्रातरुपगतं दयितं चन्द्रव्यपदेशेनाह–

**अनुभूतः पूर्णदिने सकलकलापूर्ण तव करस्पर्शः।**
**वन्दामहे द्वितीयासङ्गकृशाङ्गाधुना चरणौ।।५७।।**

षोडशकलाभिः पूर्ण (अयि चन्द्र), पूर्णदिने तव कलाभिः पूर्णे पूर्णिमादिवसे तव किरणस्पर्शोऽनुभूतः। द्वितीयासङ्गेन द्वितीयातिथेः सम्बन्धेन कृशशरीर! इदानीं वन्दनीय-चरणोऽसि। व्यङ्ग्यविधया तु दयितमाह– चतुःषष्टिकलाभिः पूर्णं पूर्णदिने तव सङ्गसौख्यपूर्णे दिने। अथवा प्राकृते 'पुण्णदिअहम्मि' इत्यस्य पुण्यदिवस इत्यर्थः। ततश्च मत्पुण्योदयदिने अथवा शोभने दिने तव हस्तस्पर्शोऽनुभूतः। इदानीं द्वितीयस्याः मत्तोऽपरस्याः सपत्न्याः सङ्गेन कृशाङ्ग! तव चरणौ वन्दामहे, इदानीं त्वं चरणयोः प्रणम्य एव न तु सविधमुपगम्य इत्यर्थः। दूरत एव नमस्करणीयोऽसीति भावः। कोपतः प्रत्याख्याने प्रसिद्धा किल चरणवन्दनोक्तिः। सकलकलापूर्णेति सासूयोक्त्या– 'त्वं सकलशाठ्यकलाभिः पूर्णोऽसि। एवं च भाग्यैरभिनन्दनीये पुण्येऽपि दिवसे तव करस्पर्श एव अस्मत्कृते भूरिभाग्यमभूत्। द्वितीयाभिः साकं तु सङ्गोऽपि भवति, यस्याधिक्येन कार्श्यमप्यभवत्। अहो धन्योऽसि?' इतीर्ष्या व्यज्यते। किञ्च– स किल कश्चन पुण्यो दिवस आसीद्यत्र ते करस्पर्शः (विवाहावसरे प्रथमप्रथमं पाणिग्रहः) मयानुभूतः। इदानीमन्यासङ्गकृशाङ्गात्त्वत्तो दूरपरिस्थितिरेव साधीयसी। एवं च– 'पाणिगृहीतीमपि मां

---

१. **अणुहुत्तो करफंसो सअलअलापुण्ण पुण्णदिअहम्मि।**
**वीआसङ्गकिसङ्गअ एह्णिं तुह वन्दिमो चलणे।।५७।।**
[अनुभूतः करस्पर्शः सकलकलापूर्ण पूर्णदिवसे।
द्वितीयासङ्गकृशाङ्ग इदानीं तव वन्दामहे चरणौ।।]

परिक्लेश्य अन्यासु शरीरशोषयित्रीषु निर्भरं रमसे' इत्याक्षेपो ध्वन्यते। अथवा- अस्माभिरस्मत्पुण्योदयदिने तव करग्रहणमात्रमनुभूतम्। इदानीं वास्तवे या ते सहधर्मिणी (भार्या), तस्याः सङ्गेन त्वं कृशाङ्गो दृश्यस एवेति कोपवैपरीत्यं व्यज्यते।'द्वितीया सहधर्मिणी' इत्यमरः। अप्रस्तुतेन चन्द्रवृत्तान्तेन प्रियतमचेष्टासूचनादप्रस्तुतप्रशंसा। अनया च- 'भाग्योदयसूचके शोभने दिने तव करस्पर्शो यो मयाऽनुभूतः, [भूतकालिकक्तेन सोऽनुभवकालो व्यतीतः] इदानीं तव चरणयोः प्रणामः। अर्थात्सपत्नीर्ष्याग्निदाहापेक्षया त्वत्तो दूरपरिस्थितिरेव सुखावहा' इत्युपालम्भो व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः। 'खण्डिता काप्यन्यापदेशेन कान्तं सचमत्कार-माह' इत्यवतरणम्।'अत्र समासोक्त्यलङ्कारेण चन्द्रकान्तयोरुपमानोपमेयभावो व्यङ्ग्यः' इत्युपसंहारश्च गङ्गाधरटीकायाम्।

प्रियतमगमने हृदयदृढीकरणार्थमुक्ता दृढानुरक्ता न नायिका सखीमाह-

**दूरान्तरिते दयिते कथमपि नयने निवर्तिते तु मया।**
**हृदयं तेन समं पुनरद्याऽप्यनिवारितं भ्रमति।।५८।।**[१]

दयिते दूरान्तरं गते सति, दूरं गत्वा वृक्षादिभिरन्तरिते तिरोहिते सति वा। मया नयने कथमपि निवर्तिते अतिकष्टेन परावर्तिते। निवर्तिते इति णिचा- 'ते स्वेच्छया न निवृत्ते, अपि तु मया बलात्परावर्तिते' इति प्रणयातिशयो द्योत्यते। अनिवारितं मम नियन्त्रणामवधीर्य बलात् प्रवृत्तम्। भ्रमतीत्यनेन- यत्र यत्र स गच्छति तत्र तत्रैव यातीति प्रियवश्यत्वं सूच्यते। अथवा- अनिवारितमित्यनेन 'लोकलज्जाभयेन नयने मया निवारिते, परं हृदयं न निवारितम्, यतो हृदयमस्मै समर्पितम्।' एवं च 'अवशीभूतहृदया कथं धैर्यमुपयामि' इति स्वपारतन्त्र्यं सखीं प्रत्यभिव्यज्यते। 'दूरान्तरितेऽपि' इति मूलगतस्य 'अपि' शब्दस्य विशेषतो न स्वारस्यमिति तदुपेक्षा। तस्यैवाग्रहे तु 'दयिते दूरान्तरितेऽपि मया कथमपि निवर्तिते नयने' इति पाठ्यम्। 'विरहोत्कण्ठिता दूतीमाह' इति गङ्गाधरावतरणम्।।

दयितविलोकनादेव शिथिलितमानां नायिकामालोक्य मानं शिक्षयन्ती सखी सप्रणयोपालम्भमाह-

---

१. **दूरन्तरिए वि पिए कह वि णिअत्ताइँ मज्झ णअणाइँ।**
**हिअअं उण तेण समं अज्ज वि अणिवारिअ भमइ।।५८।।**
[दूरान्तरितेऽपि प्रिये कथमपि निवर्तिते मम नयने।
हृदयं पुनस्तेन सममद्याऽप्यनिवारितं भ्रमति।।]

**तस्य कथाकण्टकिते शब्दश्रवणेन समपसृतकोपे।**
**सम्मुखवीक्षणवेपिनि किमूपगूढा प्रपत्स्यसे नूनम्।।५९।।**[१]

प्रियस्य कथामात्रेण प्रसङ्गोत्थापनमात्रेण रोमाञ्चिते! प्रियस्य शब्दश्रवणेन अपगतकोपे! प्रियस्य सम्मुखालोकनेन कम्पनशीले! प्रियेण उपगूढा त्वं किमु प्रपत्स्यसे? प्रियप्रसङ्गेनैव यदा ते रोमाञ्चवेपथुमुखाः सात्त्विकभावा भवन्ति, येन हि कोपापगमः स्पष्टं प्रतीयते तर्हि प्रियेण परिरब्धा तु न जाने त्वं किं करिष्यसीति भावः। अङ्गविशेषमनिर्दिश्य सर्वशरीरे रोमाञ्चोक्त्या प्रियप्रणयातिशयः सूच्यते, अत एव शब्दमात्रात् 'सम्' सम्यग्रूपेण अपसृतकोपा त्वं भवसीति जाने। यदा तु ते कृत्रिमकोपः स्वयमेवापसरति तदा प्रियमभिमुखमागतमालोक्य ते कम्पोद्गमो भवतीत्यप्यहं वेद्मि। एवं च- एवं प्रियप्रणयानुगता त्वं मानावलम्बनमृषोक्त्या किमित्यस्मान्मुधा व्यामोहयसीत्युपालम्भो नायिकां प्रति ध्वन्यते। 'मानं कर्तुमसमर्थां नायिकां प्रति दूती सप्रणयकोपमाह' इति गङ्गाधरः।

सायंसमयसन्निधानेन प्रियाभिसरणसामीप्यं सूचयन्ती सखी सम्मुखमवस्थितां नायिकां सवैदग्ध्यमाह-

**भरनमितनीलशाखाग्रचलितचरणार्द्धविधुतपक्षपुटाः।**
**तरुशिखरेषु विहङ्गाः संस्थानं हन्त कथमपि लभन्ते।।६०।।**[२]

स्वशरीरभरेण नमितात् नीलशाखाग्रभागात् चलितं स्खलितं चरणार्द्धं येषाम्, अत एव विधुतौ पक्षपुटौ यैस्ते इति बहुव्रीह्युत्तरं कर्मधारयः। नीलेत्यनेन-शाखानामार्द्रतया स्निग्धत्वं सूच्यते, अत एव पक्षिणां पदस्खलनमिति भावः। सायंसमये तरुषु रात्रिसंस्थानं लिप्सन्तो

---

१. **तस्स कहाकण्टइए सद्दाअण्णणसमोसरिअकोवे।**
**समुहालोअणकम्पिरि उवऊढा किं पवज्जिहिसि।।५९।।**
[तस्य कथाकण्टकिते शब्दाकर्णनसमपसृतकोपे।
सम्मुखालोकनकम्पनशीले उपगूढा किं प्रपत्स्यसे।।]

२. **भरणमिअणीलसाहग्गखलिअचलणद्धविहुअवक्खउडा।**
**तरुसिहरेसु विहंगा कह कह वि लहन्ति संठाणम्।।६०।।**
[भरनमितनीलशाखाग्रस्खलितचरणार्धविधुतपक्षपुटाः।
तरुशिखरेषु विहङ्गाः कथं कथमपि लभन्ते संस्थानम्।।]

(दूरत उड्डीयागताः) विहगाः सम्मुखमुपलब्धेषु लघुशाखाग्रेषु पूर्वं स्थातुमिच्छन्ति, तानि च तेषां भरतोऽवनमन्ति। अत एव ईषदवस्थापितं तेषामग्रतनं चरणार्द्धं स्निग्धेभ्यः शाखाग्रेभ्यो विस्खलति। ततश्च पतन्तस्ते पक्षपुटं विधुवन्तः पुनस्तत्र तिष्ठन्ति, इति रात्रिनिवासं चिकीर्षतां पक्षिणां स्वभावः। अनया च स्वभावोक्त्या-सन्ध्यासमयः सञ्जातस्दिह सज्जय तेऽभिसरण-समालम्भनानीति नायिकां प्रति सख्या सत्वरसन्नाह- संसूच्यते। 'दूती अभिसारिकां त्वरयितुमाह' इति गङ्गाधरः।

सुरतरसमत्ततया निर्विशङ्कसङ्कोचं रमितवती काचिन्नायकमनसि भावि भावान्तरं निवारयितुं रतावसाने समभिधत्ते-

**सविशेषं रमितोऽसि हि यदधरमधुपानलालसया।**

**बहुशिक्षिता विलज्जा ह्यसतीति तु नाथ मा मंस्थाः।।६१।।**[1]

सुरतकर्मणि बहुशिक्षिता, अलज्जाशीला विगतलज्जा, अत एवेयमसती इति मयि मा विचारं स्थापयेरित्यर्थः। शिक्षा ह्यपरतो लभ्यते। ततश्च बहुभिर्बहु शिक्षितेयम्, अथवा अस्या बह्वी शिक्षा सञ्जातेत्युभयथाऽप्यर्थे, सुरते सविशेषप्रवृत्त्या असतीत्वभ्रमो भवति। अत एव नेदं मन्तव्यमिति स भ्रमो निवार्यते। नाथेति सम्बोधनेन-सम्प्रति त्वमेव मेऽवलम्बनमिति त्वत्सनाथायां निष्कपटसमर्पितहृदयायां मयि तवाऽप्यकीर्तिकरो नायं भ्रमः समुचित इति प्रणयनिवेदन-ममिव्यज्यते। 'असतीं प्रशंसता केनापि सङ्गता काचिदसती तमाह' इति गङ्गाधरः। असती (अन्यगामिनी), निर्लज्जा बहुशिक्षिता भवतीति हृदि मा स्थिरीकुर्याः' इति च तट्टीकातात्पर्यम्।

दुर्विज्ञेयमसतीचरित्रमित्यात्मनो लोकरहस्यवेदित्वमभिव्यञ्जयन्नागरिकः सहचरमाह-

**पानेन भोजनेन च तथा गृहीतो हि मण्डलोऽसत्या।**

**जारं यथाभिनन्दति वुक्कति गृहभर्तरि त्वयति।।६२।।**[2]

---

१. **अहरमहुणणधारिल्लिआइ जं च रमिओ सि सविसेसम्।**
**असइ अलज्जिरि बहुसिक्खिरि त्ति मा णाह मण्णुहिसि।।६१।।**
[अधरमधुपानलालसया यच्च रमितोऽसि सविशेषम्।
असती अलज्जाशीला बहुशिक्षितेति मा नाथ मंस्थाः।।]

२. **खाणेण अ पाणेण अ तह गहिओ मण्डलो अडअणाए।**
**जह जारं अहिणन्दइ भुक्कइ घरसामिए एन्ते।।६२।।**
[खादनेन च पानेन च तथा गृहीतो मण्डलोऽसत्या।
यथा जारमभिनन्दति भुक्कति गृहस्वामिन्येति।।]

मण्डलः कुक्कुरस्तथा गृहीतो वशीकृतः। गृहीत इति पदेन हस्तगतत्तासूचनादेकान्त-वशीकृततया अन्याननुकूलताभावो ध्वन्यते। अभिनन्दति सपुच्छधूननं पदलोठनादिना तूष्णीं तत्स्वागतं करोतीत्यर्थः। अनेन-निभृतं जारस्य गृहान्तः प्रवेशो ध्वन्यते। गृहस्वामिनि गृहमागच्छति सति बुक्कति शब्दं करोति। तथा च- तच्छब्दसूचनया रममाणस्य जारस्य निह्नवे सौकर्यं सूच्यते। स्वामिपदपरिवर्ते गृहस्वामिपदप्रयोगेण 'यस्मिन् गृहे भोजन-सम्वेशनादिकं लभते तस्याधिकारिणं जानन्नपि बुक्कतीति विशेषशिक्षितत्वं द्योत्यते। 'मण्डलं परिधौ कुष्ठे देशे द्वादशराजसु। क्लीबेऽथ निवहे बिम्बे त्रिषु पुंसि तु कुक्कुरे।।' इति मेदिनी। 'असतीरक्षणस्य दुःशकतामसतीपतिं श्रावयन्ती काचिदाह' इति गङ्गाधरावतरणम्। तट्टीकायां 'भुक्कते'। 'एति' [आगच्छति सति] इति तु व्याकरणविरुद्धमेव।

सततसुरतासक्तानां दुर्निवारा दौर्बल्यदशेति दयिताय दर्शयन्ती दूरदर्शिनी काचिद्व्याध-वृत्तान्तं निदर्शयति-

**कण्डूयता ह्यकाण्डे पल्लीमध्ये स्वविकटकोदण्डम्।**

**पतिमरणादप्यधिकं व्याधेन हि रोदिता माता।।६३।।**[1]

स्वस्य विकटं स्थूलदृढत्वाद् दुराकर्षम्। कण्डूयता किञ्चित्तक्षणेन तनूकुर्वता। पतिमरणस्य शोकवेदनायां यावदरोदत्ततोऽप्यधिकं रोदितेत्यर्थः। पत्युः शौर्ययशःप्रख्यापनायामयं पुत्र एवावलम्बनमासीत्। अद्य पारम्परिकं धनुस्तक्षता तेन पत्युर्यशःशरीरमपि समापितमिति पत्युरपेक्षयापि तत्कीर्तेर्व्याधकुटुम्बिनीषु स्वस्य समधिकगौरवावहत्वान्मरणतोऽप्यधिकं दुःखमित्याशयः। अकाण्डे तक्षणस्याऽनवसरे। ततश्च अशक्तत्वादेवानेन धनुः सूक्ष्मीकृतमिति द्योत्यते। कण्डूयनेन नखादिद्वारा त्वक्तक्षणं लक्ष्यते। तथाच- त्वक्तक्षणेनापि सा शौर्यावमानं मन्यत इति तस्या मनस्वितातिशयो व्यज्यते। कण्डूयतेति शत्रा- कण्डूयनव्यापारमसमापितवत्येव पुत्रे तस्यास्तावद्दुःखमिति तदतिशयः सूच्यते। पल्लीमध्य इत्यनेन-सर्वेषां व्याधकुलानां समक्ष एव सोऽयमवमानोऽभूदिति वेदनातिशयः। स्वपदेन पारम्परिकं स्वत्वं सूच्यते। ततश्च-तादृशधनुस्तक्षणेन पारम्परिकी कीर्तिरवलोपितेति दुःखातिशयो द्योत्यते। 'नायिकान्तरानुरक्त-जामातृदर्शनेन स्वदुहितरमनुशोचन्तीं व्याधश्वश्रूं दृष्ट्वा काचिदाह' इति गङ्गाधरः। अत्तापदस्य

---

१. **कण्डन्तेण अकण्डं पल्लीमज्झम्मि विअडकोअण्डम्।**
**पइमरणाहिँ वि अहिअं वाहेण रुआविआ अत्ता।।६३।।**
[कण्डूयता अकाण्डे पल्लीमध्ये विकटकोदण्डम्।
पतिमरणादप्यधिकं व्याधेन रोदिता श्वश्रूः।।]

सुप्रसिद्धं श्वश्र्वर्थं मत्वा सेयं व्याख्या। अत्तापदस्य मात्रर्थोऽपि प्राकृते। दुर्बलस्य जामातुरपकीर्त्या पतिमरणादधिकं दुःखमुत वंशधरस्य पुत्रस्येति तारतम्यं सहृदयैः परीक्ष्यम्।

किमिति रोदिषीति सख्या पृष्टा काचिदाह–

**वयमतिसरलनिसर्गाः प्रियसखि दयितो विकारपरितोषः।**
**न ह्यन्या कापि गतिः प्रोञ्छ्यन्तां कथमिवाऽस्त्रौघाः।।६४।।१**

वयं किल सरलस्वभावाः, हावभावादिकं किमपि न जानीमः। दयितस्तु विकारेषु हावभावादिषु परितोषो यस्य तादृशः। ततश्च हावभावनिपुणाभिर्महिलाभिर्हृतहृदयोऽयं तास्वेवाधिकमनुरज्येत्। अत एव प्रियविरहशङ्कया रुद्यत इति भावः। वयमिति बहुत्वेन– अहं मम सख्यादिपरिजनश्चापि सर्वः सरलस्वभाव इति सूच्यते। हावादीनां विकारपदव्यपदेशेन– कुलमहिलानामार्जवमेव स्वभावः, हावभावस्त्वस्वाभाविकतया विकार एव मे भातीति तत्राऽरुचिः सूच्यते। वयं यथा स्वस्वभावभूतमार्जवं न त्यजामस्तथा प्रियोऽपि हावभावप्रियतां न त्यक्तुमिच्छेत्, ततश्चान्योऽन्यानुरागार्थं न काप्यन्या गतिरिति भावः। अस्त्रौघा बाष्पसमूहाः कथं प्रोञ्छ्यन्ताम् अपनीयन्ताम्। अस्त्रौघा इति बहुत्वेन भूयान् मे बाष्पनिचय इति दुःखबहुत्वं ध्वन्यते। कथमित्यनेन–निजप्रकृतिमत्यजन् प्रियः सरलायां मयि सम्प्रति नानुरज्यति, अग्रेऽपि तथा भविष्यन् न दृश्यत इति चिन्तया सन्ततमश्रुविसरः प्रवहति, कियत्प्रोञ्छ्यतामिति तदतिशयो व्यज्यते।।

सुदृढमनुरक्तायामपि मयि न त्वमनुरज्यसीति सवैदग्ध्यपमुपालभमाना काचिन्नायकमाह–

**धवलोऽसि यदपि सुन्दर तदपि तु मम रञ्जितं हृदयम्।**
**रागभृतेऽपि च हृदये सुभग विनिहितो न रक्तोऽसि।।६५।।**[२]

---

१. **अम्हे उज्जुअसीला पिओ वि पिअसहि विआरपरिओसो।**
**ण हु अण्ण का वि गई वाहोहा कहँ पुसिज्जन्तु।।६४।।**
[वयं ऋतुकशीलाः प्रियोऽपि प्रियसखि विकारपरितोषः।
न खल्वन्या कापि गतिर्वाष्पौघाः कथं प्रोञ्छ्यन्ताम्।।]

२. **धवलो सि जइ वि सुन्दर तह वि तुए मज्झ रञ्जिअं हिअअम्।**
**राअभरिए वि हिअए सुहअ णिहित्तो ण रत्तो सि।।६५।।**
[धवलोऽसि यद्यपि सुन्दर तथापि त्वया मम रञ्जितं हृदयम्।
रागभृतेऽपि हृदये सुभग निहितो न रक्तोऽसि।।]

धवलः शुभ्रः श्रेष्ठश्च। रञ्जितं शोणीकृतम् अनुरक्तीकृतं च। रागेण शोणिम्ना शोणरङ्गेण वा भृते, पक्षे अनुरागेण पूर्णे। न रक्तोऽसि न लोहितोऽसि, पक्षे नानुरक्तोऽसि। पूर्वार्द्धे धवलेनाऽपि रक्तीकरणं विरुद्धमिति विरोधः। उत्तरार्द्धे-रङ्गभृते हृदये तिष्ठतोऽपि रक्तत्वाभावादतद्गुणः। 'सङ्गतान्यगुणानङ्गीकारमाहुरतद्गुणम्' इत्यप्पयदीक्षितः। आभ्यामलङ्काराभ्याम् 'त्वय्यहमनुरक्ता, परं त्वं पूर्वतोऽनुरक्ताया ममानुरागं दृष्ट्वापि अनुरोधवशतोऽपि नानुरक्तोऽसि' इति वस्तु व्यज्यते। 'भृते' इत्यनेन- रागेण उपरिपर्यन्तं पूर्णं मे हृदयमित्यतिशयो द्योत्यते। विनिहित इत्यनेन-त्वं मया स्वेच्छया हृदये स्थापितोऽसीति प्रकृत्यैव हृदयाकर्षणजो रागो ध्वन्यते। एवं च- पूर्वार्द्धे सुन्दरेत्यामन्त्रणेन, उत्तरार्द्धे सुभगेति च सम्बोधनेन, प्रथमदर्शन एव तव हृदयादीन्यविचार्य सौन्दर्यमात्रमुग्धाऽहं त्वय्यनुरक्ताभूवम्। 'मदुपेक्षायामपि अहो कियदियमनुरक्ता' इति स्वसौभाग्यदृप्तस्त्वं तु नाधुनाप्यनुरज्यसीति गूढ उपालम्भो व्यज्यते।

पूर्वमनुरञ्जितस्य पश्चादवधीरितस्य कस्यचित्प्रणयिनः पूर्वाकृष्टधनवैभवेनोज्ज्वल-नेपथ्यां काञ्चन गुणहीनां नायिकामनुसरन्तं कामिनिवहं विलोक्य निजगुणोत्कर्षसूचनेन वशयन्ती काचित्स्वप्रणयिनं प्रत्यन्यापदेशेनाह-

**चञ्चुपुटाहतविगलितसहकाररसेन सिक्तदेहस्य।**
**कीरस्य मार्गलग्नं भ्रमरकुलं भ्रमति गन्धान्धम्।।६६।।**[1]

चञ्चुपुटेन आहतः अतएव विगलितः प्रस्नुतो यः सहकारस्तद्रसेन। निरनुरोधस्य कीरस्य कीर्तनेन-स्वार्थवशाया नास्याश्चक्षुःप्रीतिः, अत एवानया पूर्वप्रणयी परित्यक्त इति हेला सूच्यते। सहकारे चञ्चुपुटाहतेत्यादिविशेषणेन- छलबलप्रयोगैरनया पूर्वं प्रणयी परिभूतस्ततोऽपि सुजनेन तेन अशेषं मण्डनादिकमेव वितीर्णमिति तत्सौजन्यं नायिकायाश्च दुःशीलत्वं सूच्यते। गन्धान्धमित्यनेन-कामान्धतया गुणपरिचयशून्यम्, भ्रमरेत्यनेन स्वभावत एव कामिनीषु भ्रमण-शीलमिति नास्य गुणपरिज्ञानपाटवमित्यवज्ञा व्यज्यते। तथा च- 'अस्थिरप्रणयां बहिरेव दर्शनीया-मिमां लोका मुधैवानुसरन्ति। निरनुरोधा नेयमेवं सम्मानोचिता। अभिनन्दनीयगुणाया मम प्रणय-परिचयमग्रतस्त्वमनुभविष्यसि' इति शृण्वन्तं कान्तं प्रत्यभिव्यज्यते।

रात्रिनिवासं प्रार्थयमानमुद्भिन्नमदनाङ्कुरं पथिकं प्रति प्रोषितपतिका स्वयंदूतिका साकूतमाह-

---

१. **चञ्चुपुडाहअविअलिअसहआररसेण सित्तदेहस्स।**
**कीरस्स मग्गलग्गं गन्धन्धं भमइ भमरउलम्।।६६।।**
[चञ्चुपुटाहतविगलितसहकाररसेन सिक्तदेहस्य।
कीरस्य मार्गलग्नं गन्धान्धं भ्रमति भ्रमरकुलम्।।]

**श्वश्रूरत्र निमज्जत्यत्राऽहं चात्र परिजनः सकलः।**

**रात्र्यन्ध पथिक मा मा शयनीये नौ निमङ्क्ष्यसि हि।।६७।।**[१]

अत्र अत्रेति त्रिः पृथक्पृथक् त्रयाणां स्थाननिर्देशार्थम्। निमज्जति निःस्पन्दं शेते। निमज्जतिपदेन– 'श्वश्रूः सविधे वर्तमानेति भीतिर्मनसि नानेया। इयं हि शिथिलरज्जुकायां खट्वायां जरत्तरत्वेन निःस्पन्दं परिपतति। अत एव मञ्चरूपकूपनिमग्नाया नास्या भयम्' इति शङ्काराहित्यं व्यज्यते।'अहं' पदेन सह 'स्वपिमि' इत्यादिस्वापबोधकपदानुक्त्या मन्मथोन्माथमयी सोत्कण्ठाहं न रात्रौ निद्रां लभे, अत एव प्रतीक्षिणी स्थास्यामीत्युत्कण्ठातिशयो ध्वन्यते। 'अत्र सकलः परिजनः' इति पृथक्पृथक् स्थानमिङ्गितेन निर्दिश्य 'सकल'पदेन ते सर्वे सह संविशन्तश्चिरं स्ववर्ग्यवार्ताविनोदेन चिरकालोत्तरं शयाना न कथञ्चिदप्यस्मद्वर्गस्य वार्तामपि रात्रौ प्रत्ययन्तीति सूच्यते। वास्तवे तु 'एत्थ अहं दिअहए पलोएहि' इति पाठः। ततश्च 'अत्राहं दिवसके प्रलोकय भोः' इत्यनेन– 'त्वं रात्र्यन्धः' अत एव 'कः कुत्र शेते' इति दिवसे सम्यक् प्रलोकय' इति पथिकं प्रति सूच्यते। तथा च– 'मदनशरशीर्णहृदयस्त्वमित्यहं जाने, परं पामरो दिवसकोऽयम् (कुत्सायां कन्)। अस्मच्छ्रेयः प्रतिकूलत्वात्कुत्सितोऽयमित्यर्थः। न च रात्रिं यावदधीरेण भाव्यम्। यतोऽत्रैवाहम्, तत्प्रलोकय। नान्यतो गच्छामि। तदन्योऽन्यवदनावलोकनविनोदेन दिवसहतकमिममतिवाहयावः' इति द्योत्यते। आगतमात्रायां च रात्रावन्धीभूतो मदीयायां शय्यायां मा श्लिक्षः। अपि तु निभृतनिभृतमेत्य दत्तावधाननिकट-कण्टकनिद्रान्वेषणपूर्वकं मम शयनीये निलीनो भविष्यसि [इति 'निमग्रिसि' पदद्योत्यम्]। 'पथिक! रात्र्यन्ध!' इति सम्बोधनद्वयं रहस्यगोपनाय। यतः पथिकत्वेन श्रमवशात्स्थानविस्मरण-सम्भवः। रात्र्यन्धत्वेन शय्यायां पतनप्रसङ्गसम्भवः। अन्यथा 'आवयोः शय्यायां मा निमग्रिसि' इत्यप्रसक्तनिषेधेन रहस्यभङ्गापत्तेः। एवं च रात्र्यन्धताव्याजशिक्षणेन– कदाचिद्दैववशान्निकटक-ण्टकप्रबोधेऽपि नात्मनो दोषः प्रतीतो भवेदित्याकूतम्। तथा च– 'सम्प्रति गृहे श्वश्रूरहं चेति द्वावेव। श्वश्रूश्च जरत्तरत्वेन निःस्पन्दा बधिरा च मञ्चरूपकूपे निकामं निमज्जति। गृहे बहिर्जनसञ्चारस्तु नास्त्येव। अतो रात्र्यन्धताव्याजभूमिकामवलम्ब्य निःशङ्कं ममैव शय्यायां निभृतं निलीनो भव' इति वक्तृबोद्धव्ययोर्वैशिष्ट्यादभिव्यज्यते।'महँ' इत्यावयोरित्यर्थे निपातः, न तु ममेत्यर्थे आत्ममात्रनिर्देशेन रहस्यभङ्गापत्तेः। अत एव आलोक 'लोचने' 'महँ ण मज्जिहिसि' इति पाठं मत्वा 'महँण' इति निपातोऽनेकार्थवृत्तिः अत्रावयोरर्थे न तु 'ममेति' इत्युक्तम्। एवं

---

१. **एत्थ णिमज्जइ अत्ता एत्थ अहं एत्थ परिअणो सअलो।**

**पन्थिअ रत्तीअन्धअ मा महँ सअणे णिमज्जिहिसि।।६८।।**

[अत्र निमज्जति श्वश्रूरत्राहमत्र परिजनः सकलः।

पथिक रात्र्यन्ध [क] मा मम शयने निमङ्क्ष्यसि।।]

काव्यप्रकाशटीकाकृद्भिरपि 'महं इति निपात आवयोरर्थे न तु ममेति' इति स्पष्टमुक्तम्। एवं सति गङ्गाधरस्वीकृतच्छायायां ममेति पाठः प्रामादिक ऐवेत्यलम्।

विरहवेदनाया विषमत्वं व्यञ्जयन्तीं विरहिणी वयस्यामाह–

**परितोषसुन्दराणि हि बिभ्रति सुरतेषु यानि सौख्यानि।**
**विरहे तान्येव पुनर्भुक्तोद्गीर्णानि कुर्वन्ति।।६८।।**[1]

सुरतेषु सर्वविधपरितोषेण सुन्दराणि अभिनन्दनीयानि यानि सौख्यानि महिलाः बिभ्रति धारयन्ति लभ्यन्ते इति यावत्। ताः महिलाः विरहे तान्येव सुखानि पूर्वं भुक्तानि पश्चादुद्गीर्णानि कुर्वन्ति। संयोगवेलायां भुक्तानि (पूर्वमनुभूतानि) तान्येव सुखानि विरहे उद्गीर्णानि भवन्तीत्यर्थः। 'तथा च नेमानि विरहदुःखानि किन्तु पूर्वं भुक्तानि सुखान्येवोद्गीर्णानि एतद्रूपेण परिणतानीत्यपह्नुत्यलङ्कारो व्यङ्ग्यः।' इति गङ्गाधरः। परितोषसुन्दराणीति सुखविशेषणेन– अत्यभिरुचिततया समागमसमये साभिलाषं बहूनि सुखान्यनुभवन्ति कामिन्यः, ततश्च विरहे तान्येव बहुदुःखात्मकानि भवन्तीति पीडातिशयहेतुत्वं व्यज्यते। उद्गिरणमसये यथा उदरस्थमन्यदपि सर्वं भुक्तं बहिर्भवति तथा सुरतसुखातिरिक्तान्यन्यान्यपि सुखानि सर्वाणि दुःखात्मकानि भवन्तीत्युद्गीर्णपदेन द्योत्यते।

पीनोन्नतपयोधरायाः कस्याश्चिद्धारशोभावर्णनव्याजेन निजाभिलाषं साकूतं सूचयन्कश्चिदाह–

**मार्गमिवालभमानो हारः पीनोन्नतस्तनयोः।**
**भ्राम्यत्युरसि विचलितो यमुनायाः फेनपुञ्ज इव।।६९।।**[2]

---

१. **परिओससुन्दराइं सुरएसु लहन्ति जाइँ सोक्खाइं।**
**ताइं च्चिअ उण विरहे खाउग्गिण्णाइँ कीरन्ति।।६८।।**
[परितोषसुन्दराणि सुरतेषु लभन्ते यानि सौख्यानि।
तान्येव पुनर्विरहे स्वादितोद्गीर्णानि कुर्वन्ति।।]

२. **मग्गं च्चिअ अलहन्तो हारो पीणुण्णआणँ थणआणम्।**
**उव्विग्गो भमइ उरे जमुणाणइफेणपुञ्जो व्व।।६९।।**
[मार्गमिवालभमानो हारः पीनोन्नतयोः स्तनयोः।
उद्विग्नो भ्रमत्युरसि यमुनानदीफेनपुञ्ज इव।।]

विचलितः उद्विग्नः, इतस्ततो लुठन्निति यावत्। गण्डशैलयोर्मध्यगतो यमुनाफेनपुञ्जः प्रसरणमार्गमलभमानो यथेतस्ततो भ्राम्यति तथा पीनोन्नतयोः स्नतयोर्मार्गमप्राप्य चञ्चलः सन् हारस्तव वक्षसि विलुठतीत्यर्थः। मार्गस्याप्राप्तौ पीनत्वमुन्नतत्वं च हेतुः। चञ्चलतया भ्रमणे च मार्गस्याप्राप्तिर्हेतुः। तव तथा पीनौ पयोधरौ यथा हारस्यापि नावकाशः। अत एव स उद्विग्नः सन्नितस्ततो भ्रमतीत्याशयः। यमुनाफेनसादृश्येन हारे किञ्चित् श्यामता सूचिता। ततश्च- स्तनमुखश्यामतया हारोऽपि तत्प्रतिच्छायया श्यामायित इति व्यज्यते। तथा च- स्तनमुखश्यामतया लक्षितसत्त्वाधाना त्वं सम्प्रतिनोपभोगयोग्येति तव पीनोन्नतस्तनावकाशमलभमानोऽहमुद्विग्नो मनसि खिद्ये इति नायिकां प्रति मनोभिलाषो ध्वन्यते।

शिशुनापि एकाकिना सचिवसूनुना राजपुरुषगोष्ठीमधितिष्ठता तेन कियान्वा परितः प्रभावः प्रसारित इति कश्चिदन्यापदेशविधयाऽऽह-

**सकलवनराजिमध्ये ह्यपि वटबीजाङ्कुरेण चैकेन।**

**तेन तथा कृत आत्मा यथा हि शेषद्रुमास्तले तस्य।।७०।।**[१]

वटबीजाङ्कुरेण एकेनापि सता तथा आत्मा कृतो यथा शेषास्तदितरे द्रुमास्तस्य तलेऽभवन्। उत्तुङ्गतया विस्तृततया च सर्वे वृक्षा नीचीभूता अभवन्नित्यर्थः। तथा च-एकाकिनापि तेन प्रतिद्वन्द्विमण्डले तथोन्नतिरासादिता यथा सर्वेऽपि विपक्षाः परिभूता इवाभवन्निति व्यज्यते। वटाङ्कुरेत्येव वक्तव्ये वटबीजाङ्कुरेणेत्यनेन- मया बीजादुद्भवन्नङ्कुरो दृष्टस्तेन च क्रमादेव- मुच्छ्रायः सम्पादित इति सूच्यते। ततश्च साम्प्रतमेव लब्धजन्मना शिशुना तथोत्कर्षः सम्पादित इति त्वरितोन्नतिर्द्योत्यते। शेषा द्रुमा नीचीभूता इत्यस्य स्थाने तलेऽभवन्नित्युक्त्या- एकस्य वृक्षस्य तले यथान्ये वृक्षा न यथावदुपचयमुपगच्छन्ति तथा एतदभिभूतानां पुरुषाणामुन्नतिरेव नाऽभवत्, तस्य परिभवस्तु कुत इत्यतिशयो व्यज्यते। 'मूढेनापि तरुणा उत्कर्षाय चेष्टितं त्वं पुनर्महावंशप्रभव कथं न यतस इति निरुद्योगं कञ्चित्प्रत्युपदेशो व्यङ्ग्यः' इति कश्चित्। 'राजसन्निधौ तिष्ठता तेन मम मित्रेण किं सम्पादितमिति पृष्टः कश्चिदाह' इति गङ्गाधरः। अङ्कुरपदस्य स्वारस्यमत्रान्वेषणीयमेव।

गुणवन्तो न बहुधा धनवन्तोऽपि भवन्तीति सवैदग्ध्यमुपपादयन्कश्चिद्दारिद्र्यं सम्बोध्याह-

---

१. **एक्केण वि वडवीअङ्कुरेण सअलवणराइमज्झम्मि।**
**तह तेण कओ अप्पा जह सेसदुमा तले तस्स।।७०।।**
[एकेनापि वटबीजाङ्कुरेण सकलवनराजिमध्ये।
तथा तेन कृत आत्मा यथा शेषद्रुमास्तले तस्य।।]

**ये ये गुणिनो ये ये च दानिनो ये विदग्धविज्ञानाः।**
**दारिद्र्य रे विचक्षण तेषां त्वं सानुरागमसि।।७१।।**[1]

गुणिनः दान-वैदग्ध-वैदुष्येभ्योऽन्योऽपि गुणा येषाम् ते, विदग्धं निपुणं विज्ञानं येषाम्, विज्ञाने निपुणा इति यावत्। अनेन तेषां सर्वतोमुखं वैदग्धमित्यतिशयो ध्वन्यते। अथवा विदग्धाश्च विज्ञानाश्चेति द्वन्द्वः। विदग्धाश्चतुराः, विज्ञाना विशिष्टं ज्ञानं येषाम्। विशिष्टा विद्वांस इत्यर्थः। विचक्षण चतुर। निर्गुणान्विहाय गुणिष्वनुरज्यसीति स्पष्टं ते चातुर्यमिति भावः। तान् पीडयसीति वक्तव्ये सानुरागमसीत्युक्त्या-अनुरक्तो यथा कश्चित्पुरुषमाश्रयन्नपि प्रेमवशान्न पीडयति, तथा त्वं तेषां तं क्लेशं नोत्पादयसि येन ते विरज्येयुरिति सूच्यते। तथा च-गुणिनो दारिद्र्येऽपि प्रसन्ना एव तिष्ठन्ति, नात्मावसादं गच्छन्तीति मनस्वितातिशयो ध्वन्यते। अथवा प्रेमिक इव नैतान्तपरित्यजसीति सततं साहचर्यं सूच्यते। विचक्षणेति सुभगं सम्बोध्य, 'रे' इति नीचसम्बोधनेन-वास्तवेनाधममपि त्वं गुणिजनानुरागवशाद्दूरदर्शितया प्रशस्यमिवासीति निन्दाप्रशंसयोः साङ्कर्यं सूच्यते।

नायिकामुत्कण्ठयितुं दूती नायिकाया मुखचन्द्रशोभामेवमुपवर्णयति-

**सुन्दर यदि कौतुकितोऽसि सकलतिथिचन्द्रदर्शनसुखानाम्।**
**तन्मोच्यमानकञ्चुकमीक्षस्व मुखं मसृणमस्याः।।७२।।**[2]

द्वितीयादिसकलतिथिषु यानि चन्द्रदर्शनस्य सुखानि तेषां यदि त्वं कौतुकवानसि तर्हि मसृणं मन्दं यथा स्यात्तथा, शनैः शनैरिति यावत्। मोच्यमानं विसृज्यमानं कञ्चुकवस्त्रं

---

१. **जे जे गुणिणो जे जे अ चाइणो जे विडड्ढविण्णाणा।**
**दारिद्द रे विअक्खण ताणँ तुमं साणुराओ सि।।७१।।**
[ये ये गुणिनो ये ये च त्यागिनो ये विदग्धविज्ञानाः।
दारिद्र्य रे विचक्षण तेषां त्वं सानुरागमसि।।]

२. **जइ कोत्तिओ सि सुन्दर सअलतिहीचन्ददंसणसुहाणम्।**
**ता मसिणं मोइज्जन्तकञ्चुअं पेक्खसु मुहं से।।७२।।**
[यदि कौतुकिकोऽसि सुन्दर सकलतिथिचन्द्रदर्शनसुखानाम्।
तन्मसृणं मोच्यमानकञ्चुकं प्रेक्षस्व मुखं तस्याः।।]

'कुरती' इति ख्यातं यस्मात् ईदृशम् अस्याः (नायिकायाः) मुखं वीक्षस्व। परस्पराश्लिष्टो-र्ध्वीकृतमण्डलयातिबाहुलिकं प्रतिलोमक्रमेण कञ्चुकावतारणसमये मुखमण्डलात्क्रमशः कञ्चुकावरणापसरणेन चिबुकादिभागस्य क्रमक्रमेण दर्शनं भवति। अन्ते च सम्पूर्णमपि मुखमण्डलमपगतावरणं भवति। एवंक्रमेण दृष्टचिबुकादिपर्यन्तभागस्य मुखस्य क्रमिकावस्थासु द्वितीयादितिथिषूदितस्य चन्द्रस्य साम्यं कल्पितमित्याशयः।

सुन्दरेत्यामन्त्रणेन-त्वं तु सौन्दर्यभिमानं वहस्येव परं पश्य तस्याः सौन्दर्यमित्याकूतम्। अथवा-यथा त्वं सुन्दरोऽसि तथैव त्वत्तोऽप्यतिशयितसौन्दर्या साऽप्यतीति पश्य ते सौभाग्यमिति प्ररोचनाभिव्यज्यते। 'कोऽपि साभिलाषः कस्याश्चिन्मुखचन्द्रं वर्णयति' इति गङ्गाधरः।

ग्रीष्मावसानेऽप्यनागतो दयितः सम्प्रति प्रतिपथमुज्जृम्भितपयः प्रकर्षासु वर्षासु कथमा-गच्छेदिति भयविह्वला काचित्समाश्वासयन्तीं सखीं प्रत्याह-

**समविषमनिर्विशेषाः समन्ततो मन्दमन्दसञ्चाराः।**

**अचिरान्मनोरथानामपि दुर्लङ्घ्या भवन्ति पन्थानः।।७३।।**[१]

हरिततृणाच्छन्नतया जलपूर्णतया वा अलक्षितोच्चावचस्थलाः। अत एव वा पिच्छिलतया वा मन्दमन्दं सञ्चरणं येषु तादृशाः, मार्गा मनोरथानामपि दुर्गमा अचिरादेव भवन्ति भविष्यन्ति। प्रावृडियं प्रक्रान्ता, अत एव मार्गे गतागतमतिशीघ्रमेव रुद्धं स्यादिति शैघ्र्यातिशयसूचनाय भविष्यन्तीति स्थले भवन्तीत्युक्तम्। 'वर्तमानसामीप्ये वर्तमावद्वे' ति लट्। पन्थान इति बहुत्वेन ग्रामागमनस्य सर्वेऽपि मार्गा रुद्धा भवेयुरिति सूच्यते। लोका मार्गलङ्घनस्य मनोरथमपि न करिष्यन्ति किं पुरस्तदारम्भमिति, वाञ्छन्नपि प्रियतमो विवशयता नागन्तुं शक्नुयादिति भावः। 'सङ्केतस्थलान्तराभावेन मार्गासन्नकुञ्जादौ दत्तसङ्केतां काञ्चित्प्रति, वर्षां विना जनसञ्चारजुष्टं तत्स्थलं न सम्प्रति सङ्केतयोग्यं, सत्यां वर्षायां तथा स्यादिति' सूचयन्त्याः सख्या वा सेयमुक्तिः।

वंशकुञ्जे प्रियं सम्भुज्य परावृत्तायाः पुत्रवध्वाः शिरोऽञ्चले कुञ्जलग्नानि वंशपत्राणि दृष्ट्वा तदपराधसंसूचनेन साकूतमुपहसन्त्यां श्वश्र्वां पुत्रवधूरपि सापराधां तां समुचितमुत्तरमाह-

---

१. **समविसमणिब्बिसेसा समन्तओ मन्दमन्दसंचारा।**

**अइरा होहिन्ति पहा मणोरहाणं पि दुल्लङ्घा।।७३।।**

[समविषमनिर्विशेषाः समन्ततो मन्दमन्दसञ्चाराः।

अचिद्भविष्यन्ति पन्थानो मनोरथानामपि दुर्लङ्घ्याः।।]

**अतिदीर्घाणि हि वध्वा दृश्यन्ते शिरसि वंशपत्राणि।**

**श्वश्रु भणिते भणामः पृष्ठं युष्माकमपि पाण्डु।।७४।।**[१]

अतिदीर्घाणीत्यादि भणिते एतत्कथनस्योत्तरे। हे श्वश्रु वयमपि भणामः 'युष्माकमपि पृष्ठं पाण्डुरम्' इति निरास्तरणभूमौ कृतसम्भोगायास्तवापि पृष्ठे तच्चिह्नं स्फुटमङ्कितमिति किं मामेवोपहससीत्याशयः। युष्माकमिति श्वश्रूं प्रत्यादरकृतं बहुत्वम्। भणाम इति स्वस्मिन्नादर-सूचकेन बहुवचनेन तु-' किं मच्छिद्राण्युद्घाटयसि। अहमपि ते सर्वं रहस्यं वेद्मि' इत्यात्मनोऽ-भिमानो ध्वन्यते। अतिदीर्घाणीति विशेषणेन-पवनोड्डीनान्येतानि लग्नानीत्युत्तरावकाशस्थगनं ध्वन्यते। अतिदीर्घाणां तेषां पवनैरहार्यत्वात्। अत्ता इति श्वश्रूसम्बोधने देशी।'पुट्ठी' इति पृष्ठशब्दस्य प्राकृते स्त्रीत्वं प्रसिद्ध्यनुशासनात्।

नायिकाया मानं विलोक्य विरक्ता सेति भ्रमेण विरज्यमानं नायकं बोधयितुं वृद्धा दूतीदऽऽमाह-

**अप्याकस्मिकरोषः क्षणप्रसादो ह्यलीकनिर्बन्धः।**

**उन्मत्तरसन्तापः पुत्र स्नेहस्य पदवीयम्।।७५।।**[२]

अत्थक्कति आकस्मिके अद्भुते वा देशी। अकस्मादेव रोषकरणं क्षण एव प्रसादः (अपरस्य प्रसादनं स्वयं प्रसदनं च) मुधैव निर्बन्धः आग्रहः। अथवा अलीकवचनेषु अलीकवचनैर्वा आग्रहः। सपत्न्यादिषु मात्सर्यहेतुकः सन्तापः। इयं स्नेहस्य पदवी मार्गः। 'उन्मच्छेरेति बहुले' इति गङ्गाधरः। तन्मते-बहुलः सन्ताप इत्यर्थः।'उन्मूर्च्छनसन्तापः' इति

---

१. **अइदीहराइँ बहुए सीसे दीसन्ति वंसवत्ताइं।**
**भणिए भणामि अत्ता तुम्हाणँ वि पण्डुरा पुट्ठी।।७४।।**
[अतिदीर्घाणि वध्वाः शीर्षे दृश्यन्ते वंशपत्राणि।
भणिते भणामि श्वश्रु युष्माकमपि पाण्डुरं पृष्ठम्।।]

२. **अत्थक्करूसणं खणपसिज्जणं अलिअवअणणिब्बन्धो।**
**उम्मच्छरसंतावो पुत्तअं पअवी सिणेहस्स।।७५।।**
[आकस्मिकरोषकरणं क्षणप्रसादनमलीकवचननिर्बन्धः।
उन्मत्सरसन्तापः पुत्रक पदवी स्नेहस्य।।]

पाठं स्वीकृत्य 'उन्मूर्च्छनं प्रतिकूलवाचा प्रकोपनम्' इति गङ्गाधरतोऽपि प्राचीना टीका। पुत्रेत्यामन्त्रणेन त्वं स्नेहपात्रमिति बह्वनुभवाहं हितं तवोपदिशामीति व्यज्यते। एवं च-सेयमनुरागातिशयवशादेव त्वयि नानाविधान्मानमार्गानवलम्बते। नात्र विरक्तेर्गन्धोऽपीति स्नेहातिशयशालिन्यामेतस्यां प्रेमविदग्धचर्ययैव व्यवहर्तव्यमिति दूत्याश्चरमं व्यङ्ग्यम्।

जनसङ्कुले स्थले निभृतमन्योन्यालोकने सम्पन्नेऽपि कटाक्षादिमविक्षिपन्तीं नायिकामननुरक्तेति सन्दिहानं नायकं प्रोत्साहयन्ती दूती सवैदग्ध्यमाह-

**कर्णाञ्जलिभिर्निपिबति जनरवमिलितमपि हि तव संलापम्।**
**दुग्धं जलसम्मिलितं सा बाला राजहंसीव।।७६।।**[१]

'अत्र पिबतीति कर्त्रर्थे पीयत इति कर्मप्रत्ययः। प्राकृते लिङ्गवचनतन्त्रमित्याद्यनुशासनात्। अथवा सा बाला राजहंसीवेति प्रथमा तया राजहंस्येवेति तृतीयार्थे। तथा पीयते इति यथाश्रुतमेव व्याख्येयम्।' इति गङ्गाधरटीका। वस्तुतस्तु 'पिज्जइ' पीयते इत्यत्र कर्त्रर्थः पीङ् पाने धातुः। संलापं पिबतीत्यस्य सातिशयं शृणोतीति लक्ष्यम्, तेन च प्रेमातिशयो व्यज्यते। जनलसम्मिलितं दुग्धमिवेत्यनेन-अन्येषां वचनानामपेक्षया त्वद्वचने कियद् गौरवमिति प्रोत्साहनं ध्वन्यते। राजहंसीवेत्युपमया हंसी यथा नीरक्षीरविवेके परमचतुरा तथा कोलाहलमिलितस्यापि भवद्वचसः प्रेमातिशयवशात्त्वदन्यवचोवैजात्यं स्फुटमवगच्छन्ती सा परमविदग्धा, अन्यैरसम्पर्काद्विशुद्धा, उत्तमयाऽतिशयकामनीया चेति ध्वन्यते। बालेत्यनेन-भवन्तं दृष्ट्वापि जनसम्मर्दवशात्सङ्कुचन्ती सा नैसर्गिकमौग्ध्यवशान्न कटाक्षादिद्वारा त्वदाकर्षणयत्नं कृतवतीति नायिकाया निरुपाधिकः प्रेमाभिव्यज्यते। अञ्जलिपदेन-अतिशयपिपासितस्य चेष्टां संसूच्य नायकवचःश्रवणे सुभृशोत्कण्ठा ध्वन्यते। एवं च त्वद्दर्शनार्थं पूर्वत एव परममुत्कण्ठिता सा कोलाहलनिमित्तमपि भवत्कण्ठरवमाकर्ण्य भवद्भावनानिमीलितनयनं दत्तकर्णतया पुलकितसर्वाङ्गी निश्चलानिश्चेष्टमवतस्थ इति सुभृशमनुरक्ता सा नान्यथा सन्देग्धव्येति दूत्याभिव्यज्यते।

प्रियतमस्य गुणगणमनुरागवशात्पुनः पुनर्दूतीमभिपृच्छन्तीं नायिकां प्रति काचित्सखी साकूतमाह-

---

१. **पिज्जइ कण्णञ्जलिहिं जणरवमिलिअं वि तुज्झ संलावम्।**
**दुद्धं जणसंमिलिअं सा बाला राअहंसि व्व।।७६।।**
[पिबति कर्णाञ्जलिभिर्जनरवमिलितमपि तव संलापम्।
दुग्धं जलसम्मिलितं सा बाला राजहंसीव।।]

**ऋजुकेऽयि लज्जसे नो प्रियस्य चरितानि पृच्छन्ती।**
**कुसुमसमृद्धिभिरिह किं सर्वाङ्गसुरभितस्य मरुकस्य।।७७।।**[१]

'पिण्डीतको मरुबकः प्रस्थपुष्पःफणिज्झकः' इत्यमरः। 'मरुआ' इति ख्यातः। पत्र-शाखादिषु सर्वत्र सुरभितस्य मरुबकस्य सौरभनिमित्ताय पुष्पं यथा नाधिककामनीयं तथा सहजसौन्दर्यसौष्ठवादिगुणगणालङ्कृतस्य तस्य किंवा गुणान्तरपृच्छाव्यापारेणेति भावः। अयि ऋजुके इत्यनेन-ऋजुकतयैव त्वं पुनः पुनः पृच्छसि, तथा च ऋजुका त्वं दूतीसमुदीरितेषु गुणेषु निःसंशयं विश्वसिहि। कृतं प्रश्नायासैरिति सख्याऽभिव्यज्यते।

सहजस्निग्धलोहितौ हस्तौ विलग्नधातुरागाविति विभ्रमेण बारं बारं प्रक्षालयन्तीं मुग्धां नायिकां निवारयितुं दूती आह-

**अप्रतियती प्रवालाङ्कुररुचिरस्निग्धलोहितौ मुग्धे।**
**निर्धौतधातुरागौ किमिति मुधा धावयसि हस्तौ।।७८।।**[२]

प्रवालाङ्कुरवत् रुचिरौ स्निग्धौ लोहितौ च स्वहस्तौ निर्धौतधातुरागौ अप्रतियती (प्रत्ययमकुर्वाणा) न विश्वसती त्वं मुधा किमिति प्रक्षालयसि। प्रवालस्यापि नवीनोऽङ्कुर इति स्निग्धत्वलौहित्यातिशयः सूच्यते। नायिकाया मुग्धत्वं तद्धस्तादिषु साहजिकरागवत्त्वं च संसूच्य तटस्थं नायकमुत्कण्ठयन्त्या दूत्याः सख्या वा सेयमुक्तिः।

निःशेषितधनत्वेऽपि परिसरमत्यजतो भुजङ्गान् शरद्घनवर्णनव्याजेन निन्दन्ती वेश्या-सखी तां प्रति साकूतमाह-

---

१. **अइ उज्जुए ण लज्जसि पुच्छिज्जन्ती पिअस्स चरिआइं।**
**सव्वङ्गसुरहिणो मरुवअस्स किं कुसुमरिद्धी (दीर्घ) हिं।।७७।।**
[अयि ऋजुके न लज्जसे पृच्छन्ती प्रियस्य चरितानि।
सवाङ्गसुरभेर्मरुबकस्य किं कुसुमर्द्धिभिः।।]

२. **मुद्धे अपत्तिअन्ती पवालङ्कुरअवण्णलोहिअए।**
**णिद्धोअधाउराए कीस सहत्थे पुणे धुअसि।।७८।।**
[मुग्धेऽप्रत्ययन्ती प्रवालाङ्कुरवर्णलोहितौ।
निर्धौतधातुरागौ किमिति स्वहस्तौ पुनर्धावयसि।।]

**सैन्धवपर्वततुल्यानि पश्य धुततूलपुञ्जसदृशानि।**
**मुक्तोदकानि सुतनो शरदि सिताभ्राणि शोभन्ते।।७९।।**[1]

पर्वतसादृशेन–कठोरत्वं जडत्वं च, सैन्धवेत्यनेन द्रुतद्रवशालितया अस्थिरमनस्कत्वं च सूच्यते। तूलसादृश्येन–स्वाभाविकं लाघवम्, धुतेत्यनेन बहुशस्तिरस्कृतत्वं च द्योत्यते। अभ्रपदेन–अत्युच्चैरपि रिक्तैर्मेधैर्यथा न फलसिद्धिस्तथा कौलीन्यादिमहिम्ना उन्नतैरपि निर्धनैर्जनैः किं नः फलमिति सूच्यते। शोभन्त इति साकूतोक्तिः। निःशेषितधना इमे न भान्तीति व्यङ्ग्योऽर्थः। मुक्तोदकपदेन–समापितधनत्वं तु स्फुटमेव। तथा च सुतनु इत्यामन्त्रणेन–सम्प्रति नवयौवने स्वाभाविकसौन्दर्यशालिनी त्वं निःशेषितधनतयाऽस्मदादीनामनभिप्रेतेषु भुजङ्गेष्वेतेषु बाह्य–सौष्ठवमात्रमालोक्य न प्रसक्ता भविष्यसीति सख्या ध्वन्यते। 'सुअण' इति पाठे तु सुजनेति पथिकसम्बुद्धिः। तथा च प्रावृट्परिसमाप्त्या मार्गाणां यात्राक्षमतया साम्प्रतं देशान्तरगमनेन द्रव्यादिकमर्जनीयम्, न निश्चेष्टतया स्थातव्यमिति हितचिन्तकः कश्चित्तं प्रति भङ्ग्या सूचयतीति तात्पर्यार्थः।'वर्षागमनेन दुःखितां नायिकां शरत्कालोपगमेन स शीघ्रमायास्यतीति समाश्वासयन्ती सखीदमाह' इति गङ्गाधरः।

त्वां सुखयितुं सततमनुवर्तमानामपि मत्सखीं कुशलप्रश्नादिनाऽप्यसम्भवायन् हन्त हन्त स्वार्थमात्रप्रवणस्त्वं सर्वथा पराङ्मुखोऽसीति नायकमुपालभमाना नायिकासखी अन्यापदेशविधयाह–

**पश्य शिरोभिर्वलितैः कौटकिकैर्नीयमाना हि।**
**आपृच्छन्ते कुञ्जान्निःपश्चिमवलितवीक्षणैर्महिषाः।।८०।।**[2]

---

१. **उअ सिन्धवपव्वअसच्छहाइँ धुअतूलपुञ्जसरिसाइं।**
**सोहन्ति सुअणु मुक्कोअआइं सरए सिअब्भाइं।।७९।।**
[पश्य सैन्धवपर्वतसदृक्षाणि धुततूलपुञ्जसदृशानि।
शोभन्ते सुतनु मुक्तोदकानि शरदि सिताभ्राणि।।]

२. **आउच्छन्ति सिरेहिँ विवलिएहिँ उअ खडिएहिँ[1] णिज्जन्ता।**
**णिप्पच्छिमवलिअपलोइएहिँ महिसा कुडङ्गाइं।।८०।।**
[आपृच्छन्ति शिरोभिर्विवलितैः पश्य [खड्गिकैः] नीयमानाः।
निःपश्चिमवलितप्रलोकितैर्महिषाः कुञ्जान्।।]

१. 'खटिएहिं' इति स्यात्।

वलितैः पृष्ठतोऽवलोकनार्थं परावर्तितैः शिरोभिः (उपलक्षिताः) 'खडि (टि) एहिं' कौटकिकैः पशुहिंसाजीवैः 'खटीक' इति भाषा। नीयमाना महिषा निःपश्चिमानि अन्तिमानि वलितानि परावर्तितानि च यानि वीक्षणानि अवलोकनानि तैः (तद्द्वारा) कुञ्जान् आपृच्छन्ते गमनानुमतिप्रश्नं कुर्वन्तीत्यर्थः पशुषु निकृष्टा महिषा अपि येषु कुञ्जेषु निर्भरनिदाघमध्याह्ने निबिडच्छायामुपलभ्य सुखमासादितवन्तस्तेऽपि तेषां कुञ्जानां वियोगवेलायां दुःखमनुभवन्ति। अत एव विषादनीरवं पुनः पुनः परावृत्त्य पश्यन्ति। रसिकम्मन्यस्त्वं तु ततोऽप्यधमोऽसि, यत्तां निष्करुणमेवमवमन्यसे इति सख्या ध्वन्यते। कौटकिकैर्नीयमाना इत्यनेन– हिंसार्थे बलादाकृष्टाः परवश अपि ते कृतज्ञतां न व्यस्मार्षुर्भवांस्तु स्वतन्त्रोऽपि न तां प्रश्नमात्रेणापि सम्मानितवानिति गूढमुपालभ्यते। 'सङ्केतस्थानकुञ्जानां महिषसान्निध्येन दुरासदत्वासान्निद्यन्तं नायकं खिद्यन्तीं वा नायिकां प्रोत्साहयन्ती काचिदाह' इत्यवतरणं विधाय– 'खडिएहिँ' इत्यस्य 'खड्गिकैः' इति अदत्तकोषतया अस्पष्टेव गङ्गाधरकृता छाया। किन्तु 'खटिएहिं' तत्रोचितः पाठो यस्यार्थः पशुहिंसाजीवी। महिषापगमेन कुञ्जा इदानीं निराबाधसङ्केतस्थानतामुपगता इति तत्तात्पर्यम्। आपृच्छन्तीति तच्छायाप्रयोगस्तु 'आङि नु प्रच्छ्योः' इत्यनवमर्शनमूलको विच्छाय एव।

मण्डितास्वखिलासु महिलासु दारिद्र्यकृतेन मण्डनाभावेन विषीदन्तीं काञ्चन सुन्दरीं समाश्वासयन्ती काचिद् ज्ञातिपुरन्ध्री आह–

**प्रोञ्छाऽयि पुत्रि वदनं विशेषरमणीयमश्रुमण्डनकम्।**
**इदमेव हि मुखमण्डनमिति मा पुनरपि करिष्यसि प्रसभम्।।८१।।**[१]

अयि पुत्रि! अश्रु एव मण्डनं मण्डनोपकरणं यस्य तथात्वेऽपि विशेषरमणीयं वदनं प्रोञ्छ मार्जय। किंवा, वदनं प्रोञ्छ। सहजसुन्दर्यास्तव अश्रु एव मण्डनं विशेषरमणीयं भवति। परम्, इदमेव मुखमण्डनमिति मत्वा पुनरपि नेदं करिष्यसि, नेतः परं रोदितव्यमित्यर्थः। तथा च– नैसर्गिकसौन्दर्यमण्डनमडितायास्तव यत्किञ्चिदपि मण्डनायितं भवति। पश्य, वदनविधु-विच्छुरितास्तव बाष्पबिन्दवोऽपि रामणीयकमेव सम्पादयन्ति, ततः किंवा फलं मोघेन मण्डनान्तरेणेत्याशयः। पुत्रीत्यनेन वात्सल्यभाजनतया त्वं हितमुपदिश्यसे न प्रतार्यस इत्यभिव्यज्यते। 'निजदारिद्र्येणाश्रु विमुञ्चन्तीं नायिकां समाश्वासयन्ती दूती आह' इति गङ्गाधरः। दरिद्रेयं

---

१. **पुसउ महं ता पुत्ति अ वाहोअरणं विसेसरमणिज्जम्।**
**मा एअं चिअ मुहमण्डणं त्ति सो काहिइ पुणो वि।।८१।।**
[प्रोञ्छस्व मुखं तत्पुत्रि च (पुत्रिके) बाष्पोपकरणं विशेषरमणीयम्।
मा इदमेव मुखमण्डनमिति करिष्यसि पुनरपि।।]

मण्डनमिच्छति, तथा च मण्डनादिदाने धनिनां सुखसाध्येति तटस्थं प्रति सूचयन्त्या दूत्या वा उक्तिः। गङ्गाधरच्छायायां प्रोञ्छस्वेत्यात्मनेपदप्रयोगस्तु विचारणीय एव।

मार्गे कर्दमभयादभिसारे सङ्कुचितोर्नायिकानायकयोः प्रबोधार्थं दूती आह-

**मध्ये प्रतनुकपङ्कं ह्युभयोः संश्यानकर्दमं तटयोः।**

**ग्रामस्य शीर्षसीमन्तकमिव रथ्यामुखं जातम्।।८२।।**[१]

मध्यभागे प्रतनुकः स्वल्पः पङ्को यस्मिन्। तथा उभयोस्तटयोः (पार्श्वयोः) संश्यानकर्दमं शुष्कपङ्कम्। रथ्यामुखं ग्रामस्य शीर्षगतं सीमन्तकमिव भागद्वयविभक्तः केशपाश इव जातम्। रथ्योभयपार्श्वयोः शुष्ककर्दमत्वात् दिवसदृष्टेन मार्गेण रात्रावागन्तव्यमिति दूत्यास्तात्पर्यम्। 'प्रतनु स्वल्पं कं जलं यस्मिन्नेतादृशः पङ्को यत्र तादृशम्' इति गङ्गाधरः।

चिरविरहोत्तरं प्रेयसीप्राप्तौ दुर्दमा भवति विलम्बजनिता तत्समागमोत्कण्ठेति स्वस्य सहृदयतां सूचयन्नागरिकः सहचरमाह-

**जामातुर्द्विगुणयतेऽपराह्णसमितस्य मोहनोत्कण्ठाम्।**

**गृहपृष्ठभागमज्जनपिशुनो वध्वा वलयशब्दः।।८३।।**[२]

अपराह्णे समितस्य समागतस्य जामातुः मोहनोत्कण्ठां सुरतोत्कण्ठाम्। गृहस्य पृष्ठभाग एव यन्मज्जनम् अङ्गसम्मार्जनं शयनं वा तत्सूचकः। अपराह्णसमितेत्यनेन- दिवसे श्वश्रूप्रभृतिसान्निध्याद्रात्रावेव समागमसौकर्यमिति तावत्कालं प्रतीक्षणेनोत्कण्ठातिशयः पोष्यते। द्विगुणयतीत्यनेन-चिरविरहात्समागमोत्कण्ठा त्वासीदेव परं चिरकालद्धृदयदेशमधितिष्ठन्त्याः प्रेयस्या मज्जनकालिकविवसनाङ्गभावनया सा भृशमुज्जृम्भत इति ध्वन्यते। गृहपृष्ठभागेत्यनेन-

---

१. **मज्झे पअणुअपङ्कं अवहोवासेसु साणचिक्खिल्लम्।**
**गामस्स सीससीमन्तअं व रच्छामुहं जाअम्।।८२।।**
[मध्ये प्रतनु [क] पङ्कमुभयोः पार्श्वयोः श्यानकर्दमम्।
ग्रामस्य शीर्षसीमन्तमिव रथ्यामुखं जातम्।।]

२. **अवरह्णागअजामाउअस्स विउणेइ मोहणुक्कण्ठम्।**
**बहुआइ घरपलोहरमज्जणपिसुणो वलअसद्दो।।८३।।**
[अपराह्णागतजामातुर्द्विगुणयति मोहनोत्कण्ठाम्।
वध्वा गृहपश्चाद्भागमज्जनपिशुनो वलयशब्दः।।]

अतिसमीप एव सा विजनगता तिष्ठतीत्युत्कण्ठा संवर्धते। पिशुनेत्यनेन शब्दशक्त्यनुरण-नवशात्- कर्णेजपो यथा वैगुण्यसूचनया सह हृदि क्लेशमप्युत्पादयति तथा वलयशब्दोऽपि यथाकथञ्चिदवरुद्धोत्कण्ठस्य मानसस्य वेदनां जनयतीति सूच्यते। वलयानां शब्दः सुरतसामयिकं वलयशब्दं नायकहृदि स्मारयति। अतएव मोहनस्यैवोत्कण्ठा द्विगुणीभूतेत्याशयः। 'काचन नायिका पितृगृहे स्थिता क्वचिदासक्ता। तद्भर्तरि समागते व्याकुलचित्तं नायकं समादधती दूत्याह' इति गङ्गाधरावतरणम्। 'दिनसत्त्वे जामाता श्वश्रवादिसान्निध्येन पश्चाद्गृहे न गमिष्यति। सा तु दिनशेष एव तत्र स्वपिति। त्वया तत्र गन्तव्यं तत्र सा सुलभेति' तत्तात्पर्यम्। जामातुर्मोह-नोत्कण्ठाद्विगुणीकरणस्य स्वारस्यं नात्र भाति। द्विगुणीकृतमोहनोत्कण्ठस्य पत्युः पुरस्तादेव तादृशवर्णनमरमणीयं चेति मन्मतिः।

त्वं भीरुरसि, यत्तस्याः पत्युर्वीरताडम्बरं दृष्ट्वा भयाकुलत्वान्न तामभिसरसि' इति सभर्त्सनं कञ्चिदुत्तेजयन्ती दूती अन्यापदेशविधयाह-

**युद्धचपेटामोटितजर्जरकर्णस्य जीर्णमल्लस्य।**
**कक्षाबन्धनमेव हि समुत्खनति भीरुमल्लहृदयानि।।८४।।**[1]

मल्लयुद्धकालिकचपेटाभिः आमोटितौ आमर्दितौ, अत एव नीरक्तसञ्चारत्वात्पिण्डी-कृतप्रायौ कर्णौ यस्य तादृशस्य वृद्धमल्लस्य कक्षाबन्धनमेव मल्लकच्छबन्धनमेव अन्येषां भीरुमल्लानां हृदयानि समुत्खनति विद्रावयति। जर्जरकर्णत्वादिना दृढमल्लतामनुमिन्वन्तः कच्छबन्धनाटोपं दृष्ट्वा 'न जाने अग्रे कीदृग्बलं कौशलं च दर्शयेत्' इति भावयन्तो भीता भवन्तीत्याशयः। परिधानीयस्याधोवस्त्रस्य पृष्ठतो निहिताञ्चलं कक्षा- 'परिधानाद्बहिः कक्षा निबद्धा ह्यासुरी भवेत्' इति योगियाज्ञवल्क्यः। हृदयानीति बहुवचनेन बहवोऽपि मल्लाभासास्त-तोऽतितरा बिभ्यतीति सूच्यते। तथा च जीर्णेत्यनेन-पूर्वं तत्पतिः शूरः समर्थश्चासीत्। सम्प्रति वार्धक्येन क्षीणशक्तिरत एव बाह्याडम्बरं दृष्ट्वा ततो न भेतव्यम्। वृद्धतया तस्या एव नासौ रोचते। ततश्च तरुणे बलशालिनि च त्वयि बलावलुब्धा साऽवश्यमनुरक्ता भवेत्। अतो भीरुताम-पहाय निर्भयं तत्राभियोक्तव्यमिति नायकं प्रति दूत्याभिव्यज्यते। 'आरभटीदर्शनेनैव भीरवः सुतरां पलायन्ते, अतो भीरुता न कर्तव्येति कश्चित्कञ्चिद्बोधयति' इति गङ्गाधरः।

---

१. **जुज्झचवेडामोडिअजज्जरकण्णस्स जुण्णमल्लस्स।**
**कच्छाबन्धो च्चिअ भीरुमल्लहिअअं समुक्खणइ।।८४।।**
[युद्धचपेटामोटितजर्जरकर्णस्य जीर्णमल्लस्य।
कक्षाबन्ध एव भीरुमल्लहृदयं समुत्खनति।।]

सहजसौन्दर्यशालिनी गुणगणमण्डिता च काचिन्मल्लपत्नी प्रियतमापमानितापि न लज्जिता, प्रत्युत प्रसादमेवाप। तां भेदयन्ती दूत्याह–

**आज्ञप्तं तेन त्वां पत्या प्रहतेन पटहशब्देन।**
**दौर्भाग्ये प्रकटीक्रियमाणे नृत्यसि न लज्जसे मल्लि।।८५।।**[१]

पत्या भर्त्रा प्रहतेन पटहशब्देन, ताडितस्य पटहस्य शब्देनेत्यर्थः। त्वां प्रति यद् दौर्भाग्यमाज्ञप्तं तस्मिन्दौर्भाग्ये प्रकटीक्रियमाणेऽपि न लज्जसे प्रत्युत नृत्यसि। डिण्डिमघोषपूर्वकं सर्वत्र तव दौर्भाग्यं तेन प्रसेधितं तथापि त्वं न लज्जस इत्यर्थः। तेनेत्यनेन पूर्वमपि शतधा कृतापराधत्वेऽपि येन त्वमेवाऽपमानिता, स हि प्रसिद्धस्ते पतिरिति सूच्यते। अत एव स रक्षामात्रकर्ता पतिरेव न तु प्रियतम इति पतिपदेन ध्वन्यते। नृत्यसीत्यनेन एवमवमानेऽपि यदितस्ततो विचेष्टसे तत्ते नृत्यमिवेति गूढमाक्षेपो ध्वन्यते। मल्लीत्यामन्त्रणमपि साकूतम् एव–मपमानेऽपि मल्लपत्नीति ख्यातं वहन्ती त्वं धन्यासीति। आज्ञप्तमित्यनेन दौर्भाग्यमपि तेन केवलं न सम्पादितमेव, किं तु तदपि राज्ञेव तुभ्यं सगर्वमाज्ञप्तम्। ततश्च एवं सततव्यलीककारिणं रूपगुणानभिज्ञमपहाय अन्यत्र किं नानुरज्यसीति दूत्याभिव्यज्यते।'काचन सहजसुन्दरी प्रियतमा–पमानितापि न लज्जिता दौर्भाग्यस्य चिरकालानवस्थायित्वेन हर्षितैवेति तां बोधयन्ती सख्याह' इति गङ्गाधरः। एवमपराधेऽपि त्वं प्रसन्नेति त्वं क्षमावत्यसीति तत्तात्पर्यम्। अथवा– पत्युर्विर–क्तापि प्रसन्नेति स्वसौन्दर्यगर्विता सेयं सुखसाध्येति तटस्थं कामुकं प्रति दूत्याः प्रलोभनोक्तिः।

चाटुशतैर्नानाप्रलोभनैश्च पूर्वं वशीकृतवतीं ततः स्वल्पकाल एव विरोधवशादपवादं प्रचारयन्तीं दूतीं प्रति तिरस्कारं सूचयन्ती काचित्सखीमाऽऽह–

**मा विस्रम्भममीषां व्रजत बहुलचाटुकर्मनिपुणानाम्।**
**पिशुनानां हि शुनामिव निर्वर्तितकार्यविमुखानाम्।।८६।।**[२]

---

१. **आणत्तं तेण तुमं पइणो पहएण पडहसद्देण।**
**मल्लि ण लज्जसि णच्चसि दोहग्गे पाअडिज्जन्ते।।८५।।**
[आज्ञप्तं तेन त्वां पत्या प्रहतेन पटहशब्देन।
मल्लि न लज्जसे नृत्यसि दौर्भाग्ये प्रकटीक्रियमाणे।।]

२. **मा वच्चह वीसम्भं इमाणँ बहुचाडुकम्मणिउणाम्।**
**णिव्वत्तिअकज्जपरम्मुहाणँ। सुणआणँ व खलाणम्।।८६।।**
[मा व्रजत विस्रम्भमेषां बहुचाटुकर्मनिपुणानाम्।
निर्वर्तितकार्यपराङ्मुखानां शुनकानामिव खलानाम्।।]
सं. गा. ३०

निर्वर्तिते कार्ये विमुखानाम् अमीषां खलानां विश्वासं मा व्रजत। 'खलस्य वाङ्माधुर्य-मात्रेण विश्वासो न विधेय इति कश्चिदाहेत्यवतरणपूर्विका 'खलस्वभावोक्तिरियम्' इति गङ्गाधरटीका।

ग्रामान्तरं गच्छन्तीमपि बहुभिः कामिभिरनुस्रियमाणां काञ्चिदसतीमालोक्य कापि सपरिहासमाह-

**पङ्क्तिमिह मण्डलानां कर्षन्ती ग्राममन्यमुपयान्ती।**

**अविखण्डितसौभाग्या वर्षशतं जीवतु शुनी मे।।८७।।**[१]

मण्डलानां कुक्कुराणां पङ्क्तिं कर्षन्ती आत्मना सह नयन्ती। एवमेवाक्षुण्णसौभाग्या। चिरं जीवत्विति शुनीसाम्यसूचिता तिरस्कारगर्भा परिहासोक्तिः। रिञ्छोलीति पङ्क्तिवाचको देशी।

पूर्वमनासक्तापि काचिद्देवरेण चाटुशतैर्नानाप्रलोभनैश्च वशीकृता। ततः स्वल्पम् एव काले विमुखीभवन्तं तं सकोपोपालम्भमिदमाह-

**सत्यमुदीरय देवर तथा तथा चाटुकारकेण शुना।**

**निर्वर्तितकार्यपराङ्मुखत्वमिह शिक्षितं कस्मात्।।८८।।**[२]

तथा तथेति पूर्वकृतनानाविधचाटुप्रकारं प्रति सङ्केतः। कस्मादित्यनेन- एवंविधस्वार्थी मम तु प्रश्नविषयीभूत एव, न मया दृष्टं इति निन्दातिशयः सूच्यते। नीचस्य सारमेयस्येव ते तदिदं दुश्चेष्टितमनुचितमिति भावः। 'तथा च त्वत्त एवेदं तेन शिक्षितमिति मत्पराङ्मुखत्वं सर्वथा हेयमिति' भावं गङ्गाधर आह।

ग्रामोत्थप्रभूतधान्यलाभेऽपि धनसङ्ग्रहार्थं शरदि जिगमिषन्तं ग्रामणीतनयं प्रवासाद्वार-यन्ती तत्पत्नी साकूतमाह-

---

१. **अण्णग्गामपउत्था कड्ढन्ती मण्डलाणँ रिञ्छोलिम्।**
**अक्खडिअसोहग्गा वरिससअं जिअउ मे सुणिआ।।८७।।**
[अन्यग्रामप्रस्थिता कर्षयन्ती मण्डलानां पङ्क्तिम्।
अखण्डितसौभाग्या वर्षशतं जीवतु मे शुनी।।]

२. **सच्चं साहसु देअर तह तह चडुआरएण सुणएण।**
**णिव्वत्तिअकज्जपरम्मुहत्तणं सिक्खिअं कत्तो।।८८।।**
[सत्यं कथय देवर तथा तथा चाटुकारकेण शुनकेन।
निर्वर्तितकार्यपराङ्मुखत्वं शिक्षितं कस्मात्।।]

**निष्पन्नसस्यसम्पद् गायति शरदीह पामरः स्वैरम्।**

**दलितनवशालितण्डुलधवलमृगाङ्कासु रजनीषु।।८९।।**[1]

निष्पन्ना सस्यसमृद्धिर्यस्य तादृशः पामरः कृषीवलोऽपि, इह अस्यां शरदि कण्डित-नवशालितण्डुलवद् धवलो मृगाङ्को यासु एतादृशीषु रात्रिषु निष्प्रतिबन्धं गायति। उपार्जितनिष्पादितेत्याद्यनुक्त्वा निष्पन्नेत्युक्त्या-दैववशादेव सस्यनिष्पत्तिर्जातेति तस्या अस्थिरत्वं सूच्यते। तथा च- अस्थिरां स्वल्पामपि सस्यसम्पत्तिमुपलभ्य अधमः कृषिकारोऽपि मेदुरमृगा-ङ्कमरीचिभिर्मनुजमनोमादयन्तीष्वासु शरद्यामिनीषु निखिलां विडम्बनामवधीर्य सम्मोदमनुभवति। प्रभूतवैभवः परमविदग्धोऽपि च भवांस्तु विरहवेदनाजनकतया सन्ततमशान्तिकरीं क्लेशबहुलां प्रवासिचर्यामधुनैवाऽवलम्बितुमिच्छतीत्यहो भाग्यवैभवमिति निगूढमभिव्यज्यते। शालीनां परिपाके प्रसन्नचेतसः पामरस्य हृदि तण्डुला एवाहर्निशमावर्तन्त इति स्वाभाविकतया तत्साम्यमेवोप-निबद्धम्। 'तस्य गृहेन्नादिसमृद्ध्या रात्रौ च तत्पतिर्गायतीत्यनेन तत्पतिसान्निध्येन चन्द्रिकाशोभित्वेन च रात्रेरद्य सा न सुखसाध्येति काचित्कञ्चिद्बोधयति' अथवा 'शरत्काले शालीनां पाके हालिकः स्वगृहे तिष्ठति, तदपाके तद्रक्षार्थं स्वयं क्षेत्रादौ तिष्ठतीति हलिकवधूः शरत्कालातिरिक्तकाले सुलभेति कश्चित्कञ्चिद्बोधयति' इति गङ्गाधरः।

पङ्काङ्कितपादचिह्नानुमानेन क्षेत्रमिदं शालिगोप्याः सङ्केतस्थलमासीदिति साधनात्स्व-मार्मिकतां ख्यापयन्नागरिकः सहचरमाह-

**अयि केदारस्त्रोतोवरोधतिर्यक्स्थितः कलमगोप्याः।**

**मृदुचरणः पङ्कतले ह्यालिख्यत इह हलालिचलनेन।।९०।।**[2]

---

१. **णिप्पण्णसस्सरिद्धी सच्छन्दं गाइ पामरो सरए।**
**दलिअणवसालितण्डुलधवलमिअङ्कासु राईसु।।८९।।**
[निष्पन्नसस्यऋद्धिः स्वच्छन्दं गायति पामरः शरदि।
दलितनवशालितण्डुलधवलमृगाङ्कासु रात्रिषु।।]

२. **अलिहिज्जइ पङ्कअले हलालिचलणेण कलमगोवीए।**
**केआरसोअरुम्भणतंसट्ठिअ कोमलो चलणो।।९०।।**
[आलिख्यते पङ्कतले हलालिचलनेन कलमगोप्याः।
केदारस्रोतोवरोधतिर्यक् (त्र्यंश) स्थितः कोमलश्चरणः।।]

अयीति सहचरं प्रति सम्बोधनम्। केदारस्रोतसा अवरोधनवशात् तिर्यक्स्थितः। क्षेत्रे जलसञ्चारार्थं निम्नानि जलस्रोतांसि क्रियन्ते। तत्रोन्नतरेखायास्तावदायामाभावात् उन्नतभागे निहितः कलमगोप्याश्चरणो जलस्रोतोवरोधवशात्तिर्यक्स्थित एव भवति। तादृशः कलमगोप्याः पङ्के पूर्वतोऽङ्कितः कोमलश्चरणः पङ्कतले हलालेः हलरेखायाश्चलनेन कर्षणेन आलिख्यते कृष्यते। पूर्ववत्सरे क्षेत्रगतप्रावृट्पङ्कशोषे शालिगोप्याश्चरणोऽङ्कितः। वर्षान्तरे कर्षणसमये स हि चरणप्रतिबिम्बो नागरेण दृष्टः। तं चरणं दृष्ट्वा 'तदिदं शालिरक्षिकायाः सङ्केतस्थानम्' इति निजसुहृदं प्रत्युपपादयति। तथा च– ऐषमोऽपि क्षेत्रेऽस्मिन् कलमोत्पत्तिमारभ्य तत्पाकपर्यन्तं शालिगोपी पान्थादीनां सुलभा स्यादिति तत्प्राप्त्याशा सहचरं प्रति सूच्यते। 'वर्षाकाले पूर्ववत्सरीयकलमगोपीपदाङ्कितक्षेत्रकर्षणं दृष्ट्वा कश्चित्पान्थ आह' इति गङ्गाधरः। 'तंसट्ठिअ' इत्यस्य 'त्र्यंशस्थितः त्र्यंशेन भागत्रयेण स्थितः, असम्पूर्ण इति यावत्।' इत्यर्थं गङ्गाधर आह। 'यदापूर्ववत्सरे क्षेत्रमध्यस्थितजलस्य शोष आरब्धस्तदा कलमगोप्याः शालिपाकेन सङ्केतस्य लाभावरोधेन दुःखोपचये सम्पूर्णश्चरणो न पङ्कमध्ये प्रतिबिम्बितः' इति तत्तात्पर्यम्। परं 'णिद्दालसपरिघुम्मिरतंसवलन्तद्धतारआलोआ। (२/४८)' इत्यादिषु 'तंस' पदस्य तिर्यगर्थः स्वयमेव स्वीकुर्वतस्तस्य 'त्र्यंश' इत्यर्थकल्पनमाकर्षणमात्रमित्यलम्।

शालिक्षेत्ररक्षिकां वीक्ष्य साभिलाषं निजसुहृदं प्रति शृण्वत्यां तस्यां कोऽपि सहृदयः सवैदग्ध्यपरिहासमाह–

**दिवसे दिवसे शुष्यति सङ्केतकभङ्गवर्द्धिताशङ्का।**

**आपाण्डुरानतमुखी कलमेन समं कलमगोपी।।९१।।**[1]

कलमः शाली परिपाकेन पाण्डुः पूर्णतागौरवादानतमुखश्च सन् यथा यथा दिवसे दिवसे शुष्यति, तथा तथा शालिक्षेत्रशोषेण सङ्केतस्थलापगमचिन्तया आनतमुखी भाविसम्भोगविरहशङ्कया पाण्डुर्भवन्ती कलमगोपी प्रतिदिनं शुष्यति। अथवा आपाण्डुरं च आनतं च मुखं यस्याः सेत्यर्थः। सङ्केतस्थानालाभादप्राप्तसमागमः स मयि मन्दप्रणयः कदाचन न भवेदित्याशङ्काया हेतुः। अथवा सङ्केतकभङ्गस्य वर्द्धिता आशङ्का यस्याः सेत्यर्थः। कलमेन सममिति सहोक्त्या–यदि त्वमेनां वाञ्छसि तर्हि कलमपाकात्पूर्वमेव सम्भोगसाभिलाषा सेयं सुखसाध्येति साभिलाषं स्वसुहृदं प्रत्यभिव्यज्यते। शालिरक्षिकां प्रति तु–तव पाण्डुमुखतायाः

---

१. **दिअहे दिअहे सूसइ संकेअअभङ्गवड्ढिआसङ्का।**

**आवण्डुरोणअमुही कलमेण समं कलमगोवी।।९१।।**

[दिवसे दिवसे शुष्यति सङ्केतकभङ्गवर्धिताशङ्का।

आपाण्डुरावनतमुखी कलमेन समं कलमगोपी।।]

शोषस्य च कारणमवगतं मया। तदेतां चिन्तामपहाय मत्सुहृदमभिलषन्तमनुगृह्णीष्वेति सपरिहासमभिसूच्यते। 'इङ्गितादिभिरप्यनवगम्यः प्रच्छन्नोऽयं प्रेमप्रकारः' इति सरस्वतीकण्ठाभरणम्।

भक्तहारिणीं दृष्ट्वा विचलितचेतसो हलवाहनासक्तस्य पामरस्य चरितं प्रत्यक्षवीक्षकः कश्चित्सहचरमाह–

**नवकर्मिपामरेण हि पश्य सपदि भक्तहारिकां वीक्ष्य।**

**योक्त्रप्रग्रहमात्रे मोच्येऽप्यवहासिनी मुक्ता।।९२।।**[1]

नवकर्मिणा अनभ्यस्तहलचालनकर्मणा पामरेण सुन्दरीं भक्तहारिकां (भोजनानेत्रीम्) दृष्ट्वा क्षुभितचित्ततया योक्त्रस्य 'जोत' इति ख्यातस्य वृषकण्ठावसक्तस्य चर्मपट्टस्य प्रग्रहमात्रे बन्धनमात्रे मोक्तव्येऽपि अवहासिनी 'नाथ' इति ख्याता नासारज्जुर्मुक्तेति त्वं पश्य। भोजनार्थं विश्रमिष्यता पामरेण हलधुरावहयोर्वृषयोर्योक्त्रबन्धनमोचनस्थाने भक्तहारिकां प्रति जातव्यासङ्गतया बलीवर्दयोर्नासारज्जुर्मुक्तेति भावः। नवकर्मीति पदेन– अनभ्यस्तकर्मतया हलकर्मणि स्वाभाविकः सम्भ्रमस्तु पूर्वत एवासीत्, पुनर्भक्तहारिणीहृतचित्ततया जायमानो मोहातिशयो न निरोद्धुं शक्योऽभवदिति सूच्यते। पाउहारी भक्तहारीति देशी। 'पाणिहारीओ' इति पाठै पानीयहारिकामित्यर्थः। 'योक्त्ररूपे प्रग्रहे मोक्तव्ये अवहासिनी मुक्ता' इति गङ्गाधरः।

नैशतुहिनभङ्गेन योऽयं हरितदीर्घो मार्गस्तिलक्षेत्रे वीक्ष्यते स हि सुरतरसिकया कयाचिदभिसारिकया कृत इत्यात्मनो मार्मिकतां प्रथयन् नागरिकः सहचरमाह–

**दृष्ट्वापि हरितदीर्घं प्रत्यूषे नातिखिद्यते हलिकः।**

**असतीरहस्यमार्गं तुषारधवले तिलक्षेत्रे।।९३।।**[2]

---

१. **णवकम्मिएण हअपामरेण दट्टूण पाउहारीओ।**

**मोत्तव्वे जोत्तअपग्गहम्मि अवहासिणी मुक्का।।९२।।**

[नवकर्मिणा पश्य पामरेण दृष्ट्वा भक्तहारिकाम्।

मोक्तव्ये योक्त्रप्रग्रहेऽवहासिनी मुक्ता।।]

२. **दट्टूण हरिअदीहं गोसे णइजूरए हलिओ।**

**असईरहस्समग्गं तुसारधवले तिलच्छेत्ते।।९३।।**

[दृष्ट्वा हरितदीर्घं प्रातर्नातिखिद्यते हलिकः।

असतीरहस्यमार्गं तुषारधवले तिलक्षेत्रे।।]

नैशतुषारेण धवलीभूते तिलक्षेत्रे हरितं दीर्घं च। असत्याः रहस्यस्य चौर्यसुरतस्य मार्गं दृष्ट्वाापि हालिको नातिखिद्यते। असतीगमनमार्गस्य हरिततया हरिततिलानामक्षतत्वमालोक्य निजहानेरभावाद्धलिकस्य नातिखेद इत्यर्थः। ममैव क्षेत्रे सुन्दरी काचित्पामरेणोभुज्यते, सापि सुकृतकार्योचितेऽतिप्रत्यूष एवेति स्वल्पः खेदस्त्वभूदेवेति अतिपदेन सूच्यते। नैशतुषारमार्जनोत्तरं पुनस्तन्मार्गे तुषारस्याऽपातात् प्रत्यूष एव सुरतसङ्घटनाभूदित्यनुमीयते। सुनिबिडितफल-पत्र-शाखतया उपरित आच्छन्नत्वेऽपि तले सुमसृणतिलप्रकाण्डमात्रसत्तया निभृतसुरतस्य पूर्णावकाश इति तिलक्षेत्रादिषु सङ्केतके कामिनीनां सबहुमानप्रसिद्धिरिति कण्ठाभरणादिमतमुक्तमेव पूर्वम्। 'णइजूरए' इत्यस्य स्थाने 'सण्ढाणँ जूरए' इति पाठे 'वृषभान्प्रति खिद्यते' निन्दतीत्यर्थः। हरित-दीर्घं मार्गं दृष्ट्वा-वृषभा एव क्षेत्रे प्रविष्टा इति तत्खेदाभिप्रायः। सोऽयं वाच्यमर्यादया। वृषभपदेन सुरतवर्षणशीलकामिजनाभिप्राये तु 'उद्रिका दुष्टाः कामिन एव मत्क्षेत्रे निभृतं प्रविश्य रमन्ते' इति ध्वनिमर्यादा तान्प्रति क्रोधोऽभिव्जयते।

परिजृम्भितपञ्चशरप्रभावायां प्रावृषि प्राणप्रियाप्रणयपरवशाः पथिका विप्रकृष्टमपि पन्थानमपरिगणितपथिपीडाः क्षिरप्रमेवाक्रामन्तीति प्रवीणः कश्चिन्निजसहचरमाह-

**सङ्कोचित इव खण्डं खण्डं कृत इव च पीत इव पन्थाः।**
**पथिकेन नीयते किल गृहभाविसुखेन नवघनागमने।।९४।।**

गृहे भावि भविष्यत्सुखं यस्य ईदृशेन, भावि गृहसुखं स्मरतेत्यर्थः। पथिकेन सङ्कोचित इव सङ्क्षिप्तीकृत इव, खण्डशः करणेनैकदेशीकृत इव, पीत इव उत्कण्ठातिशयात्सहसैव समापित इव, मार्गो नीयते उल्लङ्घ्यते। भवने भाविप्रियतमासमागमसुखस्मरणात्सोत्कण्ठेन पथिकेन सुदीर्घोऽपि मार्गः सम्प्रति सत्वरं समाप्यत इति भावः। उत्प्रेक्षात्रयेणोत्तरोत्तरं त्वरातिशयो द्योत्यते। निरवशेषो मार्गः सङ्क्षिप्यत इति सङ्कोचनोत्प्रेक्षणेन संसूच्यते। खण्डशः करणेन मार्गस्यैकदेश एव स्थाप्यते, अवशिष्टो लोप्यत इति प्रत्याय्यते। पीत इवेत्यनेन तु- 'तथा सत्वरमुल्लङ्घयति यथा द्रवद्रव्यं कश्चित्सहजमेव गलादधःकरोति' इति भूयांस्त्वरातिशयो व्यज्यते। 'आगामिसुखमुद्दिश्य पथिकेन मार्गक्लेशमगणयित्वा त्वरया गृहं प्रति गम्यत इति नायको यथा दुःखं न प्राप्नोति तथा नायिकया विधातुमुचितमिति' उत्क्षिप्ताक्षरमर्यादं गङ्गाधरव्याख्यानम्।

परनिन्दयैव नन्दद्भिः खलैर्दुर्वचनविशिखैर्मर्मणि ताड्यमाना काचित्सनिर्वेदं सखीमाह-

---

१. **संकेल्लिओ व्व णिज्जइ खण्डं खण्डं कओ व्व पिओ व्व।**
**वासागमम्मि मग्गो घरहुत्तसुहेण पहिएण।।९४।।**
[सङ्कोचित इव नीयते खण्डं खण्डं कृत इव पीत इव।
वर्षागमने मार्गो गृहभविष्यत्सुखेन पथिकेन।।]

**बधिरान्धाः किल धन्यास्त एव जीवन्ति मानुषे लोके।**

**शृण्वन्ति न पिशुनवचः पश्यन्ति न ये च खलसमृद्धिमपि।।९५।।**[१]

बधिराश्च अन्धाश्च। जीवनमत्र सफलजीवनरूपेऽर्थान्तरे सङ्क्रमितम्। तथाच– तेषामेवास्मिंल्लोके जीवनं सफलम्, पदे पदे दुर्जनवचनैर्मर्मस्वभिहन्यमानाया न ममेत्यात्मानं प्रति निर्वेदो ध्वन्यते। मानुषे लोक इत्यनेन मर्त्यलोके तेषामेव जीवनं प्रशस्तं नान्येषाम्, अन्येषु दिव्यलोकादिषु तु दुर्जनवचनश्रवणानवसरात्सिद्धैव समभिनन्द्यजीवनतेति युक्त्या दिव्यजनसाम्यं सूच्यते। गुणदर्शनेन आन्ध्यबाधिर्यदोषयोरपि साभिलाषताप्रदर्शनादनुज्ञालङ्कृतिः– 'दोषस्याभ्यर्थनानुज्ञा तत्रैव गुणदर्शनात्।' इति पीयूषवर्षः। अनया च पिशुनजनवचनसूचिसञ्चयै- रनवरतविध्यमानश्रवणहृदयतया दुर्भरं जीवन्त्या मे जीवनमन्धबधिरादिविकलजनापेक्षयापि गर्हणीयमिति निन्दकान् प्रत्यसूयासहकृतः स्वात्मनि निर्वेदातिशयो ध्वन्यते। 'काचिदुत्तमा दुर्जनस्य कस्यचिदुपचयं पश्यन्ती सखीसन्निधौ परितप्यते।' इति कुलबालदेवटीका। गङ्गाधर- टीका तु गाथापञ्चकहीनैवोपलब्धा।

निकटनिवासीनि नायके निर्भरनिबद्धप्रणया काचित्प्रेमप्रतिषेधार्थं पुनः पुनः प्रियसखीभिः प्रोच्यमाना ताः प्रति सासूयमाह–

**अधुना वारयति जनः कुत्र तदा मूक एषोऽगात्।**

**विषमिव विषमं हि यदा जातं सर्वाङ्गघूर्णितं प्रेम।।९६।।**[२]

'मूइल्लओ मूकः' इति धनपालकृतः 'पाइअलच्छी' कोषः। इदानीं तु जनः प्रेमतो निवारयति, परं तदा मूकः किञ्चिदप्यब्रुवन् एष जनः कुत्र अगात् गतोऽभूत्? यदा हि दुष्प्रतीकार्यं विषमिव प्रेम सर्वाङ्गघूर्णितं सर्वाङ्गेषु व्याप्तं जातम्। इदानीं निवारणेन किं वा

---

१ **धण्णा बहिरा अन्धा ते च्चिअ जीअन्ति माणुसे लोए।**
**ण सुणंति पिसुणवअणं खलाणँ ऋद्धिं ण पेक्खन्ति।।९५।।**
[धन्या बधिरा अन्धास्त एव जीवन्ति मानुषे लोके।
न शृण्वन्ति पिशुनवचनं स्वालामृद्धिं न प्रेक्षन्ते।।]

२. **एह्निं वारेइ जणो तइआ मूइल्लओ व्व गओ।**
**जाहे विसं व जाअं सव्वङ्गपहोलिरं पेम्म।।९६।।**
[इदानीं वारयति जनस्तदा मूलकः कुत्रापि वा गतः (आसीत्)।
यदा विषमिव जातं सर्वाङ्गघूर्णितं प्रेम।।]

फलमिति भावः। रक्तसञ्चारेण सह सर्वस्मिन्वपुषि व्याप्ते विषे तत्प्रतीकारो यथा दुःशकस्तथा सर्वाङ्गव्यापतस्य तत्प्रणयस्य सम्प्रति निवारणमशक्यमेवेत्याशयः। सर्वाङ्गघूर्णितमित्यनेन- युष्मत्कथानुगमने विवशं मे प्रणयसात्कृतं सर्वाङ्गमिति विवशता व्यज्यते। सखीजनं प्रति 'जनः' इति तटस्थतानिर्देशेन यः किल प्रियतमेन सह सञ्जातां प्रणयप्रवृत्तिं पुरा प्रेक्षमाणोऽप्यप्रतिषिध्यन् सम्प्रति वारयति, मन्मनोवेदनामविजानन् स हि सखीजनोऽपि निःसम्बन्धः सामान्यजन एवेति तं प्रत्यसूया प्रकाश्यते। मूकपदेनवचनोच्चारणेऽत्यन्तमशक्तता सूच्यते। किञ्च-'तदा मूकः कथं जातः' इत्यसौ लोकोक्तिशैली। 'मूइल्लाओ' इत्यस्य 'मूलकः' इति विच्छायां छायां प्रकल्प्य अर्थसङ्गतौ मूकीभवन् कुलबालदेवस्तूपेक्ष्य एव। 'असदृश्यां कस्याञ्चिदासक्तः कश्चिदुत्तम एव सख्यावार्यमाणः सासूयं तमेव वदति' इति तदङ्गीकृतम-वतरणम्।

कस्याश्चिदनुरागातिशयं प्रतिपाद्य नायकमुत्कण्ठयन्ती दूती सवैदग्ध्योपालम्भमाह-

**किं ते तदापि न विदितं ह्यासन्दीनां यथा बहूनां सा।**
**उच्चावचिकां कृत्वा तव दर्शनलालसा पतिता।।९७।।**[1]

तव दर्शनलालसा सा बहूनाम् आसन्दीनाम्। उच्चावचिकाम् एकस्या उपरि एकां विन्यस्य उन्नतामारोहणीं कृत्वा पतिता। किं त्वया तदपि न ज्ञातम्? आस्यतेऽस्यामिति वेत्रासनमासन्दीत्यमरटीका। क्षुद्रखट्वा 'पीठिका' इति मेदिनी। त्वद्दर्शनार्थमुत्तुङ्गे जालवातायने प्राप्नुमप्रभवन्ती सेयं बहुभिः पीठिकाभिर्निःश्रेयणीं विधाय तस्या उच्चावचत्वात्पपात, एतावांस्त्वय्यस्या अनुराग इत्याशयः। उच्चावचपदेन- सापि विषमा, यथावन्न निर्मितेति दर्शननिमित्तेन सम्भ्रमेणानुरागातिशयः सूच्यते। एवं च- भवदवलोकनोत्सवमत्ता निजनिपातमप्यविगणयन्ती सेयमेवं त्वय्यनुरक्ता। भवांस्तु-तत्प्रमोदनं दूरमास्तां तस्या विपत्तिमपि न परिजानाति, अहो ते प्रणयपरिपाटीति नायकं प्रत्युपालम्भो ध्वन्यते। 'कस्याश्चित्सखी सख्या अनुरागातिशयं नायकविषये सूचयन्ती नायकाग्रे कथयति' इत्यप्रौढमवतरणं कुलबालदेवस्य।

रममाणं कञ्चिद्विटं श्रावयन्सहृदयः कश्चिन्निजसहचरं प्रति सपरिहासमाह-

---

१. **कहँ तंपि तुइ ण णाअं जह सा आसन्दिआणँ बहुआणम्।**
**काऊण उच्चवचिअं तुह दंसणलेहला पडिआ।।९७।।**
[कथं तदपि त्वया न ज्ञातं यथा सा आसन्दिकानां बहूनाम्।
कृत्वा उच्चावचिकां तव दर्शनलालसा पतिता।।]

**चौरान्कामुकलोकान्पामरपथिकांश्च कुक्कुटो वदति।**
**तन्वी भवति निशेयं वहताऽऽरमताऽत्र वाहयत।।९८।।[१]**

तन्वी भवति, स्वल्पाऽवशिष्यत इत्यर्थः। आवश्यकत्वेऽपि मूले चौरानित्यादीनां वहतेत्यादिभिः सह यथायोगमन्वयः, इह तु यथासङ्ख्यम्। अलङ्कारश्च सः। चोरितवस्तूनि नयतेति चौरान्, आ (समन्तात् बाढमिति यावत्) रमध्वमिति कामुकलोकान्, बलीवर्द्दान् भारशकटं वाहयतेति मार्गगामिनः पामरान् प्रति, वदतीत्यर्थः। 'रात्रिशेषे कुक्कुटः शब्दं करोतीति कुक्कुटानां स्वाभाविकं रूपम्। तच्छ्रुत्वा तस्य प्रयोजनमुत्प्रेक्ष्य विवृणोति कश्चित्' इत्यप्रौढमिव कुलबालदेवः। रमहेति प्राकृतवत्संस्कृतेऽपि रमतेत्येव कुलबालकृता छाया तु च्युतसंस्कृतिरेव।

प्रणयकोपाभिनयाय परस्परमभाषमाणावपि मिथः कटाक्षविनिमय एव युगपद्विहसितवन्तौ 'कृत्रिमकोपतया त्वमेव पूर्वमहसीः' इति च मिथो विवदमानौ नायिकानायकौ वीक्ष्य सखी सखीमाह–

**अन्योऽन्यकटाक्षान्तरसम्प्रेषितमिलितदृक्प्रसरौ ।**
**कृतकलहौ किल मन्ये द्वावपि सहसा समं हसितौ।।९९।।[२]**

अन्योऽन्यकटाक्षान्तरे सम्प्रेषितः मिलितश्च दृक्प्रसरो ययोरीदृशौ कृतकलहौ द्वावपि मन्ये समं युगपत् हसितौ। कोपप्रशमेऽपि 'अयं पूर्वमनुनयेत्, इयं पूर्वमनुनयेत्' इति केवलं प्रथमानुनयं प्रतीक्षमाणयोरनयोः कोपशान्त्युत्तरमौत्सुक्यस्योदयात्परस्परकटाक्षविनिमये सति समकालमेव हासो जातो न पूर्वपश्चाद्भावेनेति भावः। कटाक्षान्तरे दृष्टिप्रेषणस्यायमाशयो यत् 'प्रशान्तकोपतायामप्यधुना किं व्यवस्यति, अनुनयाय कियान्विलम्बः' इति मिथः परिज्ञानाय द्वावपि परस्परं प्रति मुहुर्दृष्टिं निक्षिपतः। परम् औत्सुक्यं मे न प्रकटीभवेदित्यभिसन्धिना

---

१. **चोराणँ कामुआणँ अ पामरपहिआणँ कुक्कुडो वअइ।**
**रे रमह वहह वाहयह एत्थ तणुआअए रअणी।।९८।।**
[चौरान्कामुकांश्च पामरपथिकांश्च कुक्कुटो वदति।
रे रमत वहत वाहयत अत्र तन्वी भवति रजनी।।]

२. **अण्णोण्णकडक्खन्तरपेसिअमेलीणदिट्ठिपसराणम्।**
**दो च्चिअ मण्णे कअभण्डणाइँ समहं पहसिआइं।।९९।।**
[अन्योऽन्यकटाक्षान्तरप्रेषितमिलितदृष्टिप्रसरौ।
द्वावपि मन्ये कृतकलहौ समकं प्रहसितौ।।]

स्पष्टमदृष्ट्वा नेत्रप्रान्तेन निभृतं विलोकयत इति। द्वावपि च परस्परमेवमनुसन्धित्सावशान्मिथः कटाक्षेण दृष्टिं निक्षिपतः। अत एव द्वयोर्दृक्प्रसरो मिलति। ततश्च परस्परं मिलितनयनौ द्वावपि परस्परस्य हृदयदशां परिज्ञातवन्ताविति सहसा द्वयोरेव युगपत् हासः समभवदित्याशयः। एवं च- परस्परं नयनयोग एव विहसितवतोर्युवयोः कोपदृढता सम्यगस्माभिः परिज्ञाता! किं मुधा गोपयथः इति नायकौ प्रति परिहासः सख्या व्यज्यते। 'भण्डण' शब्दः प्राकृते कलहविशेषवाचकः। 'मेलीणदिट्ठिपसराणम्' इत्यस्य 'मिलितदृष्टिप्रसरौ' इति छायाकरणं प्राक्तनटीकानुरोधेन।'मेलितदृष्टिप्रसरयोः (अनयोः मध्ये) कृतकलहौ द्वावपि मन्ये समं प्रहसितौ' इत्येव यद्यर्थोऽभविष्यन्न काचिदर्थक्षतिरित्यलम्।

नितान्तमनुरक्तामपि नायिकां धीरमानितया यथावदननुवर्तमानं नायकं नायिकाच्छन्दा-नुवर्तिनं कर्तुं नायिकासखी हरनमस्कारव्यपदेशेन सवैदग्ध्योपालम्भमाह-

**सन्ध्योपात्तजलाञ्जलिबिम्बितगौरीमुखाम्बुरुहम्।**
**स्फुरिताधरं मुधैव हि विगलितमन्त्रं हरं नमत।।१००।।**

सन्ध्योपासनार्थं गृहीते जलाञ्जलौ प्रतिबिम्बितम् [प्रतिमया प्रतिबिम्बरूपेण सङ्क्रान्तम्] गौरीमुखकमलं यस्य तम्। अत एव-प्रेयसीमुखावलोकनादुज्जृम्भितभावान्तरतया विगलितो मन्त्रो (मन्त्रजपः) यस्य, तथापि प्रमादगोपनाय मुधैव स्फुरिताधरं सञ्चलदोष्ठपुटं हरं प्रणमत। विस्मृतादिस्थाने विगलितपदनिवेशेन-बलादुपस्थापितोऽपि मन्त्रः प्रेयसीमुखदर्शनाज्जातभावान्तरतया स्वयं विस्खलतीति भावप्राबल्यं सूच्यते। तथाच-चराचरनायको भगवान्भूतभावनोऽपि प्रियाप्रेमानुवृत्या तन्मुखप्रतिबिम्बमात्रमप्यवलोक्य प्रशम-प्रधाने संध्योपासनसमयेऽपि तद्गतचित्तो भवति, कि वा प्रियां प्रमोदयितुं तादृश इव भवति। त्वं तु रसमयेऽपि समये सततमनुवर्तमानामपि प्रेयसीं न यथावदनुरञ्जयसि। अहो ते रसिकतेति नायकं प्रत्युपालम्भोऽभिव्यज्यते। त्वत्प्रेमवशंवदामेनां धीरोऽपि त्वं सर्वसमयेऽपि रसिकतयैव सततमनुवर्तस्वेति चरमं व्यङ्ग्यम्। 'समाप्तौ हरनमस्काररूपं मङ्गलमाचरति' इति गङ्गाधरः। 'हरस्यापि गौरीमुखकमलप्रतिबिम्बं दृष्ट्वा सन्ध्यारूपनित्यकर्माङ्गमन्त्रलोपो भवति किं पुनरस्मदादेर्लोकस्य प्रियासान्निध्ये व्याकुलचित्ततेति सर्वथा स्त्रीसङ्गः परिहरणीयः' इति तात्पर्यार्थकल्पनं तु गङ्गाधरस्य गाथाकारहृदयप्रतिकूलमेव। 'अमिअं पाउअकव्वम्' इति पद्येन

---

१. **संझागहिअजलञ्जलिपडिमासंकन्तगोरिमुहकमलम्।**
**अलिअं चिअ फुरिओट्ठं विअलिअमन्तं हरं णमह।।१००।।**
[संध्यागृहीतजलाञ्जलिप्रतिमासङ्क्रान्तगौरीमुखकमलम्।
अलीकमेव स्फुरितोष्ठं विगलितमन्त्रं हरं नमत।।]

स्वारब्धस्य प्राकृतकाव्यस्य कामतत्त्वनिर्भरतां प्रतिज्ञाय उपसंहारे सर्वथा तदुन्मूलनस्य सुस्पष्टं विरुद्धत्वात्। 'सर्वथा स्त्रीसङ्गः परिहरणीयः' इत्यनेन– आलम्बननिरासात् शृङ्गारः सुस्पष्ट-मुन्मूलित एव। तस्मात् प्रशमानुगुणचित्तेनापि सा शिक्षा ग्रन्थान्तरतोऽवसेया, न गाथासप्तशतीतः। कान्तासम्मिततयोपदेशस्तु मध्ये मध्ये स्वयं ग्रन्थकारेणैव सूचित इति ग्रन्थकारोद्देश्यविफल-नमनुचितमेवेत्यलमन्ते विरसविवादेन। अनया गाथया पूर्वोक्तध्वनिं स्फुटयन् शिवस्य सायंसन्ध्योपासनवर्णनेन ग्रन्थसमाप्तिमपि सूचयति गाथाकारः। 'पसुवइणो रोसारुणे' त्यादिना प्रातःसन्ध्यावर्णनादारम्भः सूचितः। अन्ते तु तेनैव क्रमेण सायंसन्ध्यावर्णनात्समाप्तिः सूचितेत्यलं मार्मिकेषु।

उपसंहरति–

**नरपालहालरचिते प्राकृतकाव्येऽत्र सप्तशते।**
**सप्तमशतं समाप्तं गाथानां वै स्वभावरमणीयम्।।१०१।।**

**( इति सप्तमं शतकम् )**

**( समाप्ता चेयं संस्कृतगाथासप्तशती )**

सप्तशते सप्तशतीरूपे प्राकृतकाव्ये। 'हाल इति राः शालिवाहनस्य संज्ञान्तरम्' इति गङ्गाधरः।

**गङ्गाधरकृतटीकामनु टीका निर्मिता सेयम्।**
**अथ लक्षिता त्रुटी काप्यघटीह स्तोकविस्तारः।।**

इति श्रीजयपुरमहाराजाधिराजसम्मानिततैलङ्गभट्टान्ववायसम्भूत-देवर्षिभट्टश्रीमथुरा-नाथशास्त्रिसाहित्याचार्यनिर्मिता संस्कृतगाथासप्तशती टीका

**व्यङ्ग्यसर्वङ्कषा समाप्ता।**

---

१. **इअ सिरिहालविरइए पाउअकव्वम्मि सत्तसए।**
**सत्तमसअं समत्तं गाहाणँ सहावरमणिज्जम्।।१०१।।**
[इति श्रीहालविरचिते प्राकृतकाव्ये सप्तशते।
सप्तमशतं समाप्तं गाथानां स्वभावरमणीयम्।।]

------

# संस्कृतगाथानिबन्धुः परिचयः

तैलङ्गपुङ्गवानामाङ्गिरसायास्यगौतमेतिसत्प्रवरः।
देवर्ष्यवटङ्कवहो वंशो भूपालपूजितो जयति।।१।।
तस्मिन्नरिपरिभावी बावीजीदीक्षितात्तृतीयोभूत्।
श्रीमान्मण्डलनामा सम्पत्सौभाग्यभाग्यनिधिः।।२।।
बान्धवदेशनरेशो गुरवे यस्मै प्रयागकृतधाम्ने।
ग्रामान्देवर्षिमुखान् शतं व्यतारीत्ससम्मानम्।।३।।
तस्मिन् वंशे श्रीमान् श्रीकृष्णः कविकलानिधिर्जातः।
बुधसिंहबुन्दिभर्तुर्निकटाद्योऽनीयताऽम्बरेशेन[१] ।।४।।
'सुकवि''कलानिधि'विरुदोऽलङ्कारकलानिधेः[२] कृते प्रददे।
जयपुरपुरनिर्मात्रा जयसिंहेनाम्बरावनीभर्त्रा।।५।।
'वाणी' 'भारती' विरुदस्तत्तनयो द्वारकानाथः।
माधवसिंहमहीन्द्रादेष कवीन्द्राधिपो ययौ मानम्।।६।।
श्रीमत्पृथ्वीसिंहात्प्रतापभूपाच्च लब्ध'वाणि'विरुदस्य।
व्रजभाषामयकविता यस्य सुकवितानवं[३] सूते।।७।।
तत्तनयो व्रजपालः प्रतापभूपालमाननीयो यः।
नवसङ्गीतग्रन्थं विधाय समियाय भूरिसम्मानम्।।८।।
तत्तनयानां ज्येष्ठो मण्डनमिव मण्डनो बभूव विदाम्।
कवितातोषिनरेन्द्रा भूरिगजेन्द्रान्ददुर्यस्मै।।९।।
यो राजनीतिकुशलो विपुलोन्नाहेषु राजसु प्रथितः।
जयसिंहभूमिभर्तुर्लेभे ग्रामादिसम्मानम्।।१०।।

---

१. आम्बेराधीशेन श्रीजयसिंहभूपालेन।

२. एतन्नामा ग्रन्थो जयसिंहाज्ञया निर्मितः। अयं हि काव्यप्रकाशादिवत् साहित्यस्य व्रजभाषामय आकारग्रन्थः। एतत्परिचयः 'साहित्यवैभवे' द्रष्टव्यः।

३. कविताभिमानिनां सुकवीनां तानवं कृशताम्।

**प्रज्ञाचक्षुर्लक्ष्मणभट्टोऽभूत्तत्सुतः सुदक्षतमः।**
**रामनरेन्द्राद्बुन्दीभर्तुर्योऽविन्दत ग्रामम्।।११।।**
**जनितः श्रीमल्लक्ष्मीनाथसुत-द्वारकानाथैः।**
**मथुरानाथः सोऽयं दत्तकपौत्रोऽभवत्तस्य।।१२।।**
**येन हि 'जयपुरवैभव[१]' मथ किल 'साहित्यवैभवं' सृजता।**
**'कवितानिकुञ्ज' महिता नवछन्दोबन्धरीतिराकलिता।।१३।।**
**जयपुरराज्यस्याखिलसंस्कृतशिक्षानिरीक्षणं[२] दधता।**
**मानमहीपच्छायामधिवसता मञ्जुनाथपरनाम्ना।।१४।।**
**गगनमुनिनन्दचन्द्रप्रमिते विक्रममहीपतेर्वर्षे।**
**सप्तशतीयं कलिता सम्मिलिता टीकया परतः।।१५।।**
**गाथासप्तशतीयं प्राकृतलोकोपभोग्यसौभाग्या[३]।**
**अमरगिरा सम्बन्धात्संस्कृतजनतोपयोगिनी जाता।।१६।।**
**निभृतनिषेव्यममृतमयमुपवनमिदमार्यरसिकानाम्।**
**नावश्यकप्रवेशाः[४] सभ्याः क्षाम्यन्तु तत्सदयम्।।१७।।**

## उपसंहारः

**देवर्ष्युपाह्वभट्टश्रीमथुरानाथशर्मनिर्मितिषु।**
**सेयं संस्कृतगाथासप्तशती पूर्तिमवतीर्णा।।१८।।**

१. 'कवितानिकुञ्जस्य' भागद्वयमिदं बम्बई निर्णयसागरे मुद्रितम्। प्रथमे जयपुरराजवंशवर्णनपूर्वं तद्राज्यस्य सचित्रं वर्णनमन्ये च बहवो विषयाः, द्वितीये कवित्त-सवैयादिहिन्दीछन्दोभिः ऋतु-नवरस-अन्योक्ति-समीक्षा-नीति-उर्दूप्रभृतिसर्वभाषाच्छन्दो-वर्तमानभारत-विहारिसप्तशतीप्रभृतयो नानाविषयाः सन्ति। 'मथुरानाथशास्त्री रेसिडेन्सीरोड जयपुर' तः प्राप्यमिदं पुस्तकम्।

२. 'सुपरवाइझर संस्कृतपाठशालाजात जयपुरस्टेट'।

३. प्राकृतभाषानुरागिभिर्भोग्यापि अमरभारतीसङ्गात्संस्कृतभाषिजनताया उपयोगिनी जाता। किञ्च प्राकृतलोकैः साधारणजनैरुपभोग्यापि संस्कृतसंसर्गात्संस्कारसंस्कृतानां नागरिकाणामुपयोगिनी जातेत्यप्यर्थः। संस्कृतस्य अपूर्वोत्कर्षदायकत्वं व्यज्यते।

४. ये आर्या दर्शन-प्रभृतिगभीरग्रन्थेषु सततं प्रसितास्ते मनोविनोदाय तदिदं निभृतोपवनमासेवन्ते। अत एव अरसिकहृदयतया नवीनसभ्यतानुरोधाद्वा येषामेतत्सप्तशतीगतेष्वर्थेषु न प्रवेशोऽभवत्तेवामेतत्प्रवेशस्यावश्यकतापि न। यतः किल आर्यरसिकानाममृतप्रदत्वेन अत्यन्तमिष्टतमं तदिदं निभृतम् (Private) उपवनमस्ति। एवं सति सभ्यतानुरोधात् अप्रवेशनियम-(No admition) बाध्याः सभ्येतिविरुदवाहिनस्ते कृपां विधाय क्षमां विधेयासुरित्यर्थः।

------

# गाथानुक्रमणिका



---

१. 'गतलज्जस्य' वेबरमुद्रितपुस्तकस्थपाठः. २. 'कल्याणस्य' वे.

१. 'मकरन्दस्य' वे. २. 'कलिराजस्य' वे. ३. 'मुग्धदीपस्य' वे. ४. 'शालिवाहनस्य' वे.

१. 'हालिकस्य' वे. २. 'वोदितस्य' वे ३. 'पालितस्य' वे.

१. 'प्रहतायाः' वे. २. 'लम्पस्य' वे.

१. 'विनयायितस्य' वे. २. 'अनुरागस्य वे.

१. 'अलिकस्य' वे. २. 'मल्लोकस्य' वे. ३. 'मुग्धदीपस्य' वे. ४. 'धीरस्य' वे. ५. 'वसलकस्य' वे. ६. 'ग्रामकूटस्य' वे.

१. 'वलईपितस्य' वे. २. 'प्रवरराजस्व' वे. ३. 'वुरस्य ( ?)' वे. ४. 'प्राणामस्य' वे. ५. 'भीमविक्रमस्य' वे. ६. 'स्थिरसाहसस्य' वे. ७. 'शालिकस्य' वे.

१. 'गजरेवस्य' वे. २. 'कलङ्कस्य' वे. ३. 'त्रिलोकस्य' वे. ४. 'मुद्रस्य' वे.

१. 'सुरभिवत्सलस्य' वे. २. 'स्थिरसाहसस्य' वे. ३. पउलिन्यस्य' वे.

१. 'कालाधिपस्य' वे. २. 'सिरिराअस्य' वे. ३. 'ब्रह्मचारिणः' वे. ४. 'मन्मथस्य' वे. ५. 'कृतज्ञशीलस्य' वे.

१. 'पोटस्य' वे. २. 'सोमराजस्य' वे

१. 'ब्रह्मगते:' वे. २. 'नाधाया:' वे. ३. 'अनीकस्य' वे. ४. 'उजयस्य' वे

१. 'कविराजस्य' वे. २. 'वेशारस्य' वे. ३. 'हारकुण्ठस्य' वे. ४. 'वप्राजस्य' वे. ५. 'कटिल्लस्य' वे., ६. 'मुग्धाधिपस्य' वे. ७. 'धीरस्य' वे. ८. 'उजयस्य' वे.

--------

# भट्टश्रीमथुरानाथशास्त्रिणां कृतयः

| | | | |
|---|---|---|---|
| १ | **साहित्यवैभवम्** | – | मञ्जुनाथग्रन्थावल्याः प्रथमभागे द्वितीयखण्डे प्रकाशितम्<br>(प्रथमं १९३० वर्षे निर्णयसागरात् प्रकाशितमभूत्) |
| २ | **जयपुरवैभवम्** | – | मञ्जुनाथग्रन्थावल्याः प्रथमभागे प्रथमखण्डे प्रकाशितम्<br>(प्रथमं १९४७ वर्षे मञ्जुनिकुञ्जात् प्रकाशितम्) |
| ३ | **गोविन्दवैभवम्** | – | मञ्जुनाथग्रन्थावल्याः प्रथमभागे प्रथमखण्डे प्रकाशितम्<br>(पूर्वं गीताप्रेसतः १९५९ वर्षे प्रकाशितम्) |
| ४ | **संस्कृतसुबोधिनी** | – | पूर्वप्रकाशिता |
| ५ | **आदर्शरमणी** | – | मञ्जुनाथगद्यगौरवे सङ्कलिता<br>(मञ्जुनाथग्रन्थावल्याः द्वितीयभागे प्रथमखण्डे प्रकाशिता) |
| ६ | **गीतिवीथी** | – | जयपुरात् लेखकेन १९३० वर्षे प्रकाशिता |
| ७ | **गाथारत्नसमुच्चः** | – | जयपुरात् प्रकाशितः |
| ८ | **संस्कृतगाथासप्तशती** | – | मञ्जुनाथग्रन्थावल्याः प्रथमभागे तृतीयखण्डे प्रकाशिता |
| ९ | **गीर्वाणगिरागौरवम्** | – | केन्द्रीयसंस्कृतविद्यापीठम्, जयपुरम्, १९८९<br>(मञ्जुनाथग्रन्थावल्यां प्रकाशितम्) |
| १० | **प्रबन्धपारिजातः** | – | केन्द्रीयसंस्कृतविद्यापीठम्, जयपुरम्, १९८८<br>(मञ्जुनाथग्रन्थावल्यां प्रकाशितम्) |
| ११ | **शिलालेखललन्तिका** | – | निर्णयसागरात् प्रकाशिता १९४१ |
| १२ | **सुलभसंस्कृतम्** | – | जयपुरात् १९७० वर्षे प्रकाशितम् |
| १३ | **शरणागतिरहस्यम्** | – | गीताप्रेस, गोरखपुरम् |

| | | | |
|---|---|---|---|
| १४ | **ब्रज कविता वीथी** | – | जयपुरात् १९४७ वर्षे प्रकाशिता |
| १५ | **चतुर्थी स्तव** | – | जयपुरात् प्रकाशितम् |
| १६ | **चन्द्रदत्तपरिचय** | – | जयपुरात् प्रकाशितम् |
| १७ | **भारतवैभवम्** | – | प्रथमतया मञ्जुनाथग्रन्थावल्यां प्रकाशितम् |

**सम्पादिता ग्रन्थाः –**

| | | | |
|---|---|---|---|
| १ | **कादम्बरी** | – | निर्णयसागरतः प्रकाशिता |
| २ | **रसगङ्गाधरः** | – | सरलामर्मप्रकाशसनाथितः, निर्णयसागरात् प्रकाशितः |
| ३ | **गीतगोविन्दम्** | – | मुम्बई निर्णय सागरात् १९३७ वर्षे प्रकाशितम् |
| ४ | **ईश्वरविलासमहाकाव्यम्** | – | १९५८ वर्षे प्रकाशितम्। २००९ वर्षे रमाकान्तपाण्डेयेन सहिन्दीभाषानुवादं जयपुरात् प्रकाशितम्। |
| ५ | **पद्यमुक्तावली** | – | प्राच्यविद्याप्रतिष्ठानम्, जोधपुरम् १९५९ |
| ६ | **वृत्तमुक्तावली** | – | प्राच्यविद्याप्रतिष्ठानम्, जोधपुरम्, १९६२ |

**अप्रकाशितग्रन्थाः**

१ धातुप्रयोगपारिजातः

२ आर्याणाम् आदिभाषा

३ काव्यकुञ्जम्

४ रससिद्धान्तः

**पत्रकारता**

१ संस्कृतरत्नाकरः १९०४ तः १९४९ यावत्।

२ भारती– अत्र नैके विशेषाङ्काः प्रकाशिताः। १९५२ तः १९६४ यावत्

**भट्टमहोदयानां साहित्यमाश्रित्य प्रणीता ग्रन्थाः –**

| | | | |
|---|---|---|---|
| १. | **मञ्जुनाथवाग्वैभवम्** | – | सम्पा. डॉ. गङ्गाधरभट्ट प्रकाशकः राजस्थान संस्कृत अकादमी, जयपुरम् (पृ.क–ज्ञ, १–२१६) १९९० |
| २. | **श्री मथुरानाथशास्त्रिणः** | – | (निबन्ध संकलन) संपा. डॉ. प्रभाकरशास्त्री |
| | **कृतित्वसमीक्षणम्** | – | प्रका. राजस्थान–संस्कृत अकादमी जयपुरम् सन् १९९५ |

| | | | |
|---|---|---|---|
| ३. | **मञ्जुनाथगद्यगौरवम्** | - | सम्पादकः डॉ. रमाकान्तपाण्डेयः प्रका. प्रतिभाप्रकाशनम्, दिल्ली, २००४ |
| ४. | **मञ्जुनाथवाग्वैजयन्ती** | - | सम्पा. देवर्षि कलानाथशास्त्री, ज.रा.रा.सं.वि.वि, जयपुरम् |
| ५. | **भट्टस्मृतिविशेषाङ्कः** | - | भारती संस्कृतमासिक वर्ष १४ अङ्क सम्पा. श्रीहरिशास्त्री, भारती भवन, जयपुर सितम्बर १९६४ |
| ६. | **भट्टजन्मशताब्दीविशेषाङ्कः** | - | स्वरमङ्गला संस्कृतत्रैमासिकः सम्पा. डॉ. गङ्गाधर भट्ट प्रका. राजस्थान संस्कृत अकादमी, जयपुरम्। सन् १९९० |

**शोधप्रबन्धः-**

१. **भट्टश्रीमथुरानाथशास्त्री व्यक्तित्व एवं कृतित्व** -

(पी.एच.डी के लिए शोध प्रबन्ध) शोधकर्त्री डॉ. उषा भार्गव, राजस्थान विश्वविद्यालय, शोध निर्देशक डॉ. प्रभाकर शर्मा शास्त्री, १९७५

२. **भट्टमथुरानाथशास्त्रिकृत समस्या सन्दोह-**

एम.फिल. के लिए शोधप्रबन्ध, डॉ. दीपा पन्त, शोध निदेशकः डॉ. गङ्गाधरभट्ट, राजस्थान विश्वविद्यालय, १९८०-८१

३. **संस्कृतमुक्तकपरम्परा को भट्टजी का योगदान** -

पी.एच.डी. के लिए डॉ. कमलेश कौशिक जोशी, शोधनिर्देशक डॉ. गङ्गाधर भट्ट राजस्थान विश्वविद्यालय सन् १९८१

४. **संस्कृतनिबन्ध साहित्य में भट्टजी का अवदान** -

पी.एच.डी के लिए डॉ. सुनीता शर्मा, शोधनिर्देशक डॉ. शिवसागर त्रिपाठी, राजस्थान विश्वविद्यालय, जयपुरम

५. **गौविन्दवैभवम्- समीक्षात्मक विवरण** -

डॉ. कमलेश जोशी (कौशिक) एम.फिल के लिए, शोधनिर्देशकः डॉ. गङ्गाधर भट्ट, १९७८

# भट्टमहोदयानां कथासाहित्यम्

| क्र. | कथा | पत्रिका |
|---|---|---|
| | **( क ) ऐतिहासिककथाः** | |
| १. | अलक्ष्येन्द्रश्च दस्युश्च | भारती, ८.२ |
| २. | वीरबालकः | संस्कृतरत्नाकरः, ५.७-८ |
| ३. | वीरपरीक्षा | संस्कृतरत्नाकरः, ५.८.८ |
| ४. | धन्योऽसि धर्मवीर | संस्कृतरत्नाकरः, ५.८.१२ |
| ५. | अत्याचारिणः परिणामः | संस्कृतरत्नाकरः, ५.९.१ |
| ६. | सिंहदुर्गे सिंहवियोगः | संस्कृतरत्नाकरः, ५.९.३ |
| ७. | पुरुराजस्य पौरुषम् | संस्कृतरत्नाकरः, ५.९.५ |
| ८. | अङ्गुलिमालः | संस्कृतरत्नाकरः, ५.१०.१ |
| ९. | पृथ्वीराजपौरुषम् | संस्कृतरत्नाकरः, ५.१०.२ |
| १०. | आल्हा च ऊदलश्च | संस्कृतरत्नाकरः, ५.१०.४ |
| ११. | मातृसेवायां चिरममरे द्वे बलिदाने | संस्कृतरत्नाकरः, ५.१०.६ |
| १२. | सामन्तसङ्ग्रामः | संस्कृतरत्नाकरः, ५.१०.८ |
| १३. | भारतध्वजः बालवीरः | संस्कृतरत्नाकरः, ५.१०.१०-११ |
| १४. | अनुतापः | संस्कृतरत्नाकरः, ५.११.२-३ |
| १५. | चन्द्रहासः | संस्कृतरत्नाकरः, ५.११.४ |
| १६. | कृत्रिमबूँदी | संस्कृतरत्नाकरः, ५.११.६ |
| १७. | वीरवाणी | संस्कृतरत्नाकरः, ५.१२.१२ |
| १८. | प्राणानां भाषा | संस्कृतरत्नाकरः, ५.१३.५ |
| १९. | विजयिघण्टा | संस्कृतरत्नाकरः, ५.१२.१०-११ |
| २०. | कर्णश्चाऽर्जुनश्च | संस्कृतरत्नाकरः, ५.१३.६ |
| २१. | सत्यो बालचरः | संस्कृतरत्नाकरः, ५.१३.९ |
| २२. | धन्यो भारतीयवीरः | संस्कृतरत्नाकरः, ५.१३.१२ |

| | | |
|---|---|---|
| २३. | पुरुषपरीक्षा | |
| २४. | शस्त्रपाणिः क्षत्रियाणी | |
| २५. | भाग्यरेखा | |
| २६. | अमूल्यं वस्तु | |
| २७. | बालवीरः | |

## ( ख ) सामाजिककथाः

| | | |
|---|---|---|
| २८. | असमसाहसम् | संस्कृतरत्नाकरः, ५.३-४-७ |
| २९. | पश्यतोहरः | संस्कृतरत्नाकरः, ५.-१-२-५ |
| ३०. | सरला | संस्कृतरत्नाकरः, ५.७.११ |
| ३१. | एकवारं दर्शनम् | संस्कृतरत्नाकरः, ५.१.४-५ |
| ३२. | दयनीया | संस्कृतरत्नाकरः, ५.२.४ |
| ३३. | अनादृता | संस्कृतरत्नाकरः, ५.३.९ |
| ३४. | प्रत्युत्पन्नमतिर्हालिकः | संस्कृतरत्नाकरः, ५.११.११ |
| ३५. | अद्भुतचिकित्सा (अप्राप्ता) | संस्कृतरत्नाकरः, |
| ३६. | प्रतिशोधः | भारती ३.१० |
| ३७. | क्षत्रियशोणितम् | |
| ३८. | चतुरवञ्चकः | |
| ३९. | ममाध्यापनम् | |
| ४०. | प्रतिशोधः | |
| ४१. | हृदयव्रणः | |
| ४२. | स्वावलम्बनम् | |
| ४३. | स्वामिभक्तः | |
| ४४. | दीक्षा | |

## ( ग ) प्रणयकथाः

| | | |
|---|---|---|
| ४५. | प्रेम्णो विजयः | संस्कृतरत्नाकरः, ५-९-१० |
| ४६. | परीक्षा | संस्कृतरत्नाकरः, ५.१०.७ |

| | | |
|---|---|---|
| ४७. | निराशप्रणयः | संस्कृतरत्नाकरः, ५.७-३-७ |
| ४८. | प्रेम्णः प्रतिदानम् | संस्कृतरत्नाकरः, ५.३.४ |
| ४९. | जले ज्वाला | |

## ( घ ) प्रतीकात्मककथाः

| | | |
|---|---|---|
| ५०. | बालकभृत्यः | संस्कृतरत्नाकरः, ५.२.७-८ |
| ५१. | न कुहचिद् गुणतत्त्ववेदी | संस्कृतरत्नाकरः, ५.९.९ |

## ( ङ ) हास्यकथाः

| | | |
|---|---|---|
| ५२. | मिस्टरस्य गीताज्ञानम् | संस्कृतरत्नाकरः, ५.७.१२ |
| ५३. | चपण्डुकः | संस्कृतरत्नाकरः, ५.८-५-६ |
| ५४. | शिष्या | संस्कृतरत्नाकरः, ५.८.७ |
| ५५. | फाल्गुनगोष्ठी | संस्कृतरत्नाकरः, ५.९.७ |

## ( च ) मनोवैज्ञानिककथाः

| | | |
|---|---|---|
| ५६. | विषमा समस्या | संस्कृतरत्नाकरः, ५.११.८ |

## ( छ ) विविधविषयिण्यः कथाः

| | | |
|---|---|---|
| ५७. | करुणा कपोती च युवती च | संस्कृतरत्नाकरः, ५.१३.८ |
| ५८. | मृगयुः | संस्कृतरत्नाकरः, ५.८.२ |
| ५९. | दानी दीनेशः | संस्कृतरत्नाकरः, ५. |
| ६०. | वीरो बालचरः | संस्कृतरत्नाकरः, ५. |
| ६१. | धर्म-धनयोर्युद्धं धर्मस्य विजयश्च | संस्कृतरत्नाकरः, ५. |
| ६२. | परीक्षा | संस्कृतरत्नाकरः, ५. |
| ६३. | न्यायाधिकारी | संस्कृतरत्नाकरः, ५. |
| ६४. | द्वे स्पर्धे | संस्कृतरत्नाकरः, ५. |
| ६५. | जरीयान् ज्यौतिषी | संस्कृतरत्नाकरः ११ १२ |
| ६६. | जीविते ममता | |

## मञ्जुनाथगद्यगौरवे प्रकाशिता रचनाः

उपन्याससाहित्यम्

१. आदर्शरमणी

२. मोगलसाम्राज्यसूत्रधारो महाराजो मानसिंहः

३. भक्तिभावनो भगवान्

## कथासाहित्यम्

१. दयनीया

२. चतुरवञ्चकः

३. प्रेम्णः प्रतिदानम्

४. अनादृता

५. ममाध्यापनम्

६. जले ज्वाला

७. भाग्यरेखा

८. क्षत्रियशोणितम्

९. शस्त्रपाणिः क्षत्रियाणी

## शोधनिबन्धाः

१. काव्यलक्षणं तद्विषये विभिन्नमतानि च

२. रसस्वरूपं विभिन्ना रससिद्धान्ताश्च

३. कश्मीरकमहाकविर्विह्लणस्तस्य काव्यं च

## रेडियो नाटकम्

१. मञ्जुला

----

# भट्टमहोदयानां निबन्धसाहित्यम्

## वर्णनात्मकनिबन्धाः -

| क्र. | शीर्षकम् | पत्रिका | वर्षम् | अङ्कः |
|---|---|---|---|---|
| १. | अहं मोहमय्याम् | सं.रत्नाकरः प्रा. | ५ | १,२ |
| २. | चीन-देशे धर्म-चर्चा | सं.रत्नाकरः प्रा. | ६ | ५,६ |
| ३. | कार्नेगी-कारू-विद्यालयः | सं.रत्नाकरः प्रा. | ७ | २ |
| ४. | संस्कृत-सेवा-कुञ्जम् | सं. रत्नाकरः प्रा. | ८ | ९,११,१२ |
| ५. | स्वतन्त्रताया मङ्गलप्रभातम् | सं. रत्नाकरः प्रा. | १२ | २ |
| ६. | भारतस्य राष्ट्रीयपताका | सं. रत्नाकरः प्रा. | १२ | २ |
| ७. | व्रज-विहारिणा विहारिणो द्वन्द्वम् | सं. रत्नाकरः प्रा. | १३ | ११ |
| ८. | सत्यम् | भारती | ३ | २ |
| ९. | परोपकारः | भारती | ३ | ५ |
| १०. | कालिकाताः प्राचीनसाहित्यप्रकाशनम् | भारती | ८ | ८ |
| ११. | हिमालयाञ्चले मणिकूट-पर्वतः | भारती | ९ | ८ |
| १२. | भारतमिदम् असीम-मूल्येनाऽपि निजसीम्नो रक्षां कुर्यात् | भारती | ९ | ९ |
| १३. | सोवियतसंघे संस्कृतस्याध्ययनम् | भारती | १० | ६ |
| १४. | राजधान्यां संस्कृततोन्नतेः प्रयत्नः | भारती | १० | १० |
| १५. | सोमनाथे यवनाक्रमणम् | सं. रत्नाकरः प्रा. | ९ | १० |
| १६. | अमरकण्टकम् | सं. रत्नाकरः प्रा. | १२ | ७ |
| १७. | स्वागतं महाराजस्थानस्य | सं. रत्नाकरः प्रा. | १३ | १० |
| १८. | मरुस्थल-निरोधस्य योजना | भारती | ३ | ८ |
| १९. | भगवतो बुद्धस्याऽवशेषोपरि लिच्छविनिर्मितः स्तूपः | सं. रत्नाकरः प्रा. | ८ | ८ |

**विवरणात्मकनिबन्धाः -**

| | | | | |
|---|---|---|---|---|
| १. | प्रभातवायुः | सं.रत्नाकरः प्रा. | ६ | ५,६ |
| २. | भारतपर्यटनम् | सं.रत्नाकरः प्रा. | ७ | ६,८,११.१ |
| ३. | वर्तमाने युरोपीय-महायुद्धे भारतीयाः | सं.रत्नाकरः प्रा. | ९ | ८,९ |
| ४. | कांकरोली-यात्रा | सं.रत्नाकरः प्रा. | ९ | ७ |
| ५. | विक्रमार्कस्य द्विसहस्राब्दी | सं.रत्नाकरः प्रा. | १० | ३ |
| ६. | महायुद्धस्य जगति जाज्वल्यमानः प्रभावः | सं.रत्नाकरः प्रा. | १२ | २ |
| ७. | प्राचीनाऽऽर्याणां वस्त्राणि | भारती | १२ | ९ |
| ८. | प्राचीनभारते पोत-निर्माणकला | भारती | ३ | ८ |
| ९. | आर्याणां होलिकामहोत्सवः | भारती | ५ | ५ |
| १०. | हिमालयाञ्चले बद्रीनाथयात्रा | भारती | ६ | १२ |
| ११. | आर्याणाम् उत्सवसमाजश्च दीपावली च | भारती | ७ | १ |
| १२. | होलिकामहोत्सवः | सं.रत्नाकरः प्रा. | १२ | ९ |

**विचारात्मकनिबन्धाः -**

| | | | | |
|---|---|---|---|---|
| १. | दीपावली | सं.रत्नाकरः प्रा. | ७ | ८ |
| २. | हिन्दुविश्वविद्यालयः | सं.रत्नाकरः प्रा. | ७ | ८,९ |
| ३. | एशियाप्रदेशे अदृष्टवादः | सं.रत्नाकरः प्रा. | ७ | ९,१०,११ |
| ४. | भारतीयानां राजभक्तिः | सं.रत्नाकरः प्रा. | ७ | ११ |
| ५. | चलच्चित्रपटे समुद्रगर्भस्य | सं.रत्नाकरः प्रा. | १ | ११ |
| | रोमाञ्चकारीणि दृश्यानि | | ३ | १२ |
| ६. | वर्तमानयुगस्य परीक्षाप्रणाली | सं.रत्नाकरः प्रा. | २ | १,२,३ |
| | च संस्कृतशिक्षा च | | | |
| ७. | दीर्घजीवनार्थमायोजनानि | सं.रत्नाकरः प्रा. | ८ | ४ |
| ८. | निबन्धलेखस्य विराट् प्रवाहः | सं.रत्नाकरः प्रा. | ३ | २,३,४,५ |
| ९. | संस्कृतपण्डितान् क्व निनीषन्ति | सं.रत्नाकरः प्रा. | ९ | २ |
| | शिक्षाधिकारिणः ? | | | |
| १०. | प्रिये मधुरवाणि! | सं.रत्नाकरः प्रा. | ९ | ३ |
| ११. | भारते संस्कृतभारती राष्ट्रभाषा प्रश्नश्च | सं.रत्नाकरः प्रा. | ९ | ४ |

| | | | | |
|---|---|---|---|---|
| १२. | हंसवाहना सरस्वती मयूरवाहना कथं जाता (शोधलेखः) | सं.रत्नाकरः प्रा. | १० | ४ |
| १३. | पशुपक्षिषु मनुष्यस्य सभ्यता | सं.रत्नाकरः प्रा. | १० | ५ |
| १४. | संस्कृतपण्डिताः पश्यन्तु | सं.रत्नाकरः प्रा. | १० | ६ |
| १५. | सम्राडवरङ्गजीवस्य निजपुत्रंप्रति पत्रम् | सं.रत्नाकरः प्रा. | १० | १०,११ |
| १६. | संस्कृतं च तच्छिक्षा च | सं.रत्नाकरः प्रा. | १० | १०,११ |
| १७. | संस्कृतभाषा च प्रारम्भिकी शिक्षा च | सं.रत्नाकरः प्रा. | ११ | ७ |
| १८. | संस्कृत-शिक्षा-परिष्कारः | सं.रत्नाकरः प्रा. | ११ | ७ |
| १९. | साहित्यस्य सत्ता मानवस्य महत्ता | सं.रत्नाकरः प्रा. | १२ | ८ |
| २०. | संस्कृतभाषा च तदुपजीविनश्च | सं.रत्नाकरः प्रा. | १३ | १, २ |
| २१. | भारतस्य का स्यात् संस्कृतिः ? | सं.रत्नाकरः प्रा. | १३ | २ |
| २२. | संस्कृत-पण्डिताः | सं.रत्नाकरः प्रा. | १३ | ३,४ |
| २३. | संस्कृतस्य सङ्कटम्, सेवकानां साम्प्रतिकं कर्तव्यम् | सं.रत्नाकरः प्रा. | १७ | २,३ |
| २४. | वर्तमान-युगस्यापेक्षा संस्कृतभाषा च | सं.रत्नाकरः प्रा. | १७ | ६,७ |
| २५. | संस्कृत-भाषा-विषये संस्कृतज्ञानां कर्तव्यम् | भारती | ५ | ४,५ |
| २६. | ९३ कोटिमुद्राणां करभारो भारतीयानामुपरि | भारती | ७ | ९ |
| २७. | विद्यायाः महिमा | भारती | ८ | १ |
| २८. | नवसाहित्य-निकषः | भारती | ८ | ४,५ |
| २९. | बालशिक्षां प्रति पितुः कर्तव्यम् | भारती | ८ | ७ |
| ३०. | आंग्लसंस्कृतिरपसार्यताम् | भारती | ८ | ८ |
| ३१. | संस्कृतं राजभाषाऽवश्यं भवेत् | भारती | ८ | ८ |
| ३२. | काश्मीर-विषये पाकिस्तानस्य दृष्टिकोणः | भारती | ८ | ८ |
| ३३. | समस्त-संसारः संस्कृतं प्रत्युन्मुखः किन्तु भारतीयाः ? | भारती | ९ | ६ |
| ३४. | चरित्र-बलं विना देशस्य सम्पूर्णा अपि योजना निष्फलाः | भारती | १९ | १ |
| ३५. | श्रीहनुमतः आदर्शचरितम् | भारती | १ | १ |
| ३६. | अन्येषामुषकारको भवेत् | सं.रत्नाकरः प्रा. | ९ | ११ |

**समीक्षात्मकनिबन्धाः –**

| | | | | |
|---|---|---|---|---|
| १. | अपि जापानः स्यात् अस्माकम् आदर्शः | सं.रत्नाकरः प्रा. | ५ | ९,१० |
| २. | जर्मन–शिक्षा–नीतिः | सं.रत्नाकरः प्रा. | ६ | १,२ |
| ३. | सीता | सं.रत्नाकरः प्रा. | ६ | ९,१० |
| ४. | फ्रांस–देश–वासिनां दृष्टौ भारतम् | सं.रत्नाकरः प्रा. | ७ | २ |
| ५. | गाथासप्तशती अमरुकश्च | सं.रत्नाकरः प्रा. | १ | ४ |
| ६. | प्राकृत–भाषा कैः कैः कारणैः संस्कृततो मधुरा ? | सं.रत्नाकरः प्रा. | १ | ५ |
| ७. | गाथा–सप्तशती बिहारी–सतसई च | सं.रत्नाकरः प्रा. | १ | ६ |
| ८. | प्राप्त–पत्रस्य प्रत्युत्तरम् | सं.रत्नाकरः प्रा. | २ | ९ |
| ९. | समादधतु सज्जनाः | सं.रत्नाकरः प्रा. | ११ | ४,६ |
| १०. | संस्कृतानुरागिणः शृण्वन्तु | सं.रत्नाकरः प्रा. | ११ | ५ |
| ११. | अपि सत्येयं कोकिलानां परपुष्टता ? | सं.रत्नाकरः प्रा. | ९ | ४ |
| १२. | अपि नासाभूषणमिदमासां यवन–जातीनां सहवासादनुकृतम् | सं.रत्नाकरः प्रा. | ९ | ६,७,८,९ |
| १३. | सांख्य–शास्त्रस्य चिर–विस्मृतो ग्रन्थकारः | सं.रत्नाकरः प्रा. | १२ | ३ |
| १४. | रेऊ महोदयस्य आर्य–विधानम् | सं.रत्नाकरः प्रा. | १२ | १०,११ |
| १५. | आगरानगरस्यैतिहासिकता | सं.रत्नाकरः प्रा. | १२ | १०,११,१२ |
| १६. | भारतीयं भोजन–शस्त्रं शष्कुली (जलेबी) च | सं.रत्नाकरः प्रा. | १२ | १०,११,१२ |
| १७. | पी.के. गोडे महोदयस्य गवेषणाकार्यम् | सं.रत्नाकरः प्रा. | १२ | १०,११ |
| १८. | अनुपलब्धं सङ्गीतसूत्रम् | सं.रत्नाकरः प्रा. | ११ | ८ |
| १९. | गन्धर्वसेनस्य स्वर्गयात्रा | सं.रत्नाकरः प्रा. | १२ | १४४,९ |
| २०. | प्राचीना ऋषयश्चौद्‌भिद्‌तत्त्वं च | अमरभारती | २ | १,४ |
| २१. | अद्भुतचिकित्सा | अमरभारती | १ | १०,११ |
| २२. | मुद्राराक्षस्य चाणक्यः | अमरभारती | १ | १,२ |
| २३. | अमरकोषे टीकाकाराणां कृपा | अमरभारती | १ | ६ |
| २४. | साम्प्रतिकशिक्षाया धनभिक्षा | अमरभारती | १ | ७ |

| | | | |
|---|---|---|---|
| २५. नवीन-शिक्षितानां दृष्टौ प्राचीनमस्मत्साहित्यम् | अमरभारती | २ | ७ |
| २६. अपि नाम सेयमव्यावहारिकी ? | सारस्वती सुषमा | ७ | २ |
| २७. संस्कृतभाषायाः महत्त्वम् | सर्योदयः | ८ | १ |

**ललित- निबन्धाः -**

| | | | |
|---|---|---|---|
| १. श्रद्धायाः पराकाष्ठा | सं.रत्नाकरः प्रा. | ५ | ११,१२ |
| २. वासन्तिकः प्रमोदः | सं.रत्नाकरः प्रा. | ९ | ८,९ |
| ३. किन्तोः कुटिलता | सं.रत्नाकरः | १ | ७,८,९,१० |
| ४. संस्कृतज्ञानां महाशयता | सं.रत्नाकरः | १९ | १०,११ |
| ५. अङ्ककौतुकम् | सं.रत्नाकरः प्रा. | ६ | १,२ |
| ६. कवि-कौतूहलम् | सं.रत्नाकरः प्रा. | ६ | ३,४ |
| ७. अपि अस्वार्थिनो ब्राह्मणाः शूद्रेषु ? | सं.रत्नाकरः प्रा. | ६ | ७,८ |
| ८. संस्कृतस्य नवीनं संस्कृतम् | सं.रत्नाकरः | ३ | ११ |
| ९. संस्कृतभाषा च तत्कोषश्च | सं.रत्नाकरः | ९ | ५ |
| १०. विद्वद्भ्यो निवेदनम् | सं.रत्नाकरः | ९ | ६ |
| ११. महर्घतापिशाची | सं.रत्नाकरः | ९ | ६ |
| १२. कुतो वा न प्रसरेतां चरणौ ? | सं.रत्नाकरः | १० | ३ |
| १३. दन्तकथा | सं.रत्नाकरः | १० | ९ |

एतेषु प्रमुखकथा निबन्धाश्च मञ्जुनाथग्रन्थावल्यां प्रकाशिताः सन्ति।

-----